ततो ह्येकादश श्लोकमंत्राः प्रणवसंमिताः ॥ ४ ॥
एवं चास्मिंश्चतुःपंचाशन्मंत्राणां मितिः स्मृता (५४) ॥ ५ ॥

१४

चतुर्दशे तथाध्याये द्विषष्टिश्लोकसंयुते ।
नामधारकवाग्रूपो ह्यादिमो मनुरीरितः ॥ १ ॥
ततो द्वौ श्लोकमंत्रौ च सिद्धोक्तिश्च ततः परम् ।
मनुर्विप्रावूचतुर्वै चत्वारः श्लोकमंत्रकाः ॥ २ ॥
त्रिविक्रम उवाचेति द्वाविंशतितमो मनुः ।
षट् श्लोकमंत्रा विप्रावूचतुर्मंत्रस्ततः परम् ॥ ३ ॥
ततश्चैकः श्लोकमंत्रोऽथ श्रीगुरुरुवाच हि ।
मनवश्च ततः श्लोकास्त्रयोविंशतिसंख्यकाः ॥ ४ ॥
पंचपंचाशत्तमोऽथ विप्रावूचतुरित्ययम् ।
ततो नव श्लोकमंत्राः श्रीगुरूक्तिस्ततः स्मृतः ॥ ५ ॥
पंच श्लोकास्ततः प्रोक्ता मंत्ररूपा न संशयः ।
चतुर्दशेऽस्मिन्नध्याये सप्ततिर्मनवः स्मृताः (७०) ॥ ६ ॥

१५

अशीतिश्लोकसंयुक्तेऽध्याये पंचदशे मनुः
नामधारकवाग्रूपः प्रथमः परिकीर्तितः ॥ १ ॥
ततश्चैकः श्लोकमनुः सिद्धोक्तिश्च ततः स्मृतः ।
श्लोकमंत्रस्ततः प्रोक्तः श्रीगुरूक्तिस्ततः परम् ॥ २ ॥
चतुर्विंशतिसंख्याकाः श्लोकमंत्रास्ततः स्मृताः ।
श्रीगुरूक्तिस्ततो मन्त्रो ह्यूनत्रिंशत्तमो मतः ॥ ३ ॥
ततः सप्तदशश्लोकाः श्रीगुरूक्तिस्ततः परम् ।
चत्वारः श्लोकमंत्राश्च ह्यर्धश्लोकात्मकस्ततः ॥ ४ ॥
तस्मादिति मनुः प्रोक्तः पतितोक्तिस्ततः परम् ।
जाते स्वर्णेति संप्रोक्तो ह्यर्धश्लोकात्मको मनुः ॥ ५ ॥
ततो द्वौ श्लोकमंत्रौ स्तः त्रिविक्रम उवाच हि ।
पंचपंचाशत्तमश्च मनुः संपरिकीर्तितः ॥ ६ ॥

ततश्चैकः श्लोकमंत्रः श्रीगुरूक्तिस्ततः परम् ।
ततो द्वौ श्लोकमंत्रौ च ब्रह्मराक्षसवाक् ततः ॥ ७ ॥
ततः षट् श्लोकमंत्राश्च वामदेव उवाच हि ।
प्रोक्तो मनुस्ततः श्लोका मनुरूपास्ततः स्मृताः ॥ ८ ॥
राक्षसोक्तिस्ततः प्रोक्ताः श्लोकमंत्रौ ततः स्मृतौ ।
वामदेव उवाचाथ श्लोकमंत्रौ ततः स्मृतौ ॥ ९ ॥
शिवोक्तिश्च ततः प्रोक्ता ततः श्लोकाश्चतुर्दश ।
मनुरूपा वासुदेवमुनिना सुविभाविताः ॥ १० ॥
मंत्रा ह्यस्मिन्महाध्याये चतुर्नवतिसंमिताः॥ (९४)

१६

अथ मंत्रान् प्रवक्ष्यामि षोडशाध्यायगोचरान् ।
आदिमो हि मनुर्नामधारकोक्तिः प्रकीर्तितः ॥ १ ॥
ततश्चैकः श्लोकमंत्रः सिद्धोक्तिश्च ततः स्मृतः ।
द्वादश श्लोकमंत्राश्च विप्रोक्तिश्च ततः स्मृतः ॥ २ ॥
ततश्चैकः श्लोकमंत्रः साध्व्युवाच मनुस्ततः ।
श्लोकात्मानस्ततः ख्याता मनवः पंचविंशतिः ॥ ३ ॥
साध्व्युवाचेति च चतुश्चत्वारिंशत्तमो मनुः ।
ततश्चैकः श्लोकमनुः साधूक्तिश्च ततः स्मृतः ॥ ४ ॥
एकत्रिंशत्ततः श्लोकमनवः परिकीर्तिताः ॥
साध्व्युवाच मनुः प्रोक्तो वैधव्येति ततो मनुः ॥ ५ ॥
ततः साधुरुवाचेति त्रयोविंशतिसंख्यकः ।
श्लोकमंत्रास्ततः प्रोक्ताः श्रीगुरूक्तिस्ततः परम् ॥ ६ ॥
चत्वारश्च ततः श्लोका मनुरूपाः प्रकीर्तिताः ।
अष्टोत्तरशतं ह्यत्र मनवः कामधेनवः (१०८) ॥ ७ ॥

१७

षडुत्तरशतश्लोकेऽध्याये सप्तदशे स्मृतः ।
सिद्धोक्तिः प्रथमो मंत्रः ततः श्लोकमनू स्मृतौ ॥ १ ॥

श्रीगुरूक्तिस्ततो मंत्रस्तुरीयः परिकीर्तितः ।
एकादश श्लोकमंत्रा वैश्योक्तिश्च ततः परम् ॥ २ ॥
पुनश्चैकः श्लोकमंत्रो वैश्योक्तिश्च ततः स्मृता ।
अष्टाविंशतिसंख्याकाः श्लोकमंत्रास्ततः परम् ॥ ३ ॥
सावित्र्युवाचेति मनुः श्लोकमंत्रश्च वै ततः
एकोनपंचाशत्तमः श्रीगुरूक्तिर्मनुः स्मृतः ॥ ४ ॥
श्लोकाश्चतुर्विंशतिसंख्याकास्ते मनवः स्मृता ।
ततः सावित्र्युवाचाथ भगवन्सद्गुरो मनुः ॥ ५ ॥
श्रीगुरूक्तिस्ततो मंत्रः श्लोकाश्चाष्टादश स्मृताः ।
चंद्रांगद उवाचेति श्लोकमंत्रास्तथा त्रयः ॥ ६ ॥
वासुक्युक्तिस्ततो मंत्रः पूतोस्येति मनुस्ततः ।
चंद्रांगद उवाचेति ह्येकोत्तरशतस्ततः ॥ ७ ॥
चत्वारः श्लोकमंत्राश्च सख्युवाच मनुस्ततः ।
द्वादश श्लोकमंत्राश्च ततः संपरिकीर्तिताः ॥ ८ ॥
अष्टादशोत्तरशतसंख्याका मनवोत्र वै ॥ (११८)

१८

अष्टाशीत्युत्तरशतश्लोकेऽष्टादशके तथा ।
आदिमो हि मनुर्नामधारकोक्तिः प्रकीर्तितः ॥ १ ॥
ततश्चैकः श्लोकमंत्रः सिद्धोक्तिश्च ततः स्मृता ।
ततो नव श्लोकमंत्राः विप्रोक्तिश्च ततः स्मृता
निष्ठेति श्लोकमंत्रश्च श्रीगुरूक्तिस्ततः परम् ॥ ३ ॥
ततः श्लोकमनू द्वौ च विप्रोक्तिश्च ततः स्मृता ।
परान्नेति श्लोकमंत्रः श्रीगुरूक्तिस्ततः परम् ॥ ४ ॥
षट् श्लोकमंत्राः विप्रोक्तिः सप्तविंशो मनुर्मतः ।
ततश्चैकः श्लोकमनुः श्रीगुरूक्तिस्ततः परम् ॥ ५ ॥
ततः पंचदश श्लोकमनवः परिकीर्तिताः ॥
खेकौ मनुस्ततश्चार्धश्लोकात्मा क्षेपकः स्मृतः ॥ ६ ॥
श्लोकरूपास्ततः सप्तनवतिर्मनवः स्मृताः ।

यजेत्पौराणिकैर्मंत्रः सार्धश्लोकात्मकः स्मृतः ॥ ७ ॥
त्रिचत्वारिंशदधिकसंख्याकः क्षेपकस्तथा ।
चतुःपंचाशन्मिताथ श्लोकमंत्रास्ततः परम् ॥ ८ ॥
मंत्रा ह्यस्मिन्मताः सप्तनवतिश्च शतोत्तरम् ॥ (१९७)

१९

षोडशाधिकशतश्लोके ह्येकोनविंशके ।
आदिमो हि मनुर्नामधारकोक्तिः प्रकीर्तितः ॥ १ ॥
ततः श्लोकमनुः प्रोक्तः सिद्धोक्तिश्च ततः परम् ।
त्रिंशच्छ्लोकास्ततः प्रोक्ता गंगोवाचेति वै मनुः ॥ २ ॥
ततो द्वौ श्लोकमंत्रौ स्तः श्रीगुरूक्तिस्ततः परम् ।
ततस्त्रयः श्लोकमंत्राः श्रीगुरूक्तिस्ततः स्मृता ॥ ३ ॥
चत्वारिंशत् तथा षट् च श्लोकमंत्रास्ततो मताः ।
सच्छ्रीगुरुरुवाचेति सप्ताशीतितमो मनुः ॥ ४ ॥
ततः षट् श्लोकमंत्राश्च राजपुत्र उवाच हि ।
मनुर्मतस्ततः पंचश्लोकमंत्राः प्रकीर्तिताः ॥ ५ ॥
शबरोक्तिः श्लोकमंत्रास्त्रयोविंशतिकास्ततः ।
त्रयोविंशतिसंख्याका मनवोत्र शताधिकाः (१२३) ॥ ६ ॥

२०

एकादशाधिकशतश्लोके विंशे मतो मनुः ।
नामधारकवागाद्यको मत्पूर्वो द्वितीयकः ॥ १ ॥
सिद्धोक्तिश्च तृतीयः स्यात् षट् श्लोकाश्च ततः परम् ।
मनुरूपा श्रीगुरूक्तिः श्लोकमंत्रौ ततः परम् ॥ २ ॥
सायंदेव उवाचेति त्रयोदशतमो मनुः ।
ततो द्वौ श्लोकमंत्रौ च श्रीगुरूक्तिस्ततः परम् ॥ ३ ॥
त्रयोदश श्लोकमंत्राः सायन्देवोक्तिका ततः
भगवन्मनुराख्यातः श्रीगुरूक्तिस्ततो मनुः ॥ ४ ॥
चतुर्दश श्लोकमंत्रा गुरुसेवाप्रदर्शकाः ।
शिष्योक्तिश्च स्मृतस्सप्तचत्वारिंशत्तमो मनुः ॥ ५ ॥

अष्टत्रिंशत्ततः श्लोका मंत्ररूपाश्च ते मताः ।
सायंदेव उवाचेति भवानिति मनुस्ततः ॥ ६ ॥
श्रीगुरूक्तिस्ततो मंत्रास्ततः श्लोकात्मकास्त्रयः ।
श्रीकृष्णोक्तिस्ततः प्रोक्ता श्लोकमंत्रास्ततो दश ॥ ७ ॥
स्त्रिय ऊचुर्मनुः प्रोक्तस्त्रिरुत्तरशताधिकः ।
श्लोकमंत्रा दश श्रीमदनंतोक्तिस्ततः परम् ॥ ८ ॥
ततश्चैकः श्लोकमंत्र ऋष्युक्तिश्च ततः परम् ।
मंत्रौ द्वौ च तथा श्रीमदनंतोक्तिस्ततः परम् ॥ ९ ॥
पूर्णश्लोकात्मकाः सप्त मनवः संप्रकीर्तिताः ।
मनवोऽस्मिन्मताः पंचविंशतिश्च शतोत्तरम् (१२५) ॥ १० ॥

॥ श्रीदत्त ॥

२१

द्व्यधिकश्लोकशतके ह्येकविंशे स्मृतो मनुः ।
नामधारकवागाद्यः द्वितीयः साधुसंज्ञितः ॥ १ ॥
ततः सिद्ध उवाचाथ चत्वारः श्लोकरूपकाः ।
ततश्च तंतुकोक्तिः स्यात् ततः श्लोकास्त्रयोदश ॥ २ ॥
मंत्ररूपाः श्रीगुरूक्तिः श्लोकमंत्रास्ततस्त्रयः ।
राजोवाचेति मंत्रश्च षड्विंशतितमः स्मृतः ॥ ३ ।
ततः सप्तदश श्लोकाः मंत्ररूपाः प्रकीर्तिताः ।
नामधारकवाङ्मंत्रस्ततश्च श्लोकमंत्रकः ॥ ४ ॥
सिद्धोक्तिश्च ततः प्रोक्ता श्लोकमंत्रास्त्रयोदश ।
श्रीगुरूक्तिस्ततो मंत्रा ह्यष्ट श्लोकाः प्रकीर्तिताः ॥ ५ ॥
श्रीगुरूक्तिरथो मंत्राः षट्त्रिंशत् श्लोकसंज्ञकाः ।
नरकेसर्युवाचाथ सप्त श्लोकास्ततो मताः ॥ ६ ॥
मंत्ररूपाः स्मृता मंत्रास्त्रयोदश तथा शतम् ॥ (११३)

२२

द्व्यधिकश्लोकशतके द्वाविंशे ह्यादिमो मनुः
नामधारकवाक् प्रोक्तः श्लोकमंत्रौ ततः परम् ॥ १ ॥

ततः सिद्ध उवाचाथ श्लोकमंत्रास्त्रयोदश ।
श्रीगुरूक्तिस्ततः श्लोकमनवः पंचविंशतिः ॥ २ ॥
शूद्रोक्तिश्च चतुश्चत्वारिंशत्तम उदाहृतः ।
ततश्च श्लोकमनवो द्वात्रिंशत्संख्यकाः स्मृताः ॥ ३ ॥
नामधारकवाङ्मंत्रः सप्तमेति ततो मनुः ।
सिद्धोक्तिश्च ततो ह्येकोनत्रिंशत् श्लोकमंत्रकाः ॥ ४ ॥
तथा ह्यस्मिन्महाध्याये ह्यष्टमंत्राः शताधिकाः ॥ (१०८)

२३

एकोनत्रिंशत्यधिकशतश्लोकेऽन्तिमे शुभे ।
आद्यो मनुर्नामधारकोक्तिरूपः प्रकीर्तितः ॥ १ ॥
ततो दश श्लोकमंत्राः सिद्धोक्तिश्च ततः परम् ।
द्विपंचाशच्छ्लोकमंत्रा राजोवाच ततः परम् ॥ २ ॥
द्वौ श्लोकमंत्रौ विप्रोक्तिर्ह्यष्टषष्टितमः स्मृतः
त्रयोदश श्लोकमंत्राः श्रीगुरूक्तिस्ततः परम् ॥ ३ ॥
ततो द्वौ श्लोकमंत्रौ च श्रीगुरूक्तिस्ततः परम् ।
यतेर्मे हि मनुः प्रोक्तो राजोवाच मनुस्ततः ॥ ४ ॥
मंत्राः पंच श्लोकरूपाः श्रीगुरूक्तिस्ततः परम् ।
ततश्च षोडश श्लोका मंत्ररूपाः प्रकीर्तिताः ॥ ५ ॥
श्रीगुरूक्तिस्ततः प्रोक्तस्ततश्चाष्टादश स्मृताः
श्लोकमंत्रास्तथा ह्यष्टाविंशतिश्च शताधिकाः ॥ ६ ॥
मनवो नाथनाथेन गुरुणा संप्रकीर्तिताः ॥
प्रथमे नवमे चैव दशमेऽष्टादशे तथा ॥ ७ ॥
षट् क्षेपका विनिक्षिप्तास्तेप्यत्र गणिता मया ।
तान्विहायावशिष्टानां मंत्राणां द्विसहस्रकम् ॥ ८ ॥
भवेत्तेन द्विसाहस्री संहितेयं प्रकीर्तिता ॥

---

॥ श्रीगुरुदेवदत्त ॥

# ॥ श्रीगुरुचरित्रस्य विषयानुक्रमणिका ॥

नवमोऽध्यायः ।



दशमोऽध्यायः ।

एकविंशोऽध्यायः ।



द्वाविंशोऽध्यायः ।



त्रयोविंशोऽध्यायः ।



दत्तोऽहं ते मयेतीश आत्मदानेन योऽभवत् ॥
अनसूयात्रिपुत्रः स श्रीदत्तः शरणं मम ॥ १ ॥

# श्रीगुरुचरिते-श्रीगुरुस्तुतिः

श्रीवैष्णवैशगाणेशसौर्यशाक्त्यादिरूपधृक् ॥
दत्तात्रेयोऽस्त्वजोऽनन्तः सदा मे हृदि सद्गुरुः ॥१॥
योऽजोऽनन्तोऽगुणोऽरूपो निस्तृडेकोऽक्रियोऽसृजत् ।
विश्वं धृत्वा षोडशांशं पुंरूपं योगमायया ॥ २ ॥
दृश्यते ज्ञानदृष्ट्या यत्सहस्राक्षिशिरोऽङ्घ्रि सत् ।
रूपं यदंगसंस्थानैर्लोकव्यासः प्रकल्प्यते ॥ ३ ॥
नानावतारबीजं यदनन्तं यत्कलामुखैः ॥
देवतिर्यङ्मुखं सृष्टमस्वतंत्रं जगत्पुरु ॥ ४ ॥

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ अथ श्रीगुरुचरितं वक्तुं प्रथमं मंगलार्थं परःशतश्लोकैः श्रीगुरुं स्तौति श्रीति । अत्र श्रीशब्दो देवतावाचकत्वान्मंगलार्थः ॥ यदुक्तं 'देवतावाचकाः शब्दा ये च भद्रादिवाचकाः॥ सर्वे ते नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा'इति॥ सांख्यप्रवचनेपि 'मंगलाचरणं शिष्टाचारात्फलदर्शनाच्छ्रुतितश्च' इति। अत्र तावदभेदेन श्रीदत्तं स्तुवन् वस्तुनिर्देशात्मकं मंगलमाचरति ॥ विष्णोरिदं वैष्णवं तस्येदमित्यण् एवमन्यत्र। श्रीमन्ति ज्ञानैश्वर्याद्यतिशय-युक्तानि च तानि रूपाणि आदिशब्दादैन्द्राग्नेयादीनि तानि स्वमायाशक्त्या धरतीति तथोक्तः॥ १ ॥ निस्तृट् निरिच्छः षोडश अंशाः कलाः एकादशेन्द्रियाणि पंच भूतानि च यस्मिन् तत्पुंरूपं पुरुषरूपं योगमायया शक्त्या दृश्यते योगिभिरिति शेषः। सहस्रशब्दोऽनन्तवाची यस्य रूपस्यांगसंस्थानैरवयवैः पातालादिलोकविस्तारः कल्प्यते ॥ ३ ॥ अन्तो नाशो न विद्यते यस्य तत् यत्कलामुखैर्ब्रह्ममरीच्यादिभिः देवतिर्यङ्मुखं देवतिर्यगादिनानाभेदभिन्नं पुरु बहु अपरिमितमित्यर्थः॥ ४ ॥ गोभिरिन्द्रियैः

गोभिः स्वार्थादानमीशसृष्टं नेशात्परं क्वचित् ॥
देहेन्द्रियात्मजीवोत्थौ रागद्वेषावियन्तु भित् ॥ ५ ॥
भूतेट् सोऽजोऽव्ययात्मापि संभवत्यात्ममायया ॥
श्रेयोऽर्हसाधुगुप्त्यै स्वप्रकृतिस्थो युगे युगे ॥ ६ ॥
श्रुत्वा तत्कर्म निर्द्वन्द्वो मुच्यते कर्मबन्धनात् ।
न तथा कर्मसिद्धीप्सुर्द्वन्द्वात्मा भ्रान्तहृन्नरः ॥ ७ ॥
गुणकर्मभिदा सृष्टचातुर्वर्ण्यस्य सोऽव्ययः ॥
कर्ताप्यकर्ता यैर्ज्ञातो बध्यन्ते कर्मभिर्न ये ॥ ८ ॥
भूभारभूततद्द्वेष्यघाताय विविधास्तनूः ॥
धृत्वा कंटकवन्मत्वा कृतकार्यो जहात्यसौ ॥ ९ ॥

स्वस्व विषयग्रहणमीश्वरेण सृष्टं तत्तु सर्वमधिष्ठानभूतादीश्वरात्परं क्वचिदपि किमपि न विद्यते तथात्वेपि देहेन्द्रियादितादात्म्याभिमानापन्नेन जीवेन सृष्टौ रागद्वेषौ इयन्तु भित् भेदः जीवसृष्टिरीशसृष्टिरिति ज्ञापको भेद इत्यर्थः। यया भिदा जीवोऽहं कर्ता भोक्ता सुखी दुःखीत्यादि स्वमात्मानं सच्चिदानंदैकरसं विस्मृत्य विरुद्धं मनुते ॥ ५ ॥ स भूतेट् भूतानामीश्वरः मोक्षयोग्यसाधुसंरक्षणाय ॥ ६ ॥ तत्कर्म भक्तानुग्रहलक्षणं चरितं निष्कामतया श्रुत्वा कर्मबन्धनात्साधुर्यथा मुक्तो भवति तथा कर्मफलसिद्ध्यभिलाषी भ्रान्तचित्तः श्रवणपराङ्मुखोऽसाधुः न विमुच्यते ॥७॥ सत्त्वादिगुणभेदेन शमादिकर्मभेदेन च सृष्टस्य चातुर्वर्ण्यस्य कर्तापि स ईश्वरोऽसंगोदासीनत्वेनाकर्तेति यैर्ज्ञातोऽतएव स्वयमपि कर्मभिः स्वानुष्ठितैर्ये न बध्यन्ते ॥ ८ ॥ भूभारभूतास्तेषां द्वेष्या असाधवस्तेषां विनाशाय तनूरवतारान् यथा पदलग्नकंटकोऽन्येन कंटकेन निष्कास्यते तद्वत्स्वावताररूपकंटकेन भूभाररूपकंटकं निष्कास्यान्ते तमवताररूपमपि कंटकवन्मत्वा कृतकार्यः सन जहाति द्वयोस्तुल्यत्वात् ॥ ९ ॥ तर्हि नरनारायणनारदसनकाद्याः कुतो-

अस्यैवापूर्णकृत्याः स्युस्तन्वस्तासूत्तमोत्तमा ॥
तनुरेकास्ति दत्ताख्या कृपासूः स्मर्तृगामिनी ॥ १० ॥
मुक्तैर्मुमुक्षुभिश्चान्यैर्ध्येया नान्येदृशी कलौ ।
कामदा यस्य कस्यापि स्मृतिगामिन्यनुक्षणम् ॥ ११ ॥
विश्वं ततान योऽव्यक्तस्तद्यत्स्थं यो न तत्स्थितः ॥
तद्यत्स्थं नैश्वराद्योगात्तद्वत्तत्स्थो न वायुवत् ॥ १२ ॥
मावशाद्योऽवशोऽभीक्ष्णं व्यसृजत्तद्बंधनः ॥
येनाध्यक्षेण मा सूते जगद्वेदामलं न यम् ॥ १३ ॥
नृरूपेणावतीर्णं यत्तत्त्वाज्ञोऽसुरभावगः ॥
न वेत्ति योगगम्यं यं सद्धर्मत्राणकारणम् ॥ १४ ॥
सोऽन्वर्थाख्यानसूयात्रिपुत्रो जज्ञेऽज ईश्वरः ॥
अचिन्त्याव्यक्तरूपोऽपि दत्तोऽर्च्यः स्मृतितोषणः ॥ १५ ॥

ऽवशिष्टाः कार्यशेषत्वादित्याह – अस्येश्वरस्यावतारा अद्याप्यपूर्णकृत्याः श्रीदत्तनरनारायणसनत्कुमारादयः तासूत्तमोत्तमा कृपां सूत इति कृपासूः सत्सूद्विषेत्यादिना क्विप् । दयाजननी ॥ १० ॥ अन्यैर्विषयिभिः ईदृशी स्मर्तृगामिनी शीघ्रफलदा च ॥ ११ ॥ यो ज्ञानैश्वर्यतेजोबलवीर्यात्मकः अव्यक्तः परोक्षत्वात् न प्रधानं पुंस्त्वादेशात् तद्विश्वं यस्मिन्नीश्वरे तिष्ठतीति तथापि य ईश्वरो न तस्मिन् विश्वस्मिन्स्थितः। यदुक्तं पूर्वाचार्यैः 'मायाध्यासाश्रयेण प्रविततमखिलं यन्मया तेन मत्स्थान्येतान्येतेषु नाहं यदपि हि रजतं भाति शुक्तौ न रौप्ये ॥ शुक्त्यंशस्तेन भूतान्यपि मयि निवसन्तीति विश्वग्विनेता प्राह' इति ॥ १२ ॥ मा माया व्यसृजद्विविधमसृजत् तद्बन्धरहितः ॥ १३ ॥ योगगम्यत्वाद्यस्य भगवतस्तत्त्वमविद्वानासुरीसम्पत्समन्वितो नृरूपेणावतीर्णं मलनिवर्तकमपि सद्धर्मत्राणकारणमपि यं भगवन्तं न वेद ॥ १४ ॥ स सार्थकनाम्नोरनसूयात्र्योः पुत्रो जज्ञे स्मरणमात्रसंतुष्टः ॥ १५ ॥

परानंदमयो विष्णुर्हृत्स्थोऽवेद्योप्यतीन्द्रियः ।
सदा संपूज्यते भक्तैर्भगवान् भक्तिभावनः ॥ १६ ॥

अचिन्त्यस्य कुतो ध्यानं कूटस्थावाहनं कुतः ।
क्वासनं विश्वसंस्थस्य पाद्यं पूतात्मनः कुतः ॥ १७ ॥

क्वानर्घोरुक्रमस्यार्घ्यं विष्णोराचमनं कुतः ।
निर्मलस्य कुतः स्नानं क्व निरावरणेऽम्बरम् ॥ १८ ॥

स्वसूत्रस्य कुतः सूत्रं निर्मलस्य च लेपनम् ।
निस्तृपः सुमनोभिः किं किमक्लेद्यस्य धूपतः ॥ १९ ॥

स्वप्रकाशस्य दीपैः किं किं भक्ष्याद्यैर्जगद्भृतः ।
किं देयं परितृप्तस्य विराजः क्व प्रदक्षिणाः ॥ २० ॥

किमनंतस्य नतिभिः स्तौति को वागगोचरम् ।
अंतर्बहिःप्रपूर्णस्य कथमुद्वासनं भवेत् ॥ २१ ॥

सर्वतोपीत्यसंभाव्यो भाव्यते भक्तिभावनः ।
सेव्यसेवकभावेन भक्तैर्लीलानृविग्रहः ॥ २२ ॥

हृत्स्थो हृदयस्थोपि अतींद्रियत्वात् वृत्तिव्याप्तिं विनाऽवेद्यः तथा स भक्तिभावनो भक्तैः सम्यक्पूज्यते भावनयेति शेषः ॥ १६ ॥ भावनेव कारणं दर्शयितुमाह कूटस्थ एकरूपतया कालव्यापी ॥ १७ ॥ अमूल्या उरवः क्रमाः पादविक्षेपा यस्य विष्णोर्व्यापनशीलस्य निरावरणे विक्षेपावरणशक्तिरहितेंबरं वस्त्रम् ॥ १८ ॥ स्वसूत्रस्य स्वतंत्रस्य । निस्तृषोऽनिच्छस्य अमूर्तत्वादक्लेद्यस्य ॥ १९ ॥ जगद्भृतो जगत्पोषकस्य विराजः समष्टिरूपेणाऽवस्थितस्य ॥२०॥ नतिभिर्नमस्कारैः उद्वासनं विसर्जनम् ॥२१॥ इत्युक्तप्रकारेण सर्वतोऽसंभाव्योऽपि लीलया गृहीतनरदेहो भाव्यते कल्पितो-

तवेशातींद्रियस्यापि पारंपर्याश्रुतां तनुं ।
प्रकल्प्याश्मादावर्चंति प्रार्चयेऽर्चां मनोमयीं ॥ २३ ॥
कलसुश्लोकगीतेन भगवन्दत्त जागृहि ।
भक्तवत्सल सामीप्यं कुरु मे मानसार्चने ॥ २४ ॥
श्रीदत्तं खेचरीमुद्रामुद्रितं योगिसद्गुरुं ।
सिद्धासनस्थं ध्यायेऽभीवरप्रदकरं हरिम् ॥ २५ ॥
दत्तात्रेयाह्वयाम्यत्र परिवारैः सहार्चने ।
श्रद्धाभक्त्येश्वरागच्छ ध्यातधाम्नांजसा विभो ॥ २६ ॥
सौवर्णं रत्नजडितं कल्पितं देवतामयम् ।
रम्यं सिंहासनं दत्त तत्रोपविश यंत्रिते ॥ २७ ॥
पाद्यं चंदनकर्पूरसुरभि स्वादु वारि ते ।
गृहाण कल्पितं तेन दत्तांघ्री क्षालयामि ते ॥ २८ ॥
गंधाब्जतुलसीबिल्वशमीपत्राक्षतान्वितम् ।
सांम्बर्घ्यं स्वर्णपात्रेण कल्पितं दत्त गृह्यताम् ॥ २९ ॥
सुस्वाद्वाचमनीयांबु हैमपात्रेण कल्पितम् ।
तुभ्यमाचम्यतां दत्त मधुपर्कं गृहाण च ॥ ३० ॥

पचारैः पूज्यते ॥ २२ ॥ पाषाणादौ गुरुपारंपर्यतः श्रुतां प्रतिमारूपां तनुं प्रकल्प्य स्वल्पबुद्धयोऽर्चन्ति अहन्तु ध्यानयोगार्थं अष्टविधप्रतिमासूत्तमां मनोमयीमर्चां प्रतिमां क्षिप्रैकाग्र्यार्थं प्रकर्षेणार्चये पूजये ॥ २३ ॥ कला मनोहराः शोभनाः श्लोका यशांसि यस्मिंस्तेन गीतेन ॥ २४ ॥ लम्बिकोर्ध्वगामिन्या समनस्कया जिह्वया मुद्रितं । सिद्धासनं गुदमेढ्रोर्ध्वगुल्फस्थापनरूपं । अभयवरप्रदौ करौ यस्य ॥२५॥ अंजसा शीघ्रम् ॥२६॥ पीठदेवतामयं । यंत्रिते यंत्रयुक्तेऽत्रासने ॥ २७ ॥२८॥ साम्बु जलसहितम्

पुष्पवासितसच्चैलमंगेष्वालिप्य दत्त भोः ।
पंचामृतैश्च गांगाद्भिः स्नानं ते कल्पयाम्यहं ॥ ३१ ॥
भक्त्या दिगंबराचांतजलेदं दत्त कल्पितम् ।
काषायपरिधानं तद् गृहाणैणेयचर्म च ॥ ३२ ॥
नानासूत्रधरैरेते ते ब्रह्मसूत्रे प्रकल्पिते ।
गृहाण दैवतमये श्रीदत्त नवतंतुके ॥ ३३ ॥
भूतिमृत्स्नासुकस्तूरीकेशरान्वितचंदनम् ।
रत्नाक्षताः कल्पितास्त्वामलंकुर्वेऽथ दत्त तैः ॥ ३४ ॥
सच्छमीबिल्वतुलसीपत्रैः सौगंधिकैः सुमैः ।
मनसा कल्पितैर्नानाविधैर्दत्तार्चयाम्यहम् ॥ ३५ ॥
लाक्षासिताभ्रश्रीवासश्रीखंडागुरुगुग्गुलैः ।
युक्तोऽग्नियोजितो धूपो हृदा स्वीकुरु दत्त तम् ॥ ३६ ॥
स्वर्णपात्रे गोघृताक्तवर्तिप्रज्वालितं हृदा ।
दीपं दत्त सकर्पूरं गृहाण स्वप्रकाशक ॥ ३७ ॥
सषड्रसं षड्विधान्नं नैवेद्यं गव्यसंयुतम् ।
कल्पितं हैमपात्रे ते भुंक्ष्व दत्ताम्बदः पिब ॥ ३८ ॥

॥ २९ ॥ ३० ॥ गांगाद्भिर्गंगोदकैः ॥ ३१ ॥ आचान्तं जलं येन सः भो आचान्तजल कृताचमन । एणीमृगस्येदमैणेयम् ॥ ३२॥ ॥ ३३ ॥ भूतिर्भस्म मृत्स्ना प्रशस्तमृत्तिका सस्नौ प्रशंसायामिति पाणिनीयात् ॥३४॥ सौगन्धिकैः कह्लारैः॥३५॥ सिताभ्रो हिमवालुका श्रीवासो वृकधूपः। अगुरुः कालागुरुः ॥३६॥ भोः स्वप्रकाशक स्वयंज्योतिः ॥ ३७ ॥ भक्ष्यमपूपादि भोज्यं पायसादि लेह्यं गुडादि चोष्यमिक्षुदण्डादि पेयं पानकादि चर्व्यं चिपिटादि एवं षड्विधं मधुरादिषड्रसयुक्तं अद इदमम्बु ॥ ३८ ॥

प्रक्षाल्यास्यं करौ चाद्भिर्दत्ताचम्य प्रगृह्यताम् ।
तांबूलं दक्षिणां हैमीं कल्पितानि फलानि च ॥ ३९ ॥
नीराज्य रत्नदीपैस्त्वां प्रणम्य मनसा च ते ।
परितस्त्वत्कथोद्घातैः कुर्वे दत्त प्रदक्षिणाः ॥ ४० ॥
मंत्रवन्निहितो मूर्ध्नि दत्त ते कुसुमांजलिः ।
कल्प्यंते मनसा गीतवाद्यनृत्योपचारकाः ॥ ४१ ॥
प्रेर्यमाणप्रेरकेण त्वया दत्तेरितेन ते ।
कृतेयं मनसा पूजा श्रीमंस्तुष्टो भवानया ॥ ४२ ॥
दत्त मानसतल्पे मे सुखनिद्रां रहः कुरु ।
रम्ये व्यायतभक्त्यामतूलिकाढ्ये सुवीजिते ॥ ४३ ॥

रसज्ञा वशा तारकं स्वादु लभ्यं गृहीतं कदाचिन्न ते नाम दत्त ।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त॥४४॥
वियोन्यंतरे दैवदार्ढ्याद्विभो प्राग्गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ॥४५॥

हैमीं स्वर्णमयीं ॥ ३९ ॥ त्वत्कथोद्घातैः तव कथाभ्यागानैः ॥ ४० ॥ कुसुमांजलिः पुष्पांजलिः । मंत्रवत्समंत्रकं यथा तथा ॥४१॥ अस्मदादीनां प्रेर्यमाणानां प्रेरकेणांतर्यामिणा त्वयेरितेन ॥ ४२ ॥ रह एकान्ते कामसंकल्पादिकोलाहलवर्जिते रम्ये मैत्र्यादिभावनया शोभमाने व्यायतभाक्तिरूपा कोमला मृदुला तूलिका तयाढ्ये कल्पितवालादिव्यजनेन सुवीजिते असुभिः प्राणैर्वीजिते वा ॥ ४३ ॥ इति मानसपूजा ॥ अथ अपराधक्षमापनस्तुतिः भुजंगप्रयातवृत्तैरुच्यते ॥ रसज्ञा जिह्वा वशवर्तिनी । विद्यत इति शेषः । पुनर्भवन्नाम स्वादु लभ्यं च न तु महार्घं । भोः क्लिन्नचित्त आर्द्रहृदय ॥ ४४ ॥ अन्या विविधा योनयो योन्यंतरं तस्मिन् ॥ ४५ ॥

मया मातृगर्भस्थितिप्राप्तकष्टाद् गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त॥४६॥
मया जातमात्रेण संमोहितेन गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त॥४७॥
मया क्रीडनासक्तचित्तेन बाल्ये गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त॥४८॥
मया यौवनेऽज्ञानतो भोगतोपाद् गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त॥४९॥

मया स्थाविरेऽनिघ्नसर्वेंद्रियेण
गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं
क्षमस्वापराधं प्रभो क्लिन्नचित्त॥ ५०॥

हृषीकेश मे वाङ्मनःकायजातं
हरेऽज्ञानतो ज्ञानतो विश्वसाक्षिन्।
क्षमस्वापराधं क्षमस्वापराधं
क्षमस्वापराधं प्रभो क्लिन्नचित्त॥ ५१॥

स्मृतो ध्यात आवाहितोस्यर्चितो वा
न गीतः स्तुतो वंदितो वा न जप्तः।
क्षमस्वापराधं क्षमस्वापराधं
क्षमस्वापराधं प्रभो क्लिन्नचित्त॥ ५२॥

॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ अनिघ्नानि पराधीनानि सर्वेन्द्रियाणि यस्य तेन ॥५०॥५१॥ न स्मृतो न ध्यात इति प्रत्येकं सम्बध्यते ॥५२॥

दयाब्धिर्भवादृङ् न सागाश्च मादृ-
ग्भवत्यामतोऽभवान्मे शरण्यः ।
यथालम्बनं भूर्हि भूनिःसृतांघ्रे-
रिति प्रार्थितं दत्तशिष्येण सारम् ॥ ५३ ॥

दत्तं वन्दे दशातीतं दयाब्धिं दहनं दमं ।
दक्षं दरघ्नं दस्युघ्नं दर्शं दर्पहरं दवम् ॥ ५४ ॥
दातारं दारुणं दान्तं दास्यादं दानतोषणम् ।
दानं दावप्रियं दावं दासत्रं दारवर्जितम् ॥ ५५ ॥
दिक्पं दिवसपं दिक्स्थं दिव्ययोगं दिगंबरम् ।
दिव्यं दिष्टं दिनं दिश्यं दिव्यांगं दितिजार्चितं ॥५६॥
दीप्तं दीधितिं दीप्तं दीर्घं दीपं च दीप्तगुं ।
दीनसेव्यं दीनबंधुं दीक्षादं दीक्षितोत्तमम् ॥ ५७ ॥

यतो दयासागरो भवादृङ् न विद्यते सागाः सापराधश्च मादृङ् न भवति त्वयि जातापराधस्य मे मम त्वमेव शरण्यः। अर्थांतरेण द्रढयति भुवि निःसृतांघ्रेः स्खलितपादस्य भूर्भूमिरेवावलम्बनं यथा तथा हिरेवार्थे शिष्येण शासनार्हेण इति संपूर्णम् ॥ ५३ ॥ अथाष्टोत्तरशतनामावलिः ॥ दहनमग्निरूपं एवमन्यत्राप्यूह्यं दरघ्नं भयहरं दस्युघ्नं चोरघ्नं पितृतृप्तये दर्शरूपं दवो वनं तद्रूपं 'वन्याय च' इति श्रुतेः । इमान्यभिधानानि श्रीगुरोः सर्वात्मत्वबोधकानि ॥ ५४ ॥ पापिनां यमरूपेण दारुणं दावप्रियं वनप्रियं दावं वनाग्निरूपं दानं सात्विकदानरूपं दासत्रं दासपरिपालकं ॥ ५५ ॥ दिक्पं दिक्पालरूपं दिवसपं सूर्यरूपं दिक्स्थं दिग्गजरूपं दिव्यं दिवि भवं देवरूपं दिष्टं कालरूपं दिश्यं दिग्भवं दैत्यपूजितं च ॥ ५६ ॥ दीनं दरिद्रपालकं दीधितिं किरणरूपं दीप्तगुं देदीप्यमानदृष्टिं प्रखरकिरणं वा मंत्रादिदीक्षां

दुर्ज्ञेयं दुर्ग्रहं दुर्गं दुर्गेशं दुःखभंजनम् ।
दुष्टघ्नं दुग्धपं दुःखं दुर्वासोग्र्यं दुरासदम् ॥ ५८ ॥
दूतं दूतप्रियं दूष्यं दूष्यत्रं दूरदर्शिपम् ।
दूरं दूरतमं दूर्वाभं दूरांगं च दूरगम् ॥ ५९ ॥
देवार्च्यं देवपं देवं देयज्ञं देवतोत्तमम् ।
देहज्ञं देहिनं देशं देशिकं देहिजीवनम् ॥ ६० ॥
दैन्यं दैन्यहरं दैवं दैन्यदं दैविकांतकम् ।
दैत्यघ्नं दैवतं दैर्घ्यं दैवज्ञं दैहिकार्तिदम् ॥ ६१ ॥
दोषघ्नं दोषदं दोपं दोषित्रं दोर्द्वयान्वितम् ।
दोषज्ञं दोहपं दोषेड्बन्धुं दोर्ज्ञं च दोहदम् ॥ ६२ ॥
दौरात्म्यघ्नं दौर्मनस्यहरं दौर्भाग्यमोचनम् ।
दौष्ट्यत्रं दौष्कुल्यदोषहरं दौर्हृद्यभंजनम् ॥ ६३ ॥

ददातीति तं दीक्षादं ॥५७॥ ब्रह्मरूपत्वाद् दुर्ज्ञेयं 'गुहाहितं गह्वरेष्ठं'इति श्रुतेः। दुर्गं गुहाहितं दुर्गा हैमवती तदीशः शिवस्तद्रूपं दुर्गपालकं वा ॥५८॥ अग्निरूपेण देवदूतं दूष्यं वस्त्रवेस्मरूपं दूष्यत्रं पापितारकं दूरदर्शिपं पण्डितेशं दूरतमं बहिर्मुखानां कल्पकोटिभिरप्यलभ्यत्वात् ॥ ५९ ॥ समयोचितदेयं जानातीति तथा तं देयज्ञं देहज्ञं क्षेत्रज्ञं अवताराभिप्रायेण देहिनं देशिकमुपदेष्टारं सद्गुरुं ॥ ६० ॥ दैवं प्राक्तनकर्मरूपं दैन्यदं दैन्यहरं दैविकान्तकं आधिदैविकादिदुःखहरं विष्णुरूपेण दैत्यघ्नं दैहिकार्तिहरं दैवज्ञं गणकरूपम् ॥ ६१ ॥ उन्निनीषया भक्तानां दोषघ्नं अधोनिनीषया पापिनां दोषदं प्राक्कर्मफलदानाय कफादिदोषरूपं दोषिभ्यस्त्रायत इति तं सांसर्गिकपापहरं दोर्द्वयान्वितं द्विभुजं दोषेड्बन्धुं चंद्रसोदरं दोर्ज्ञं भुजकोट्यादिज्ञं गवादिदोहदं ॥ ६२ ॥ दौरात्म्यघ्नं दुःस्वभावहरं दौष्ट्येभ्यस्त्रायत इति तं दौष्ट्यत्रं ॥ ६३ ॥ दण्डनीतिज्ञं दण्डिनं मस्करिणं दंभिशासनं दांभिक-

दण्डज्ञं दण्डिनं दण्डं दंभघ्नं दम्भिशासनम् ।
दन्त्यास्यं दन्तुरं दंशिघ्नं दण्ड्यज्ञं च दण्डदम् ॥ ६४ ॥
अनन्तानन्तनामानि सन्ति तेऽनंतविक्रम ।
वेदोऽपि चकितो यत्र नुर्वाग्हृद्दूर का कथा ॥ ६५ ॥
नामरूपगुणातीत भेदसंगविवर्जित ।
एक एवाद्वितीयोऽसि परमात्मन्हि नाकवत् ॥ ६६ ॥
नामरूपगुणाभेदा मायासक्तिरनेकता ।
कल्पिता स्थूलधीभिस्ते महाकाशादिवद्विभो ॥ ६७ ॥
बहुरूपाप्रमेया ते मायैषा जगदीश्वर ।
मन्यते मेऽहमित्यस्या रममाणो गुणेष्वसौ ॥ ६८ ॥

शास्तारं दन्त्यास्यं गणेशरूपं दन्तुरं करालं राक्षसादिरूपं दंशिघ्नं माक्षिकाबाधावारकं दण्ड्यज्ञं दण्डार्हाभिज्ञमिति ॥ ६४ ॥ अनन्तविक्रमत्वादनन्तस्य तेऽनन्तनामानि सन्ति यत्र नामसंख्याने वेदोऽपि शंकित हे वाग्हृद्दूर वाङ्मनसयोरगोचर तव नामसंख्याने नुर्नरस्य पुनः का कथा न कापि ॥६५॥ नामरूपगुणानतीतस्ततोप्यधिकस्तत्संबुद्धौ त्रिविधभेदैर्मायासंगेन च विवर्जितस्तत्संबुद्धौ नाकवदाकाशवत्त्वं एक एवाद्वितीयोऽसि परमात्मरूपत्वात् ॥ ६६ ॥ तथा स्थूलबुद्धिभिर्लौकिकैः सगुणनिष्ठैर्वा नामरूपगुणादयः यथैकस्यैवाकाशस्य महाकाशाभ्राकाशजलाकाशघटाकाशा उपाधिवशात्कल्प्यंते तथा हे विभो व्यापक ते तवापीयं कल्पना न तात्त्विकी किंतु कल्पितत्वाद्घटाकाशादिवदज्ञानविजृंभिता किंवा शुद्धस्वरूपज्ञानार्थं शाखाचंद्रवज्ज्ञानिभिः कल्पिताः 'विकल्पतदभावाभ्यामसंस्पृष्टात्मवस्तुनि । विकल्पितत्वलक्ष्यत्वसम्बंधाद्यास्तु कल्पिताः' इत्युक्तेः ॥६७॥ अंशभेदेन गुणभेदेन च बहुरूपाऽप्रमेया प्रमाणाविषया तथाप्येषा कार्ये-

कारणं त्विदमेवात्र जगद्विपरिवर्तने ।
येषां नाव्यक्त गम्योऽसि त्वमेव परमा गतिः ॥ ६९ ॥
आसत्यलोका लोकास्ते पुनरावर्तिनोऽक्षर ।
तस्मात्त एव धन्याः स्युर्गृहीतं धाम यैस्तु ते ॥ ७० ॥

णानुमेया ते तव माया सत्त्वासत्त्वाभ्यामनिर्वाच्या अस्या गुणेषु मायारचितदेहादिष्वध्यासेन रममाणोऽसौ पुरुषो ममाहमिति मन्यते ॥ ६८ ॥ जगतो विपरिवर्तनेऽभिमानरूपमिदमेव कारणं हे अव्यक्त त्वमेव परमा गतिरिति येषां न गम्योसि ॥ ६९ ॥ यो यदात्मकः स तद्गतस्तदाश्रयश्च भवति इति वक्तुं युक्तं मृदाश्रय इव घटादिः अतएव परमां स्वगतिमविद्वांसो ये ते लोका 'आब्रह्मभुवनाल्लोका' इति स्मृतेः सत्यलोकोऽस्ति येषां तान्मर्यादीकृत्येत्यासत्यलोकाः । आङ्मर्यादावचन इत्यव्ययीभावः । ते लोकाः पुनरावर्तिनः । ननु कौषीतकिब्राह्मणे पर्यंकविद्यायां 'तं पंचशतान्यप्सरसां प्रधावन्ति शतं चामरहस्ताः शतं मालाहस्ताः शतमांजनहस्ताः शतं वासोहस्ताः शतं फलहस्तास्तं ब्रह्मालंकारेणालंकुर्वंति स ब्रह्मालंकारेणालंकृतो ब्रह्मविद् ब्रह्मैवाभिप्रैति'इत्यादिना स्वाराज्यं प्राप्य ब्रह्मणा सह मुच्यते 'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्'इति न्यायात् । 'वेदान्तविज्ञानसुनिश्चितार्थाः' इति श्रुतेः 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परम्पदम्'इति स्मृतेश्च क्रममुक्तिश्रवणात् 'छायातपयोरिव ब्रह्मलोक'इति काठके चेतरलोकापेक्षया ब्रह्मणो लोके छायातपयोरिवात्मानात्मनोः स्पष्टतरप्रतीतिरीदृशे ब्रह्मलोके क्रममुक्त्यर्हेऽपि तद्गतानामितरलोकगतानामिव कथं पुनरावृत्तिरुच्यत इति चेदुच्यते ब्रह्मलोको द्वेधा क्रममोक्षगामिलभ्यः कार्मिलभ्यश्च तयोः कार्मिण एव पुनरावृत्तिरिति विवेकः प्रकृष्टपुण्यकर्मवशाद् ब्रह्मलोकगतानामपि तत्र ज्ञानसाधनाभावात्पुण्योपभोगान्ते पुनरावृत्तिरत उक्तं पुनरावर्तिन इति 'साम्पराये तर्तव्याभावात्तथा

नानुमानेन ते धाम ग्रहीतुं शक्यते ह्यतः ।
मृग्योऽसि पुरुषेणैव बुद्ध्यादिगुणहेतुभिः ॥ ७१ ॥
पुंस्त्वेऽप्यर्क इवांधानां गोकल्पानामतींद्रिय ।
स्वप्नेऽपि नैव ते वार्ता पुनः प्रत्यक्षता कुतः ॥ ७२ ॥
प्रेष्ठत्वद्भक्तसंयोगविवेकामलदृष्टिभिः ।
सांख्ययोगपरैर्धीरैः क्रमात्ते धाम गम्यते ॥ ७३ ॥
तस्माद्दत्तं नृजन्मेदं त्वया दिष्ट्याऽमृतक्षमं ।
सद्दृष्टिदानाद्भगवंस्तत्साफल्यं कुरु प्रभो ॥ ७४ ॥
त्वत्प्रेमभक्त्यैव सदा मदात्मा
धिया धियं दृष्टिमपीश दृष्ट्या ।
अंगैः सदांगानि दृढं दयाब्धे
हरे निबध्नात्विति मेऽस्ति याचूञा ॥ ७५ ॥

ह्यन्य' इति न्यायोऽत्रानुसन्धेयस्तस्मादात्मभावेन ते धाम स्वरूपं यैर्गृहीतं ते धन्या एव ॥ ७० ॥ हि यस्मादनुमानेन ते धाम स्वरूपं गन्तुं ज्ञातुं न शक्यतेऽतः पुरुषेणैवाप्रमत्तेन बुद्ध्यादिगुणहेतुभिर्मृग्योऽसि देहव्यतिरिक्तत्वंपदार्थशुद्धिमात्रस्यैवानुमानेन विवक्षित्वात् ॥ ७१ ॥ पुरुषत्वेऽपि पशुकल्पानां नृणां स्वप्नेऽपि तव वार्ता नैव पुनः कुतस्तरां प्रत्यक्षता साकारब्रह्मनिष्ठतापि नैव लभ्या पुनर्मोक्षवार्ता तु दूरतोऽपास्तैवेति भावः । तस्य ज्ञानैकलभ्यत्वात् 'नान्यः पन्था अयनाय विद्यत' इति श्रुतेः ॥७२॥ प्रेष्ठः प्रियतमः स चासौ त्वद्भक्तश्च तस्य संयोगः विवेको विचारश्च तावेवामलदृष्टी येषां तैः सांख्यं ज्ञानं योगो निष्कामकर्मानुष्ठानं तत्परैर्ब्रह्मचर्यादिसाधनसंपन्नैः क्रमाच्छ्रवणमननादिक्रमेण गम्यते ॥ ७२ ॥ अमृतक्षमं निःश्रेयसहेतुभूतं 'पुरुषे त्वाविस्तरामात्मा' इति श्रुतेः ॥ ७४ ॥ त्वत्प्रेमभक्तिद्वारेणैव मदात्मा मदीयस्वभावः सदा निरंतरं तव मम च परस्परवियोगो मास्तु

पादौ त्वदीयालयतीर्थयात्राविहारिणावर्चनतत्परौ मे ।
करौ रसज्ञापि भवत्वजस्रं सत्त्वत्कथोद्गातरसज्ञतोत्का ॥७६॥

त्वत्पादपद्मच्युतपुष्पगंधं नासा भजत्वक्षियुगं गुणात्मन् ।
त्वन्मूर्तिमासेचनकां श्रुती मे श्राव्यास्त्वदीया भगवन्कथाश्च ।७७।

त्वदीयभक्तांघ्र्यमलाब्जपूतां धूलिं मदंगानि सदा वहंतु ।
मनस्तुरंगो निवसत्वजस्रं त्वय्येव दीपोऽग यथा निवाते ॥७८॥

शिरो नमत्वीश्वर तेंघ्रिपद्मं देहः सदालिंगयतु त्वदर्चाम् ।
एषा त्वदीयैव तनुस्त्वमेव संबंधिनो मे न हि केऽद्वितीय ॥७९॥

इत्येवंरूपा याच्ञा ॥ ७५ ॥ इदं शरीरमपि त्वदुपयोगिकं भवत्विति प्रार्थ्यते पादावित्यादिना त्वदीयालयानि प्रासादाः काश्यादिक्षेत्राणि वा तीर्थानि पुष्करादीनि च तद्गमनशीलौ । करौ त्वत्पूजनतत्परौ । सत्यश्च तास्त्वत्कथाश्च तासां उद्गातरसज्ञतोत्का गीतानंदस्वादज्ञतोत्कंठा च भवतु ॥ ७६ ॥ भो गुणात्मन्नाविष्कृतसगुणमूर्ते यद्दर्शनात्तृप्तेरंतो नास्ति सासेचनका तां श्रुती कर्णौ श्राव्या हृद्याः ॥ ७७ ॥ मदंगानि शिरःप्रभृतीनि मन एव तुरंगोऽश्वः परमानंदरूपे त्वय्येव नितरां वसतु यथा निवातदेशे इतस्ततश्चलनकारणाभावाद्दीपो निश्चलो भवति तथा संकल्पप्रभवसर्वकामत्यागपूर्वकं वैराग्येणाभ्यासेन च शनैः शनैरुपरतं चित्तं त्वय्येव नितरां वसतु धर्ममेघाख्यनिर्बीजसमाधिसिद्धिर्भवत्विति प्रार्थना ॥७८॥ त्वदर्चां त्वत्प्रतिमां त्वमेव मे संबंधिनः पित्रादयो मित्राणि च भो अद्वितीय त्वत्तोऽन्ये केऽपि मम संबंधिनो न हि एवमात्मज्ञानयोग्यः कार्यकारणसंबंधोऽस्त्विति प्रार्थनाभावः ॥ ७९ ॥ ननु ऋषिपुत्रस्य मम कुतो न्वियं प्रार्थनेत्यत आह नूनं निश्चयेन ऋषिपुत्रोऽत्रिपुत्रो न वर्णाश्रमादिलिंगभागपि न वर्णाश्रमादयो देहे मायया परिकल्पिता इत्युक्तेरात्मनस्तत्र तत्संबंधाभावोऽसंगत्वात् 'असंगो

नूनं भवानृषिर्नैव न वर्णाश्रमलिंगभाक् ।
निर्मितं भवतैवेदं विश्वं स्वांशांशतोऽखिलम् ॥ ८० ॥

न जानंति भवन्मायामोहिता दिव्यमुत्तमं ।
भवद्धामात एवैते भ्रमंत्यसुरभावगाः ॥ ८१ ॥

कर्ता भर्तासि हर्ता त्वं प्रत्यक्षं तत्त्वमस्यपि ।
भो सर्वं खल्विदं ब्रह्म त्वमस्यात्मासि केवलं ॥ ८२ ॥

त्वदुदेति रमत्येतद्विश्वं त्वय्येव लीयते ।
अष्टमूर्तिभिराभिस्त्वमाभासीव जगन्मयः ॥ ८३ ॥

दिक्पाला लोकपालाश्च श्रूयते दृश्यतेऽखिलं ।
चराचरं जगल्लोका विष्णो तेऽवयवा अमी ॥ ८४ ॥

न हि सज्जत' इति श्रुतेः । यो हि कूटस्थं प्रत्यक्स्वरूपं स्वात्मतयानुभवति स वर्णाश्रमलिंगभाङ् न भवति किमुत वक्तव्यं लीलाविष्कृतमूर्तेरपि परमात्मनो वर्णाश्रमादिराहित्यं । स्वांशो ब्रह्मा तस्यांशा मरीच्यादयस्तद्द्वारेण भवतैवाभिन्ननिमित्तोपादानकेनेदं नामरूपात्मकं विश्वं निर्मितम् ॥ ८० ॥ ईदृशं जगत्कारणं भवद्धाम न जानंत्यत एव भ्रमंति संसरंति ॥ ८१ ॥ सगुणरूपेण कर्त्रादिरूपोपि त्वं तत्त्वमसि इदं विवर्तरूपं जगत्केवलमात्मा परं ब्रह्म ॥ ८२ ॥ विश्वोद्भवादिकारणं त्वमेवेत्याह त्वदिति रमति रमते 'यतो वा इमानि भूतानि' इत्यादिश्रुतिभ्यः पृथिव्यादिभिरष्टमूर्तिभिः । इवशब्देन न तथात्वं (इति) सूचितं ॥८३॥ दिक्पाला इंद्रादयः लोकपाला ब्रह्मादयः श्रूयते श्रुत्या ज्ञाप्यते स्वर्गादि आमुष्मिकं प्रत्यक्षादिप्रमाणैः दृश्यते चराचरं जगत् लोकाः स्वरादयः पातालादयश्च हे विष्णो इमानि तवांगानि विराड्रूपेणावस्थितत्वात् ॥८४॥ गुहाहितत्वान्निगूढं तत्त्वं यस्य तत्संबुद्धौ

निगूढतत्त्व ते ज्ञातं यत्किंचिल्लोकदुर्ग्रहं ।
चेष्टितं ते प्रसादोयं प्राक्पुण्यैरभ्युपस्थितः ॥ ८५ ॥
सुखमैंद्रियकं क्वापि न कांक्षे ते पदाश्रितः ।
नाकादीन्न प्रशंसामि नैव निंदामि नारकान् ॥ ८६ ॥
यथेच्छं क्वापि मां कर्मयोगात्स्थापय विश्वभृत् ।
मां यत्र क्वापि ते भक्तिर्न जहात्विति कांक्षितम् ॥८७॥
स्तुवंतु निंदंत्वपि ताडयंतु मां पूजयंत्वत्र जना न वापि ।
देहः पतत्वद्य युगांतरे वा न किंचिदिष्टं न च मेप्यनिष्टम्॥८८॥
हृद्धयात्मेंद्रियवाक्कायैः सदा प्रकृतिभावतः ।
यद्यत्करोम्यर्पयामि परात्मन्दत्त सर्वं ते ॥ ८९ ॥
लीलात्मना योऽत्रिगृहेऽवतीर्णो दत्ताख्य उन्मत्तपिशाचवद्यः ।
बालो युवा क्वापि जरन्जटाभृत्क्वचिद्दर्षिर्व्यक्तपरीक्षितश्च ॥ ९० ॥

लोकदुर्ग्रहं तव चेष्टितं यत्किंचिज्ज्ञातं अयं तव प्रसादः उपस्थितः प्राप्तः ॥ ८५ ॥ इतः परं त्वत्पदाश्रितः सन् क्वापि स्वर्गे नरकेऽपि विषयसुखं न कांक्षे कर्मफलस्यावश्यंभावित्वात् कदाचित्पुण्यातिशयेन प्राप्तान्स्वर्गादीन्न प्रशंसामि नारकांश्च नैव निंदामि ॥ ८६ ॥ हे विश्वभृत् क्वापि स्वर्गे नरके मर्त्यलोके वा तव प्रेमलक्षणा भक्तिर्यत्र क्वापि स्थितं मां न जहातु इति मया कांक्षितम् ॥ ८७ ॥ न वा पूजयंतु सुखादि किमपीष्टं न मे मम दुःखाद्यनिष्टमपि न ॥ ८८ ॥ हृन्मनः धीर्बुद्धिः आत्माहंकारः इंद्रियाणि दश पुनर्वाग्ग्रहणं विशिष्टवाचिककर्मज्ञापनार्थं कायो देहश्च तैः प्रकृतिस्वभावतो लौकिकमपि यद्यत्करोमि कर्म तत्तत्ते तुभ्यं समर्पयामि ॥ ८९ ॥ लीलात्मना लीलाविग्रहेण भक्तपरीक्षार्थमुन्मत्तपिशाचवत् न तु तथा अलुप्तज्ञानैश्वर्यत्वात् जरन्वृद्धः क्वचिद्व्यक्तः क्वचिल्लौकैः परीक्षितश्च ॥ ९० ॥

त्यागी सुभोगी क्वचिदस्ति संगी योगी सुवासाः क्वचिदस्ति नग्नः।
तुष्टः कृशः पुष्ट इह क्वचिद्यो दंडी च भिक्षुः क्वचिदस्ति वर्णी॥९१॥
गृही वनी वर्णविरुद्धचेष्टः क्वचिच्च वर्णाश्रमधर्मयुक्तः।
इत्यादयो यस्य विचित्रचेष्टा देवर्षिहृद्वागयनं व्यतीताः ॥ ९२॥
यो भक्तरक्षाक्षण एव यस्य वै सेवा स्मृतिर्भोज्यनिवेदनं धिया।
पूजा फलं योऽर्पयतीह दुर्लभं भक्तस्मृतौ संनिधिकृत्क्षणे क्षणे ९३

यस्यास्ति माहुरे निद्रा निवासः सह्यपर्वते।
भागीरथ्यां सदा स्नानं ध्यानं गंधर्वपत्तने॥ ९४ ॥
कुरुक्षेत्रे चाचमनं धूतपापेश्वरे तथा।
विभूतिधारणं संध्या करहाटे श्रियः पुरे॥ ९५ ॥
भिक्षा विठ्ठलपुर्यस्य सुगंधिद्रव्यधारणं।
भुक्तिः सारपुरे सायंसंध्या पश्चिमसागरे॥ ९६ ॥

त्यागी निष्कामकर्मानुष्ठाता क्वचिदिति सर्वत्र संबध्यते दंडी दंडधरो मस्करी वा भिक्षुर्दंडरहितः परमहंसः वर्णी ब्रह्मचारी॥ ९१ ॥ गृही गृहस्थः सुभोगीति पूर्वमुक्त्वाप्याश्रमाचारवत्त्वं पुनर्गृहीशब्देन ज्ञापितं वनी-वानप्रस्थः वर्णविरुद्धचेष्टोऽत्याश्रमस्थः ईदृशो दृष्टोपि पुनः क्वचिद्वर्णाश्रम-धर्मयुक्त इत्यादयो यस्य विचित्रचेष्टा अद्भुतलीलाः यास्ता देवर्षीणां हृन्मनो वाग्वाणी तयोः पंथानं विशेषेणातीताः पुनर्मनुष्याणां हृद्वाङ्मार्ग-मतीता इति किमु वक्तव्यं॥ ९२ ॥ स्वभक्तरक्षायां क्षणः उत्सवो यस्य स यस्य स्मृतिः स्मरणमेव सेवा यत्स्वभोज्यस्य निवेदनं भक्त्या तस्मै समर्पणं सैव पूजा ईदृश्या भक्त्या भावितो भक्तेभ्यस्तपआदिभिर्दुर्लभं फलं यच्छति प्रयच्छति॥ ९३ ॥ ९४ ॥ धूतपापेश्वरे हिमाद्रिपादे विभूतिधारणं॥ ९५ ॥ श्रियः पुरे करवीरे भिक्षा सारपुरे पांचालेश्वरे भोजनं॥ ९६ ॥

स एव भगवान्दत्तः सदा वसतु मे हृदि ।
हृद्धींद्रियादिव्यापारे सदा तत्स्मृतिरस्तु मे ॥ ९७ ॥
पादादि मूर्धपर्यंतमेतद्वै भौतिकं वपुः ।
परिरक्षतु विश्वात्मा सदा सर्वत्र सर्वतः ॥ ९८ ॥

अपाणिपादो जवनो ग्रहीता
पश्यत्यदृग्योपि शृणोत्यकर्णः ।
यो वेत्ति वेद्यं न हि यस्य वेत्ता
सोऽग्र्यः प्रधानः पुरुषो हि दत्तः ॥ ९९ ॥
आधारभूतः स्थिरजंगमानां
क्षमास्वरूपस्थितिरस्ति नित्यं ।
आप्यायते यो जगदप्स्वरूपी
सर्वाघहृत्स्थास्नुचरिष्णुजीवः ॥ १०० ॥

हृन्मनः आदिशब्देन देहः तत्स्मृतिः तस्य श्रीदत्तस्य स्मृतिः स्मरणं ॥ ९७ ॥ पांचभौतिकं स्थूलं सूक्ष्मं च शरीरं तयोर्भौतिकत्वात् कवचमिदं ॥ ९८ ॥ अपाणिर्ग्रहीताऽऽदानकर्ता अपादोपि जवनो गंता नात्र पाठक्रमः किंतु श्रुतिवदर्थक्रमः पाठक्रमादर्थक्रमस्य बलीयस्त्वादल पठितस्यापि तदनन्तरं संगतिरवगंतव्या यथान्येषां दाहकोप्यग्निः स्वात्मानं न दहति तद्वदयं वेद्यं वेत्ति परंतु स्वमात्मानमियन्मानोऽहमिति न वेत्ति तस्य सर्वज्ञस्य कोऽन्यो वेत्ता न कोपीत्यर्थः तर्हि सर्वज्ञत्वभंग इति चेन्न न हि शशविषाणाज्ञानं सर्वज्ञत्वं हंति अग्र्य आदिः प्रधानः श्रेष्ठः पुरुषोऽतर्यामी ॥ ९९ ॥ अस्याष्टमूर्तित्वमाह क्षमा पृथ्वी अप्स्वरूपी सन् सर्वाणि च तानि कायिकादीन्यघानि पापानि सर्वेषामघं वा हरतीति तथा स्थास्नु स्थिरतरं वृक्षादि चरिष्णु चरणशीलं जंगमं तयोर्जीवभूत आत्मा ॥ १००॥

वैश्वानरात्माखिलदेहसंस्थः पचत्यसौ प्राणसखः सदान्नं ।
यो भास्वदात्माखिलकर्मसाक्षी विश्वं सदा चेतयते स्वभासा॥१॥
योऽब्जो रसात्मा सकलौषधीर्वै पुष्णाति संतापहरोऽखिलेड्यः ।
क्षेत्रेषु भूत्वा दशधाखिलेषु प्राणात्मको यः प्रवतेऽखिलात्मा॥२॥

आकाशरूपोऽखिलगोऽपि सौक्ष्म्या-
द्योऽभेदसंगः किल शब्दसंस्थः ।
भुनक्ति चोत्क्रामति तिष्ठतेपि
मूढा विदुर्यं न सदात्मरूपम् ॥ ३ ॥

यः सर्वहृत्स्थोऽस्य यतः स्मृतिर्विद्वेदांतकृद्योपि च वेदवेद्यः ।

वैश्वानरो जाठराग्निरात्मा स्वरूपं यस्य त्रिकोणत्वेन नृदेहे चतुष्कोणत्वेन पशुषु वर्तुलत्वेन पक्षिषु दीर्घत्वेन मत्स्यादिषु च देहसंस्थोऽपानसहितप्राणः सखा यस्य सः प्राणापानयोरुद्दीपकत्वात् 'ऊर्ध्वमग्नेर्जलं कृत्वान्नं च कृत्वा जलोपरि ॥ अग्नेश्चाधः स्वयं प्राणः स्थित्वाग्निं धमते शनैः' इत्याद्युक्तत्वात् 'प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्'इति स्मृतेश्च भास्वदात्मा सूर्यरूपी प्रकाशयति ॥ १ ॥ अब्जश्चंद्रः व्रीह्याद्यौषधीः संवर्धयति अखिलेड्यः सर्वस्तुत्यः तापहरत्वात् ईडयत्वं सर्वस्यापि क्षेत्रेषु देहेषु प्राणापानसमानव्यानोदाननागकूर्मकृकरदेवदत्तधनंजयाः एवं दशधा सूत्रत्वेनावस्थितत्वाद्वाखिलात्मा 'वायुर्वै गौतम तत्सूत्रम्' इति श्रुतेः ॥ २ ॥ सूक्ष्मत्वाद्भेदसंगरहितः शब्दसंस्थ आकाशस्य शब्दगुणत्वात् ॥ आत्मरूपं जीवरूपं देहान्तरं गच्छन्तं ॥ ३ ॥ हृत्स्थोऽन्तर्यामिरूपेणाविष्ट इव प्राणिमात्रस्य पूर्वानुभूतार्थस्मरणं स्मृतिः विषयेन्द्रियसंयोगजज्ञानं वित् वेदान्तकृत्सांप्रदायप्रवर्तको ज्ञानप्रदो गुरुः वेदैः सर्वैस्तत्तद्देवतारूपेण वेद्य उपनिषद्भागरूपवेदवेद्यो वा 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः समा समानस्वभावै

समौ यदंशौ सयुजौ सुपर्णौ वृक्षाश्रितौ भुक्त्यवलोकनोत्कौ ॥४॥

सत्वं परात्मा पुरुषोत्तम श्रुतिख्यातः समाविश्य जगत्त्रयं सदा ।
ईशाव्ययानंत बिभर्षि दत्त ते पादाब्जयुग्माय नमोस्तु सर्वदा॥५॥

वज्रांकुशध्वजाब्जांकयुग्रक्ताब्जाभपत्तलः ।
गूढगुल्फः कूर्मपृष्ठोल्लसत्पादोपरिस्थलः ॥ ६ ॥
जानुपूर्वकजंघश्च विशालजघनस्थलः ।
पृथुश्रोणिश्च काकुत्स्थश्चारुनाभिर्दलोदरः ॥ ७ ॥

चेतनत्वात् यदंशौ जीवेश्वरौ सयुजौ सखायौ सुष्ठु पर्णं गतिः सहायं वा ययोस्तौ। पर्णं गतौ सहाये चेति विश्वः। ओव्रश्चू छेदन इति धातोर्व्रश्चनाद्वृक्षो देहोऽसंगशस्त्रेण छेद्यमानत्वात् तमाश्रितौ। भुक्तिः कर्मफलभोगः अवलोकनं साक्षित्वेन तद्दर्शनं जीवः कर्मफलभोगोत्कंठः ईशस्तु साक्षित्वेनावलोकनोत्कंठः अत्र श्रुती 'ऊर्ध्वमूलोवाक्शाख०' 'द्वाऽसुपर्णा सयुजा०' ॥ ४ ॥ ईदृशो यः स त्वं परमात्माऽचेतनात्क्षराद्विलक्षणश्चेतनादक्षरान्नियंतृत्वेन चोत्तमः अत एव पुरुषोत्तमः 'स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति' इति श्रुतेः श्रुतिविश्रुतस्त्रिभुवनमाविश्य तद्बिभर्षि पालयसि तस्य तव पादकमलयुगलाय सर्वदा नमः प्रव्हीभावोऽस्तु ॥ ५ ॥ अथ ध्यानम् ॥ वज्रादिचिह्नैर्युक्ते रक्तकमलाभे पादतले यस्य गूढावदृश्यौ गुल्फौ यस्य कूर्मपृष्ठमिवोल्लसत्पादयोरुपरि स्थलं यस्य सः ॥ ६ ॥ जानुनः पूर्वभागे लीलया स्थापिता एका जंघा येन सः विशालं पृथुलं जघनस्थलं यस्य पृथ्वी श्रोणिः कटिपश्चाद्भागो यस्य स ककुदि तिष्ठतीति सोवयवविशेषयुक्तः चार्वी गंभीरावर्तवन्नाभिर्यस्य जाडयादिरहितं दलवत्पर्णवदुदरं यस्य सः ॥ ७ ॥ अररमिव कपाटमिव विशालमुरःस्थलं

अररोरा मांसलांसो युगव्यायतबाहुकः ।
सुचिह्नचिन्हितकरः कंबुकंठः स्मिताननः ॥ ८ ॥

स्नैग्ध्यधावल्ययुक्ताक्षश्चलत्पिंगजटाधरः ।
चंद्रकांतिः प्रभुः कृष्णभ्रूरःश्मश्रुकनीनिकः ॥ ९ ॥

भावशुद्धद्विजाकीर्णस्वास्याब्जोऽभीवरप्रदः ।
दत्तात्रेयः स भगवान्सदा वसतु मे हृदि ॥ १० ॥

कलौ द्विराविरासीत्स दीनान्त्रातुं जनान्कलौ ।
सद्धर्मगुप्त्यै श्रीपादनरहर्यभिधानतः ॥ ११ ॥

उड्डीयंते यथाशक्ति यथोच्चावचपक्षिणः ।
अनंतेऽनंतलीलां तन्न्यायाद्वक्ष्ये यथामति ॥ १२ ॥

यस्य सः मांसलौ बलिष्ठौ बाहू यस्य युगवद्विशेषेणायतौ बाहू यस्य स्वार्थे कन् एतेन लंबत्वमुक्तं शोभनचिह्नैर्लक्षितौ करौ यस्य कंबुवत्त्रिवलीयुक्तंठो यस्य ईषद्धास्ययुक्तमाननं मुखं यस्य ॥ ८ ॥ स्निग्धगुणविशिष्टे धवले नेत्रे यस्य चलंत्यः पिंगलवर्णा जटास्तासां धरः धारकः चंद्रस्य कांतिरिव कांतिर्यस्य भ्रुकुटिरुरःस्थलं श्मश्रुणी प्रसिद्धे अक्ष्णोः कनीनिके चैतानि कृष्णानि यस्य ॥ ९ ॥ स्वभावनिर्मलदंताकीर्णं शोभनमास्यकमलं यस्य अभीः अभयं 'वामहस्तेन वरदो दक्षिणेनाभयप्रदः' तिष्ठतु गतिनिवृत्तिं करोत्वित्यर्थः ॥ १० ॥ द्विर्द्विवारं आविरासीत्प्रादुर्बभूव संतः साधवः धर्मः श्रुतिस्मृतिपुराणमूलश्चैषां गुप्त्यै संरक्षणाय ॥ ११ ॥ उच्चावचपक्षिणो नैकभेदाः शलभाद्या गरुडांताः अनंते आकाशे अनन्तलीलां भगवत्कथां ॥ १२ ॥ ॥ इति स्तुतिः ॥

**नौम्युदेति यदज्ञानाज्जगद्रज्ज्वहिवत्पुनः ।**

अथ चरितं ।। ॐ श्रीगुरुदत्तेरणया श्रीगुरुचरितार्थबोधिनीं कुर्वे ।। पूर्वाचार्यमताढ्यां टीकां पश्यंत्वमत्सराः सर्वे ।। १ ।। इह हि खल्वहो अतिगंभीरा दुरवगाह्या विचित्रा माया चेयं यदयं सर्वो जंतुः परमार्थतः परमार्थसतत्वोप्येवंबोध्यमानोहं परमात्मेति न गृह्णाति देहेंद्रिया-दिसंघातमनात्मानं घटादिवदात्मनो दृश्यमानमप्यात्मत्वेनाहं ब्राह्मणोमुष्य पुत्र इत्यनुच्यमानोऽपि गृह्णाति नूनं परस्यैव मायया मोमुह्यमानः प्रायशः सर्वोपि लोको बंभ्रमीति । तद्भ्रमपरिहारार्थं मातापितृशतेभ्योपि गरीयसीभिः श्रुतिभिः परमकारुणिकैर्भाष्यकृद्भिर्बहुबोधिता अपि मिष्टाशी रुग्णो बालो निंबमिव विषयाकृष्टचित्ताः संसारिणस्तं बोधं प्रायो नाद्रियं-तेऽतः खंडलड्डुकवत्सगुणब्रह्मप्रसादरूपफलेन तानादरपूर्वकं परे तत्वे प्रवर्तयितुं श्रीदत्तात्रेयप्रेरणयात्रेयगोत्रो वासुदेवशर्मा कश्चिद्विप्रः श्रुतिसार-संग्रहणरूपं श्रीगुरुचरितग्रंथं चिकीर्षुः काम्यप्रतिषिद्धयोरनारंभादारब्धस्य चोपभोगेन क्षयान्नित्यानुष्ठानेन च प्रत्यवायाभावादयत्नत एव स्वात्मन्य-वस्थानं- मोक्षोथवा निरतिशयायाः प्रीतेः स्वर्गशब्दवाच्यायाः कर्महेतुत्वा-त्कर्मभ्य एव मोक्ष इत्यादिपूर्वपक्षाननूद्य निराकृत्य चांतेऽविद्याकामकर्मो-पादाननिवृत्तौ स्वात्मन्यवस्थानं मोक्षः स्वयं चात्मा ब्रह्म तद्विज्ञानादविद्या-निवृत्तिर्मोक्ष इति भाष्यकृद्भिरुक्तत्वाज्ज्ञानकांडस्य मुख्यतमत्वात्साक्षा-न्मोक्षप्रदत्वाच्च आदौ भगवद्गुणानुवादसहितं ज्ञानकाडं वक्तुं निर्विघ्नतया तत्परिसमाप्तिप्रचयगमनार्थं शिष्टाचारप्राप्तं मंगलं तावदनुष्टुभा निबध्नाति नौमीति ।। श्रीगुरुः प्रथमाध्याये श्रीगंधर्वपुरे स्तुतः ।। स्वप्ने व्यदर्शयन्नाम-धारकाय निजं महः ।। १ ।। तं चिदानंदसद्गुरुं नौमि ।। कोऽसौ यस्य नित्यमुक्तस्य विवर्ताधिष्ठानस्य जगदुपादानभूतस्वाश्रयस्वविषयमायाख्या-निर्वाच्यशक्तिसहितस्य सत्यज्ञानानंतादिलक्षणस्य दत्तात्रेयाख्यस्य सर्वेश्वर-स्याज्ञानादविद्यागतव्यामोहकनिबंधनाद्रज्जावहिरिव नामरूपाऽऽत्मकं जगदु-देति उत्पद्यते ।। अत्र रज्जुसर्पदृष्टांतकथनेन विवर्तवादः एवांगीकृतः श्रुति-

**यत्तत्वं मीलति ज्ञानां तं चिदानंदसद्गुरुम्॥ १ ॥**

संमतत्वात् नारंभपरिणामौ अतएवात्मनोवयवावयव्यादिष्वपरिगणनाद्द्रव्यत्वानंगीकाराच्च तस्य जगतो न समवायसंबंधो नापि संयोगसंबंधः किंत्वध्यास एवेति ज्ञेयं। एवमज्ञानेन प्रपंचोत्पत्तिरुक्ता ज्ञानेन तल्लयोऽर्थसिद्धः यदज्ञानाज्जगदुदेति तत्कीदृशमित्यत उच्यते। यत्तत्वमिति यस्याज्ञानविजृंभितस्य जगतस्तत्त्वं तात्विकं स्वरूपं ज्ञानां स्वाभेदेन विवर्ताधिष्ठानभूतपरब्रह्मवेत्तॄणां पुनर्मीलति निमीलति नश्यतीत्यर्थः एतादृशं जगद्यदज्ञानादुदेति तं नौमीति संबंधः। अत्र देहलीदीपन्यायेनोभयत्रापि रज्जुसर्पदृष्टांतः जगतो मिथ्यात्वादधिष्टानसत्तातिरिक्तसत्ताभावात्तत्वज्ञानेनैव लयो नान्यथा लोके रज्जुविवेकदर्शिनां सर्पाभिधानबुद्धी निवर्तेते तद्वत्सच्चिदानंदविवेकदर्शिनां तदन्यशब्दविकारबुद्धी निवर्तेते 'यतो वाचो निवर्तंत' इति श्रुतेः जगतो मिथ्यात्वात्। अत्रायं प्रयोगः विवादाध्यासितं जगन्मिथ्या भवितुमर्हति अज्ञानविलसितत्वाद्रज्जुसर्पवदिति। ननु जगदुत्पत्त्यादिहेतुत्वेन ब्रह्मणः प्रधानस्य वा श्रवणात्कथमत्र परमेश्वर एवाभ्युपगम्यते इति चेत् 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुत्या 'गरीयसे ब्रह्मणोप्यादिकर्त्रे'इति स्मृत्या च ब्रह्मणः परशिष्यत्वप्रतिपादनात् 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'इति श्रुत्या मायायाः परशक्तित्वप्रतिपादनात्तस्या अचेतनत्वाच्च जगदुत्पत्तिहेतुत्वेनात्र परमेश्वर एवाभ्युपगंतव्य इत्याह–चिदानंदसद्गुरुमिति। चिच्चैतन्यस्वभावो जडविलक्षणः स्वयंप्रकाशः निरतिशयो निरुपाधिको नित्य आनंदः सन्सत्यः कालत्रयाबाधः स चासौ गुरुश्चेति एतादृश एव जगदुत्पत्त्यादिकारणं न ब्रह्मा नापि प्रधानं नाणवो नाप्यसत्। शारीरकमीमांसायां द्वितीयाध्यायस्य द्वितीयपादे 'रचनानुपपत्तेश्च नानुमानम्' इत्यारभ्याष्टाभिरधिकरणैर्मतांतरवादा निराकृता द्रष्टव्याः। तथा च श्रुतयः 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' 'यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंति तद्विजिज्ञासस्व तद्ब्रह्म' इति। अत्र संसर्गे विशिष्टं च

भात्यनेकवदेकं सद्धीभेदादेकरूपया ।

वाक्यार्थं निराकृत्य सत्यज्ञानादिवाक्यं त्वखंडार्थनिष्ठं भवति लक्षणावाक्यत्वात्प्रकृष्टप्रकाशश्चंद्र इतिवदिति पूर्वाचार्यैर्दृष्टांतपूर्वकमखंडार्थस्वीकारात् 'संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः। अखंडैकरसत्वेन वाक्यार्थो विदुषां मत' इति वाक्यवृत्तावुदाहृतत्वाद्गुरुशब्दोपलक्षितं ब्रह्म चिदानंदसच्छब्दैर्लोहितोष्णप्रकाशप्रदीपवदखंडैकरसं ज्ञेयं एवं च सतीष्टप्राप्तिरनिष्टनिवृत्तिश्चेहार्थतः संभवतीति बोध्यं।अत्र जीवस्य नित्यदुःखित्वसंसारित्ववादनिरासार्थं ब्रह्मैव सन्ब्रह्माप्येति इति श्रुत्यर्थद्योतनाय पुनःशब्द उक्तः।ज्ञानामिति बहुवचनेनैकमुक्तौ सर्वमुक्तिप्रसंग इति पक्षो निरस्तः। ज्ञशब्देन च 'ज्ञोऽत एव' इत्यधिकरणन्यायसिद्धः जानातीति ज्ञ इगुपधेति कप्रत्ययः।अनेन जीवस्य नित्यत्वं चिद्रूपत्वं नाचिद्रूपत्वमिति सूचितं तस्य सुषुप्त्यादावपि तत्साक्षित्वेनावस्थानात्। कथं तर्हि सुषुप्त्यादौ द्वैताप्रतीतिरिति चेद् द्वैतलोपात् 'यद्वै तन्न पश्यति'इति श्रुतेः।यद्वा 'यः सर्वज्ञः सर्ववित्'इति श्रुतेर्ज्ञशब्देनात्रेश्वरोऽभ्युपगंतव्यस्तस्माज्ज्ञशब्देन सर्वेश्वराभिन्नत्वं ज्ञानिनः समर्थितं 'ब्रह्मविद्ब्रह्मैव भवति'इति श्रुतेः 'ज्ञानी त्वात्मैव मे मतम्' इति स्मृतेश्च ॥ शास्त्रमिदमारंभणीयं वा न वेति चेद्विषयप्रयोजनसद्भावादारंभणीयं 'अथातो ब्रह्मजिज्ञासा'इति न्यायात्।एवं च सत्यशेषानर्थभूतप्रपंचनिवृत्तिः प्रयोजनं विवर्ताधिष्ठानभूतब्रह्मज्ञानं विषयः तत्कामः साधनचतुष्टयसंपन्नो ब्राह्मणोऽधिकारीत्यूह्यम् ॥ १॥ 'श्रेयांसि बहुविघ्नानि'इत्युक्तेः'एक एव हि भूतात्मा भूते भूते व्यवस्थितः॥ एकधा बहुधा चैव दृश्यते जलचंद्रवत्' ॥ 'एकमेवाऽद्वितीयं ब्रह्म' 'एकधैवानुद्रष्टव्यं' 'नेह नानास्ति किंचन' इति श्रुतिप्रतिपादितैकात्म्यं वस्तुनिर्देशात्मकमंगलत्वेनाह भातीति–'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति श्रुत्यैक्यावधारणद्वैतप्रतिषेधतः प्रतिपादितमेकं सजातीयविजातीयस्वगतभेदशून्यं सत् कालत्रयाबाधं देशकालवस्तुपरिच्छेदरहितं परं ब्रह्म धीभेदादंतःकरणोपाधिभेदा-

**विदास्यैक्यं परं ब्रह्म तत्सत्यं दत्तसंज्ञितं ॥ २ ॥**

त्सुरनरतिर्यगादिरूपेणानेकवद्विभाति तत्त्वेकमेव 'तत्त्वमसि' इति श्रुतेः। ननु सृष्टेः पूर्वं तथा भवितुमर्हतीदानीं स्थितिकाले तु सार्वजनीनप्रत्यक्षादिप्रमाणैः सर्वैरपि प्रतीयमानमशनायादिव्यवहारोपेतं जगन्नामरूपात्मकमेवानेकवद्भातं तत्कथमेकरूपं ब्रह्म भायादित्यत आह भागलक्षणालक्षितयैकरूपया विदा ज्ञानेनास्य जगतश्चालकत्वेन भासकत्वेन च विद्यमानस्य सतः ऐक्यमेकत्वं निर्बाधं 'अयमात्मा ब्रह्म' इति श्रुतेः। यद्वा पूर्वश्लोकेन तत्पदार्थ उक्तोऽनेन श्लोकेन त्वंपदार्थश्च स यथा एकं साक्षिभूतमवस्थात्रयेऽपि विद्यमानं सत्प्रत्यग्रूपं धीभेदात् धीशब्देन ज्ञानेंद्रियाणि गृह्यंते श्रोत्रादीनां शब्दादि-विषयोपाधिभेदेनानेकवदकृत्स्नवद्भाति प्रत्यग्रूपं स्वतो निर्मलमपि अधमोपाधि-वशान्नानात्वेन प्रतीयते यदा तूपाधिविशिष्टं परित्यज्य तत्तदुपाध्युपलक्षितं शाखाचंद्रन्यायेन विविच्यते तदानीमुपाधिकृतस्यापकर्षस्याभावात्प्रकर्ष एव परिशिष्यते तच्चैतन्यं श्रोत्राद्युपाधिगतमिति कृत्वा तस्यैव मुख्यात्मत्वमिति विनिर्णयः नोपाधिविशिष्टस्य मुख्यात्मत्वं बृहदारण्यके 'स एव देहे प्रविष्ट' इत्यादिना प्रविष्टं जीवात्मानं प्रकृत्याम्नायते 'तन्न पश्यंत्यकृत्स्नो हि स प्राण-न्नेव प्राणनामको भवति वदन्वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मन एतानि कर्मनामधेयानि भवंति' इति। श्रीमद्विद्यारण्यमतोऽस्याऽयमर्थः देहे नखाग्रपर्यंतं प्रविष्टं ज्ञानाक्रियाशक्त्युपाधिकं तमात्मानं विवेकिनः पुरुषाः स्वात्मतया न पश्यंति यस्मात्स आत्मोपाधिविशिष्टः कृत्स्नो न भवति तस्मान्न मुख्यात्मत्वं कुतः प्राणचलनेनैव श्वासं कुर्वन्प्राणोपाधिविशिष्टतया प्राणनामको भवति न वागाद्युपाधिष्वनुगच्छति एवमेकैकोपाधिविशिष्ट इतरत्र न गच्छति अभिवदनकाल एव वागुपाधिक एवमितरत्रापीति एव-मेकं सदुपाधिवशादनेकवद्भात्यतो न कृत्स्नं तर्हि तस्य कृत्स्नत्वं कथमित्या-कांक्षायामाह एकरूपया विदास्यैक्यं शब्दाद्युपाधिविशिष्टपरित्यागे सति

**बोद्धुं भूत्वात्रिपुत्रः स्वपदरसपरान्दिव्ययोगेन बालान्**
**दत्ताख्यः कार्तवीर्यं यदुमपि च समान्स्वाश्रितानुद्दधार ।**

कृत्स्नत्वं बृहदारण्यकेप्युक्तं 'आत्मानमेवोपासीत तद्ध्येते सर्व एकीभवंति' तदैक्येन निर्धारितं सत्यं कृत्स्नं निर्बाधं तत्वंपदार्थोपस्थितिभूतमखंडैकरसं दत्तेति संज्ञास्य संजातेति दत्तसंज्ञितं पूर्णं ब्रह्मेत्यर्थः । अथ सूर्यपक्षे । 'एकैव वा महानात्मा देवता सूर्य इत्याचक्षत' इत्यादिनोक्तं सूर्यात्मकं महः 'सूर्य आत्मा जगतस्तस्थुषश्च' इति एतद् 'इन्द्रं मित्रं वरुणमग्निमाहुः' इत्यादि-श्रुत्युक्तदेवतारूपधीभेदादनेकवद्भाति 'एकं सद्विप्रा बहुधा वदंति' इति श्रुतेः । अथ विष्ण्वादिपक्षे । एकं सद्वैष्णवं शैवमन्यद्वा रूपं ऊर्ध्वाधरवामदक्षिणकरक-लितायुधरूपधीभेदादनेकवद्भाति केशवनारायणादिनामव्यवहारार्हं भवति । एवं चतुर्भुजस्य विष्णोः २४ षड्भुजस्य भगवतः श्रीदत्तात्रेयस्य ७२० अष्टभुजाया देव्याः ४०३२० दशभुजस्य शिवस्य ३६२८८०० भेदा ज्ञातव्याः । अन्यत्सुगमम् ॥ २ ॥ ननु मुनिपुत्रो दत्तात्रेय एवंविधः कथ-मित्यत आह बोद्धुमिति अलुप्तषड्गुणैश्वर्यतयाऽविकृतेन चिदानंदैकरूपेणात्र लोकशिक्षार्थं स्वात्मतत्वं बोद्धुमुपासनयोगाद्युपायैरुपेयं स्वात्मतत्त्वं ज्ञातु-मिवेत्यर्थः । 'अधीहि भगवो ब्रह्म' इत्यादिश्रवणान्नात्र विगानं 'आत्मेति तूप-गच्छंति ग्राहयन्ति च' इति न्यायाच्चात्रिपुत्रो भूत्वात्रेर्गृहेवतीर्येत्यर्थः । स्वस्य पदं पद्यते योगिभिर्गम्यत इति पदं देशाद्यनवच्छिन्नं स्वरूपं तस्याभेदेन चिल्लक्षणो यो रसः स्वरूपानंदः 'रसो वै सः रसꣳ ह्येवायं लब्ध्वानंदी भवति' इति श्रुतेः । तत्परान्बालान्बालवन्मानावमानचिन्तारहितान् । सगुण-पक्षे स्वचरणभजनप्रेमरसासक्तान्बालवद्विषयक्रीडारतान्वा कृतवीर्यस्यापत्यम-र्जुनं यदुं ययातिपुत्रमन्यानपि समान् सर्वान् स्वाश्रितान् प्रल्हादालर्कप्रभृतीन् दिव्ययोगेन दिव्यो ज्ञानात्मक औपनिषदः स चासौ योग उपायः तच्छीलानां गर्भवासजन्मजरानिशातनात्तदवसादनाद्वा ब्रह्मण उपगमयितृत्वाद्वोपनिष-

**भूयोऽन्यान् श्रीपदाख्यः पुनरपि नृहरिः संज्ञया स्वीयभक्तान्**
**कृष्णाभीमातटस्थो जयति परगुरुः स्मर्तृगाम्येष दत्तः ॥३॥**

त्वस्मरणात्तज्जन्यज्ञानं दिव्यो योगः ॥'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः।शाब्दस्य परोक्षत्वेपि श्रवणमननादिना संशयभावनाऽसंभावनाविपरीत-भावनातिरस्कारात्तस्यैवापरोक्षत्वप्रतिपादनात्। ध्यानयोगो वा ॥ 'आत्मा-नमरणिं कृत्वा.प्रणवं चोत्तरारणिं॥ ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवत्' इति श्रुतेः॥तेनाष्टांगयोगेन ज्ञानयोगेन च 'नान्यः पन्था विद्यतेऽयनाय' इति श्रुतेः। उद्दधार ऊर्ध्वं 'पादोस्य विश्वा भूतानि' इति प्रतिपादितान्मायामय-प्रपंचाख्यात्पादादूर्ध्वं 'त्रिपादस्यामृतं दिवि' इति श्रुत्या निर्धारिते द्योतनात्मके स्वयंप्रकाशरूपेऽमृतसंज्ञिते त्रिपादशब्दबोधिते ब्रह्मण्यभेदेन दधार स्वभ-क्तेषु स्वीयं साम्यं व्यधादित्यर्थः। यद्यपि निरंशेऽनन्तेंऽशकल्पना नास्ति तथापि परप्रसिद्ध्या परो बोधनीय इति न्यायेन परप्रसिद्ध्येदं योज्यं उक्तं चाभियुक्तैः 'निरंशेप्यंशमारोप्य कृत्स्नेंशे वेति पृच्छतः। तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी' इति। भूयः पुनः कालांतरे श्रीपादाख्यो भूत्वान्यान्भ-क्तानुद्दधार। पुनरपि कलौ संज्ञया नरहरिर्भूत्वा स्वीयभक्तान् सिद्धादीनुद्दधार एवं सति भगवत्कृपैव स्वभक्तमोक्षहेतुः श्रुतिश्च 'एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कारयति तं यमेभ्यो लोकेभ्यो-धो निनीषत' इति। एवं सत्यपीश्वरस्य वैषम्यनैर्घृण्ये पापपुण्यसम्बन्धश्च नैव भजनानुसारेण तत्तत्फलदातृत्वोपपत्तेः।कृष्णातटे नृसिंहवाटिकादिषु भीमातटे गंधर्वपुरे च तिष्ठतीति तथोक्तः स्मर्तृगामी 'दत्तात्रेयः स्मर्तृगामी' इति दत्ताद-नोक्तेः। एषः स्वप्रकाशापरोक्षरूपः परेषां ब्रह्मादीनामपि गुरुः 'स एव पूर्वेषा-मपि गुरुः कालेनानवच्छेदात्' इति पातंजलोक्तेः। दत्तसंज्ञितः परमात्मा जयति स्वभक्तोद्धरणेन ॥३॥ यः पूर्वोक्तोऽजो जन्माद्यतीतः 'महानज आत्मा' इति

**योऽजोऽक्रियोऽस्पृहोऽप्येको बहु स्यामिति तृष्णया ।**
**प्रकृत्या गुणमय्येदं ततानेशो जगत्प्रभुः ॥ ४ ॥**

श्रुतेः । अक्रियः क्रिया कर्म उपलक्षणमेतत् क्लेशादीनां 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर' इति पातंजलात् । अस्पृहो निरिच्छ आप्तकामत्वात् 'आप्तकाम' इति श्रुतेः । एकोऽद्वितीयः 'आत्मा वा इदमेक एवाग्र आसीत्'इति श्रुतेः ईदृशस्य जगद्भावापत्त्यसंभवात् 'मायां तु प्रकृतिं विद्यात्' 'इंद्रो मायाभिः पुरुरूप ईयत' इत्यादिश्रुतिभिर्मायासहितस्योपादानस्य विवक्षितत्वान्मायांगीकार्या अंगीकृतायामपि तस्यां न चान्यसद्भावः शंकनीयः शक्तित्वेनावस्तुत्वेन च मायायाः पृथग्गणनानर्हत्वात् न हि भृत्येभ्यो वित्तं प्रयच्छन्तः स्वामिनस्तवैतद्धनं त्वदीयशक्तेश्चैतावदिति विभज्य गणयन्ति नाप्यवस्तुभूतं चन्द्रबिम्बाद्यपेक्ष्य द्वौ चन्द्रौ वस्तुभूताविति बुद्धिमन्तो व्यवहरंति एतच्च व्यासेन सूत्रितं 'प्रकृतिश्च प्रतिज्ञादृष्टांतानुपरोधात्'इति । योयं परमेश्वरो नासौ केवलं निमित्तमेव किंतु प्रकृतिरूपोपादानमपि कुतः 'येनाश्रुतꣳश्रुतं भवत्यमतम्मतमविज्ञातं विज्ञातम्' इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳस्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'इत्यादिदृष्टांतस्य चानुपरोधादितिसूत्रार्थः तया गुणमय्या प्रकृत्येशनशील ईशः सर्वज्ञत्वादिलक्षणः प्रभुः स्वतंत्रो भगवान् बहु स्यां भवेयं इति तृष्णारूपेण संकल्पेन जगत्ततान 'सत्यकामः सत्यसंकल्प' इति श्रुतेरीश्वरस्य सत्यसंकल्पाज्जगतो न मनोराज्यतुल्यत्वं संकल्पस्य निरंकुशत्वाज्जगत्सृष्टौ नेश्वरस्य भूयान् प्रयासः 'स तपस्तप्त्वा इदꣳसर्वमसृजत'इति श्रुतेस्तपोरूपं साधनमपेक्षितमिति न किंतु स्रष्टव्यपर्यालोचनं बहु स्यामित्येवंरूपं तपः न कृच्छ्रादि 'यस्य ज्ञानमयन्तप' इति श्रुतेः । जगत्ततानेत्युक्तं तद्घटादिवज्जडं न किंत्वव्यवहिताग्रिमश्लोके देहबुद्धींद्रियात्मकमिति वक्ष्यमाणत्वात्कुलालनिर्मितमृन्मयघटशरावादिविलक्षणमभिन्ननिमित्तोपादानकं प्राणिकर्मादिनिमित्तरूपमिदं जगद्देशतः कालतो नाम्ना

**आब्रह्मस्तंबपर्यंतं देहबुद्धींद्रियात्मकम्।**
**सृष्टं चराचरं तत्र संवित्पात्रं नरोत्तमः ॥ ५ ॥**

रूपेण च पूर्वकल्पवद्यथानुभवं सर्वैः प्राणिभिः सर्वावस्थैरनुभूयमानन्तद्गुहायां द्रष्टृश्रोतृमन्तृविज्ञात्रित्यादिविशेषवदुपलभ्यमानस्वरूपानुप्रवेशसहितन्ततान 'तत्सृष्ट्वा तदेवानुप्राविशत्'इति श्रुतेः। न चात्र गृहं प्रविष्टो देवदत्त इव जले प्रतिफलितः सूर्य इव वानुप्रवेशोऽपरिच्छिन्नत्वादरूपत्वाच्चात्मनस्तस्माद्द्रष्ट्राऽऽदिलक्षण एवानुप्रवेशः ॥४॥ 'हिरण्यगर्भः समवर्तताग्रे' 'स वै शरीरी प्रथमः स वै पुरुष उच्यत' इति श्रुतिस्मृतिभ्यो ब्रह्मणोपि शरीर्यंतःपातित्वात्प्रथमजत्वाच्च तत आरभ्य स्थावरपर्यंतं देहबुद्धींद्रियात्मकं चराचरं जगत्सृष्टं तत्र संवित्पात्रं ज्ञानयोग्यो नर एव ईश्वरेणाचेतनलोकरक्षार्थं सृष्टाभ्यो देवताभ्यस्तत्प्रार्थनया गवादिशरीरेष्वानीतेषु 'न वै नोयमलम्' इति प्रतिवारमुक्तेष्वंते विवेकसंपन्नमानीतं पुरुषं दृष्ट्वा ता देवता अब्रुवन् 'सुकृतं बत'इत्यैतरेय उक्तत्वात् तत्रैव च पूर्वमुदाहृतं 'पुरुषे त्वाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नतमोथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानम्'इति। पुरुषो हि ज्ञानकर्माधिकारः शक्तत्वादर्थित्वादपर्युदस्तत्वाच्चार्थी विद्वान्समर्थः कर्मज्ञानयोरधिक्रियते। अद्वितीयात्मतत्वमनन्यलभ्यत्वादुपनिषदो विषयः 'शास्त्रयोनित्वात्' इति न्यायात् शास्त्रप्रमाणत्वादिति सूत्रार्थः। तदधिकारी ब्राह्मणः स च विवेकेन हे मनः किमर्थं त्वं पिशाचवत्प्रधावसि न तावत्स्वप्रयोजनार्थं तव जडत्वात्प्रयोजनसंबंधानुपपत्तेर्विषयाणां च क्षयिष्णुत्वादिदोषदुष्टानां संबंधेन प्रयोजनानुपपत्तेर्नापि चेतनार्थं तस्यासंगत्वात्परमानंदस्वभावाच्चेत्येवं मनोनियंत्र्या विषयकल्पनाशून्यया ब्रह्मास्मीत्यविषयतयैव ब्रह्मभावव्यंजिकया महावाक्योत्थया बुद्धिवृत्त्यात्मानं ज्ञातुं शक्नोति अत्र नरोत्तमशब्देन कृतबुद्धिर्ब्राह्मणो ग्राह्यः॥ उक्तं च गारुडे॥ भूतानां प्राणिनः श्रेष्ठास्तेभ्यो बुद्ध्युपजीविनः॥ बुद्धिमत्सु नराः

इंद्रियार्थे स्थितौ रागद्वेषौ येन जितौ स तु ।
दैवीसंपल्लभेन्मोक्षं तदर्थं संभवत्यजः ॥ ६ ॥

गाढं प्रियोऽस्य भगवांस्तस्यायमपि तादृशः ।
गुप्त्या अवतरत्यस्य लीलाधाम्नाप्यजोऽव्ययः ॥ ७ ॥

श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धय इति ॥ ५ ॥ ननु 'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नांतरात्मन्' 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वंतोपि बहवो यं न विद्युः' 'क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति'इत्यादि-श्रुतिभ्यं इंद्रियाणां पराक्त्वप्रतिपादनाच्छ्रवणादिदौर्लभ्यात्क्षुरधारावज्ज्ञान-मार्गस्य प्रतिपादनात्कथं नरोत्तमः संवित्पात्र इत्याशंक्य 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' 'यच्छेद्वाङ्मनसी प्राज्ञः' 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इत्यादिश्रुतिभिरेवं प्रतिपादित-त्वान्मैवमित्याह इंद्रियार्थे जातावेकवचनं सर्वेष्वपींद्रियार्थेषु स्थितौ प्रकृति-संज्ञकपूर्वजन्मसंस्कारवशात्स्थितौ अनुकूलविषयो रागः प्रतिकूलविषयो द्वेषः 'सुखानुशायी रागः' 'दुःखानुशायी द्वेष'इति पातंजलात् तौ येन भगवद्ध्या-नादिना जितौ स तु रागद्वेषादिवर्जितः दैवी संपद्यस्य स मोक्षं लभेत विजितरागद्वेषस्य दैवीसंपत्तिमतो ब्राह्मणस्याज्ञानकल्पितदेहाद्यहंकारान्त-बन्धेभ्यो मोक्षः। 'इंद्रियस्येंद्रि'० १ 'दैवी संपद्विमोक्षाय' इति गीतोक्तेः। दैवी-संपद्भगवद्गीतायां षोडशाध्याये प्रोक्ता तदर्थं मोक्षयोग्यस्वभक्तप्रीत्यर्थं जन्मा-तीतोपीश्वरोवतरति ॥ ६ ॥ यतोस्य भक्तस्य भगवान् गाढमत्यर्थं प्रियः अयमपि भक्तस्तादृशस्तस्येश्वरस्य प्रियो वल्लभः 'प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रिय' इति स्मृतेः। अतोस्य भक्तस्य गुप्त्यै रक्षणाय लीलाविग्रहे-णेश्वरोऽजोव्ययोपि उत्पत्तिनाशरहितोपि अवतरति हि ॥ ७ ॥ अस्मि-

**युगे युगेऽवतीर्यापि कार्यांते व्यसृजत्तनूः ।**
**एवं ब्राह्मेह्नि संप्राप्तो युगाष्टाविंशपर्ययः ॥ ८ ॥**
**दारुणेऽस्मिन्कलौ प्राप्ते ज्ञात्वा स्वांशांशजोतयः ।**
**दयोना इत्याविरासीद्दत्तस्तु भगवान्स्वयम् ॥ ९ ॥**

न्वाराहकल्पे ब्रह्मण इदं ब्राह्मं 'नस्तद्धित' इति टिलोपः तस्मिन्ब्राह्मे दिवसे वैवस्वतमन्वंतर इति शेषः वर्तमानत्वात् ॥ ८ ॥ अधर्मप्राबल्यात्कलेर्दारुणत्वं अत्र च 'धर्मभ्रष्टा नराः सर्वे शिश्नोदरपरायणाः । अव्रता वर्णिनोऽशौचा यतयश्च कुटुंबिनः १ ग्राम्यार्थसक्ता वनिनो लुप्ताचाराश्च गेहिनः । ऱ्हस्वाकारा महाहारा मंदभाग्या अपत्रपाः २ स्त्रैणा बहुप्रजा मूढास्त्यक्तस्वजनसौहृदाः ३ भर्त्रवज्ञापरा नार्यः पुत्राः पितृद्रुहोनुगाः। पतित्यागपरा शिष्याः सर्वथा गुरुवंचकाः ४ अर्थतो भक्षयिष्यंति म्लेच्छप्राया नृपाः प्रजाः । द्विजा वराटार्थमपि वेदविक्रयिणः खलाः ५ प्रतिग्रहपरान्नस्त्रीसक्ताः सिद्धिविवर्जिताः । हीनवृत्तिरताः श्रेष्ठा हीनाश्च श्रेष्ठवृत्तयः ६ यज्ञयागविहीनेऽत्र वृष्टिरन्नं क्वचित्क्वचित्। नरा वृद्धाः षोडशेब्दे प्रसूता दशमेऽबलाः ७ दस्युप्रायाश्च भूपालाः पाखंडप्रचुरो वृषः । शूद्रप्रायाः सर्ववर्णाश्छागप्रायाश्च धेनवः ८ आश्रमाश्च गृहप्रायाः शून्यप्राया गृहा अपि । अणुप्राया ओषधयः शमीप्राया महीरुहाः ९ विद्युत्प्राया वारिवाहाः कलावेवं भविष्यति' इति कलेर्दारुणत्वं एवंभूते दारुणेस्मिन्कलौ प्राप्ते स्वांशो ब्रह्मा तस्यांशा मरीचिकश्यपादयः तेभ्यो जाता इंद्रमरुद्गणवस्वादित्यप्रभृतयः ऊतयो विभूतयः विभूतिरूपा देवाः त एते पापा अस्माभिरुपेक्ष्या इति दयया ऊना जाता इति मत्वा स्वयं भगवान् दत्तस्तु आविरासीत् यथा कार्यनियुक्तान् कार्यभराक्रांताञ्क्लांतानुपरतोद्यमान्भृत्यान्ज्ञात्वा स्वामी अनन्यगतिके प्राप्तकार्ये स्वयमेव प्रवृत्तो भवति तं दृष्ट्वा श्रान्ता अपि भृत्याः स्वत एवानुप्रवृत्ता भवंति तद्वदत्राप्यन्यथा वैषम्यापत्तेः ॥ ९ ॥ सोवतीर्णो भिक्ष्वात्मना

स कृष्णामरजातीरविहारी लोकपावनीः ।
भिक्ष्वात्मनात्र सल्लीलाः कृत्वाऽदृश्योऽस्ति तत्र हि ॥ १० ॥
ओंकारोच्चारणं जातमात्रेण नयनं तथा ।
स्वर्णतामयसोऽभ्यासमृतेपि ब्रह्मपाठनम् ॥ ११ ॥
तत्त्वोपदेशनं पित्रोर्बाल्ये तीर्थाटनं तथा ।
योगाख्यापनसंन्यासवर्त्मसंस्थापनेऽन्यथा ॥ १२ ॥
कथं भाव्यं द्राग्घरणं प्रतीपाचरणै रुजः ।
तथाऽवाचोऽपि विद्वत्तादानं स्राग्विप्रदुर्गतेः ॥ १३ ॥
हरणं त्रिस्थलीयात्राचरणं मृतजीवनम् ।
वशागोदोहनं विश्वरूपाविष्करणं यतौ ॥ १४ ॥

संन्यासिरूपेण नास्तिकानामदृश्योपि न भक्तानां हीति प्रसिद्धम् ॥ १० ॥ अघटितघटनापटीयस्त्वेनास्य साक्षाद्भगवत्त्वं प्रपंचयति सप्तभिः-जातमात्रस्य कफसंरुद्धत्वादुच्चारणमघटमानं लोके प्रसिद्धं जातमात्रत ॐकारोच्चारणादस्य साक्षाद्भगवत्त्वमभ्युपगंतव्यम् एवमन्यदपि अयसः स्वर्णतां नयनं हस्तस्पर्शमात्रेण न रसादियोगेन अभ्यासमृते गुरोः सकाशाद्वेदपाठं विना ब्रह्मणो वेदस्य पाठनम् ॥ ११ ॥ पित्रोः मातापित्रोः 'पिता मात्रा' इत्येकशेषः तत्त्वज्ञानोपदेशः बाल्येष्टमेब्दे तीर्थपर्यटनं योगोपदेशः संन्यासमार्गस्थापनं च अन्यथेत्यस्याग्रिमेण संबंधः ॥ १२ ॥ प्रतिकूलाचरणैः रोगस्य शीघ्रपरिहारोन्यथा कथं भाव्यः एवं सर्वत्र । अवाचश्छिन्नजिव्हस्य स्राग् झटिति विप्रदैन्यस्य हरणं ॥ १३ ॥ क्षणात्त्रिस्थलीयात्राचरणं मृतविप्रपुत्रजीवनं गोशब्दः सौरभेय्यां रूढितोपि लुलाय्यां लक्ष्यः कथासंदर्भात् अगोरिति पदच्छेदेन तदन्यत्वे नञो योजना वा । यतौ त्रिविक्रमभारत्यां विश्वरूपप्रकटनं ॥ १४ ॥ विद्वद्ब्राह्मणगर्वापहरणं निंद्यास्यात्पतितमुखात्

विद्वद्दर्वापहरणं निंद्यास्याद्वेदवाचनम् ।
विश्वस्ताया अवैधव्यदानं कर्मप्रकाशनम् ॥ १५ ॥
जरदेधःपल्लवतां नयनं निष्कलस्त्रियै ॥
सुप्रजस्त्वार्पणं कुष्ठहरणं दृष्टिमात्रतः ॥ १६ ॥
क्षणेऽष्टग्रामगमनं छिन्नसस्यविवर्धनम् ॥
इत्यादिकं कृतं दिव्यं करोति च करिष्यति ॥ १७ ॥
भपार्थिवरजोंब्वंशगणकाः संतु कुत्रचित् ॥
भूयोऽगणेयोरुगुणगुणान्गुणयितुं ह्यलं ॥ १८ ॥

विश्वस्तायै विधवायै अवैधव्यदानं नाम प्रमीततद्भर्तृजीवनं कर्मकाण्डप्रकाशनं ॥ १५ ॥ जरदेधः जीर्णं शुष्कमौदुंबरकाष्ठं निष्कला विगतार्तवा वृद्धा वंध्या सा चासौ स्त्री च तस्यै सुष्ठु प्रजा यस्याः सा सुप्रजाः 'नित्यमसिच्प्रजामेधयोः' इत्यसिच सुप्रजसो भावः सुप्रजस्त्वं तस्य समर्पणं रजोनिवृत्तावपि वरदानेन वंध्यायाः कन्यापुत्रौ जाताविति प्रसिद्धं दृष्टिमात्रेण नंदिशर्मणः कुष्ठहरणं ॥ १६ ॥ क्षणे दीपावल्युत्सवे कालविशेषोत्सवयोः क्षण इत्याभिधानात् प्रेष्ठभक्तप्रार्थनयाष्टसु ग्रामेष्वेकसमयावच्छेदेन गतिः अष्टरूपधरो भूत्वैकसमयेष्टग्रामगोऽभवदित्यग्रे वक्ष्यति । इत्यादिकं दिव्यं अलौकिकं कृतं भूतकाले करोति वर्तमानकाले तद्वत्करिष्यति भविष्यत्काले ॥ १७ ॥ भानि नक्षत्राणि पार्थिवरजांसि धूल्योंब्वंशा जलकणा एषां गणकाः कुत्राचित्संतु पुनरगणेया उरुगुणस्य ये गुणास्तान्गुणयितुं अलं पर्याप्तं हीति श्रुतिप्रसिद्धिं सूचयति 'विष्णोर्नु कं वीर्या०' वेवेष्टीति विष्णुस्तस्य व्यापकस्य वीर्याणि कं प्रवोचं कः प्रवोचत नु इति विनर्के यः पार्थिवानि रजांस्यपि विममे गणितवान्सोपि नैव यो विष्णुस्त्रेधा विचक्रमाणस्त्रिविक्रमं कुर्वन्नुत्तरं लोकं सत्याख्यं अस्कभायदवष्टभ्य धृतवान् कथंभूतं लोकं सधस्थं सहस्य सधादेशात्तिष्ठतीति स्थः तत्रस्थैर्देवैः सह वर्तमानमित्यर्थः

लीलाप्रादुष्कृतगुणरूपोऽरूपोऽगुणोप्यरम् ॥
श्रवःसृत्या प्रविश्यांतर्भक्तस्याघं धुनोत्यजः ॥ १९ ॥
तदेकनिष्ठः पूतात्मा जीवन्मुक्तो भवेत्ततः ॥
निर्द्वंद्वस्यारब्धभुजो देहः पततु वा न वा ॥ २० ॥
(क्षेपकः) ॥ तत्राज्ञानसमुत्पन्नद्वंद्वाभावः प्रवर्तते ।
प्रारब्धांते स यात्येव कैवल्यं पदमुत्तमम् ॥
अयं हि ब्रह्मभूयाप्तिसत्पथो नाक्षिगोचरः ।
मोहांधानामसत्संगविवेकानां कुसंपदां ॥ २१ ॥

॥ १८ ॥ अरूपोऽगुणोप्यजो भगवान् लीलयाविष्कृतगुणा एव रूपं यस्य सोऽरं द्रुतं श्रवणमार्गेणांतः प्रविश्य पापं धुनोति भक्तस्येति शेषः ॥१९॥ ततः पापक्षालनानन्तरं तदेकनिष्ठः भगवत्परायणोऽतएव पूतः शुद्धो रागादिरहित.आत्मांतःकरणं यस्य सः अपरोक्षानुभवेन जीवन्नेव मुक्तो भवेत् निर्द्वंद्वस्य दुःखेष्वनुद्विग्नमना इत्युपलक्षणलक्षितस्य स्वारब्धं भुनक्तीति तस्य देहः पततु वा न वा पततु ॥ २० ॥ क्षेपकः सुगमः ॥ हि निश्चयेनायमुक्तः ब्रह्मसायुज्यप्राप्तेः शोभनो मार्गः सत्संगविचाररहितानां अतएव मोहांधानां आसुरीसंपत्त्या वर्तमानानां नृणां नाक्षिगोचरः ॥ 'सत्संगश्च विवेकश्च निर्मलं लोचनद्वयम् ॥ यस्य नास्ति नरः सोंधः कथं न स्यादमार्गग' इति गारुडोक्तेः । कर्णांतविश्रांतयोर्लोचनयोर्विद्यमानयोरपि चक्षुष्मत्ता तु सूक्ष्मकार्यार्थदर्शिना सत्संगविवेकाख्यलोचनद्वयेनैव तदभावेंध एवामार्गगोनिष्टाचरणेन पश्वादियोनिगः ॥ २१ ॥ कृतमनुष्ठितं स्ववर्णाश्रमोचितकर्म येन स सतो बल्लभा यस्य सतां वल्लभो वाऽतएव गुर्वभिन्नेश्वरभक्तस्तदुपासकः अनेनैव पथा विद्वान्ज्ञानी सन् विद्वत्त्वे हेतुः 'अनाश्रितः कर्मफलं०' इति स्मृतेः । निष्कामकर्मानुष्टानेन विविदिषाया उत्पन्नत्वादीश्वराभिन्नगुरु-

कृतस्ववर्णाश्रमदृष्टकर्मा विद्वान् सदिष्टो गुरुदेवभक्तः ।
इहैव भुक्तिं च लभेत मुक्तिं संन्यास्यनेनैव पथा स योगी ॥ २२ ॥

एवं सुवृत्तं महिमानमीशितुः श्रुत्वास्य भीमामरजागमे ययौ ।
कश्चिद्भवभ्रष्टमनाः स्तुवन्गुरुं तमः शरण्यं श्रितकल्पशाखिनम् २३

गणेशं शारदां नत्वा श्रीगुरुं नामधारकः ।
द्विजस्तुष्टाव घोरेत्र नृधाम्ना विश्रुतं हरिम् ॥ २४ ॥

भक्तिरूपोपासनया चित्तैकाग्रत्वसंपन्नत्वात्तत्संपत्तौ शमादयोर्थसिद्धास्ते चात्मविद्यायामंतरंगभूताः 'शांतो दांत उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति' इति श्रुतेः अतो मुख्याधिकारी भूत्वा गुरूपसत्त्या कृतश्रवणादिना विद्वान्सन्निहैव मुक्तिं लभेत चापरं तैत्तिरीयोक्तोत्तरोत्तरशतगुणसार्वभौमादिहिरण्यगर्भांतानन्दभुक्तिं लभेत । यद्यपि मुक्तौ कामादिविषयभुक्तिर्नास्ति तथापि विषयानन्दानां ब्रह्मानंदांशरूपत्वेन तत्रांतर्भावाद् ब्रह्मानंदप्राप्त्या सर्वकामभुक्तिरुपचर्यते अत्राप्रतिबंधज्ञानातौ इहैव मुक्तिः प्रतिबंधे तु सति जन्मांतर एव 'ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्'इति न्यायात् ॥ ॥ २२ ॥ एवं शोभनवृत्तमीशितुर्दत्तात्रेयस्य महिमानं श्रुत्वाऽऽधिभौतिकाधिदैविकाध्यात्मिकतापततोऽतएव भवभ्रष्टमना विरक्तः कश्चिद् द्विजः श्रीगुरुं स्तुवन् भीमामरजासंगमे लीलया वर्तमानं स्वभक्तकल्पवृक्षं शरण्ये साधुं गुरुं लोकदृष्ट्या पादुकारूपं ययौ ॥ २३ ॥ स नामधारकः सरस्वतीपंत इति प्रसिद्धो गंगाधरात्मजोभिमानपरिहाराय लोके नामधारक इति कल्पितसंज्ञासंज्ञितः नाम्नो दामरूपत्वादुक्तं चैतरेये 'तस्य वाक्तंतिर्नामानि दामानि तस्येदं वाचातंत्या नामभिर्दामभिः सर्वं सितम्'इति । स द्विजः साक्षाद्दर्शनाकांक्षी स्तुत्या गुरुः प्रसीदेदिति मत्वा तत्राविघ्नार्थं गणेशादीन्नत्वा घोरे कलौ नरहरिसंज्ञं श्रीदत्तं तुष्टाव ॥ २४ ॥ 'यः सर्वज्ञः सर्ववित्'इति श्रुतेर्हे

सर्वज्ञ मां न जानीषे विश्वसाक्षिन्न चेक्षसे ।
विलापो न श्रुतो विष्णो मम श्रुत्वाप्युपेक्षसे ॥ २५ ॥

चेज्ज्ञातेऽत्र क्व वैक्लव्यं कथं दैन्यं त्वयेक्षिते ।
श्रुते चेच्छुक्कुतोऽप्यर्हा त्वय्युपेक्षा दयानिधे ॥ २६ ॥

सर्वदेवेश्वरोऽपि त्वं त्वं नोऽपि कुलदैवतं ।
त्वां हित्वा कतमं याचे वेद्मीशन्त्वापि वेत्सि मां ॥ २७ ॥

सर्वोऽपि वेत्ति भूपं न भूपः सर्वन्तथोचितं ।
अज्ञे तु त्वयि सर्वज्ञे कथं श्लाघ्यमिदं प्रभो ॥ २८ ॥

सर्वज्ञ मां न जानीषेऽपिः प्रश्ने गर्हासमुच्चयप्रश्नजिज्ञासानुनयेष्वपीत्यभिधानात्। विष्णो व्यापनशील विलापः परिदेवनं हेतुगर्भाणि विशेषणानि ॥ २५ ॥ अन्वर्थकत्वे च सर्वेषां संबोधनानामन्यथाप्रतीतिः कथमिति शंकते चेदिति त्वयाहं ज्ञात इति चेत्तर्हि त्वया सर्वज्ञेन ज्ञाते मयि वैक्लव्यं विह्वलत्वं क कुतः विश्वसाक्षिणा त्वयेक्षिते च दैन्यं कथं तिष्ठेत्। विष्णुना त्वया मद्विलापः श्रुत इति चेत्तर्हि त्वया मद्विलापे श्रुते कुतः शोकोऽवतिष्ठते उपेक्षितत्वादिति वदसि चेद्दयानिधे त्वयि भक्तोपेक्षार्हापि योग्या: किं अपि तु नैव योग्या ॥ २६ ॥ विलंबेन कार्यं सिद्ध्येत् कार्यविलंबासहने देवतांतरं भजेति चेत्त्वादृशोऽन्यो नास्तीत्याह सर्वेति कतमं देवतांतरं वा बहूनां जातिपरिप्रश्न इति डतमच् त्वमेव सर्वदेवः कुतः त्वा त्वामीशं वेद्मि 'सर्वस्य चाहं हृदि संनिविष्ट' इति शाब्दात् त्वमपि भक्तं मां वेत्सि साक्षात् ॥२७॥ तर्हि सर्वोपि जनो भूपं वेत्ति परंतु स भूपो विशेषतः सर्वजनं न वेत्ति यथा तथेदमपीत्यत आह अल्पज्ञे भूपे तथा उचितं हे विभो त्वयि सर्वज्ञे तु इदं कथं श्लाघ्यं श्लाघनीयं भवेत् ॥ २८ ॥ अस्त्विदं असेवकायाऽदात्रे

नासेवकायादात्रेऽपि चेद्दास्यस्युचितं न तत् ।
सेवेच्छुः श्रीश किन्दाता तद्वत्प्रत्युपकार्यपि ॥ २९ ॥

ज्योतिर्द्योतमिहाब्दोंबु सेवोनेर्पयति ध्रुवे ।
पदं बिभीषणेऽदात्रोर्दत्तं मे देह्यतः प्रियम् ॥ ३० ॥

निधयस्तेऽनुगा दास्यः सिद्धयः श्रीस्तु किंकरी ।
तत्ते किं भगवन्देयं किं कार्यं परिपूर्ण ते ॥ ३१ ॥

स्वसेवककुलं भूमौ पालयन्ति नृपा अपि ।
कुतो मोपेक्षसे दीनं मत्पूर्वार्चित विश्वभृत् ॥ ३२ ॥

वा न दास्यसि चेत्तन्नोचितं कुतः हे श्रीशेति संबुद्ध्याऽव्याहतैश्वर्यत्वाद्दानाननुरूपत्वं औदार्यवत्त्वं च सूचितं सेवेच्छुर्दाता भवेत्किं अथवा कुत्सितो दाता किंदाता प्रत्युपकार्यपि तद्वत् उक्तं श्रीरामेण हनुमंतं प्रति सीतान्वेषणोत्तरं वाल्मीकीये 'मय्येव जर्णितां यातु उपकारो हरे तव ॥ नरः प्रत्युपकारार्थी विपत्तिमभिवांच्छति' इति ॥ २९ ॥ तर्ह्येतादृशं दानं क्व दृष्टमित्यत आह सूर्यचंद्राग्निरूपं ज्योतिः कर्तृ द्योतं प्रकाशं अब्दो मेघः सेवारहिते लोके ध्रुवे बिभीषणे च द्वयोरदात्रोः पदं राज्यं च त्वया दत्तं अतो मे प्रियं तव दर्शनं देहि ॥ ३० ॥ तदा दत्तमधुना किंचिदादाय दास्यामीति चेद्देयाभावं कार्याभावं चाह निधय इति तत्तस्मात्ते किं देयं न किमप्यनुरूपं परिपूर्णत्वात्कार्यस्याप्यसंभवः ॥ ३१ ॥ तथापीच्छसि चेल्लोके नृपा मानुपा अपि हे मत्पूर्वार्चित कुतो हेतोर्मा मामुपेक्षसे मत्कृतसेवाभावेपि मत्पूर्वार्चितत्वान्नोपेक्ष्योहं विश्वभृदिति संबुद्ध्या स्वदायः सूचितः जगदंतःपातित्वान्नो चेद्विश्वस्माद्बहिः कुर्वीति भावः ॥ ३२ ॥ यद्वा मत्कृतापराधैश्चित्ते विषादतामायासि चेत् गर्भगतैरंकगतैर्वाऽर्भकैर्लत्तया

देवेश ऽेऽपराधैश्चेदायास्यन्तर्विपादतां ।
पत्ताडिताऽर्भकैः किं नु प्रसू रुष्यति मानुषी ॥ ३३ ॥
जीवनं पितरौ यत्र भिन्नावन्यतराच्छिशोः ।
त्वं तूभयं मे किं कार्यं निर्घृणे विश्वभृत्त्वयि ॥ ३४ ॥
साहसं कुरु मेत्युक्त्वा यथा दारु भिनत्ति विः ।
तथा साहजिकैर्दोषैर्निन्द्याम्यंहः करोम्यहम् ॥ ३५ ॥
आद्ये पुण्यव्रतः प्रोक्तं प्रायश्चित्तमवेक्ष्य मां ।
आरात्पलायते भीत्या शार्दूलमिव शृंगिणी ॥ ३६ ॥
मालिन्यदोषभीत्या तु मापराशेः पृथक्किमु ।

प्रहृता मानुषी अपि प्रसूः रुष्यति किं अपि तु न रुष्यति त्वं तु देवेशाऽतो रोषोऽनुचितः ॥ ३३ ॥ अपि चाभिन्ननिमित्तोपादनत्वान्मातृत्वं पितृत्वं च त्वय्येव संगच्छते लौकिकदृष्ट्या सांख्यदृष्ट्या वा यत्र पक्षिणि माता च पिता च पितरौ पिता मात्रेत्येकशेषः तौ भिन्नौ तत्र द्वयोर्मध्यादेकस्माच्छिशोर्बालस्य वेदांतानभिज्ञस्य वा जीवनं त्वं तु सर्वेश्वरः उपनिषत्पक्षाश्रयिणो मे उभयमेव 'पिताहमस्य जगतो माता धाता पितामह' इति स्मृत्या त्वयैवोक्तत्वात् हे विश्वभृत् मद्बुद्ध्या निर्घृण इव त्वयि भाते सति मया किं कर्तव्यं ॥ ३४ ॥ अपराधरूपं पापं किमर्थं करोषीति पृच्छसि चेत्सहजदोषादिति सदृष्टांतमाह कश्चिद्विः पक्षी मा कुरु साहसमित्युक्त्वा स्वयं काष्ठं भिनत्ति यथा तथांहः पापं ॥३५॥ तर्हि प्रायश्चित्तं कुर्विति चेद् 'विध्यपरावे प्रायश्चित्तम्'इति सूत्रात्पुण्यव्रत ईषदवभावं तस्मिन्समुत्पन्ने सति ऋषिभिः प्रोक्तं यत्प्रायश्चित्तं तन्मां सर्वपापास्पदं दृष्ट्वा आराद् दूरान्मत्तो भीत्या शार्दूलं दृष्ट्वा ततो भीता गौरिव पलायते ईदृशोहं पापी यतो भवानुपेक्षते ॥ ३६ ॥ जपादिना परिहर्तव्यमिति चेन्मालिन्यदोषभीत्या तु मापराशेरन्यत् किं पृथक्कर्तुं योग्यमस्ति अपि तु नास्त्येव तथा जपोपि मदंगमेवाघं तस्मात्किं

कार्यं जपो मदंगावार्तिं करोति पृथग्घरे ॥ ३७ ॥
मादृक्पापो हरे नास्ति भवादृङ् नास्ति पापहा ।
पाह्यनन्याश्रयं दीनं त्यक्त्वौदासीन्यमीश माम् ॥३८॥
द्रवन्त्यपि शिलाः श्रुत्वा मद्विलापं दयानिधे ।
कारुण्यं ते कुतो यातं म्रियमाणं न वेत्सि यत् ॥ ३९ ॥
एवं विलाप्य मार्गेऽसौ गुरुध्यानैकतानहृत् ।
तस्थौ प्रायोपवेशेन दैवात्स्वप्नस्तदाभवत् ॥ ४० ॥
धेनुर्वत्सं यथोपैति भगवान्भक्तवत्सलः ।
प्राप्यावधूतवेषेण स्वप्नेऽमुं पर्यतोषयत् ॥ ४१ ॥

पृथक्करोति हे हरे इति संबुद्ध्या तव नाम्न ईदृक् पापहरणशक्तिरिति सूचितं "नाम्नोस्ति यावती शक्तिः पापनिर्हरणे हरेः । तावत्कर्तुं समर्थो न पातकं पातकी जन' इति वचनात् ॥ ३७ ॥ तदेवाह मादृगिति स्पष्टम् ॥३८॥ मयौदासीन्यं कदा धृतमित्यत आह द्रवंतीति हृदयरहितानामपि शिलादीनां द्रवत्वोत्पादको मद्विलापस्त्वयि न फलत्यतः ते तव कारुण्यं कुतः कुत्र यातं गतं मे वद यतो म्रियमाणं मां न वेत्सि ॥ ३९ ॥ एवमसौ नामधारको विलाप्य मार्गे गुरुप्राप्त्युपायभूते गुरुचिन्तने एकतानमनन्यवृत्तिकं चेतो यस्य स प्रायोपवेशनेन तस्थौ 'संन्यासवत्यनशने पुमान्प्राय' इत्युक्तलक्षणेनोपवेशनेन गतिनिवृत्तिं चकारेति भावः । तदा दैवात्परवैराग्येण ध्याननिष्ठस्यापि लयोन्मुखीभावरूपप्राक्तनयोगाद्देवप्रसादाविर्भावकः प्रबोधेपि सत्यत्वप्रतीतिदायकः स्वप्नोऽभवत् । मिथ्याभूतस्यापि स्वप्नस्य प्रबोधेपि सत्यत्वप्रतीतेः किं प्रमाणमिति चेद्देवप्रसादस्य लोकप्रसिद्धत्वात् 'स्वाप्नाद्देवप्रसादादभिलषितफलं सत्यतां प्रातरेति सत्यप्राप्तिस्त्वसत्यादपि भवति' इति पूर्वाचार्यैरुक्तत्वान्नात्र विसंवादः ॥ ४० ॥ धेनुर्नवसूतिका वात्सल्यार्थे दृष्टान्तः अमुं नामधारकं ॥ ४१ ॥ इति श्रीगुरुचरिते चरितानुसन्धानं नाम प्रथमोऽध्यायः ॥ १ ॥

---

# अथ द्वितीयोऽध्यायः

तत उत्थाय नालोक्य स्वप्ने दृष्टं द्विजोभितः ।
ध्यात्वा व्रजन्ददर्शाग्रे दयार्द्रं योगिनं समम् ॥ १ ॥

अभिवाद्य स तं हर्षपुलकोद्गमशोभितः ।
प्रेमगद्गदया वाचा वक्तुं समुपचक्रमे ॥ २ ॥

माता पितोपदेष्टा भीहर्ता भर्तापि मे भवान् ।
क्वायातोस्ति कुतो गन्ता दिष्ट्या मेद्याक्षिगोचरः ॥३॥

द्वितीये कलये प्रोक्तां गुरुशिष्यकथां शुभां ॥
धात्रा सिद्धोब्रवीद्भक्तिदार्ढ्यार्थं नामधारकम् ॥ १ ॥ ततः स्वप्नादुत्थाय द्विजो नामधारकः स्वप्ने दृष्टं पुरुषं तदानीं नावलोक्य तद्रूपं मनसि ध्यात्वाऽभितो व्रजन्नितस्ततः परिभ्रमन्नग्रे दयया क्लिन्नं शत्रुमित्रादिभावराहित्यात्समं योगिनं ददर्श स्वप्नदृष्टमिव ॥ १ ॥ स नामधारकः तं योगिनमभिवाद्य वक्तुमुपचक्रमे आरेभे ॥ २ ॥ लोके उपकारकत्वेन मात्रादयः संतु संप्रति तु मे मम मात्रादिर्भवानेव परमाल्हादकत्वात् यद्वा 'त्वं हि नः पिता योस्माकमविद्यायाः परं पारं तारयसि' इति श्रुतेरध्यात्मज्ञानदानसमर्थत्वाद्भवानेवात्र-मात्रादिः। ज्ञानिन ईश्वराभिन्नत्वाद्वा मात्रादिभावना 'पिताहमस्य जगतो माता' इति स्मृतेः। भवान्क कुत आयातोस्ति कुतः क्व वा गन्ता दर्शनाल्हादात्ससंभ्रमोक्त्याव्ययव्यत्ययः सार्वविभक्तिकत्वेन वा योजना अद्य मे दृष्टिगोचर एतद्दिष्ट्या ॥३॥ ना पुरुषोर्थाद्यनुकूले काले स्वैः स्वजनैः प्रतीपे प्रतिकूले

कालेनुकूले प्रतीपे ना स्वैः सद्भिश्च युज्यते ।
निःसंगस्य मुमूर्षोर्मे सर्व एवाद्य वै भवान् ॥ ४ ॥
नामधारकशर्माहं विप्रस्तमोत्र सद्गुरुम् ।
द्रष्टुकामोयने क्लेशान्मुमूर्षुरभवं प्रभो ॥ ५ ॥
इन्द्रियोच्छोषणं शोकं कोपि हर्तुं न मे प्रभुः ।
जाने त्वमेव शक्नोषि हृष्टं दृष्ट्वैव हृद्धि मे ॥ ६ ॥

॥ सिद्ध उवाच ॥

योगिध्येयस्त्रिमूर्त्यात्मा यद्भक्ता भुक्तिमुक्तिगाः ।
योस्ति भीमातटेऽसौ तच्छिष्यः सिद्धो धराचरः ॥७॥

॥ नामधारक उवाच ॥

सद्गुरुः सोपि भगवानस्माकं कुलदैवतम् ।
श्रद्धाभक्त्या भजे तं मां कष्टाब्धौ मज्जयत्यहो ॥ ८ ॥

काले सद्भिश्च युज्यते स्त्रीपुत्रादिसंगरहितस्य मुमुर्षोर्मे ममाद्य भवान्सर्व एव वै निश्चयेन ॥ ४ ॥ शर्मशब्दे ब्राह्मणजातिप्रतीतावपि पुनर्विप्रशब्दोक्तिर्वेदाध्यायित्वद्योतनायार्थित्वं ज्ञापयितुं अयने मार्गे ॥ ५ ॥ सर्वेंद्रियाणामुच्छोषणं मे शोकं हर्तुं कोपि ब्रह्मापि न समर्थ इति मतं तथाप्यद्य मे शोकं हर्तुं त्वमेव शक्नोषीति जाने अत्र हेतुः हि यतः भवतो दृष्ट्वैव दर्शनेनैव मे हृद्धृदयं हृष्टम् ॥ ६ ॥ उत्तरमाह योगिध्येय इति त्रिमूर्त्यात्मा ब्रह्मविष्णुशिवात्मकः श्रीदत्तः अथवा सच्चिदानंदात्मिका त्रयी आत्मा स्वरूपं यस्यासौ आत्मा असौ सिद्धनामकः तस्य श्रीदतस्य शिष्यः धराचरः योगबलादव्याहतस्वैरगत्या पृथिवीपर्य्यटनशीलः कायातोऽस्ति कुतो गंतेत्यस्योत्तरमिदम् ॥ ७ ॥ ॥ श्रीगुरवे नमः ॥ ॥ सोपि स एव सद्गुरुर्भगवाञ्छ्रीदत्तः अहो इति खेदे ॥ ८ ॥ अन्येषु ब्रह्मादिषु प्रभुः स्वभक्त-

॥ सिद्ध उवाच ॥

स सद्गुरुस्त्रिमूर्त्यात्मा रुष्टेष्वन्येष्वयं प्रभुः ।
कोपि नास्मिन्लौकिकेपि नेष्टोस्यासीति भाति मे ॥९॥
संशयात्माऽश्रद्दधानः क्वापि कैर्नैव गोप्यते ।
त्र्यात्मश्रीगुरुत्यक्तसंशयात्मेश्वरोत्र कः ॥ १० ॥

॥ नामधारक उवाच ॥

रुष्टेपि लौकिके नेशः कोपीत्युक्तं वदस्व चेत् ।
प्राग्वृत्तं चैष त्र्यात्मा कथं मे छिंधि संशयम् ॥११॥

रक्षणसमर्थः अस्मिन्गुरौ रुष्टे कोपि न समर्थः नैतावत्किंतु लौकिकेपि गुरौ रुष्टे कोपि न प्रभुरिति पूर्वाभिमर्शः अस्य सद्गुरोरिष्टः सेवादिना तच्चित्ताल्हादको नासि न भवसीति मे भाति ॥ ९ ॥ यतोयमात्मा स्थूलदेहरूपो वा सूक्ष्मदेहरूपो वा ताभ्यां व्यतिरिक्तो वा व्यतिरिक्तत्वेपि अणुपरिमाणो वा मध्यमपरिमाणो वा सर्वगतो वा जडो वा द्रव्यबोधात्मको वा चिद्रूपो वेश्वरादन्यो वेश्वर एव वा प्रपंचः सत्यो वा मिथ्या वा मोक्षसाधनं कर्माणि वा योगो वा ज्ञानं वेत्यनन्ताः स्वबुद्धिदोषजन्याः सांसर्गजा बहुविधशास्त्राभ्यासेनोत्पादिताश्च संशया आत्मन्यंतःकरणे यस्य स संशयात्मा तथाविधोपि पुनर्वेदान्तवाक्येष्वश्रद्दधानः पुरुषः क्वापि कैरपि न रक्ष्यते त्र्यीमूर्त्यात्मको यः श्रीगुरुस्तेन परित्यक्तश्चासौ संशयात्मा च तस्येश्वरोनुग्राहकः कोत्र न कोपीत्यर्थः ॥ १० ॥ लौकिकेपि गुरौ रुष्टे कोपि नेश इति यद्भवतोक्तं तत्प्राग्वृत्तं चेन्मे वदस्व चापरं एष श्रीदत्तः त्र्यात्मा कथं जातस्तदपि वदस्व कृपां कृत्वा मे मम संशयं छिंधि ॥ ११ ॥ उत्तरमाह पुरेति ॥

॥ सिद्ध उवाच ॥

पुरा निराशिषोप्येको बहु स्यामित्यभून्मतिः ।
या योगनिद्रितस्यैषा विष्णोर्मायानया जगत् ॥ १२ ॥
सृष्टं प्राङ्नाभिकमलादभवच्चतुराननः ।
ददौ तस्मै विनीताय वेदांस्तैरसृजज्जगत् ॥ १३ ॥
कृतं त्रेतां द्वापरं च सधर्मं व्यसृजत्कलिम् ।
वर्णाश्रमविभागेन मनुष्यस्थितिहेतवे ॥ १४ ॥

पुरा नैमित्तिके कल्पे निराशिषो निरिच्छस्य तर्हि बहु स्यामिति स्वकीयबहुभवनेच्छारूपा मतिः कुतः अत आह प्रलये सर्वप्राणिवासनासहितमनस योगः सैव निद्रा संहाररूपत्वात् सास्य संजातेति योगनिद्रितः तदस्य संजातमितीतच् तस्य विष्णोर्व्यापनशीलस्येश्वरस्य फलोन्मुखीभूतप्राणिकर्मभिर्बहु स्यां भवेयं इति मतिरूपकामो जात इति ज्ञेयम् श्रुतिः 'तम आसीत्तमसा गूळ्हमग्रे० कामस्तदग्रे समवर्तताधि०सीत्' इति ॥ इच्छाज्ञानक्रियाशक्त्यात्मकस्य विष्णोरेषा मिथ्याभूताऽपि कार्यानुमेयत्वाद्भावरूपा मायोक्ता अनया ईक्षणलेशेन चोदितया सचेतनवत्प्रतीयमानयोपादानभूतया तेन विष्णुना जगत्सृष्टमित्यग्रिमेणान्वयः अत्र तेन विष्णुना सृष्टमित्यनेन जन्मादेरन्यनिष्ठत्वेपि तत्कारणत्वं विष्ण्वाख्यब्रह्मणि कल्पनया संबद्धं तटस्थलक्षणं भविष्यति 'जन्माद्यस्य यत' इति न्यायात् ॥ १२ ॥ सर्जनमाह प्राक्प्रथमं विनीताय नम्राय तस्मै ब्रह्मणे तैर्वेदैस्तदुक्तप्रकारैर्जगदसृजद् ब्रह्मेति शेषः 'धाता यथापूर्वमकल्पयत्' इति श्रुतेः तस्मै वेदान्ददावित्यनेन स एव वेदस्य कर्ता भवितुमर्हति अनादित्वान्नार्वाचीनाः 'शास्त्रयोनित्वात्' इति न्यायात् ॥ १३ ॥ वैराग्यध्यानादिधर्मसहितं कृतं यजनादिधर्मोपेतां त्रेतां परिचर्याधर्मोपेतं द्वापारं कीर्तनधर्मोपेतं कलिं एवं सधर्मं ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति वर्णविभागः ब्रह्मचारी गृही वनी संन्यासी चेत्याश्रमविभागः

वैराग्यज्ञानवान्सत्यः सत्यवाग्यज्ञसूत्रभृत् ।
यज्ञसंभारधृक् त्रेता द्वापरस्तु सुशस्त्रभृत् ॥ १५ ॥
पुण्यपापोग्रताशान्तिदयानैष्ठुर्यसंयुतः ।
कलिस्तु लिंगजिह्वाभृत्कच्चरोसन्पिशाचवत् ॥ १६ ॥
एकैकं यतकालं कौ प्रेरयद्विश्वहेतवे ।
प्रयाणकाले कलये प्रोक्तां गुरुकथां शृणु ॥ १७ ॥

॥ कलिरुवाच ॥

कथं यास्ये वृषपरप्रशान्तजनसेवितां ।
भुवं श्रुत्वापि मे चेतः खिद्यतेंगं च तप्यते ॥ १८ ॥
छेत्ताहं धर्मसेतोः शुक्लहृद्वेषतापकृत् ।

तेन ॥ १४ ॥ सत्यः कृतयुगन्तस्य वैराग्यज्ञानसत्यवत्त्वात्तस्मिस्तादृशी प्रजा एवमन्यत्राप्यूह्यम् ॥ १५ ॥ त्रेतादिषु तिसृषु धर्मस्यैकैकपदऱ्हासोऽतएव द्वापारे द्विपादधर्मोपेते पुण्यपापादिमिश्रत्वं तुशब्देन कलेर्युगत्रयवैलक्षण्यं सूचितं लिंगजिव्हाभृत्त्वेन तस्मिञ्जैव्ह्यौपस्थ्यसुखासक्ताः प्रजाः प्रायो दृश्यंते कच्चरो मलदूषितोऽसन्नसाधुः पिशाचवद् दुश्चेष्टत्वात् ॥ १६ ॥ यतकालं कृतस्याष्टाविंशतिसहस्राधिकसप्तदशलक्षवर्षात्मकः कालः ॥ त्रेतायाश्चतुःसहस्राब्दोनत्रयोदशलक्षात्मकः द्वापारस्य चतुःषष्टिसहस्राधिकाष्टलक्षाब्दात्मकः कलेर्द्वात्रिंशत्सहस्राधिकचतुर्लक्षाब्दात्मक एवं नियतकालमेकैकं युगं कौ भुवि विश्वस्थितिहेतवे प्रेरयद् ब्रह्मा प्रोक्तां ब्रह्मणेति शेषः॥१७॥ ब्रह्मणा भुवं गच्छेत्युक्तो धर्मार्द्भीतः कलिरुवाच धर्मपरो यः प्रशांतजनस्तेन सेवितां भुवं कथं यास्ये इत्यन्वयः तल्लोकवार्तां श्रुत्वापि मे मम चित्तं खिद्यते अंगं च तप्तं भवति ॥ १८ ॥ यतोहं धर्ममर्यादाया उच्छेत्ता शुक् शोकः शोकादिकर्ता चाहं स्वभावतः यश्च परस्त्रीपरधनहर्ता स च मे

भ्रातान्यस्त्रीस्वहर्ता मे षड्द्विड्भाक्प्राणवल्लभः ॥ १९ ॥
क्षतव्रतोपि मे प्राणो नास्तिकोऽधार्मिकोपि मे ।
ये स्थिता भारते वर्षे धार्मिकास्ते ममारयः ॥ २० ॥
गुर्वीशदेवसद्विप्रपितृधर्मपरेक्षणात् ।
बहिर्यात्यसवो मेपि योगिज्ञानीक्षणात्क्षणात् ॥ २१ ॥

॥ ब्रह्मोवाच ॥

आसुर्या संपदा गच्छ वशा लोका भवंति ते ।
शतायुर्हि नरः कोपि धन्यो भूयान्न तं जहि ॥ २२ ॥
गुर्वीशदेवसद्विप्रपितृधर्मपरो नरः ।
त्वद्दोषैर्लिप्यते नैव गुरुभक्तो विशेषतः ॥ २३ ॥
नाम्बुनाब्जदलं यद्वल्लिप्यतेघैर्गुरुप्रियः ।
नैव जेतुं गुरोर्भक्तं देवा अपि न शक्नुयुः ॥ २४ ॥

भ्राता कामादिषड्रिपुसेवकश्च मे मम प्राणवल्लभः प्रियः ॥ १९ ॥ क्षतव्रतोऽवकीर्णी सोपि मे प्राणः प्राण इव वल्लभः परलोको नास्तीति मतिर्यस्य स नास्तिकः धार्मिकादन्योऽधार्मिकः एतावपि मे प्राणवत्प्रियौ अरयः शत्रवस्तापकरत्वात् ॥ २० ॥ ॥ असवः प्राणाः ततोपि योगिज्ञानिवीक्षणेनेत्यर्थः क्षणात्क्षणेनैवासवो बहिर्याति मृतावस्थोत्पद्यत इति भावः ॥ २१ ॥ दंभदर्पादिलक्षणा आसुरी संपत्तया गच्छ भुवमिति शेषः ॥ २२ ॥ गुर्वादिपरेषां मध्ये विशेषतो गुरुभक्तस्त्वत्कृतदोषैर्न लिप्यते ॥ २३ ॥ यद्वज्जलेन पद्मपत्रं न लिप्यते तद्वदघैर्गुरुप्रियो गुर्वनुग्रहपूर्णः नैव लिप्तो भवति । 'तद्यथा पुष्करपलाशमापो न श्लिष्यन्त' इत्यादिश्रुतेः गुरोर्भक्तं जेतुं विघ्नैरभिभवितुं देवा अपि समर्था न भवेयुरितरेषां तु का कथा ॥ २४ ॥

॥ कलिरुवाच ॥

**गुरुर्वरोमरेभ्योपि कथं वद हि यतिप्रियः ।**
**केनाप्यजेय इत्येतत्प्राग्वृत्तं क्वापि चेद्वद ॥ २५ ॥**

॥ ब्रह्मोवाच ॥

**ज्ञानं गुरुं विना न स्याद्यस्य कस्यापि निर्जराः ।**
**गुरुभक्त्यैव सिद्धार्थाः स्युस्ततोप्यधिको गुरुः ॥ २६ ॥**

कथं देवेभ्योपि श्रेष्ठो हि यस्माद्यतिप्रियो गुरुभक्तो जेतव्यमात्रोपि नेति एतत्क्वापि प्राग्वृत्तं चेत्तर्हि वद ॥ २५ ॥ निर्जरा इंद्राश्विमुख्या अपि देवाः प्रजापतिदध्यङ्मुखगुरुभक्त्यैव सिद्धार्था मुक्ताः स्युस्ततोप्यधिको गुरुः। ननु स्वर्गस्थानामिंद्रादीनां कथं संसारः तं विना मोक्षो न घटत इति चेत् 'ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनापिपासाभ्यामन्ववार्जत्ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदाम'इति श्रुतेर्देवतानामप्यशनायापिपासादिरूपसंसारपातश्रवणान्मोक्षार्थं गुरूपसत्तिर्युक्ता 'आचार्यवान्पुरुषो वेद' 'नैषा तर्केण मति० ष्ट' इत्यादिश्रुतेः तर्हि कर्मानुष्ठानादिक्रमेण मनुष्या मुक्तिं व्रजंति देवानां तु देवतांतराभावात्कर्माभावेंतःकरणशुद्ध्यभावात्कथं गुरूपसत्त्यैव मोक्ष इति चेद्यथोपनयनादिसंस्कारो मनुष्याणां वेदाधिकारार्थं देवानां तु स्वयंप्रतिभातवेदत्वान्नोपनयनादिसंस्काराः (तथा) तेषां यज्ञादिकर्मापि नापेक्षितम् शुद्धांतःकरणत्वात् ये ह्यशुद्धांतःकरणास्तेषां अंतःकरणशुद्ध्या विविदिषोत्पादनार्थं कर्मकांडोक्तैः कर्मभिर्देवतायजनं युक्तं तथा चोक्तं सूत्रकृता 'तदुपर्यपि बादरायणः संभवात्' इति मनुष्याणामुपरि स्वर्गादौ वर्तमाना ये देवास्तेषामपि ज्ञानाधिकार इति बादरायणाचार्यो मन्यते कुतः संभवात् मघवा ब्रह्मचर्येण चतुर्वारं प्रजापतिं गुरुमुपास्य ज्ञानं लब्धवान् अश्विनौ दध्यंचं गुरुमुपास्याश्वशिरसो मधुब्राह्मणाख्यविद्यां प्रापतुरिति सूत्रार्थः तस्मान्निर्जरा अपि गुरुभक्त्यैव सिद्धार्थाः स्युः ततोप्यधिको गुरुरिति

पुरा गोदावरीतीरे वेदधर्मैकदा मुनिः ।
बहुशिष्यप्रशिष्यस्तन्निष्ठां ज्ञातुमिदं जगौ ॥ २७ ॥

तपसा क्षालितं पापं बहु प्रारब्धमस्ति मे ।
तद्भोग्यं व्याधिरूपेण काश्यां कस्तत्र रक्षकः ॥ २८ ॥

गलत्कुष्ठाभिभूतस्य मम दंशादिवारणैः ।
क्षालनैरन्नदानैश्च प्रेम्णा कस्तत्र रक्षकः ॥ २९ ॥

इति तस्य वचः श्रुत्वा तूष्णीं तस्थुर्भियाखिलाः ।
तत्रैको दीपको नाम शिष्य ऊचेभिवाद्य तं ॥ ३० ॥

न शेषयेद्दोषशेषं मोक्षविघ्नं भवत्कृतम् ।
ममात्मनैव भोक्ष्येहमनुज्ञां दातुमर्हसि ॥ ३१ ॥

भावः ॥ २६ ॥ अत्रार्थे इतिहासमाह पुरेति तन्निष्ठां समवेतशिष्यप्रशिष्यनिष्ठां जगौ उवाच॥२७॥ 'धर्मेण पापमपनुदति' 'तपसा कल्मषं हन्ति'इति श्रुतेः तपसा बहु पापं क्षालितंअवशिष्टं मे भोग्यं भोगार्हं 'चजोः कुघिण्यतोः' इति कुत्वं प्रारब्धमस्ति प्रारब्धकर्मणां भोगादेव क्षयात्तत्पापरूपं प्रारब्धकर्म विविधा आधयः कर्मभोगनिमित्ता मानसी व्यथा यस्य तव्द्याधि ईदृशं रूपं स्वरूपं यस्य तेन मया । यद्वा शिष्यपरीक्षार्थं कर्मभोगस्वीकारेपि विगत आधिर्यस्मात्तादृशं रूपं यस्य तेन विवेकित्वाद्भोगस्य स्वप्नतुल्यत्वाद् दुःखेष्वनुद्विग्नमनस्तया काश्यां तद्भोग्यं तत्र भवतां मध्ये को मम रक्षको भवेत् ॥ २८ ॥ सर्वेपि भविष्याम इति चेच्छृणुत मे गलत्कुष्ठार्दितस्य प्रेमपूर्वकं को रक्षको भवेत् ॥ २९ ॥ तस्माद्गुरोर्भिया भयेनोभयथापि शप्स्यतीति मत्वा छात्रास्तूष्णीं तस्थुः तं गुरुमभिवाद्योचे वक्ष्यमाणमुवाच ॥३०॥ भवत्कृतं पापं मम देहेनैवाहं भोक्ष्ये अनुज्ञामाज्ञां ॥३१॥

॥ गुरुरुवाच ॥

भोक्तव्यं स्वयमेवाघं नान्यद्वारेण तत्क्षयः ।
अतः कष्टेन तद्भोक्ष्ये काश्यां शक्तोसि चेदव ॥ ३२ ॥

इत्युक्तं गुरुणाश्रुत्य काशीं तेन समं ययौ ।
कुष्ठी भूत्वापि सोन्धोऽघं बुभुजे भेज एष तम्॥ ३३ ॥

गुरुर्गलद्व्रणत्रस्तः कार्याकार्याज्ञ एव सन् ।
प्रतीपाचरणैः शिष्यं शश्वद्व्यर्थं व्यताडयत् ॥ ३४ ॥

स सेवावसरे भिक्षां सेवां भिक्षाक्षणेपि तम् ।
ययाचेऽहनदप्राप्तौ नाखिद्यत सदाप्यसौ ॥ ३५ ॥

अन्यद्वारेण पुत्रशिष्यादिप्रतिनिधिद्वारेण तस्य कर्मणः क्षयो न । 'एकः प्रजायते जंतुरेक एव विलीयते ॥ एकोपि भुंक्ते सुकृतमेक एव च दुष्कृतम्' इति गारुडोक्तेः ॥ अव मां रक्ष ॥ ३२ ॥ इति गुरुणोक्तमाश्रुत्यांगीकृत्य 'या गतिर्योगयुक्तानां मुनीनामूर्ध्वरेतसां ॥ सा गतिः सर्वजंतूनां गौतमीतीरवासिनां ॥ रेवातीरे तपः कुर्यान्मरणं जान्हवीतटे ॥ दानं दद्यात्कुरुक्षेत्रे तत्त्रयं गौतमीतट' इति गौतम्या माहात्म्येपि विशेषतः काश्याः प्रभावं दर्शयितुं शिष्यपरीक्षकस्य मुनेर्गौतम्याः सकाशात्काश्यां गमनं कुष्ठादिरोगस्वीकरणं च तथा च वक्ष्यति 'काशीप्रभावमादेष्टुं शिष्यभावं परीक्षितुं । वेदधर्माभवत्कुष्ठी पापशंका कुतो मुनेः' इति एष शिष्यस्तं गुरुं ॥ ३३ ॥ प्रतीपाचरणैः प्रतिकूलचेष्टितैः व्यर्थं निरर्थकं ॥ ३४ ॥ स गुरुः सेवावसरे सेवाकाले याचितस्य भिक्षादेस्तत्कालमप्राप्तौ सत्यां तं शिष्यमहनदताडयत् असौ शिष्यस्तथापि नाखिद्यत खिन्नो न बभूव ॥ ३५ ॥

दत्तां याचितकां भिक्षां मुनिस्तद्दोषकीर्तनात् ।
भूमौ प्रक्षिप्य रुष्टोन्नं स्वाद्वानीहीत्युवाच तं ॥ ३६ ॥
भिक्षार्थमपि गच्छन्तं निवर्त्योचे कृता न मे ।
विण्मूत्रोत्सर्गसंशुद्धिः क्व यास्यश्नंति मक्षिकाः ॥ ३७ ॥
यथोक्तं कर्तुमुद्युक्तं निवार्योचे न वेत्सि मां ।
क्षुधा कंठगतप्राणं देह्यन्नं पाप मे द्रुतं ॥ ३८ ॥
भुक्त्वा याचितकान्नं स कदाचित्तात पुत्रक ।
श्रान्तोसि मे स्वपेत्युक्त्वा सुप्तेस्मिन्क्षुधितोब्रवीत् ॥३९॥
एवं संछलितोप्येष भेजेऽखेदोनिशं गुरुं ।
विस्मृतस्वात्मयात्रोपि मत्वा सर्वामरेश्वरम् ॥ ४० ॥

याचितकां याच्ञया प्राप्तां भिक्षां भिक्षान्नं इदं शीतलं न मधुरप्रायं इति दोषकीर्तनेन ॥ ३६ ॥ निवर्त्य परावर्त्य मम विष्टामूत्रोत्सर्गनिरासादिना सम्यक्शुद्धिर्न कृताऽतो मक्षिकादयः पूतिगंध्यागत्य मामश्नंति त्वं त्वधुना क्व यासीत्यूचे ॥ ३७ ॥ यथोक्तं दुर्गंधापसारणं कर्तुमुद्युक्तमासक्तं दीपकं अलं क्षालनेनेति निवार्योचे क्षुधा कंठगतप्राणं मां न वेत्सि किं तस्मात् हे पाप मे मह्यं द्रुतमन्नं देहि द्रुतमिति शीघ्रं वा 'अन्नायुर्वा एष यद्वायुः' इति श्रुतेरन्नबंधनप्रयुक्तस्य प्राणस्यायुर्हेतुत्वाद्वाजिसनेयिभिरन्नं दामेति वाक्येनान्नस्य प्राणबंधनरज्जुमननात् अन्नशैथिल्ये च 'तद्यथाम्रं वौदुंबरं वा पिप्पलं वा बंधनात्प्रमुच्यत एवमेवांगेभ्यः संप्रमुच्यत' इत्यादिश्रुतिभिः प्राणस्याप्युत्क्रमणमाम्नातं तस्मादगतिकस्य मम मरणेन हत्य भविष्यतीति वक्तुं शिष्यस्य पापेति संबोधनं ॥ ३८ ॥ तनोतीति तातस्तत्संबुद्धौ हे तात शिष्यस्यापि शिष्यप्रशिष्यद्वारा गुरुपरंपराविस्तारकर्तृत्वात्तातेति संबोधनं युक्तं मे मदर्थं अस्मिञ्छिष्ये सुप्ते सति क्षुधितः सन्नन्नं देहीत्यब्रवीत् ॥३९॥ एष शिष्यः विस्मृता स्वात्मयात्रा स्वदेहयात्रा येन सः किंपुनरन्यत्

गाङ्गांशो गुरुपादाम्भः साक्षाद्विश्वेश्वरं गुरुं ।
सर्वानन्दनिधिं बुद्ध्वा मनो न क्वाप्यचोदयत् ॥४१॥
गुरुभक्तिसुपूतोभूज्ज्ञात्वा विश्वेश्वरोप्यमुं ।
प्राप्योचे वरदोऽभीष्टं वरं वरय तेऽस्तु शम् ॥ ४२ ॥
दीपकोप्याह किं कार्यं वरेण गुरवस्तु मे ।
रुक्शांत्यै वरमिच्छंति यदि पृष्ट्वा वृणोमि तत् ॥४३॥
इत्युक्त्वैत्य शशंसास्मै गुरुस्तमोब्रवीत्स तं ॥
भोगादेव क्षयं नेष्ये सेवायां मे बिभेष्यपि ॥ ४४ ॥
तच्छ्रुत्वा स तथेत्युक्त्वा शिवमेत्याब्रवीद्वरम् ।
न गुर्वसंमतं कांक्षे तच्छ्रुत्वागात्स दुर्मनाः ॥ ४५ ॥
निर्वाणमंडपं गत्वा प्राह विष्णुमुखामरान् ।
चंडो मुनिर्वेदधर्मा रुग्णस्तच्छिष्य उत्तमः ॥ ४६ ॥

॥ ४० ॥ क्वापि विषयांतरे देवयात्रादौ च नाचोदयन्न प्रेरयत् अत्र मनः-शब्देन कामसंकल्पादीनपि देवतांतराय न प्रेरयदिति सूचितम् सर्वदेवोयमिति निश्चितत्वात् वक्ष्यति च श्रीसद्गुरुर्देवदेव इत्यादि ॥ ४१ ॥ गुरुभक्त्या सुतरां पूतः पवित्रोऽभूत् अमुं दीपकं प्राप्याऽऽगत्य उवाच ते तुभ्यं श्यति दुःखं तनूकरोति शं कल्याणमस्तु ॥ ४२ ॥ यदि रोगशांत्यै वरमिच्छंति तर्हि तान्पृष्ट्वा वृणोमि वर्तमानसामीप्यात् ॥ ४३ ॥ इति विश्वेश्वरं प्रत्युक्त्वा गुरुमेत्यागत्यास्मै गुरवे तच्छशंस क्षयं नेष्ये प्रारब्धकर्म मे सेवायां मत्तो बिभेष्यपि किं अपिः प्रश्ने ॥ ४४ ॥ गुरूणामसंमतं तैरननुमतं स विश्वेश्वरः वरानादराद्विमनाः ॥ ४५ ॥ चंडोत्यंतकोपनः उत्तमोऽनुच्यमानोपींगितज्ञ उत्तमया शिष्यवृत्या गुरुसेवायां प्रवृत्तः ॥४६॥

गुरुभक्तः कंवलाश्वतरासन्नोस्ति दीपकः ।
वरं दातुमगां प्रेम्णा नाददे स गुरूद्यतः ॥ ४७ ॥
इति श्रुत्वेशवाक्यं तं द्रष्टुकामो हरिर्ययौ ।
विष्णुर्दीपकमाहांग वरदोऽस्मि वरं वृणु ॥ ४८ ॥
तपसाष्टांगयोगैश्च सूपायैर्मननादिभिः ।
उपवासैर्व्रतैर्योगैर्धर्मैर्गम्योस्मि नो नृणाम् ॥ ४९ ॥
गुरुसद्विप्रभक्तस्य मन्मयाभ्यंतरात्मनः ।
निर्द्वंद्वस्याऽपि साध्व्याश्च विष्णुर्दृश्योस्मि सर्वदा ॥५०॥
तस्मात्कष्टेन सुभग सद्गुरुः सेवितस्त्वया ।
तेनैव परितुष्टोस्मि वरं वरय मत्प्रिय ॥ ५१ ॥

॥ दीपक उवाच ॥

श्रीसद्गुरुर्देवदेवो यतो ज्ञानं ततोमृतम् ।

नाददे न स्वीचकार गुरूद्यतः गुरुतत्परः ॥ ४७ ॥ तं दीपकं अंग हे दीपक ॥ ४८ ॥ कृच्छ्रादितपसा मननादिभिः सुगमोपायैः न गम्योस्मि न प्राप्योस्मि ॥ ४९ ॥ सन्साधुः मन्मयं अभ्यंतरं यस्य तस्मिन्भक्ते आत्मा चित्तं यस्य साध्व्याः पतिव्रतायाः ॥ ५० ॥ शोभनो भगो भाग्यं यस्य तत्संबुद्धौ न ह्यस्माभिर्दृष्टो भाग्यहीनो भविष्यतीति सूचितं तेनैव सद्गुरु-सेवनेनैव ॥ ५१ ॥ श्रीमांश्चासौ गुरुश्चेति गंवद्विप्रवत्समासः एतेन सद्गुरोः श्रीशब्दोपलक्षितसर्वैश्वर्ययुक्तत्वेन स्वभक्ताभीष्टसंपादने सामर्थ्यं सूचितं देवानां त्वदादीनां देवः रामकृष्णाद्यवतारे त्वयापि गुरुभक्तिरस आस्वादित इति ज्ञापितं यतो गुरोः ततो ज्ञानान्मोक्षः अतो गुरोरधिकं किं न किम-

अतोधिकं किमस्माकं भवंति त्वादृशा वशाः ॥ ५२ ॥

चेद्विश्वेशो यथा यातस्तथा गंतुं न रोचते ।
गुरावेवाचलां भक्तिं देह्यन्यन्न वृणेऽध्रुवं ॥ ५३ ॥

॥ विष्णुरुवाच ॥

श्रद्धाभक्तिः सदा तेस्ति दास्येप्यन्यदयाचितं ।
दत्ता भुक्तिश्च ते मुक्तिः सत्कीर्तिः स्मर्तृतापहृत् ॥५४॥

यः स्तौति सद्गुरुं भक्त्या वेदोपनिषदादिभिः।
तुष्टिर्मे तेन दास्यैश्च सान्निध्यं तस्य मे सदा ॥ ५५ ॥

पीति भावः। त्वादृशास्त्वमिव दृश्यंत इति त्वादृशाः त्यदादिषु दृश इति कञ् वशा अधीना भवंति बलिवाहका भवंति 'सर्वेस्मै देवा बलिमावहंति' इति श्रुतेः अस्मै विदुषेंगभूताः सर्वे देवा बलिमिष्टार्थमावहंत्यानयंतीति श्रुत्यर्थः इयान्गुरुभक्तिमहिमा ॥ ५२ ॥ यथा विश्वेश्वरो वरमदत्वैव गतस्तथा गंतुं त्वां न रोचते चेत्तर्हि गुरावेवाचलां निश्चलां भक्तिं देहि सैव ध्रुवा मोक्षपर्यवसायित्वात् 'यस्यदेवे परा० त्मन' इति श्रुतेः। अन्यदध्रुवं स्त्रीधनादि न वृणे त्वया दत्तमपि न स्वीकुर्वे ज्ञानप्रतिबंधकत्वात् ॥ ५३ ॥ सर्वविषयभुक्तिर्दत्ता चेत्तर्हि चित्तविक्षेपेणासावधानेन वा मुक्तिर्न स्यादित्यत आह मुक्तिश्च ते दत्ता विषयान् सेवमाना अप्यस्मद्वरदानेन भोगानासक्ता हि भवादृशा न विक्षिप्ता भवंति अतो मुक्तिं यास्यंति नापरे विषयासक्तत्वात् मुक्तस्यापि भोगयुक्तस्य लोके निंदा स्यादिति चेन्न प्रत्युतास्मद्वरदानेन स्मर्तृतापहंत्री सत्कीर्तिर्भविष्यतीति भावः ॥ ५४ ॥ ईश्वरबुध्या स्तौति तेन गुरुस्तवनेन दास्यादिभिश्च तुष्टिः संतोषः ॥ ५५ ॥

कालादपि भयं नास्ति कुतोन्यस्मात्तु सिद्धयः ।
स्युस्तद्दास्योधिकं नात इत्युक्त्वांतर्दधे हरिः ॥ ५६ ॥

शिष्योपि गुरवे सर्वं शशंस स तु तत्क्षणम् ।
प्रीतः सुखाकरकरं दधौ तन्मूर्ध्नि सद्गुरुः ॥ ५७ ॥

तेन सद्योभवच्छिष्यो वेदवेदांगपारगः ।
कुशलः स्मर्तृतापघ्नो जीवन्मुक्तोखिलप्रियः ॥ ५८ ॥

काशीप्रभावमादेष्टुं शिष्यभावं परीक्षितुं ।
वेदधर्माभवत्कुष्ठी पापशंका कुतो मुनेः ॥ ५९ ॥

इत्याद्या भूरिशो वृत्ताः कले गुरुकथा भुवि ।
वक्तृश्रोतृमलघ्न्योतो भक्तं मा प्रेक्ष गां व्रज ॥ ६० ॥

इत्यादिष्टः कलिर्धात्रा भुवमेत्य तथाकरोत् ।
महिमा लौकिकस्यायं किं पुनस्त्वात्मसद्गुरोः ॥ ६१ ॥

सर्वसंहारकात्कालादपि भयं तस्य नास्ति कुतोन्यस्माद्विघ्नादेस्तु कुतो भयं नेत्यर्थः सिद्धयस्तु तस्य दास्योतःपरमधिकदानं नेत्युक्त्वा हरिरंतर्धानं गतः॥५६॥ शशंस कथयामास स गुरुस्तु सुखस्याकरं खनिं यद्यपि 'ज्ञप्तेस्तु कारणं राम शिष्यप्रज्ञैव केवलम्' इति वासिष्ठोक्तेस्तथापि 'परिपक्वमला ये तानुत्सादनहेतुशक्तिपातेन। योजयति परे तत्व' इत्युक्तेर्गुरुप्रसादोपि ज्ञप्तेः कारणमभ्युपगंतव्यं अतो वदति तेनेति ॥ ५७ ॥ तेन शक्तिपातेन सद्यस्तत्क्षणं शाब्दपरब्रह्मवेत्ताभूदित्यर्थः ॥ ५८ ॥ मुनेर्मननशीलत्वात्कुतः पापशंका ॥ ५९ ॥ हे कले वृत्ता जाताः वक्तुः श्रोतॄणां च पापहर्त्र्योऽतो हेतोर्गुरुभक्तं मा प्रेक्ष एवं वृत्तस्त्वं गां भूमिं गच्छ ॥ ६० ॥ आदिष्ट आज्ञप्तः लौकिकस्य गुरोः कैमुतिकन्यायेन सद्गुरोर्दर्शयति किं पुनरिति

तत्सात्विकीं धृतिं लब्ध्वा दृढभक्त्यैव सद्गुरुं ।
भजन्ति कृतकृत्यास्ते भवन्ति न ससंशयाः ॥ ६२ ॥

तस्माद्यदीच्छसि श्रेयः श्रद्धयासंशयं भज ।
गुरुं नृवाम्ना कं डतं भवाब्धेः पारमेष्यसि ॥ ६३ ॥

इति श्रीगुरुचरिते गुरुशिष्यचरितानुकथनं
नाम द्वितीयोऽध्यायः ॥ २ ॥

॥ ६१ ॥ एवमितिहासेन दृष्टांतमभिनीयार्थांतरन्यासेन द्रढयति तत्तस्मात्कारणात् 'धृत्या यया धारयते० सात्विकी' इत्युक्तलक्षणां सात्विकीं धृतिम् ॥ ६२ ॥ श्रेयो मोक्षम् भवाब्धि द्राक्तरिष्यसीति पाठः ॥ ६३ ॥

टीकायां द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः

॥ नामधारक उवाच ॥

अध्यात्मासौ कुतो जातो भूमौ नर इवेश्वरः ।
यं ब्रवीषि परं ब्रह्म तन्मे शुश्रूषवे वद ॥ १ ॥

॥ सिद्ध उवाच ॥

धन्योस्यनुगृहीतोसि यत्ते भक्तिरधोक्षजे ।
संजाता भवबंधघ्नी हर्षो मेतीव वर्धते ॥ २ ॥

कोपि गां पर्यटंतं मां न पृच्छति गुरोः कथां ॥
त्वयाद्य भक्तचंद्रेण बोधाब्धिर्मे प्रपूरितः ॥ ३ ॥

अनंताः संत्यनंतस्य लीलाः प्रश्नमृतेपि ताः ।
न वक्तुर्यांति निजधीपरिणामावधि स्मृतिं ॥ ४ ॥

अथ तृतीयोध्यायः ॥ ॥ अनसूयासत्वहृत्यै तृतीये त्रीरितेश्वराः ॥ गर्भा जाता इति प्रोक्तमंबरीषकथापि च ॥ १ ॥ कृतप्रश्नयोरेकस्योत्तरं लब्धमपरस्य नृधाम्ना क्रीडन्तमित्युद्देशमात्रेणोक्तस्य विस्पष्टज्ञानाय पृच्छति अयीति योगिध्येयत्वत्रिमूर्त्यात्मत्वप्रतिपादनात् यं परं ब्रह्म ब्रवीषि असौ अध्यात्मा तज्जन्मकारणं १ प्रश्नमभिनंदति धन्य इत्यादि ॥ २ ॥ लोके चंद्रदर्शनोद्भवोब्धेः पूरो बहिर्यातीति प्रसिद्धन्तद्वदिहापीति भावः ॥ ३ ॥ अनन्तस्य सर्वा लीला वक्तुं न शक्यंते कश्चिद्यथामति वक्तुं प्रवृत्तश्चेत्प्रश्नं विना ता अपि स्मृतिं न यांति ॥४॥ भवाब्धिं तर्तुं तत्कथा-

कलौ तु नास्तिका मर्त्यास्तत्कथाश्रवणात्मकं ।
प्लवं तत्तु भवाब्धि नो विदुर्मज्जंत्यतोत्र ते ॥ ५ ॥

यत्रांब्वबित्तु तृष्णोर्मिर्ग्रहाः कामादयो ध्वनिः ।
भोगोपारेऽत्र नौस्त्वेषा गुरुर्नेता कृपामरुत् ॥ ६ ॥

तस्मादिष्टया साधनानि प्राप्तान्यत्राप्ययत्नतः ।
तरिष्यसि भवाब्धि स्वागतो वक्ष्ये कथाः शृणु ॥ ७ ॥

इत्युक्त्वामरजाभीमासंगमे ह्युपविश्य सः ।
गुर्वधिष्ठितकल्पद्रूमूलेस्मै प्राह सत्कथाः ॥ ८ ॥

श्रवणरूपं नावं नो विदुः विदो लटो वेति झेर्जुसादेशः ते नास्तिका अत्र भवाब्धौ ॥ ५ ॥ यत्र भवाब्धौ उदकमज्ञानं ऊर्मिरायताशा ग्रहा मकराद्याः सुखभोगजन्यो हर्षशब्दः दुःखभोगजन्यो हाहाशब्दः एषा गुरुकथा नेता नौनायकः गुरुः कृपानुकूलवायुरिति पूर्वाचार्यैस्त्वेवं रूपकं महानविद्याकामकर्मप्रभवदुःखोदकः तीव्ररोगजरामृत्युमहाग्राहोनादिरनंतोपारो निरालंबो विषयेंद्रियजनितसुखलवलक्षणविश्रामोपि पंचेंद्रियार्थतृष्मारुतविक्षोभोत्थितानर्थशतमहोर्मिर्महारौरवाद्यनेकनिरयगतहाहेत्यादिकूजिताक्रोशनोम्दूतमहारवः सत्यार्जवदानदयाहिंसाशमदमधृत्याद्यात्मगुणपाथेयपूर्णज्ञानोडुपः सत्संगसर्वत्यागमार्गो मोक्षतीर ईदृग्भवाब्धिरिति ॥ ६ ॥ साधनानि सद्गुरुलाभसच्छ्रवणरूपाणि स्वाक्शीघ्रं ॥ ७ ॥ कल्पद्रुरश्वत्थः गुर्वधिष्ठितत्वात् तस्य कल्पवृक्षत्वं कल्पितभक्तमनोरथपूरकत्वाद्वा 'तस्मात्तं विधिना साध्वि भज द्राक्सिद्धिदोस्ति सः। पुत्रादिकामसिध्यै नो विलंबोक्षय्यपुण्यदात्' इत्यग्रे वक्ष्यमाणत्वात् अस्मै नामधारकाय शिष्यत्वेन स्वीकृताय सत्कथाः शोभनकथाः सतो भगवतः कथा वा ॥ ८ ॥ अस्मिन्लोके

**मुमुक्षुभेषजं मुक्तजीवनं विषयीष्टदं ।**
**श्रीगुरोश्चरितं वाग्हृद्दूरत्वाद्वच्मि तेल्पकम् ॥ ९ ॥**
**जगत्येकार्णवीभूते शेषतल्पाश्रितोस्पृहः ।**
**नारायणो जगत्स्त्रष्टुं मायामुद्भाव्य सोंडजम् ॥ १० ॥**

विषयिणो मुमुक्षवो मुक्ताश्चेति त्रयस्तेषां सर्वेषामपि विषयभूतं श्रीगुरुचरितमित्याह विषयिणां श्रवणेन पठणेन वाभीष्टार्थप्रदं मुमुक्षूणां संसाररोगनिवर्तकं भेषजं मुक्तानां निरुपमाल्हादकत्वेनैव जीवनभूतं कृतघ्नत्वनिवृत्तिद्वारा वा जीवनसाफल्यकारणं यदुक्तं 'आजीवितं त्रयः सेव्या वेदान्तो गुरुरीश्वरः । पूर्वं ज्ञानातये पश्चात्कृतघ्नत्वनिवृत्तय' इति । श्रीगुरुचरितशब्देनात्र त्रितयसेवनमपि द्योतितं तस्य गुर्वीश्वरवेदांतप्रतिपादकत्वात् 'यतो वाच०'इति श्रुतेर्वाग्हृद्दूरत्वात्ते तुभ्यं अल्पकं निजबुद्धिपरिणामावधि ।।९।। एकार्णवीभूते नैमित्तिकप्रलये द्विपरार्धावसाने ब्रह्मणो दिनांते शिष्यत इति शेषोनन्तः स एव तल्पं शय्या तच्छ्रितः निरीहः नराज्जातानि तत्वानि नाराणि तान्येवायनं प्राप्त्युपायो यस्याथवा नराणां समूहो नारन्तदेवायनं यस्य स 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत' इति वचनात् ॥ माया सत्वासत्वाभ्यामनिर्वाच्या प्रकृतिः तां उद्भाव्य स्वेक्षणवशात्कार्यक्षमां कृत्वांडजमंडादुत्थितं स्त्रष्टारं ब्रह्माणं व्यसृजन्निद्रानंदाद्बोधयामास न तूत्पादितवान् प्रलयस्य नैमित्तिकत्वात् प्राकृतिके प्रळये तूत्पादयति किमर्थं सृष्टयै सृष्ट्युत्पादनार्थं सोपि प्रबुद्धो ब्रह्मापि मायावेशाद्रजआधिक्येन स्वात्मनि परिच्छिन्नत्वेन कर्तृत्वाद्यध्यस्य मनःसंकल्पमात्रेण मरिच्यत्रिक्रतुपुलस्त्यपुलहांगिरोदक्षाख्यान् सप्तर्षीनसृजत् अपिशब्दाद् ब्रह्मनिष्ठाः सनत्कुमारसनकसनंदनसनातननारदा अपि ग्राह्याः तत्र तेष्वेकः तेषां मध्ये एकोन्वर्थकस्तपस्विवरिष्ठः कोसौ यस्यात्रेः सुतः साक्षाद्भगवान् श्रीदत्त आसीत् ॥१०॥

स्रष्टारं व्यसृजत्सृष्ट्यै सप्तर्षीन् सोपि मानसान् ।
तत्रैकोत्रिस्तपस्वीशो यस्याभूद्भगवान्सुतः ॥ ११ ॥
ऋषेरत्रेस्तपोर्थस्य पातिव्रत्यविभूषिता ।
आसीद्भार्यानसूयाख्या त्रिलोक्यां विश्रुता सती ॥१२॥
जातोर्व्यां मृदुलाकाश्यौ शीतौ मंदो मरुद्भिया ।

॥ ११ ॥ ईश्वरस्य जगत्स्रष्टृत्वे प्रमाणभूताः श्रुतयः पूर्वमुदाहृताः ईश्वरस्य कर्तृत्वादिकं श्रुतिभिस्तात्पर्येण न प्रतिपाद्यते अध्यारोपं विनापवादो न विधीयतेत एव कर्तृत्वादिनिषेधार्थं मायाविलसितं प्रतिपाद्य 'निष्कलं निष्क्रियं शांतं निरवद्यं निरंजनं' 'एकधैवानुद्रष्टव्यं' 'नेह नानास्ति किंचन' 'यस्मिन्सर्वा०' 'अतोन्यदार्त्तं' इत्याद्यपवादेन द्वैतस्य प्रतिषेधनात्। अलमतिविस्तारेण प्रकृतमनुसरामः। अत्र श्रीदत्तात्रेयस्य प्राधान्यात्तदवतारं कथयितुमुपोद्घातमाह ऋषेरिति ऋषेर्मंत्रद्रष्टुः 'अत्रिः पंचमे मंडल' इत्युक्तत्वात् तपोर्थस्य बहुज्ञत्वात् उक्तं च ग्रहज्ञानावसरे 'यं वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः अत्रयस्तमन्वविंदन्नह्य १ न्ये अशक्नुवन्' अयं मंत्रः शाकलशाखायां षड्विंशाऽध्याये तप एवार्थोस्य तस्यात्रेः पतिव्रताधर्मेणैव विशेषतो भूषिता नत्वाभरणैः 'कचधार्यं देहधार्यं परिधेयं विलेपनं। चतुर्धा भूषणं प्राहुः स्त्रीणाम्' इति रसाकरोक्तेरपि अनसूयायाः पातिव्रत्यमेव भूषणमितीयांश्चित्रो विशेषः ॥ न विद्यतेऽसूया यस्याः सा तन्नामिका विश्रुता सती पतिव्रता 'अत्रेर्यथाऽनसूया स्यात्'इति श्रुतेः॥ त्रयाणां लोकानां समाहारःतद्धितार्थ इति तत्पुरुषः संख्या पूर्वोद्विगुः संज्ञायां ङीप् द्विगोरेकवचनमित्येकवचनं तस्यां त्रिलोक्यां॥१२॥ 'भयादस्याग्निस्तपति' इति श्रुतेराधिकारिका अप्यग्न्यादयो यस्मात्परमात्मनो भीता नियमेन स्वस्वकार्यादौ प्रवर्तंते स परमात्मा 'एष सेतुर्विधरण' इति श्रुतेर्धर्मरूपः स यया पूर्णत्वेन स्वाधिकारतो भृतोतस्तस्या भीतिहेतुत्वं पृथि-

तस्या देवाः पदापायभ्रांत्याऽऽपुः शरणं हरिं ॥ १३ ॥

एकदा नारदोऽप्येत्य तद्धर्मान्ब्रह्मविष्णुजान् ।
प्राब्रवीन्नेदृशी साध्वी सर्वदाभ्यागतप्रिया ॥ १४ ॥

इत्यृषेर्वाक्यमाकर्ण्य विषीदंत्य उपस्थिताः ।
तद्देव्योऽसहमाना द्राग्बभूवुर्मूर्छिता भृशं ॥ १५ ॥

पतिव्रतामानिनीस्ताः सावित्रीश्रीश्वरीस्त्रयः ।
आश्वास्यातिथिवद्भूत्वा रोषाच्छप्तुं सतीं ययुः ॥ १६ ॥

पतिव्रतापि तान्दृष्ट्वा स्वाश्रमाभ्यागतान्सुरान् ।
प्रत्युद्गत्वा समानीय स्वासने संन्यवेशयत् ॥ १७ ॥

व्यादीनां युक्तमेव उर्वी पृथ्वी शीतौ तथा प्रतीयमानौ स्वपदभ्रंशशंकयापुः प्रापुः॥१३॥ तस्या अनसूयाया धर्मान् पतिशुश्रूषाभ्यागतातिथ्यादिरूपान् ॥ १४ ॥ उपस्थिताः समीपस्थाः तेषां ब्रह्मविष्णवीश्वराणां शक्तिभूताः देव्यः पत्न्यः मात्सर्येण तद्धर्मोत्कर्षमसहमानाः सत्यो द्राक् श्रवणमात्रेणैव भृशं मूर्छिता बभूवुः ॥ १५ ॥ जगति वयं पतिव्रता इति मन्यमानास्ता आश्वास्य त्रयः ब्रह्मविष्णवीशाः अतिथय इव भूत्वा रोषात्सतीमनसूयां ययुः स्त्रीसंगिनामिदृशी गतिः स्त्रीबुद्धिः प्रलयाय चेति लोके दर्शयितुं प्रवृत्ता बभूवुः अन्यथात्मारामाणामीश्वराणां किं कार्यमिति भावः। अरोषादिति वा छेदः स्त्रीमतानुसारिणोपि तीर्थमाहात्म्यद्योतनायारोषेण शमेन ययुः 'नारी तीर्थं पतिव्रता' इति स्मरणात् ॥ १६ ॥ पतिव्रताप्यनसूयापि सुरान्ब्रह्मविष्णवीशानतिथिवेषेण स्वाश्रमाऽभ्यागतान्दृष्ट्वा प्रत्युद्गत्वा संमुखीभूय सत्कारपुरःसरं गृहं समानीय शोभने आसने संन्यवेशयत् ॥ १७ ॥

वीजितान्कृतपच्छौचान्सूपविष्टान्जगौ सती ।
स्वागतं वोद्य किं कार्यं मुनिस्तु तपसे गतः ॥ १८ ॥

त ऊचुः साध्वि नो विप्रस्तपःसक्तमना मुनिः ।
कदाऽऽयातीत्यतो देहि क्षुधितेभ्योन्नमाश्वलम् ॥१९॥

इति श्रुत्वा गिरस्तेषां तथेत्युक्त्वा गृहं गता ।
पात्राण्यासाद्य तेभ्योऽन्नं परिविष्टं न्यवेदयत् ॥ २० ॥

त आहुः साध्वि नो देहि नग्ना भूत्वेत्यपेक्षितं ।
नेदं चेद्रोचतेन्यत्र गच्छामः क्षुधिता इतः ॥ २१ ॥

व्यजनेन वीजितान्कृतपादक्षालनान्सुखेनोपविष्टान्तान्कुशलप्रश्नपूर्वकं सती प्राह वः युष्माकं बहुवचनस्य वसादेशः स्वागतं अद्य मया किं कार्यं तदाज्ञापयंतु भवंत इति भावः । ननु गृहपतिनैवेदं प्रष्टव्यं न स्त्रियेत्यत आह गृहपतिर्मुनिस्तु तपसे तुमर्थाच्च भाववनाच्चेति चतुर्थी तपस्तप्तुं गतः अतः प्रार्थये ॥ १८ ॥ ते देवा ऊचुः तपसि 'मनसश्चेंद्रियाणां च ह्यैकाग्र्यं परमं तपः । तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते' इति स्मृतेर्बाह्यांतःकरणसमाधानरूपं तपो ब्रह्मप्राप्तिद्वारमिति निश्चयेन तस्मिन् तपस्यासक्तं मनो यस्य स मुनिः कदाश्रममायातीति नो विद्मः अत आशु शीघ्रं क्षुधितेभ्योऽस्मभ्यमलं पर्याप्तमन्नं देहि ॥ १९ ॥ तथेति दास्यामीत्युक्त्वा गृहं पाकगृहम् ॥ २० ॥ तदान्नं परिविष्टमिति तया निवेदितं श्रुत्वा ते देवा अप्यूचुः हे साध्वि त्वं नग्ना दिगम्बरा भूत्वा नोस्मभ्यमन्नं देहीत्यस्माभिरपेक्षितं इदं तुभ्यं न रोचते चेत्तर्हि क्षुधिता वयं इत आश्रमादन्यत्र गच्छामः धर्मसत्वपरीक्षार्थमियमुक्तिः ॥ २१ ॥ तत

तच्छ्रुत्वापि प्रहस्यैषा ऋषेः संगात्तपस्विनः ।
पूताया मम कामेन किं भवेच्चेत्तथाऽकृते ॥ २२ ॥
शप्त्वा गच्छंति विमुखा महांतोमी ममात्मजाः ।
इति स्वगतमुद्भाव्य तथेत्युक्त्वांशुकं जहौ ॥ २३ ॥
तदैव तेभवन् बाला निर्विकारा अपीश्वराः ।
जगत्सृडीश्वरहराः पातिव्रत्यप्रभावतः ॥ २४ ॥
तान्सा तथाविधान्प्रेक्ष्य सचित्राभूद्धृतांशुका ।
पयः प्रसूत्या इवास्यास्तदालं स्तनतोस्रवत् ॥ २५ ॥

एषानसूया तदसमंजसमपि श्रुत्वा प्रहासं कृत्वात्मन्यमन्यतेदं । तपस्विन ऋषेः समागमाच्छुद्धांतःकरणाया मम कामेन पातिव्रत्यहरं विकारजातं किं भवेन्न किमपीति भावः । तर्ह्यतिथिसत्कारकामनयापि परपुरुषसन्निधौ नग्नत्वेन व्यवहरणं प्रायश्चित्तायेति चेत् 'कामोकार्षीत्कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता' इत्ययं मंत्रो विवेकिनं प्रति कामात्मनोः संबंधाभावं बोधयन्नविवेकिनः प्रायश्चित्तार्थो भवत्येवेत्यभिप्रेत्य पूताया मम कामेन किं इत्युक्तं अन्यच्च तैर्यथोक्तं तथा मया अकृतेऽननुष्ठिते ॥ २२ ॥ अस्माञ्छप्त्वा विमुखाः सन्तो महान्त एते गच्छन्ति 'स इद्भोज' इति मंत्राभ्यामन्वयव्यतिरेकाभ्यां सत्कारासत्कारयोरिष्टा-निष्टफलप्रतिपादनात्तथैव कार्यं अमी अतिथयो ममात्मजा इति स्वगत-मुद्भाव्य कल्पयित्वा तथा दास्यामि न गन्तव्यमित्युक्त्वांशुकं परिहितवस्त्रं जहौ नग्ना बभूव ॥ २३ ॥ तदाऽव्यवहितकाल एव जगत्सृड् ब्रह्मा ईशनं रक्षणं तच्छीलो विष्णुः हरो जगत्संहर्ता रुद्रः पातिव्रत्यधर्मसामर्थ्यात् । पंचम्यास्तसिलिति पंचम्यर्थे तसिः ॥ २४ ॥ साऽनुसूया तथाविधान्बा-लान् सचित्रा साश्चर्या हृतं परिहृतं अंशुकं वस्त्रं यया धृतवस्त्रा वा प्रसूत्या

सपद्येवाद्भुताविष्टा प्रेम्णा हृष्टतनूरुहा ।
प्रत्येकं पाययामास क्षीरं तेपि पपुर्मुदा ॥ २६ ॥

जगदुत्पत्तिकरणसुश्रांत इव विश्वसृट् ।
पीत्वा पतिव्रतास्तन्यं परमां शांतिमाययौ ॥ २७ ॥

विश्वंभरो विश्वरक्षाक्रियात्रस्त इवामलं ।
पतिव्रतापयः प्राश्य पीनां विश्रांतिमाविशत् ॥ २८ ॥

हरस्तु विश्वसंहारकर्मतष्ट इव क्षणात् ।
सत्यौधस्याशनात्तृप्तः पुष्टिवर्धनतां ययौ ॥ २९ ॥

स्वधर्मज्ञाततत्सत्त्वा पाययित्वापि तान्पयः ।
सा जगौ तत्कथोद्धातं प्रेम्णा विन्यस्य पालके ॥ ३० ॥

इव जातापत्याया इव ॥ २५ ॥ सपदि तत्क्षणं अद्भुताविष्टा आश्चर्यप्रयुक्ता प्रेम्णा पुत्रस्नेहेन जातरोमांचा तेपि बालाः ॥ २६ ॥ सुतरां श्रांत इव ब्रह्मा स्तने भवं स्तन्यं दुग्धं शरीरावयवाद्यत् ॥ २७ ॥ विश्वंभरो विष्णुः पीनां विपुलां आविशत्प्राविशत् ॥ २८ ॥ हरो रुद्रः विश्वसंहाररूपकर्मणा तष्टस्तनूकृतः क्षीण इवेति यावत् तनूकरणे तक्षः सत्या ऊधसि भवं दुग्धं शरीरावयवाद्यत् ऊधस्यमेवौधस्यं स्वार्थेण् पुष्टिं वर्धयतीति पुष्टिवर्धनस्तस्य भावस्तत्ता तस्य भावस्त्वतलाविति तल् स्वयं पुष्टः सन्नन्येषामपि पुष्टिं वर्धयतीति भावः 'सुगन्धिं पुष्टिवर्धनम्' इति मंत्रलिंगात् ॥ २९ ॥ स्वधर्मेण पातिव्रत्येन तत्प्रभावेणेति यावत् ज्ञातं तेषां बालानां सत्वं बलं यया सा इमे जगत्प्रभव इति विदिता सती तान् पयः पाययित्वा सानसूया प्रेम्णा पालके विन्यस्य तेषां देवानां कथोद्धातं कथाभ्यागानम् जगौ ॥ ३० ॥ एत्यागत्यानसूयामुखाच्छ्रुतं गीतं गानं येन सः पुनरनसया-

अत्रांतरे वनादेत्य श्रुतगीतः सतीमुखात् ।
सर्वं श्रुत्वेश्वराञ्ज्ञात्वा ध्यानान्नत्वाऽस्तुवन्मुनिः ॥३१॥

विश्वसर्गस्थितिप्रांतनिदानं विश्वसाक्षिणं ।
विष्णुं विश्वमयं वंदे विश्वाद्यं विश्वसंग्रहम् ॥ ३२ ॥

मुखात्सर्वं श्रुत्वा ध्यात्वा च ध्यानाध्यानप्रभावात्तान्बालानीश्वराञ्ज्ञात्वा नत्वा प्रणम्य च मुनिरत्रिस्तानस्तुवत् ॥३१॥ स्तुतिमेवाह विश्वेति विश्वसर्गादेरादिकारणं उपबृंहितेन रजसा सर्ग उत्पत्तिः सत्वेन च स्थितिः पालनं दुष्टनिग्रहशिष्टानुग्रहलक्षणं तमोगुणेन च प्रांतः प्रलयः एषां निदानमादिकारणं अभिन्ननिमित्तोपादानरूपं विश्वस्य साक्षिणं तद्गुहायां साक्षित्वेन वर्तमानं अलेपकं 'नान्योतोस्ति द्रष्टा' इति 'द्वा सुपर्णा'इति श्रुतेः द्वा द्वौ सुष्टु पर्णं गतिः सहायं वा ययोस्तौ पर्णं गतिः सहाये चेति विश्वः॥ सयुजौ समानौ सखायौ च जीवेश्वरौ समानं वृक्षं ओव्रश्चू च्छेदन इति धातोस्तत्त्वज्ञानेन छेत्तुं योग्यत्वाद्रूपकेण वृक्षं शरीरं परिषस्वजाते आलिंगयतः तयोरेको जीवः पिप्पलं कर्मफलं स्वादु अत्ति अतो बध्यते अन्य ईश्वरस्तु अनश्नन्नभिचाकशीति साक्षित्वेन पश्यतीति श्रुत्यर्थः। तर्हि परिछिन्नः किं नेत्याह विष्णुं विष्लृ व्याप्ताविति धातोर्व्यापकं देशकालवस्तुपरिच्छेदरहितं ईदृशोहं चेन्मत्तो द्वितीयत्वेन प्रतीयमानस्य जगतः का गतिरित्यत आह विवर्तन्यायेन विश्वस्याद्यं कारणं विश्वमयं त्वदतिरिक्तविश्वाभावात् विश्वसंग्रहं स्वरूपानुभवेन लयहेतुत्वात् अध्यस्तस्य जगतोऽधिष्टानत्वेन त्वमेव सर्वस्वरूपः नह्यारोपितानां सर्पजलधारादंडमालावलीचर्दमूत्रितत्वादीनां अधिष्टानभूतां रज्जुमंतरेणान्यत्किंचिद्वास्तवं स्वरूपं तद्वत्त्वमिति भावः तं त्वां वन्दे ॥ ३२ ॥ यदर्थं तपस्तप्तं स त्वमेकोपि

तपस्तप्तं यदर्थं स त्वमेकोपीश लीलया ।
त्रिधा भूत्वात्मनात्मानं स्वैर्गुणै रमयस्युत ॥ ३३ ॥
अध्यारोपापवादाभ्यां समुद्भूतं जगत्ततः ।
अहंममाभिमानेन पार्थक्यं त्वस्य नापरम् ॥ ३४ ॥

लीलया सत्वादिगुणैर्ब्रह्मादिरूपेण त्रिधा भूत्वा संख्याया विधार्थे धा इति धाप्रत्ययः आत्मना स्वकल्पितैर्गुणैर्भावैरात्मानं रमयसि ॥ ३३ ॥ एवंभूतं यत्तव स्वरूपमविकृतं ततः स्वरूपादध्यारोपापवादाभ्यां जगदुत्पत्तिविलयौ तौ यथा ईक्षणादिप्रवेशांतेश्वरसृष्टिरूपः जाग्रदादिप्रबोधांतजीवसृष्टिरूपश्चाध्यारोपस्तेनाध्यारोपेण भूतभौतिकरूपं जगत्समुत्पन्नं रज्जुसर्पवत् अस्य दृश्यमानस्य जगतो देहादावहमित्यभिमानेन गृहस्त्रीपुत्रधनपश्वादौ ममेत्यभिमानेन ततोऽविकृतात्तव स्वरूपात्पार्थक्यं पृथक्त्वं सद्वितीयत्वं भवति तुशब्देन तदध्यस्तं मिथ्याभूतमिति सूचयति अपवादेनाद्वितीयात्मसाक्षात्कारेणापरं नामरूपविभागापन्नं द्वैतं न नास्ति देहं प्रविष्टो जन्ममरणजागरादिभिः संसारभूतो जीवः कदाचिदीश्वरानुग्रहेण गुरुशास्त्रप्रसादाच्च दृश्यमानान्याकाशादीनि भूतानि प्राणिदेहाश्च कुत उत्पद्यंते केन वा रक्ष्यंते कुत्र वा प्रलीयंत इत्येवं शास्त्रं विविच्य सर्वसंसारस्य मायाकल्पितत्वात्परं ब्रह्मैव तत्त्वमित्यपरोक्षानुभवेन निश्चिनोति सोपवादः तेनापवादेन परब्रह्मस्वरूपिणो भवतोऽपरमन्यन्न 'एकधैवानुद्रष्टव्यं' 'नेह नानास्ति किंचन' इति श्रुतेः तर्हि तादृशस्येदृशी दशा कुत इति चेत्पूर्वमेवोक्तमेकोऽपि लीलया त्रिधा भूत्वात्मानं रमयसि नेदं वास्तवं तव रूपं किं तु लीलेति भावः। तर्हि ममैव गृहे किमर्थमित्यत्रापि पूर्वोक्तमेव तपस्तप्तं यदर्थमिति लोके स्वभक्तवशतां दर्शयितुं मत्तपो निमित्तीकृत्यैतैर्बालरूपैर्लीलया प्रादुर्भूतोसि कुतस्तवोत्पत्तिः को वा तवोत्पादकः कोपि नैव तथा च श्रुतिः 'न जायते म्रियते०' अतएव भक्तानुजिघृक्षया तवावतार इति ॥३४॥

इति स्तुवति तस्मिंस्ते पालके बालरूपतः ।
स्थिता अप्याद्यरूपैः स्वैः स्थित्वोचुस्तं वरं वृणु ॥३५॥

स प्राह साध्वीं सुभगे ब्रह्मविष्णुमहेश्वराः ।
त्वद्भक्त्याप्ता मनोदूरा अतोभीष्टं वरं वृणु ॥ ३६ ॥

साप्याह सुतपः सृष्ट्यै त्रिधाभूतेन वै भवान् ।
सृष्टोमुनामुमेवातः पुत्रत्वेन वृणोत्वजम् ॥ ३७ ॥

इति तस्मिन् मुनौ स्तुवति सति ते देवा अंशेन पालके बालरूपतः स्थिता अपि स्वकीयैः पूर्वरूपैः स्थित्वा अत्रेरग्रत इति शेषः वरं वृणु इति तमत्रिमूचुः ॥ ३५ ॥ मुनिरग्रतः स्थितान् तान्दृष्ट्वा तेषां वचनं च श्रुत्वाऽयं पतिव्रताधर्मप्रभाव इति मनस्यानीय सोत्रिः साध्वीमनसूयां वक्ष्यमाणं प्राह ईश्वरमातृत्वापन्नत्वात् हे सुभग इति संबुद्धिः यतो मनसापि विदूरा ब्रह्मविष्णुमहेश्वरास्तव भक्त्याऽऽप्ताः प्राप्ताः 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' इति वचनादेतेषां लब्धये भक्तिरेव कारणं अतोऽनन्यलभ्येभ्य एभ्योभीष्टं वरं वृणीष्व ॥ ३६ ॥ एवं ब्रुवतोत्रेर्वचनं श्रुत्वा ऋषेस्तपसः प्रभावोयं मद्भक्तिः पातिव्रत्यं वा किमुतेति मनस्यानीय सानसूयापि स्वपतिं वक्ष्यमाणं प्राह शोभनं निष्कल्मषं तपो यस्य तत्संबुद्धौ भोः सुतपः ईश्वरोद्देशेनानुष्ठितत्वात्सात्त्विकत्वाच्च तपसो निष्कल्मषत्वं त्रिधाभूतेनामुना परमेश्वरेणैव सृष्ट्यर्थं भवान्सृष्टोतः कारणाद्रूपत्रयोपेतममुमेवाजं जन्मादिभाववर्जितमीश्वरं पुत्रत्वेन भवान्वृणोतु पुत्रस्य गौणात्मत्वात्तद्रूपेणावस्थितस्य हृषीकेशस्य ललितालिंगनादिना मुख्यात्मप्राप्तिः सुलभेति भावः ॥ ३७ ॥ ऋष गताविति धातोर्ऋषति पश्यतीति ऋषिः

ऋषिः सोपीदमेवेष्टं मत्वा वव्रे तदेव हि ।
विष्णुः सर्वात्मनाहं ते मया दत्तः किलाब्रवीत् ॥३८॥

पतिव्रताप्रभावोयं बाला भूत्वेश्वराः स्थिताः ।
स्वस्वप्राग्रूपतोप्येते स्वं स्वं स्थानं ययुस्त्रयः ॥ ३९ ॥

पृथङ्नामानि बालेभ्यो ददौ तेभ्योर्थविन्मुनिः ।
पूर्णत्वेन मयाहं ते दत्त इत्युक्तवान् स्वयम् ॥ ४० ॥

भगवानिति नाम्नैनं मुनिर्दत्तं चकार सः ।
ब्रह्मांशं चंदनाच्चंद्रमौग्रं दुर्वाससन्तथा ॥ ४१ ॥

'ऋषयोनागतातीतवर्तमानार्थवेदिन' इति स्मरणात् विष्णुर्व्यापनशीलः सर्वात्मना सर्वस्वभावेन ॥ ३८ ॥ ईश्वरा अंशतो बाला भूत्वा पालके स्थिताः पुनश्चैते त्रयोपि स्वकीयेन रूपेण नत्वतिथिरूपेण स्वं स्वं स्थानं सत्यलोकवैकुंठकैलासाख्यं ययुः ॥ ३९ ॥ अर्थविच्छब्दार्थज्ञो मुनिस्तेभ्यो बालेभ्यः पृथक्पृथक् नाम तदंशानुगुणद्योतकं ददौ पूर्णत्वेन मयाहं ते दत्त इति भगवान् विष्णुः स्वयमेवोक्तवान् देयं दाता चाहमित्यभिप्रायः इति हेतोरेनं विष्णोरंशभागं नाम्ना दत्तं चकार स मुनिः स्वयं दत्तत्वाद् 'दत्तात्मा तु स्वयं दत्त' इति स्मरणात् अनेनैव न्यायेन 'अथ ह शुनःशेपो विश्वामित्रस्यांकमाससाद' इति श्रुत्युक्तं शुनःशेपस्यात्मदानं द्व्यामुष्यायणकं अतएव स्मर्यते 'अजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरात' इति गोत्रप्रवरादेरर्वाचीनत्वात्स्वात्मदानकर्तुराद्यस्य विष्णोर्गोत्राद्यभावान्न द्व्यामुष्यायणत्वं । चद्याल्हादन इति धातोश्चंदनाच्चंद्रः चदेरौणादिको रप्प्रत्ययः उग्रस्य शंकरस्यायमौग्रस्तं दुर्वाससं ॥ ४० ॥ ॥ ४१ ॥ त्रयाणां मध्ये-

त्रयाणामप्ययं साक्षाद्दत्तस्तु भगवान्स्वयम् ।
श्रुत्यन्विष्टांघ्र्यब्जरेणुः सच्चिदानंदविग्रहः ॥ ४२ ॥

सदेष्टयोगसंविदः स्मृतिगामी क्षणे क्षणे ।
चंडोप्यन्योनुग्रहाशीश्चंद्रो जननवर्धनः ॥ ४३ ॥

दुर्वासःशापमाश्रुत्य भूदेवार्थमनंतशः ।
धृत्वावतारान् कार्यांते लीलाकायान् जहात्यजः ॥ ४४ ॥
परानुग्रहकार्यार्थमवतीर्णः स्वयं किल ।
दत्तरूपेण कार्यस्य नित्यत्वान्नामुमत्यजत् ॥ ४५ ॥

॥ नामधारक उवाच ॥

कुतो दुर्वाससा शप्तः शापोऽव्यक्ते कथं वद ।
लग्नः परावरेशं मे संशयं छेत्तुमर्हसि ॥ ४६ ॥

प्ययं दत्तस्तु साक्षाद्भगवानेव नत्वंशावतारः पूर्णत्वेनात्मदानात् कथंभूतः श्रुतिभिरन्विष्टो मार्गितोऽघ्रिकमलसंबंधी रेणुर्जगज्जन्मादिलक्षणो यस्य स एतेन तटस्थलक्षणमुक्तं सच्चिदानन्दविग्रह इति स्वरूपलक्षणमुक्तं भवति ॥ ४२ ॥ इष्टमभीष्टं योगोष्टांगः संविज्ज्ञानं एतानि ददातीति तथा अन्यो दुर्वासाश्चंडोप्यनुग्रहेच्छुः जननवर्धनः वंशवर्धको लोकपोषको वा ॥ ४३ ॥ दुर्वाससा दत्तं शापमाश्रुत्यांगीकृत्य अजो न जायत इत्यजः अन्येष्वपि दृश्यत इति डप्रत्ययः अनन्तानित्यनन्तशोऽपरिमितान् संख्येकवचनाच्चेति शस् ॥ ४४ ॥ स्वयं विष्णुः परानुग्रहकार्यस्य नित्यत्वादमुं मुनिविग्रहं भूभारहरणांते रामकृष्णादिवन्नात्यजत ॥ ४५ ॥ कुतो हेतोः न व्यज्यते केनापि लक्षणेनेत्यव्यक्तः परे ब्रह्मादयोऽवरे निकृष्टा यस्मादेतादृशे शापः कथं संलग्नः ॥ ४६ ॥ एष भगवान् भक्ताधीनत्वेन

सिद्ध उवाच

भक्ताधीनतया त्वेष भगवान् भक्तिभावनः ।
अव्यक्तोप्यस्ति सुव्यक्तः पूर्णातोत्र सहिष्णुता ॥ ४७ ॥
पुरांबरीषनामैको भक्तो भागवतोत्तमः ।
एकादशीव्रतपर आसीदभ्यागतार्चकः ॥ ४८ ॥
एकदा व्रतभंगाय पारणाहे तदालयं ।
चंडः प्राप्याह दुर्वासा भोजनं मेर्पयेति च ॥ ४९ ॥
दास्यामीत्युक्तवत्यस्मिन्गत्वा स्नातुं नदीमरं ।
छिद्रान्वेषी तत्र तस्थौ तरितुं पारणाक्षणं ॥ ५० ॥
सोप्यभुक्ते मुनौ भोज्यं नान्यथा व्रतभंगभीः ।
तीर्थात्तूभयसिद्धिर्मे इति मत्वा पपौ जलम् ॥ ५१ ॥

तु स्वयमव्यक्तोपि स्वेच्छया शांत्यादिलक्षणैः सुतरां व्यज्यतेसौ सुव्यक्तः भक्तिभावनो भवत्यतो हेतोरत्र भगवति पूर्णा सहिष्णुता भक्तवात्सल्याद्भगवति सर्वमुपचर्यत इति भावः ॥ ४७ ॥ अंबरीषनामा सूर्यवंशीयो राजर्षिर्भगवद्भावमात्मन्यात्मानं सर्वात्मके भगवति च प्रेक्षको भागवतोत्तमः त्रिदिनात्मकैकादशीव्रततत्परोतिथिपूजकश्चासीद्द्वादशीक्षेत्र इति शेषः ॥ ४८ व्रतभंगाय व्रतभंगं कर्तुं तुमर्थाच्च भाववचनाच्चेति चतुर्थी पारणाहे मुहूर्तमात्रावशिष्टायां द्वाद्दश्यां प्राप्य आहेति छेदः ॥ ४९ ॥ भोजनं दास्यामीत्यस्मिन्नंबरीष उक्तवति सति अरं शीघ्रं तत्र स्नानविधावेव तस्थौ गजवत्स्नातुमारेभे इत्यर्थः तर्हि किं शास्त्रसिद्ध्यै नेत्याह छिद्रेति पारणाकालं तरितुमुल्लंघयितुं ॥ ५० ॥ ऋष्यागमने विलंबे जाते सति मुनौ अभुक्ते न भोज्यं अन्यथा पारणाकरणे व्रतभंगाद्भयं तस्मादुभयसाधकात्तीर्थात्तीर्थजलपानान्मे उभयसिद्धिः पारणासिद्धिरातिथ्यादरश्चेति सोंबरीषोपीति मत्वा तीर्थजलं पपौ स्वयं ॥ ५१ ॥ तदा पानकाल एव हे दुर्भगानेनातिथ्यव-

तदैत्याह मुनिः पीतं हित्वा मां क्षुधितं यतः ।
दुर्भगानेन दोषेण भ्रमिष्यसि भवे भवे ॥ ५२ ॥
इत्युक्तः सोप्यजं भीतो दध्यौ स्वकुलदैवतम् ।
स्वदासजीवनं विष्णुं सोप्यागत्याह तं मुनिं ॥ ५३ ॥
मुने मोघं न ते वाक्यं शापं देहि तमेव मे ।
नायं सोढुं प्रभुर्भक्तवात्सल्यान्मे सहिष्णुता ॥ ५४ ॥
इत्याकर्ण्य मुनिर्मत्वा भुव्ययं दुर्लभो नृणाम् ।
अंबरीषप्रभावेण शापसंबंधकारणात् ॥ ५५ ॥
भविष्यत्यत्र सुलभस्तच्छपाम्येनमित्यसौ ।
तं शशापाप्यजः शापाद्बहुधावतरत्यजः ॥ ५६ ॥

मानरूपेण दोषेणाऽतःपरं जन्मनि जन्मनि भ्रमिष्यसि भूत्वा भूत्वा तत्तद्देहतादात्म्येनाहं मत्स्योहं कूर्मोहं वराहोहं सिंह इत्यादिभ्रांतिरूपां बुद्धिं प्राप्स्यसि अत्र श्रौतप्रत्यवायज्ञापनार्थं दुर्भगेति संबुद्धिः श्रुतिश्च काठके 'आशाप्रतीक्षे० ब्राह्मणो गृह' इति । तस्मात् सर्वावस्थासु आतिथिरनुपेक्षणीय इति भावः ॥ ५२ ॥ इति तेनोक्तः सोपि भागवतोत्तमोपि जन्मांतरेण भगवद्विस्मरणकारणाद्भीतः न तु जन्ममरणनिमित्तात् सोऽपि विष्णुरपि आगत्य आहेति पदच्छेदः ॥ ५३ ॥ मोघं निरर्थकं तपःप्रभावात्सत्यसंकल्पाच्च तमेव शापं मे देहि अयं भक्तः सोढुं न समर्थः अहमपि तथापि भक्तवात्सल्यान्मम सहनशक्तिरस्ति ॥ ५४ ॥ इति विष्णुवाक्यं श्रुत्वा मुनिर्दुर्वासाः भुवि अयं विष्णुर्नृणां दुर्लभः तपआदिना प्राप्तुमशक्यः अत्र मर्त्यलोके सुखेन लब्धुं शक्यो भविष्यति अंबरीषस्य जन्मभिः किं न किमपि तत्तस्माद्धेतोरेनं विष्णुं शपामीति मत्वासौ दुर्वासास्तं विष्णुं अजोपि विष्णुरपि शापाद्धेतोर्बहुधा मत्स्यादिरूपैरवतरति ॥ ५५ ॥ ॥ ५६ ॥ विश्रुताः पुराणादौ विख्याताः ते च यथा

अस्यावतारा मत्स्याद्याः पुराणोक्ता हि विश्रुताः ।
द्विवारमाविरासीत्स दीनान् त्रातुं जनान्कलौ ॥ ५७ ॥
अद्यापि तौ कामदौ स्तः पामरागोचरौ कलौ ।
यतकालकलौ द्राक्शं सिद्ध्येन्नान्यदतोवितः ॥ ५८ ॥
इति श्रीगुरु० दत्तावतारकथनं नाम
तृतीयोऽध्यायः ॥३ ॥

चैत्रशुक्लतृतीयायामपराण्हे मत्स्यरूपेणावतीर्य वेदानुद्धृत्य मनुं ररक्ष १ वैशाखपूर्णिमायां सायं कूर्मो भूत्वाऽमृतप्राप्तये स्वपृष्ठे मंदरं दधौ २ भाद्रशुक्लतृतीयायामपराण्हे वराहो भूत्वा भूमिमुद्धरिष्यन् हिरण्याक्षं ददार ३ वैशाखशुक्लचतुर्दश्यां प्रदोषे नरसिंहरूपेणावतीर्य हिरण्यकशिपुं विददार ४ भाद्रशुद्धद्वादश्यां मध्यान्हे वामनो भूत्वा व्याजेन बलिं बबंध ५ वैशाखशुक्लतृतीयायां मध्यान्हे परशुरामो (भार्गवरामो) वतीर्य कार्तवीर्यादिनृपानहनत् ६ चैत्रशुद्धनवम्यां मध्यान्हे दाशरथी रामोवतीर्य सकुलं रावणं जघान ७श्रावणकृष्णाष्टम्यां निशीथे कृष्ण आविर्भूय भूभारमवातरत् ८ आश्विनशुक्लदशम्यां सायं बुद्धो भूत्वा कारुण्यं ततान ९ श्रावणशुक्लषष्ठ्यां कल्की जनिष्यते म्लेच्छान्हनिष्यति च १० ॥ इति दशावताराः ॥ मार्गपौर्णमास्यां प्रदोषे बुधवासरे मृगभे च श्रीदत्तात्रेयोवतीर्य विजयतेऽस्मै नमः अन्येप्यवताराः पुराणादौ विश्रुताः अस्येत्यनेन श्रीदत्तात्रेयस्येति संबध्यते स श्रीदत्तात्रेयः कलौ युगे दीनान् जनान् त्रातुं द्विवारमाविरासीत् श्रीपादो नरहरिरिति चावतारौ जाताविति भावः ॥ ५७ ॥ अद्यापि पामराणामगोचरावविषयौ तौ द्वौ वर्तमाने घोरे भक्तानां कामदौ स्तः एतादृशौ तौ यदि समर्थौ तर्हि सकलदोषनिधिं क्रूरमेतं कलिं कुतो न निघ्नतः यतो महाननर्थः प्रवृत्तः इत्यत आह यतेति यतो नियमितः कालो यस्य स चासौ कलिस्तस्मिन्द्राक्संकल्पमात्रेणैव शं पुण्यं सिध्येत् अन्यत्पापं संकल्पान्न सिध्येत् अतोऽवितः रक्षितः दुष्टत्वेपि महागुणत्वान्नियतकालत्वाच्च रक्षणं युक्तम् ॥५८॥
टीकायां तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः

श्यायुःकीर्त्यृद्धिहेतुर्ना त्र्यर्थसक्तोन्यथा भवान्।
कल्पः स्वंगो ज्ञोप्यकर्ता कुतोत्रातृट् समुच्चिति ॥ १ ॥

श्रीदत्तो यदुना पृष्टस्तं पुंसां श्रेयसेऽब्रवीत्।
परं ध्युपाश्रितगुरुशिक्षितज्ञानमात्मनः ॥ २ ॥

श्रीगणेशाय नमः ॥ अथ चतुर्थोऽध्यायः ॥ आत्मविद्यां वक्तुं तत्स्तुत्यर्थमुपाख्यानं ब्रह्मबोधद्वारोपदेशं दर्शयति 'पारिप्लवार्था इति चेन्न विशेषितत्वात्' इति न्यायात् ॥ चतुर्विंशतिगुर्वात्तज्ञानं तुर्येब्रवीद्यदुं ॥ दत्त आन्वीक्षिकीं चापि प्रल्हादायार्जुनाय च १ अथ ह किल पर्यटन् यदुराजाऽकुतोभयं सर्वसंगविवर्जितं विजने वने धरोपस्थे शयानं दक्षमवधूतं दृष्ट्वाश्चर्येण तं पृच्छति ना पुरुषः. श्रीः संपदायुर्जीवितकालः कीर्तिर्यशः एषामृद्धौ समृद्धौ हेतुः कामना यस्य सः त्र्यर्थाः पुरुषार्था धर्मादयस्तेषु सक्तः प्रायो दृश्यते श्र्यादिकमकांक्षन्भवांस्तु अन्यथा धर्माद्यनासक्तो लक्ष्यते तदनैपुण्येनाशक्त्याऽज्ञानेन वा भवतोऽकर्तृत्वमिति वक्तुं न शक्यते यतो भवान् कल्पो निपुणः स्वंगः शोभनांगः शक्तः ज्ञः प्राज्ञोप्यकर्ता लक्ष्यते॥ तथाप्यत्र विजने गहने वने कुतः कारणात् अतृट् निरिच्छोपि सन्कलत्रादिरहितोपि तु समुत्सानंद इति ॥ १ ॥ यदुना ययातिपुत्रेण पृष्टः श्रीदत्तः यदुं पुरुषाणां मुक्तये आत्मनो बुध्युपाश्रितपृथिव्यादिगुरुशिक्षितहेयोपादेयरूपज्ञानं भ्रमप्रमादनाशकरत्वात्परं उत्कृष्टं अब्रवीत् ॥ २ ॥ तत्रतावत्तितिक्षायाः पारमार्थिकप्राधान्यात्पृथिव्याः शिक्षितां क्षमां प्राह नेतीति। दैवानुगैर्दैववशवर्तिभिर्भूतैरार्तः पीड्यमानोपि धीरः क्ष्मेव पृथ्वीव सृतेर्मार्गा-

न दैवानुगभूतार्तः क्ष्मेव धीरः स्मृतेश्चलेत् ।
सदा परार्थोद्भवेहो नगाच्छिक्षेत्परात्मतां ॥ ३ ॥

प्राणवृत्त्याक्षिप्तहृद्वाग्भिद्भृतुष्येन्न गोप्रियैः ।
तद्भुग्दोषगुणास्पृग्विवर्मासक्तश्च देहगः ॥ ४ ॥

गुणाश्रयो गुणैर्युज्येन्न गंधैर्वायुवत्स्वदृक् ।
कालोत्थगुणतेजोऽब्भूमयभावास्पृगित्पुमान् ॥ ५ ॥

नचलेत्किंतु धैर्येण क्षमां वहेत् पर्वतरूपायाः पृथिव्याः शिक्षितमाह सदा सर्वथा परार्थः परोपकारार्थः उद्भवः संभव ईहा च यस्य स नगाद्वृक्षात्पर्वताद्वा परात्मतां पराधीनात्मतां शिक्षेन्नगो यथा खंडित उत्पाटितो वाप्यखिन्नस्तदनुमन्यते तद्वत् ॥ ३ ॥ क्षमावतो विषयासक्त्या नांतर्मुखत्वं तस्माद्बाह्याभ्यंतरवायुशिक्षितां विषयानासक्तिमाह सार्धेन प्राणो ह्याहारमात्रेण प्रवर्तते रसादीन्नापेक्षते तस्य वृत्त्याऽविक्षिप्तमनोवाक्पुरुषस्तुष्येन्नेन्द्रियविषयैः प्राणवृत्त्यकरणे मनोवैकल्येन ज्ञानं नश्येत् गुणलिप्सायां तु वाङ्मनश्च विक्षिप्येत । विषयान्सेवमानस्यापि तेष्वनासक्तिं बाह्यवायुशिक्षितामाह तद्भुग्विषयभुक् शीतोष्णादिविविधधर्मानासक्तस्तद्दोषगुणासंस्पृष्टश्च यथा वायुर्दहने वने वा न सज्जते तद्वद्देहग इत्यग्रेण संबंधः ॥ ४ ॥ देहादियोगेनाहंप्रत्ययेन प्रतीयमानोपि गंधादियोगप्रतीतो वायुर्यथा न तद्योगी तद्वद्गुणाश्रयोपि गुणैर्न युज्येत् एतद्वा कथमित्यत आह स्वदृक्स्वरूपानुसंधानवान् । एतादृशस्यापि निर्विकारव्यापकात्मज्ञानाभावे न स्वास्थ्यमत आकाशाच्छिक्षितं तदेवाह सार्धेन कालसृष्टगुणा येषु ते च ते तेजोऽब्भूमयभावाः त्रिवृत्करणविकारदेहास्तत्स्पर्शरहित एव पुमान् ॥ ५ ॥ वायुप्रेरितमेघास्पृष्टाकाशवत्

वायूत्थाब्दास्पृक्खवच्चांतःस्थेनाभिदसंगती।
भाव्ये सर्वान्वयव्याप्त्या ब्रह्मात्मत्वात्ततात्मनः॥ ६ ॥

रस्यः स्निग्धः प्रकृत्याच्छो ज्ञोब्वद्वाम्ना पुनाति नॄन्।
छन्नः स्पष्टोपि काम्यर्च्यः प्रागुदग्दात्रघं दहन्॥ ७ ॥

क्वापि भुंक्ते तपस्तेजोदीप्तोक्षोभ्योपरिग्रहः।
मलास्पृक्सर्वभक्षोपि ज्ञोग्निवच्चेंधसीयते॥ ८ ॥

तत्तद्रूपः स्वमायोत्थोच्चासत्स्थेशोग्निहेतिवत्।
कालान्नित्येपि दृश्येते नात्मभूतोद्भवक्षती॥ ९ ॥

अन्यच्च देहस्थेन सर्वान्वयव्याप्त्या व्यापकस्य प्रत्यगात्मनो ब्रह्मात्मत्वाद्देहादिनाऽभेदोऽसंगश्च भाव्यः मणिषु सूत्रस्येव न व्याप्तिः किंत्वाकाशस्येव घटादिनासंगो भेदश्च तद्वत् ईदृशोपि स्वच्छत्वादियुक्तश्चेज्जगत्पुनातीति ॥ ६ ॥ उदकाच्छिक्षितमाह रस्यो मधुरालापी स्निग्धो लोकेष्वनुरागवान्स्वभावशुद्धश्च ज्ञः स्वदेहेन दर्शनादि कुर्वतो नॄन् पुनाति उदकवत्। ईदृशस्तेजस्वीत्यग्नेः शिक्षितमाह सार्धद्वयेन छन्नो गुप्तः स्पष्टोपि वा कामिपूज्यः पूर्वोत्तरदात्रघं पापं दहन्॥ ७ ॥ क्वापि भुंक्ते तथापि न दोषी ज्ञानातिशयात्तपस्तेजोदीप्तोतएवाऽक्षोभ्यः अपरिग्रह उदरपात्रः सर्वभक्षोपि अग्निवन्न मलास्पृक् ज्ञानी अन्यच्चेंधसीयत इत्यग्रिमेण संबंधः ॥ ८ ॥ इन्धसि वर्तुलादिकाष्ठे तत्तद्रूपोग्निरिव स्वमायासृष्टेषूच्चेषु देवादिषु असत्सु तिर्यगादिषु तिष्ठतीति स चासावीशश्च तत्तद्रूपः प्रतीयते सा प्रतीतिर्न वास्तवी काष्ठसंयुक्ताग्न्याकारवन्मृषा अन्यच्च कालवेगेनात्मसंबंधिभूतानामुद्भवक्षती उत्पत्तिनाशौ अग्निज्वालावन्नित्येपि अनुक्षणं वर्तमानेपि स्थूलदृष्ट्या न दृश्येतेतः क्षणभंगुरत्वं वैराग्यार्थं ज्ञातव्यं॥ ९ ॥

देहः कलावद्विकारी कालेनात्माब्जवद् ध्रुवः ।
भात्यात्मा तत्स्थवद्व्यक्तौ न स्वस्थो बुध्यतेर्कवत् ॥ १० ॥

स्थूलबुद्ध्यार्कवद्गोभिर्गा यथास्वं गुणैर्गुणान् ।
आदत्ते विसृजत्यत्र सदा योगी न युज्यते ॥ ११ ॥

तद्वत्षड्भावविकारा अपि देहस्य नात्मन इति चंद्राच्छिक्षितमाहार्धेन देहश्चंद्रकलावद्विकारी आत्मा चंद्रवद् ध्रुवः कूटस्थः अत्रेयं ज्योतिःशास्त्रप्रक्रिया 'तेजसां गोलकः सूर्यो ग्रहर्क्षाण्यंबुगोलक' इति वचनादाप्यमंडलश्चन्द्रस्तेजोमंडलः सूर्यः तयोरेकक्षावस्थाने चन्द्रो न दृश्यते चक्षुषः सूर्यमंडलेन समदेशस्थितत्वव्यवधानात् सामावास्या अथ षष्टिकलाभिश्चंद्रो नक्षत्रांतरं याति सूर्यस्तु त्रयोदशभिरहोरात्रैरतः प्रतिपदमारभ्य विषमस्थस्य सूर्यमंडलस्य पंचदशः पंचदशो भागः आप्यमंडले प्रतिबिंबितो दृश्यते सा कलेत्युच्यते एवं पंचदशेह्नि त्रयोदशभिर्नक्षत्रैरंतरमिति राशिचक्रस्य सप्तविंशतिनक्षत्रात्मकस्य मध्ये संमुखौ चंद्रसूर्यौ तिष्ठतः तदा संपूर्णं प्रतिबिंबं भूछायालांछितं दृश्यते सा पूर्णिमा तस्याममावास्याप्रतिबिंबेन सह षोडशकलचंद्र उपचर्यतेऽथ पुनः प्रतिपदमारभ्य मंडलयोर्विषमीभावात् कलाऱ्हासस्तत्र कलानामेव विकारो नाप्यमंडलस्य तथात्मनोपि आत्मा देहस्थ इति प्रतीतोपि न तथेति सूर्याच्छिक्षितमाह सार्धेन स्वतो भेदशून्योप्यात्माभिव्यनक्तीति व्यक्तिर्देहाद्युपाधिस्तत्र तत्स्थवत्तद्गत इव भाति स्थूलबुध्या स्वस्थः स्वरूपावस्थितो न बुध्यतेऽर्कवत् ॥ १० ॥ यथार्कः स्वर्गस्थोप्युदकुंभे प्रतिबिंबितस्तच्चलनादिना चलित इत्यादि लक्ष्यते तद्वत् । अन्यच्च यथास्वं यथाकालं गोभिः किरणैर्गाः जलानि अर्क इव गुणैरिंद्रियैर्गुणान् विषयानादत्ते पुनः पात्रे योगी विसृजति अत्रादाने विसर्गे च स योगी न युज्यते मया लब्धं दत्तं वेत्यभिमानं न करोति

नातिस्नेहप्रसंगाक्तो नश्येद्दीनः कपोतवत् ।
कश्चित्कपोतः कपोती क्रीडादौ चेरतुर्वने ॥ १२ ॥
प्रेम्णाऽशंकं मिथो बद्धध्यक्ष्यंगौ पाति स श्रमात् ।
तर्पयंती सासूताभांस्तांस्तौ पुपुषतुर्मुदा ॥ १३ ॥
कदाचिल्लुब्धको नीडाद्बहिःस्थांस्ताञ्छिचाददे ।
क्रोशंतीं पतितां दुखार्त्तां तं चापस्मृतिं तथा ॥ १४ ॥
द्वंद्वारामः प्रियाऽशांतो गृहासक्तो विवन्नरः ।
क्रांतापावृतमुक्तिद्वार्नृजन्मच्युत एव सः ॥ १५ ॥

॥ ११ ॥ अथ एवंयुक्तोप्यतिस्नेहप्रसंगौ करोति चेन्नश्यतीति कपोताच्छिक्षितमाह चतुर्भिः ना पुमान् अतिस्नेहोऽतिप्रीतिरतिप्रसंगो लालनाद्यासक्तिस्ताभ्यामक्तो व्याप्तश्चेत्कपोतवन्नश्येत्तदेव विवृणोति कश्चित्कपोतस्तत्स्त्री कपोती च प्रेम्णा स्नेहेन मिथः परस्परं बद्धानि धीर्बुद्धिरक्षि दृष्टिश्चांगं च याभ्यां तौ निःशंकं वने क्रीडादौ मिथुनीभूय चेरतुः ॥ १२ ॥ सहासवीक्षितालापादिभिस्तर्पयंतीं स कपोतीं कपोतः श्रमात्कष्टेनापि वांछितदानेन पाति साऽर्भानंडरूपानसूत ततः स्वभावकर्मादिशक्तिभिर्भिन्नांडेभ्यो व्यक्ताकारान् तान्मुदा तौ पुपुषतुः तन्मुखेषु कवलदानेनाच्छादनादिना च ॥१३॥ प्रौढान् तान् कदाचिन्नीडाद्बहिः स्थितान् लुब्धकः शिचा जालेन जग्राह तेषामन्नार्थं वनांतरं गता तन्माता तदैवागत्य बद्धान् तान् ददर्श ततः पुत्रशोकेन क्रोशंतीं दुःखाज्जाले पतितां तां तथा च प्रकारवचने थाल् तेनैव प्रकारेण तादृशं पतितं अपस्मृतिं स्मृतिवर्जितं कपोतं चाददे लुब्धक इति पूर्वाभिमर्शः एवंविधान्गृहासक्तान्कालो भक्षतीत्यूह्य ॥ १४ ॥ दृष्टांतमभिनीय दार्ष्टांतिके योजयति द्वंद्वसुखे आरामो यस्य प्रियविषयाशांतो गृहे गुणबुद्ध्यासक्तो नरः विवत्कपोतपक्षिवत् क्रांतं यदपावरणं मुक्तिद्वारभूतं नृजन्म तस्मात्प्रच्युत एव स भवेत्ततो हीनतरं लोकं गमिष्यतीति

क्वाप्यस्त्यैंद्रियसौख्यं तन्नेच्छेदाजगरोक्रियः ।
यदृच्छयाप्तं महांतं ग्रासं वाल्पं रसारसम् ॥ १६ ॥
भक्षेच्चेन्नाप्तोनशनो दैवभुक्सर्पवत्स्वपन् ।
विनिद्रोक्रियबल्यंगधृग्गोमानपि नेहते ॥ १७ ॥
पूर्णो हीनोप्यजपरो न सर्पति न शुष्यति ।
ज्ञोब्धिवत्सिंधुभिर्निम्नोनंतपारो दुरत्ययः ॥ १८ ॥

भावः ॥ १९ ॥ एवं ज्ञात्वा प्रारब्धकर्मणोवश्यंभावित्वात्तदर्थोद्यमेवृथा-सुर्व्ययो न कार्य इत्यजगराच्छिक्षितमाह द्वाभ्यां क्वापि स्वर्गे नरकेपि ऐन्द्रियसौख्यमस्ति यथा दुःखं अतोऽक्रिय उदासीनोजगरवृत्तिः सन् त-न्नेच्छेत् तर्हि देहनिर्वाहः कथमित्यत आह दैवलब्धं महांतं अल्पं वा मिष्टं वा विरसं वा ग्रासं भक्षेत् न प्राप्तश्चेदनशनोपि दैवभुग्दैवमेव प्रापकमिति धैर्य-वान्स्वपन्नपि स्वार्थदत्तदृष्ट्या विगतनिद्रः अक्रियमुद्यमरहितं तच्च तद्बलवदंगं च तद्धारक ईदृशो गोमानिंद्रियवानपि नेहते दर्शनादिव्यापारमपि निवार-यति ॥१७॥ ईदृशोपि दैवलब्धेन वा भोगेन युतो वियुतोपि वा हर्षशोक-रहितो भवेदिति समुद्राच्छिक्षितमाह सार्धेन सिंधुभिर्नदीभिः सिंधुः समुद्र इव ज्ञः पूर्णः समृद्धकामः समुद्रपक्षे प्रावृषि सरिद्भिः समृद्धोपि न सर्पति हर्षाद्विक्षिप्तो न भवति पक्षे बहिर्न प्रसरति हीन इष्टवियुक्तोपि पक्षे ग्रीष्मे नदीप्रवाहरहितोपि न शुष्यति न शोकेन तप्तो भवति पक्षे शुष्को न भवति अन्यच्च निम्नोन्तर्गभीरः अनंतपारः भूमा आविर्भू-तस्वरूपत्वात् कालतो देशतश्चापरिच्छेद्यः पक्षे सर्वतो विस्तीर्णः दुरत्ययो नातिक्रमणीयः तेजस्वित्वात् पक्षे भीमरूपत्वात् सदाऽक्षोभ्योऽविकार्यः रागाद्यभावात् पक्षे मर्यादापालकत्वात् दुर्विगाह्य एवंभूत इति परिकलयि-तुमशक्यो बहिः प्रसन्नश्च स्तिमिताब्धिवन्निश्चलसमुद्रवद्भवेत् ॥ १८ ॥

सदाऽक्षोभ्यो दुर्विगाह्यः प्रसन्नः स्तिमिताब्धिवत् ।
नावशोग्नौ विनश्येत्स्त्रीलीलारूपमोहतः ॥ १९ ॥

गृण्हीयात्सर्वतः सारं रमेन्नैकत्र चाल्पभुक् ।
संग्रहे नाशबीजेपि मधुकृद्वन्मुनिः सदा ॥ २० ॥

बध्येत नांगनास्पर्शाच्छूरैर्हन्येत वेभवत् ।
अन्योऽकात्संचितं लुब्धैर्न भुक्तं नार्पितं धनं ॥ २१ ॥

'कुरंगमातंगपतंगभृंगमीना हताः पंचभिरेव पंच । एकः प्रमादी स कथं न हन्यते यः सेवते पंचभिरेव पंच' इति गारूडोक्तेरेवं सन्नपि विषयासक्तश्चेन्नश्यतीति पंचभ्यः शिक्षितमाह सार्धचतुर्भिः रमणीविलासलावण्यरूपमोहितोऽतएवावशो ना पुमान् अग्नौ पतंगवच्छलभवन्नश्येत् ॥ १९ ॥ मधुकरो द्विविधः मधु कृंतति पुष्पादाच्छिद्य गृण्हातीति मधुकृत् भृंगः मध्वाहारत्वेन स्वरूपेण च करोतीति मधुकृन्मधुमाक्षिका ताभ्यां शिक्षितमाह सर्वतोणुभ्यो महद्भ्यश्च सारं गृण्हीयात् 'बहुशास्त्रगुरूपासनेपि सारादानं षट्पदवत्' इति सांख्यप्रवचनात् अल्पभुक्सन्नैकत्र रमेत् च एवार्थः यथा भृंगो विशिष्टरसलोभेनैकस्मिन्पद्मे वसन्नस्तमये मुकुलिते तस्मिन्बध्यते एवं ज्ञोपि गुणलोभेनैकगृहमाश्रितस्तन्मोहेन बध्यते स मुनिः सदा स्वात्मना सह नाशहेतौ मधुवत्संग्रहे न रमेत् यतः स्वेन सह संग्रहनाशः ॥ २० ॥ गजाच्छिक्षितमाह ना पुरुषः स्वस्यान्यस्य चांगनास्पर्शात्स्नेहेन पाशेन च बध्यते वाथवा शूरैर्हन्येतोभयत्रापीभवत् । त्यागभोगहीनोर्थसंचयो घाताय भवति स्वोद्यमाभावेपि भोगः संभवतीति च मधुकृन्मधुहराभ्यां शिक्षितमाह दुःखात्संचितं न भुक्तं स्वयं न दत्तमन्येभ्य ईदृशं लब्धधनं संचितं मधुवत्सहसान्यो भुंक्ते ॥ २१ ॥ दुःखाद्गृहिणार्जित-

भुंक्तेऽकार्जितगृह्यन्नं प्राग्भिक्षुर्मधुहेव च ।
ना बध्येतैणवद्गीतान्नृत्याद्वाप्यृष्यशृंगवत् ॥ २२ ॥
प्रमाथिजिव्हया नैति बडिशैर्मस्त्यवल्लयं ।
जय्याल्पभुज्या साऽसक्त्या जितं सर्वं जिते रसे ॥२३॥
वेश्यैकार्थदकांताशाध्वस्तनिद्रा सुखावहं ।
चिंताहेतुं हि निर्वेदं गत्वात्मस्थं रतार्थदं ॥ २४ ॥
रामं हित्वा कुवृत्त्यान्यं भीशुङ्मोहदमध्रुवम् ।
कांक्षे धिङ्मात्मनात्मानं रमे क्रीत्वामुनेति सा ॥ २५ ॥

मन्नमनुद्यमोपि मधुहेव भिक्षुः पूर्वं भुंक्ते । हरिणाच्छिक्षितमाह ना पुरुषः ग्राम्यगीतश्रवणात् न तु भगवद्गुणगीतश्रवणात् एणवन्मृगवद्बध्येत नृत्याद्यवलोकनाच्चापि मृगीसुतर्ष्यशृंगवद्बध्येत ॥ २२ ॥ मत्स्याच्छिक्षितमाह अतिक्षोभकया जिव्हया ना पुमान् बडिशैरामिषलिप्तलोहकंटकैर्मत्स्य इव लयमेति अतोल्पभुज्या परिमितभोजनेन रसानासक्त्या च सा जिव्हा जेतुं शक्या क्षय्यजय्यौ शक्यार्थ इति निपातनात्साधुः रसासक्तिं परित्यज्यौषधवद्भुंजीत। प्राणवृत्त्येति श्लोकार्थस्येदं प्रकारांतरं रसनादुर्जयत्वादुक्तं यतो रसे जिते सर्वं जितमेव ॥ २३ ॥ जितरसस्याप्याशा प्रतिबंधकर्त्री अतो वेश्यायाः शिक्षितं नैराश्यमाह सार्धद्वयेन विदेहपुरस्थैका पिंगला नाम वेश्या बहुद्रव्यदातृकांताशया ध्वस्ता निद्रा यस्याः सा दैवयोगाद्द्रव्यचिंतैव हेतुर्यस्य तं सुखावहं निर्वेदमलंबुद्धिं गत्वा विवेकेनात्मानं धिक्कुर्वती आह आत्मस्थं अंतर्यामिणं रतं स्वानुभवेन परानंदं अर्थं मोक्षरूपं च ददातीति तं ॥ २४ ॥ ग्रंथिभेदसंशयच्छेदकर्मक्षयपूर्वकं स्वरूपे रमयतीति रामं प्रत्यगात्मानं हित्वा . सांकेतवार्तयान्यं स्त्रैणं अननुमताचरणाद्भीतिं विरहेण शोकं अतिस्नेहप्रसंगतश्च मोहं ददातीति तं अध्रुवं मर्त्यं तुच्छं जारं कांक्षेऽतएव मा मां धिक् इतः परमात्मना देहेनात्मानं क्रीत्वाऽमुना स्वप्रकाशापरोक्षरूपेणात्मारामेणाहं रमे इति सा ॥ २५ ॥

मत्वा तथाभूत्थ्याशाऽकं नैराश्यं परमं सुखं ।
परिग्रहोकाय तज्ज्ञोऽस्वोप्यनंतसुखायते ॥ २६ ॥
सामिषं कुररं हंति शूरोतो व्यामिषः सुखी ।
मानावमानचिंतोनः स्वक्रीडः स्वरतिः सुखी ॥ २७ ॥
बालवद्धि जडोज्ञोर्भश्चात्मानंदो गुणातिगः ।

मननं कृत्वा तथाभूदाशां छित्वात्मारामाभूत् हि यस्मादाशाऽकं दुःखं नैराश्यं परमं सुखं व्यवहारेपि सुखेन निद्रानंदप्रदत्वात् 'निराशः सुखी पिंगलावत्' इति सांख्यप्रवचनात् । निराशस्यापि परिग्रहो दुःखायेति कुरराच्छिक्षितमाहैकेन प्रियतमपरिग्रहोऽकाय दुःखाय भवति तं जानातीति तज्ज्ञः आतोनुपसर्गे क इति कः तस्य ज्ञ इति षष्ठीसमासो वा इगुपधज्ञेति कप्रत्ययः एवंविद्वानस्वोपि अकिंचनस्त्यक्तपरिग्रह इति यावत् न तु दरिद्रः अनंतसुखायते ॥ २६ ॥ तदाह शूरः सामिषं कुररं हंति अतः सामिषादन्यो व्यामिषः आमिषरहितः स सुखी परिग्रहाभावात् ईदृशस्यापि मानापमानचिंताराहित्येन परमसुखत्वं बालाच्छिक्षितमाहैकेन मानः सत्कारः अवमानस्तिरस्कारो गृहपरिवाराशनादिचिंता ताभिरूनः स्वेनात्मना क्रीडा यस्य स्वस्मिन्नात्मनि रतिः प्रीतिर्यस्य स सुखी बालवदित्यग्रिमेण संबंधः ॥ २७ ॥ हि यस्माज्जडोनुद्यमोऽज्ञो विमुग्ध एवंभूतोर्भो बाल आत्मानंदश्चापरः प्रकृतिगुणानतिक्रम्येश्वरभावं गच्छतीति गुणातिगश्चात्मानंद एतौ द्वौ चिंतया मुक्तत्वादात्मानंदौ परमानंदनिर्भरावित्यर्थः । एवंभूतावस्थालब्धयेभ्यासः कर्तव्यः स तु बहूनां द्वयोर्वा मध्ये न सिध्यति 'बहुभिर्योगे विरोधो रागादिभिः कुमारीशंखवत् द्वाभ्यामपि तथैव' इति सूत्राभ्यां कपिलमुनिना प्रतिपादितं कुमारीकंकणाच्छिक्षितमाह काचिद्धि किल कुमारी बंधुषु क्वापि यातेषु स्ववरणाय गृहागतानामभ्यव-

भंक्त्वैकैकं महारावान्रणंतौ द्वौ कुमार्यपि ॥ २८ ॥
पाण्योर्धृत्वैकैकशंखं रहःकृत्येलभत्सुखं ।
कलिर्भूम्नि द्वयोर्वार्ता ह्येकस्तच्छंखवच्चरेत् ॥ २९ ॥
एकचार्यप्रमत्तोल्पवाग्गुहास्थोगृहो मुनिः ।
एकोहिवद्गत्यलक्ष्यो गृहारंभोऽफ़्रुवात्मनः ॥ ३० ॥
विफलोकाय सर्पोन्यकृतधाम्न्येधते सुखं ।

ह्यारार्थं रहसि शालीनवहनत् तदा तत्प्रकोष्ठस्थाः शंखवलया महाशब्दं चक्रुस्तदा सा दरिद्रताद्योतकं तज्जुगुप्सितं मत्वा व्रीडिता सती स्वप्रकोष्ठात् क्रमेणैकैकं शंखान् शंखवलयान् कंकणानीति यावत् कथंभूतान् महारावान् महाशब्दान् भंक्त्वा करादपसार्य पृथक्कृत्येति यावत् द्वौ द्वावरक्षत् रणंतौ शब्दं कुर्वंतौ शिंजितौ तावपि भंक्त्वेति पूर्वेण संबंधः एवं कुमारी ॥ २८ ॥ पाण्योः स्वकरयोः सौभाग्यत्वादेकैकं शंखं धृत्वावशेष्य शाल्यवहननरूपे रहःकृत्ये सुखमलभत शब्दाभावात् ततः किं शिक्षितमित्यत आह हि यतः भूम्नि बहुत्वे कलिरेकत्र द्वयोर्योगेऽशनादिवार्ता तस्मात्तच्छंखवदेकाकी तपश्चरेत् ॥ २९ ॥ ईदृशो निःसंगोपि निर्विघ्नार्थमनियतनिकेतो भवेदिति सर्पाच्छिक्षितमाह एकाकी चरतीत्येकचारी सावधानमितवाक् गुहावासी अतोऽगृहोऽनियतगेहः एकोऽसहायः गत्याचारेणालक्ष्यो मुनिरहिवत् अध्रुवदेहस्य गृहारंभो निष्फलो दुःखाय च भवति सर्पस्त्वन्यकृतगेहे सुखं यथा तथा वर्धते 'अनारंभपि परगृहे सुखी सर्पवत्' इति कापिलानुशासनात् ॥ ३० ॥ एकांतस्थोपि जितश्वासासनश्चेदप्रमत्ततयैकाग्र्यं लभेतेति शरकाराच्छिक्षितमाह द्वाभ्यां वैराग्यपूर्वकमभ्यासेन जितः श्वास आसनं च येन तेन योगिना द्वैताऽस्फूर्तिलक्षणसमाधिसिद्ध्यर्थं दोषदृष्टिजिहासाभोग्याऽदीनतारूपैर्हेतुस्वरूपकार्यैः परिचितेनैहिकामुष्मिक-

जितश्वासासनेनेशे वैराग्याभ्यासबद्धहृत् ॥ ३१ ॥
संयुक्तं वासनां मुक्त्वा सत्ववृत्त्यैत्यनिंधनम् ।
निर्वाणं वेत्त्यतो नांतर्बहिःस्थं मुनिरात्मदृक् ॥ ३२ ॥
यथेष्वितात्मेषुकृन्नो वेदेनं यांतमग्रतः ।

विषयवैराग्येण विक्षेपाभावकारणेन लक्ष्ये ध्रियमाणचित्तस्थिरीकरणेनाभ्यासेन च बद्धं वशीकृतं पंचमभूमिकाप्राप्तमिव तच्च तत् हृदंतःकरणं च शरस्थानीयं ॥ ३१ ॥ ईशे प्रत्यगभिन्नपरब्रह्मणि लक्ष्यस्थानीये संयुक्तं सत् धनुःस्थानीयप्रणवयोगेन सम्यक्सावधानतया प्रयुक्तं अयमर्थः ऐकाग्र्यं हि ध्यानस्य प्रधानसाधनं 'यत्रैकाग्रता तत्राविशेषात्' इति न्यायात् तच्चासनसिद्ध्या सिध्येत् 'आसीनः संभवात्' इति न्यायात्पूर्वमेवासनजयो विधेयः आसनजये श्वासजयः श्वासजये श्वासाधीनं मनो निश्चलं भवति तच्च वैराग्येणाविक्षिप्यमाणं अभ्यासयोगेन च बद्धं लक्ष्ये स्थिरीकृतं सुषुप्ताविव सर्वथा न लीयते लयविक्षेपात्मकमपि तन्मनः परमानंद ईश्वरे संयुक्तं लब्धास्पदं सत् कर्मवासनां मुक्त्वा लयविक्षेपकारणीभूततमोरजोगुणोपमर्देन जातया सत्ववृत्त्योपशमात्मकयानिंधनं गुणास्तत्कार्यं च तद्रहितं निर्वाणमवृत्तिकं ध्येयाकारेणावस्थानं योगमुपैति 'योगश्चित्तवृत्तिनिरोधः' 'तदा द्रष्टुः स्वरूपेवस्थानम्' इति पातंजलात्। अन्यच्च 'मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः। यासंप्रज्ञातनामासौ समाधिरभिधीयत' इति। अतो द्वैतस्फूर्त्यभावादंतर्बहिःस्थं किमपि न वेद न जानाति कुतः आत्मदृक् ॥ ३२ ॥ क इव यथेषुकृत् इष्वितात्मा तस्य ऋजूकरणे दत्तचित्तः भेरीवेषैरग्रतो यांतमिनं नृपं न वेद वेत्ति विदो लटो वेति णलादेशः तद्वद्वयमित्यर्थः। 'इषुकारवन्नैकचित्तस्य समाधिहानिः' इति सांख्यात् अस्योपासकस्यात्र प्रत्यगभिन्नब्रह्मसाक्षात्कारासंभवे देहपातेपि विशेषः स्मर्यते 'तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनु-

प्रेम्णाप्यचलहृद्ध्यानाद्विष्णोः सारूप्यमेति ना ॥ ३३ ॥
प्राग्रूपमुत्सृजन्पेशस्कृद्ध्यानात्कीटवद्द्रुतं ।
यथोर्णनाभिस्ततोर्णाविहार्यंतेत्ति तां तथा ॥ ३४ ॥
प्राक्स्वमायासृष्टमेकः संहृत्याभूत्क्षयेद्वयः ।
शक्त्याखिलाश्रयः सर्वेट् कालेनात्मानुभावतः ॥ ३५ ॥

स्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ' इति न्यायात् एवं ध्याननिष्ठस्य प्रत्यगभिन्नपरब्रह्मसारूप्यं न चित्रमिति कीटाच्छिक्षितमाह प्रेम्णापि अपिशब्दात्स्नेहेन द्वेषेण भयेन वा विष्णोर्व्यापकस्य न परिच्छिन्नस्य अचलहृदा यद्ध्यानं विजातीयप्रत्ययनिरासेन सजातीयप्रत्ययप्रवाहीकरणरूपं निदिध्यासनं तस्मान्मिथ्यातादात्म्याध्यासेन स्वीकृतं प्राग्रूपमनुभवात्पूर्वं विद्यमानं कर्तृत्वादिलक्षणं मायामयं रूपमुत्सृजन्ना पुरुषः द्रुतं प्रतिबंधाभावेस्मिन्नेव जन्मनि प्रतिबंधे च सति जन्मांतरे वा विष्णोः सारूप्यमेति ॥ ३३ ॥ मुक्तो भवति एतच्च व्यासेन सूत्रितं 'ऐहिकमप्यप्रस्तुतप्रतिबंधे तद्दर्शनात् ' प्रस्तुतप्रतिबंधाभावे यस्मिन्नेव जन्मन्युपदेशो भ्यासश्च तस्मिन्नेव जन्मनि ज्ञानान्मोक्षोन्यथा जन्मांतरे कुतः 'गर्भ एवैतच्छयानो वामदेव एवमुवाच' इति वामदेवे तद्दर्शनादिति सूत्रार्थः अत्र निदर्शनं पेशस्कृद्ध्यानात् कीटवत् भयेन भ्रमरविशेषस्य पेशस्कृतो ध्यानेनैव सारूप्यं गतः कुड्यां नीडे प्रवेशितकीट इवेति चित्रम् जीवस्य तु 'ब्रह्मैव सन्ब्रह्माप्येति' इति श्रुतेः ब्रह्मरूपप्राप्तिर्न चित्रा। ईशस्यैकत्वज्ञाने ऊर्णनाभेः शिक्षितमाह सामग्रीनिरपेक्ष ऊर्णनाभिर्नाभेरुद्गतायां मुखेन संततायां प्रसारितायां विहरतीति तथा विहारांते तामूर्णामत्ति यथा तथा ॥ ३४ ॥ प्राक् सृष्ट्यादौ एकः कारकनिरपेक्ष ईशः ईक्षणवशादुपादानकारणभूतया मायया सृष्टं जगत्क्षये स्वात्मनि कालशक्त्योपसंहृत्याद्वयोभूत् अधिष्ठानत्वेनाखिलाधारः सर्वेश्वरः कालेनात्मानुभावतः ॥३५॥ गुणसाम्यं इताः गताः

साम्येतसत्वादिशक्तिः प्रधानपुरुषेडजः ।
व्युपाधिः परमानंदो मोक्षाख्यः सपरावरः ॥ ३६ ॥
गुणात्मिकां स्वमायां स क्षोभयन्स्वानुभावतः ।
तया सृजति सूत्रं सा त्रिगुणा शक्तिरासृजत् ॥ ३७ ॥
विश्वं यस्मिन्प्रोतमेतद्येन संसरते पुमान् ।
देहात्स्तो बोधवैराग्ये पारक्यात्सोद्भवक्षयात् ॥ ३८ ॥
आत्मेष्टभृत्सृष्टबीजः प्रियेच्छुर्नश्यति द्रुवत् ।

सत्वादिशक्तयो यस्मात् प्रधानं प्रकृतिः पुरुषः जीवः तयोरीट् ईशोत एवाजः व्युपाधिर्निरुपाधिकोत एव परमानंदः मोक्षाख्यः कोसौ ब्रह्मा न सपरावरः परे ब्रह्मादयोवरे च जीवास्तैः सहितः सपरावरः स्वात्मन्युपसंहृताखिलत्वात्परमेश्वरो मोक्षाख्य आस्ते ॥ ३६ ॥ स पुनः स्वानुभावतः गुणात्मिकां स्वमायां क्षोभयन् तया मायया जीवसंसारहेतुभूतं सूत्रं क्रियाशक्तिप्रधानं महत्तत्वं सृजति यत्सूत्रं सा त्रिगुणा शक्तिरहंकारद्वारेण विश्वमसृजत् ॥ ३७ ॥ यस्मिन्सूत्रे कारणभूते समष्टिरूपे एतद्विश्वं प्रोतं ग्रथितं 'वायुर्वै गौतम तत्सूत्रं वायुना गौतम सूत्रेण चायं लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि' इति श्रुतेः येन वाय्वात्मप्राणरूपेण पुमान्जीवः संसरते। देहोपि गुरुरित्याह पारक्याच्छ्वसृगालादिभक्ष्याद्बोधो विवेकः मातापितृरक्तरेतोरूपमलद्वयोद्भवश्च क्षयो मरणं च ताभ्यां सहितात् न हि मातापितृमलद्वयरूपनश्वरदेहस्य निरंतरधारणादन्यदधिकं जुगुप्सितं वैराग्यकारणमुदाहर्तुं शक्यते अत एव विष्णुपुराणे पठ्यते 'स्वदेहाशुचिगंधेन न विरज्येत यः पुमान् ॥ विरागकारणं तस्य किमन्यदुपदिश्यत' इति ॥ ३८ ॥ आत्मानं इष्टान् स्त्रीपुत्रादींश्च बिभर्ति पुष्णातीति तथोक्तः सृष्टं देहांतरबीजं कर्म येन स प्रियेच्छुः सुखाभिलाषी द्रुवद्वृक्ष इव नश्यति

गावः स्वार्थे सपत्नीवत्तं लुनंति हि दुर्लभम् ॥ ३९ ॥
मत्वा नृजन्मात्तवित्क्ष्मां चरे मुक्तोनहंकृतिः ।
तच्छ्रुत्वा समचित्तोभून्मुक्तसंगो यदुद्रुतम् ॥ ४० ॥
कष्टसंसारादिहेतुप्राणार्थेहापनुत्तये ।

म्रियते वृक्षो हि वृक्षांतरबीजं सृष्ट्वा शुष्यति किंच गाव इंद्रियाणि स्वविषयार्थे तं लुनंति त्रोटयंति बह्व्यः सपत्न्यः पुरुषमिव तथापि हि यस्मादीदृशमपि नृजन्म ज्ञानप्रदत्वादुत्तमं मत्वोक्तप्रकारेणैभ्यो गुरुभ्य आत्तविल्लुब्धज्ञानोतएव मुक्तसंगोनहंकृतिश्च क्ष्मां प्रारब्धभोगाय चर इति लोकोक्त्या आदेशः 'तस्य तावदेव चिरं यावन्न विमोक्ष्येथ संपत्स्य' इति श्रुतेः । ज्ञानेनाज्ञाने तत्कार्ये च विनष्टे यावत्प्रारब्धं देहस्तिष्ठति उक्तं च सूत्रकारेण 'भोगेन त्वितरे क्षपयित्वा संपद्यत' इति। यदुस्तच्छ्रुत्वा मुक्तसंगः सन् द्रुतं समचित्तोभूत् अधिकार्युपदेष्टृप्रभावात् शत्रुमित्रोदासीनस्वपरभावरहितोभूत् यद्वा समे सर्वसमे श्रीदत्तेऽयं तारकः श्रीगुरुदत्त इति चित्तं यद्वा सममविक्रियं उक्तं याज्ञवल्क्येन 'यः कंटकैर्वितुदति चंदनैर्यश्च लिंपति। अक्रुद्धो परितुष्टश्च समस्तस्य च तस्य च' इति। अयं गुरोः प्रभावः श्रुतिश्च 'आश्चर्यो वक्ता कुशलोस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः। न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिंत्यमानः। अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात्' इति एवमेतेन्वयव्यतिरेकाभ्यामात्मन्यसंभावनादिमात्रनिवर्तका बुद्ध्युपाश्रिता गुरवो नैते परमार्थोपदेशका इति ज्ञेयं 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः ॥ ३९ ॥ ४० ॥ अथ संक्षेपतः प्रल्हादानुग्रहो वक्ष्यते चतुर्भिः अलब्धात्मज्ञानो भागवतः प्रल्हादः पर्यटन् कदाचिद्दैवयोगेन वैराग्यसंतोषयुक्तं प्राणार्थचिंतारहितमकुतोभयं कविमवधूतं दृष्ट्वा तमभिवाद्य सर्वसंसारधर्मनिर्मुक्तत्वमकुतोभयत्वं प्राणार्थचिंताराहित्यं

वैराग्यतोषदमधुकृन्महाहिसुशिक्षितम् ॥ ४१ ॥
प्रन्हादायाप्यात्मतत्त्वं प्राहेदं भगवान् परं ।
स्वरूपं सुखमीहोपरतिस्तनुरशाश्वतान् ॥ ४२ ॥
दृष्ट्वा भोगान् संविशन्सन् स्वपेन्नेतः परं हितं ।
हुनेद्विकल्पं चित्तौ तां मनस्यर्थभ्रमे तु तत् ॥ ४३ ॥

च तव कथमिति पृच्छति स्म तं चाधिकारिणं ज्ञात्वा परमकारुणिकः सर्वज्ञो भगवान् श्रीदत्तः प्राह किमाह तदुच्यते कष्टरूपो यः संसारस्तस्यादिहेतोर्निदानभूतायाः प्राणस्यार्थस्य चेहाया अपनुत्यै नाशाय वैराग्यदं महाहेरजगराच्छिक्षितं संतोषदं मधुकृतः शिक्षितं ॥ ४१ ॥ परमात्मतत्त्वमिदं प्रन्हादायापि प्राह स्वस्यात्मनो रूपं सुखं न दुःखमविद्याप्रतीतं तस्यागंतुकत्वादूव्याप्त्यभावात् अत्रायं प्रयोगः दुःखमात्मनो रूपं न भवति यत्र यत्रात्मा तत्र तत्र दुःखमिति साहचर्यनियमाभावात् समाधिनिद्रादौ साक्षित्वेनात्मनि विद्यमानेपि दुःखानुपलब्धेस्तप्तजलौष्ण्यवत्प्रतीतिमात्रमेव तर्हि तत्सुखं रूपमिति किं न प्रकाशते तत्राह ईहा सर्वक्रियेच्छा तस्या उपरतिर्निवृत्तिः तनोतीति तनुः सर्वक्रियेहानिवृत्तौ स्वत एव प्रकाशत इति भावः अतोऽशाश्वतान् शश्वत्सिद्धः शाश्वतः आत्मा 'अजो नित्यः शाश्वत'इति श्रुतेः। शैषिकोऽण्प्रत्ययः कालाट्ठञिति ठञापवादेपि येषां च विरोधः शाश्वतिक इति सूत्रकारप्रयोगवशात्साधुः तदन्ये अनात्मभूता आद्यंतवंतस्तेऽशाश्वताः ॥४२॥ तान्पारतंत्र्यादिदोषदुष्टान्सातिशयान् भोगान्तत्त्वतो दृष्ट्वा दैवयोगेनोपलब्धान्संविशन्सन्भुंजानोपि स्वपेन्निरुद्यमो भवेदिति भावः इतः परं महद्धितं परमानंदकारणं न एवंभूतस्य स्वरूपानंदप्राप्त्युपायमाह विकल्पं चित्तौ भेदग्राहकमनोवृत्तौ हुनेत् तां चित्तिमर्थरूपो भ्रमो यस्य तस्मिन् मनसि हुनेत् ॥ ४३ ॥ तत्तु मनो वैकारिके-

वैकारिके तं मायायां तां स्वस्मिन्विरमेत्ततः ।
इत्युक्त्वा विररामाजः प्रल्हादोऽप्यभवत्तथा ॥ ४४ ॥
देवोऽर्जुनायापि योगं प्राहाष्टांगं निवृत्तये ।

हंकारे हुनेत् तमहंकारं महत्तत्वसहितं मायायां प्रकृतौ तां च स्वस्मिन्सर्वकारणकारणे सर्वविलापावधिभूते हुनेद्विलापयेत् ततोऽशेषविलापानंतरं लयविक्षेपाद्यभावात्स्वरूप एव विरतः शांतो भवेत् श्रुतिश्च काठके 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि' वाचं मनसि नियच्छेत् लिंगव्यत्ययो दैर्घ्यं च छांदसं अत्र सर्वेंद्रियतदर्थग्रहणोपलक्षणे वाक्शब्दः 'इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन' इति श्रुतेरुपक्रमात् अन्यत्स्पष्टं अत्र तु विकल्पचित्तिशब्दाभ्यां इंद्रियतदर्थग्रहणं उत्तरोत्तरमांतरत्वसूक्ष्मत्वव्यापकत्वप्रत्यक्त्वानामिंद्रियादिपुरुषांतानामेकैकेषां ज्ञात्वा विकल्पाद्युपसंहारक्रमेण स्वशब्दबोधितपुरुषाधिगमः कर्तव्य इति भावः निषेधावधित्वात् 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति श्रुतेः इति पूर्वोक्तविलापनमतद्व्यावृत्तिरूपमुक्त्वाजः श्रीदत्तो विरराम प्रवचनादिति शेषः व्याङ्परिभ्यो रम इति परस्मैपदं प्रल्हादोपि तच्छ्रुत्वा मत्वा ध्यात्वा च तथा तेन प्रकारेणैव विररामेदमेव स्वानुभवस्योत्तरं 'अवचनेनैव प्रोवाच स ह तूष्णीं बभूव' इत्यादिश्रुतेर्ज्ञातृत्वस्य दुष्टत्वाच्च उक्तं च तलवकारैः 'अन्यदेव तद्विदितादथो अविदितादधि' 'अविज्ञातं विजानतां विज्ञातमविजानतां' 'प्रतिबोधविदितं मतममृतत्वं हि विंदते' इत्यादि विजानतां विशेषेण जानीम इति वदतामविज्ञातमज्ञातप्रायमविषयत्वादिति भावः ॥४४॥ अथ कार्तवीर्यानुग्रहं चाह देव इत्यादि यावदध्यायसमाप्ति देवो द्योतनात्मकः स्वयंप्रकाशः श्रीदत्तः 'यस्य भासा सर्वमिदं विभाति' इति श्रुतेः 'यदादित्यगतं तेज' इति स्मृतेश्च । अर्जुनायापि संसारनिवृत्तयेऽष्टांगं योगं प्राह तत्राहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा

**सद्वाच्याविद्याशबलब्रह्मातोऽव्यक्तकं महत् ॥ ४९ ॥**
**ततस्ततोऽहंकारोस्मात्पंचतन्मात्रखाद्यतः ।**

इति पंच यमाः तपःसंतोषशौचस्वाध्यायेश्वरप्रणिधानानि पंच नियमा इति शेषः दश दशेत्यन्ये ते च ' अहिंसासत्यमस्तेयं ब्रह्मचर्यं दयार्जवं । क्षमा धृतिर्मिताहारः शौचं चैते यमा दश । तपः संतोष आस्तिक्यं सिद्धांतश्रवणं तथा । नियमाः पूजनं दानं ह्रीर्मतिश्च जपो व्रतम्' इति । एषां लक्षणानि सूतसंहितायां योगशास्त्रे चोक्तानि विस्तरभिया नेहोच्यंते । यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टांगानि कैश्चिद्यमानां नियमानां च स्वभावतो विधानादासनादिः षडंगो योग उक्तः कैश्चित्समाधिं फलं मत्वा सप्तांगो योग उक्तः भगवांस्त्विह सविकल्पनिर्विकल्पभेदेन समाधिं द्विविधं मत्वांगेष्वेकं समादायाष्टांगं योगमाह निवृत्तये इत्यनेनाध्यारोपस्यापवादेन निवृत्तय इति ज्ञाप्यते कोसावध्यारोप इत्यत आह सदिति 'सदेव सोम्येदमग्र आसीत्' इति श्रुतेः अस्तीति सत् आत्मा श्रुतेरात्मशब्दसच्छब्दौ पर्यायेण मतौ अतएव सदेव सौम्य इत्यत्र स्थाने बव्हृचा 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' इति पठंति । त्रिविधपरिच्छेदशून्य आत्मा सच्छब्दवाच्यः अततीत्यात्मा तदेव ब्रह्म बृह बृहि वृद्धाविति धातोरर्थानुगमान्नित्यशुद्धादिलक्षणं निरतिशयरूपं पूर्वसृष्टावनुष्ठितानि सर्वप्राणिकर्माणि पूर्वमपक्वानि प्रलयकाले मायाविशिष्टे ब्रह्मणि स्थित्वा शनैः पच्यंते तान्यविद्याशब्देनोच्यंते तद्वशादविद्याशबलमुच्यते पक्वकर्मभोगदानायाहं स्रक्ष्यामीतीच्छा जायते स कामः । 'कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्' इति श्रुतेः अत एवंभूतादभिन्ननिमित्तोपादानादव्यक्तं माया तस्या महत्तत्त्वं ॥ ४९ ॥ तस्मादहंकारस्तस्मात्पंचतन्मात्रसहितं च तत्खादि चाकाशादिभूतपंचकं जायते ननु 'आत्मन आकाशः संभूत' इत्यात्मत एवाकाशोद्भवः श्रूयते इति चेज्जनिकर्तुः प्रकृति-

जगत्सकार्यविकृतभूतान्युर्वात्मवर्ष्म तत् ॥ ४६ ॥
जागृतिर्गोभिरर्थाप्तिर्विश्वस्तदभिमानवान् ।
सकार्यशुद्धभूतानि लैंगात्मात्मा स भौतिकः ॥ ४७ ॥
हिरण्यगर्भः स्वप्नः स्यात्करणोपरमेर्थयुक् ।
प्राक्संस्कारोत्थानुभूतिस्तैजसोत्राभिमानवान् ॥ ४८ ॥

रिति पाणिनीयादाकाशो जनिकर्ता तस्य प्रकृतिरुपादानं ब्रह्मेति बोधयितुं पंचमी प्रयुक्ता । यद्यपि मायायाः प्रकृतित्वं 'मायां तु प्रकृतिं विद्यात्' इति श्रुतेः तथापि मायाया ब्रह्मशक्तित्वेन स्वातंत्र्याभावात् 'न तस्य कार्यं करणं च विद्यते' इति श्रुत्या शक्तित्वमपि तत्रैवाम्नातं अतोव्यक्तशब्दवाच्या मायांगीकृतेत्यविरोधः महदहंकारयोरव्यक्तेंतर्भूतयोरन्यत्र स्पष्टत्वार्थं नो स्पष्टमुक्तौ अतो न कोपि विरोधः। आरंभपरिणामवादतत्प्रत्याख्यानभूतसृष्टिविवेकादयो विस्तरभिया नेहोक्ताः । एतत्सर्वं शारीरकमीमांसाया द्वितीयाध्याये द्रष्टव्यं । अंत्यकार्यपर्यंतमात्मनः सर्वोपादानत्वादव्यक्तादिभावापन्नादात्मन इत्यूह्यं । आकाशादिष्वेकोत्तरशब्दादिगुणवृद्धिः । अतः खादेर्जगज्जातं । कार्यसहितानि विकृतानि पंचीकृतानि भूतानि उरु स्थूलं आत्मनो वर्ष्म देहः तच्छब्देन विराड्वाच्यः 'सर्वं विराडुच्यत' इति वचनात्॥ ४६॥ गोभिरिंद्रियैरर्थप्राप्तिर्जागृतिः तयोः स्थूलदेहजागृत्योरभिमानी जीवो विश्वनामकः कार्यसहितानि शुद्धभूतान्यपंचीकृतानि लैंगाख्यश्चासौ आत्मन आत्मा देहश्च सूक्ष्मापरपर्यायः स स्थूलवद्भौतिकः ॥ ४७ ॥ तस्याभेदप्रतिपादनाय हिरण्यगर्भ इत्युक्तः समष्टिलिंगात्मको हिरण्यगर्भः करणानामुपरमेऽर्थयुग्विषयसहिता प्राक्संस्कारोत्थानुभूतिः जागृत्संकारजन्यविषयानुभवः स्वप्न उच्यते अत्र लिंगदेहस्वप्नयोस्तैजसाख्यो विश्व एवाभिमानित्वेनोच्यते 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इति श्रुतेः ॥ ४८ ॥ द्वयोः स्थूलसूक्ष्मयोर्हेतुभूता आत्मावित् आत्माज्ञानं साभासा

**द्विहेत्वात्मवित्साभासाव्याकृतं ज्ञानसंहृतिः ।**
**धीहेत्वात्मस्थितिः सुप्तिर्मानी प्राज्ञोऽत्र तत्परम् ॥४९॥**
**शुद्धादिलक्ष्म चिन्मात्रं ब्रह्म वाक्येन लक्ष्यते ।**

आभाससहितं आभासो जीवस्तत्सहिताव्याकृतशब्देनोच्यते अस्पष्टदशापन्नत्वमव्याकृतत्वं 'तद्धेदं तर्ह्यव्याकृतमासीत्' इति श्रुतिश्च जगत उत्पत्तेः प्राक् आव्याकृतत्वं दर्शयति सत्याधिष्ठाने ब्रह्मण्यव्याकृतपंचमहाभूतादिकं जगदारोपितं तच्च तत्वज्ञानेन लीयमानत्वान्न सत् दृश्याकारेण परिणतत्वान्नासत् 'परस्परविरोधे हि न प्रकारांतरस्थितिः' इति न्यायान्नापि सदसत् आत्मस्वरूपान्न भिन्नं द्वैतापत्तेः नाभिन्नमात्मनो जडत्वापत्तेः परस्परविरोधान्नापि भिन्नाभिन्नं। न कुतश्चिन्निरवयवं जगदाकारेण परिणतत्वात्। न सावयवं निरवयवस्याकाशादेरपि निदानत्वात्। तस्मादनिर्वचनीयं। तदपि ब्रह्मात्मैकत्वज्ञानापनोद्यं । ज्ञानसंहृतिः सर्वप्रकारकज्ञानोपसंहारः धियो बुद्धेर्हेत्वात्मस्थितिः कारणात्मनावस्थानं सुषुप्तिर्निद्रा अनयोः कारणदेहसुप्त्योर्मानी प्राज्ञस्तैजस एव प्राज्ञत्वेन परिणमते अनुक्तोप्यनयोरभेदो वाच्यः 'जगत्कारणरूपेण प्राज्ञात्मानं विचिंतयेत्' इति वार्तिकोक्तेः तत्परं ब्रह्मेत्यग्रिमेणान्वेति ॥४९॥ अत्र बुद्धेः कारणात्मनावस्थानाद्वृत्त्यभावः अन्वयव्यतिरेकाभ्यां वृत्तयो बुद्धिनिष्ठा अपि तत्साक्षिण्युपचर्यंते यदुक्तं 'बुद्धेः प्रत्ययकारित्वं तत्साक्षिण्युपचर्यते। आत्मचैतन्यसंदीप्तां वृत्तिं धीः कुरुते यतः। चैतन्यालिंगिताः सर्वास्तप्तायोविस्फुलिंगवत्। धीवृत्तयो हि जायंते न काचिच्चिद्विवर्जिता' इति। ईदृशी बुद्धिर्वटबीजे वट इव कारणरूपेणात्रावस्थिता भवति अतः तेभ्यो जाग्रत्स्वप्नसुषुप्तेभ्यः परं शुद्धादिलक्षणं चिन्मात्रं ब्रह्म तत्त्वमसीति वाक्येन लक्ष्यते यदि लक्ष्यते तर्हि चिन्मात्रं सरूपि वाऽरूपि वा चतुष्पाद्ब्रह्मास्थूलमनण्वित्यादिप्रतिपादनादिति चेत् 'न स्थानतोपि परस्योभयलिंगं सर्वत्र हि' इति न्यायात्सरूपत्वारूपत्वयोर्विरुद्धत्त्वान्नीरूपमेव

यमादिवान्पीठवित्सद्गुरूक्त्यापूर्य चेडया ॥ ५० ॥

प्राणं कुंभितमन्यातो रेचयेदन्यमन्यथा ।
जिते प्राणेऽर्थतो गाश्च मनसोपाहरेन्मनः ॥ ५१ ॥

धारयेदात्मन्यचलं विक्षिप्तं शश्वदात्मनि ।
स्थिरीकुर्वञ्छ्रुतं ध्यायेच्छ्रुतियुक्त्या निरासतः ॥ ५२ ॥

तत्त्वतो ब्रह्मरूपं तूपासनार्थमनूद्यते न तात्पर्येण । ननु गुणक्रियाजात्यादिरहितं शुद्धबुद्धादिलक्षणं ब्रह्म कथं लक्ष्यत इति चेत्कल्पितत्वेनेति ज्ञेयं तथाहि 'विकल्पतदभावाभ्यामसंस्पृष्टात्मवस्तुनि । विकल्पितत्वलक्ष्यत्वसम्बन्धाद्यास्तु कल्पिता' इति विद्यारण्यैर्विस्पष्टमुक्तत्वात् । अथो योग उच्यते यमादियुक्तः पीठविज्जितासनः गुरूक्त्या गुरुवचनेन न तु स्वबुद्ध्यभ्यूहेन 'नैषा तर्केण मतिरापनेया' इति श्रुतेः इडया वामांगोपलक्षितया नाड्या ॥ ५० ॥ बहिःस्थं प्राणं वायुं शक्त्या आपूर्य पूरकं कृत्वा जालन्धरबन्धपूर्वकं पूरककालाच्चतुर्गुणकालावधि उदरे कुंभितं जपसहितं केवलं वाऽन्यातः पिंगलया इतराभ्योपि दृश्यन्त इति सार्वविभक्तिकस्तसिः शनैः कुम्भार्धकालेन रेचयेत् । उड्डियाणबन्धपूर्वकं शनैस्त्यजेन्न तु वेगतः हठात्कृते रेचके बलहानिप्रसंगात् । अन्यं प्राणायाममन्यथा पिंगलया गृहीत्वेडया त्यजेदिति पुनः पुनर्व्युत्क्रमः । एवं त्रिषवणं दश दश कुम्भकाभ्यासेन त्रिमासोर्ध्वं प्राणजयः । एवं जिते प्राणेऽर्थतो विषयेभ्यो गा इन्द्रियाणि मनसोपाहरेदेष प्रत्याहारः ॥ ५१ ॥ मनोप्यात्मनि चंचलं यथा न भवति तथा देशसम्बन्धेन धारयेत् 'देशबन्धश्चित्तस्य धारणा' इति पातंजलात् इयं धारणा यदि दैवाद्विक्षिप्तं मनो विषयान्तरगतं चेच्छश्वत्पुनःपुनरभ्यासेन स्थिरीकुर्वञ्छ्रुतं ध्यायेदिति सम्बन्धः ॥ ५२ ॥ श्रुत्यनुकूलया युक्त्या विजातिप्रत्ययस्य द्वैतसंस्कार-

## विजातिप्रत्ययस्यान्यप्रवाहीकरणं भजेत् ।

विशेषस्य निरासतो निरासपूर्वकं अन्यस्य गुरुमुखाच्छ्रुतस्यौपनिषदाद्वैतप्रत्यगभिन्नपरब्रह्मप्रत्ययस्य जातावेकवचनं प्रवाहीकरणं भजेत्तथा भावयेत् गुरूक्तं गुरुणा वेदान्तवाक्येन प्रतिपादितं इदं ब्रह्मरूपं वेदान्तैरवगन्तव्यं ब्रह्मपरा वेदान्ताः कुतः 'तत्तु समन्वयात्' इति न्यायात्। भिन्नप्रकरणपठितानान्तेषां कर्मादिप्रतिपादकतया कर्मशेषत्वासम्भवात्। एवं वेदान्ताधारेण गुरूक्तं तात्पर्यनिश्चयहेतुलिंगषट्केन परब्रह्मत्वसम्भवाच्च षड्लिंगैर्वित्तं विज्ञातं लिंगषट्कमाचार्यैर्निरूपितं 'उपक्रमोपसंहारावभ्यासोपूर्वता फलं। अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णय'इति सदेव सोम्येत्युपक्रम्य स आत्मा तत्त्वमसीत्युपसंहारस्तयोर्ब्रह्मविषयत्वेनैकरूप्यं लिंगं १ असकृत्तत्त्वमसीत्यभ्यासः २ मानान्तरानवगम्यत्वमपूर्वत्वं ३ एकविज्ञानेन सर्वविज्ञानं फलं ४ सृष्टिस्थितिप्रलयप्रवेशनियमनानि पंचार्थवादाः ५ मृदादिदृष्टान्त उपपत्तिश्चेति ६ एतैर्ब्रह्मपरत्वं। एवमेव पुराणेपि 'तत्रतावन्मुनिश्रेष्ठाः श्रवणं नाम केवलं। उपक्रमादिभिर्लिंगैः शक्तितात्पर्यनिर्णयः। सर्ववेदान्तवाक्यानामाचार्यमुखतः प्रियात्। वाक्यानुग्राहकन्यायशीलनं मननं भवेत्। निदिध्यासनमैकाग्र्यं श्रवणे मननेपि च। उत्पत्तावंतरंगं हि ज्ञानस्य श्रवणं बुधाः। तटस्थमन्यव्यावृत्त्या मननं चिन्तनं तथा। कर्तव्यतर्ककोटिस्थाः शान्तिदान्त्यादयस्तथा' इति। एतानि श्रवणमनननिदिध्यासनानि कहोळब्राह्मणे पाण्डित्यबाल्यमौनशब्दैर्व्यवहृत्य विहितानि बाल्यशब्देन बालवयःकामचारौ मननस्यात्यंतमनुपयुक्तौ प्रत्युत विरोधिनौ 'अनाविष्कुर्वन्नन्वयात्'इति न्यायात् रागद्वेषमानावमानादिग्रस्तत्वेन बहिष्प्रवृत्तिं परित्यज्य मंतुमशक्यत्वाद्भावशुद्धिरेव बाल्यं 'ब्राह्मणः पांडित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पांडित्यं च निर्विद्याथमुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मण' इति कहोळश्रुतेः। निर्विद्य निःशेषं संपाद्य पूर्वोक्तस्य पांडित्यस्य पुनर्मुनिशब्देन विवक्षितस्ततः 'सह-

गुरूक्तं षड्लिंगवित्तं तं भागत्यागलक्षितं ॥ ५३ ॥
तत्त्वमस्यादिवाक्यार्थं सोहमात्मेत्यभेदतः ।

कार्यंतरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्'इति न्यायात् तिष्ठासेदिति-पदानुवृत्त्या विधिर्लभ्यते अस्ति च ज्ञाननैरंतर्येण प्रयोजनं प्रबलभेदवासना-वासितस्य तन्निवृत्त्यर्थत्वात्तस्मान्निदिध्यासनात्मकं मौनं विधेयं ध्यानस्या-वृत्तिगुणकत्वाद्ब्रह्मसाक्षात्कारस्य दृष्टफलस्य संभवादवघातवत्फलसिद्धिपर्यंतं श्रवणाद्यावृत्तिः कार्या 'आवृत्तिरसकृदुपदेशात्' इति न्यायात् भगत्यागलक्षितं ॥५३॥ तत्त्वमस्यादिवाक्यार्थं सोहमस्मीत्यभेदतो ध्यायेत् । शब्दे मुख्या गौणी लक्षणेति त्रिधा वृत्तिः अत्रानिर्वाच्ये निर्गुणे आद्ययोरसंभवाल्लक्षणा ग्राह्यात्र वाक्ये पदयोः सामानाधिकरण्यं प्रतीयते एकाधारत्वात् पदार्थयोरपि विशेषणविशेष्यभावसंबंधश्च । 'मानांतरविरोधे तु मुख्यार्थस्य परिग्रहे । मुख्यार्थेनाविनाभूतप्रतीतिर्लक्षणोच्यत' इति पूर्वाचार्यैरुक्तत्वात्तत्त्वंपदयोः पदार्थयोर्वा लक्ष्यलक्षणसंबंधः लक्षणा च त्रिधा जहत्यजहती भागलक्षणा-चेति अत्र जहत्स्वार्थलक्षणया गंगायां घोष इतिवत्सर्वथा स्वार्थत्यागे उभ-योर्लक्ष्यैक्यात्स्वार्थहानिः अजहत्स्वार्थलक्षणया काकेभ्यो दधि रक्ष्यतामिति-वत्सर्वथा स्वार्थात्यागे उभयत्राच्यविरोधादैक्यासंभवः अतो भागलक्षणाभ्यु-पगंतव्या उक्तं पूर्वाचार्यैः 'तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा। सोय-मित्यादिवाक्यस्य पदयोरिव नापरा' इति अत्र माया मायाप्रतिबिंब ईश्वरो मायाधिष्ठानब्रह्म च तत्पदवाच्यार्थः सत्यज्ञानादिर्लक्ष्यार्थः अविद्याऽविद्या-प्रतिबिंबो जीवोऽविद्याधिष्ठानकूटस्थचैतन्यं च त्वंपदवाच्यार्थः साक्षिभूतं चैतन्यं लक्ष्यार्थः पदयोर्वाच्यार्थविरोधेपि लक्षणया लक्ष्यैक्यं निर्बाधं वस्तुतो ब्रह्मरूपस्य सतो जीवस्यांतःकरणोपाधिकृतो दुःखित्वादिसंसारधर्मोतएव वास्तवविरोधाभावात्सोहमात्मेत्यभेदत इत्युक्तं 'आत्मेति तूपगच्छंति ग्राह-यंति च'इति न्यायात् एवं मननिदिध्यासनाभ्यामात्मसाक्षात्कारः 'यन्मनसा

नादेयं नश्वरं चित्तं लये संबोधयेत्पुनः ॥ ५४ ॥

न मनुत' इति श्रुत्या फलव्याप्तिर्निषिद्धा 'मनसैवानुद्रष्टव्यम्'इति वृत्तिव्याप्ति-रपेक्षिता यदुक्तं 'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्ष्यते । स्वयं स्फुरणरूप-त्वादाभासो नोपयुज्यत' इति। अभेदत इत्यनेनाखंडैकरसत्वं विवक्षितं उक्तं च पूर्वाचार्यैः 'प्रत्यग्बोधो य आभाति सोद्वयानंदलक्षणः । अद्वयानंदरूपश्च प्रत्यग्बोधैकलक्षणः। इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत्। अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि। तदर्थस्य च पारोक्ष्यं यद्येवं किं ततः शृणु। पूर्णानंदैकरूपेण प्रत्यग्बोधोवतिष्ठत'इति। ननु प्रत्यग्ब्रह्मणोरन्योन्यतादात्म्यां-गीकारे नाखंडैकरसत्वं सिध्यति नीलमुत्पलमित्यत्र सत्यपि तादात्म्ये गुण-द्रव्यभेदस्यापि सद्भावात् एवमत्राप्यात्मत्वब्रह्मत्वकृतो भेदोपि प्रसज्येतेति चेन्न गुणद्रव्ययोः परस्परव्यभिचारेण वैषम्यात् नैल्यगुणो मेघादावपि वर्तमान उत्पलं व्यभिचरति उत्पलद्रव्यमपि शुक्लरक्तोत्पलयोर्वर्तमानत्वान्नैल्यगुणं व्यभि-चरति अतस्तत्रार्थभेदान्नाखंडार्थत्वं इह त्वात्मब्रह्मणोः परस्परव्यभिचारा-भावादेकार्थत्वे सत्यखंडार्थत्वसिद्धिः यदुक्तं विश्वरूपाचार्यैः 'नात्मता ब्रह्म-णोन्यत्र ब्रह्मता नात्मतोन्यतः। तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम्' इति। एवं तर्हि पर्यायत्वादात्मा ब्रह्मेति पदद्वयवैयर्थ्यमिति चेन्न प्रतिपाद्य-भेदाभावेपि मोहकल्पितयोरब्रह्मत्वपारोक्ष्ययोर्व्यावर्त्ययोर्भिन्नत्वात् उक्तमाचार्यैः 'आत्मापि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषितम् ॥ ब्रह्मापि संस्तथैवात्मा सद्वितीयतयेक्षित'इति। इदं च वाक्यज्ञानं पूर्वं परोक्षवद्भातमपि निदिध्यास-नेनापरोक्षमेव भवति स ब्रह्मसाक्षात्कार उच्यते तदप्यहं ब्रह्मास्मीत्याका-रकवृत्तिज्ञानं कतकरजोन्यायेनाऽतेऽद्वितीयब्रह्मणि पर्यवस्यति ध्याने प्रवृत्तस्य प्राप्तमप्यष्टमहासिद्ध्याद्यैश्वर्यं विघ्नायैवाऽतएव तन्नश्वरमैश्वर्यं नादेयं। ध्याने कदाचित्तमसा चित्तलये जाते तच्चित्तं सम्यग्बोधयेत् प्रबुद्धमपि तन्मनः पुनः ॥५४॥ विषयांतरे विक्षिप्तं चेद्विषयचिंतापरित्यागेन शमयेत्

विक्षिप्तं शमयेज्जह्यात्सकषायं समं वरं ।
नास्वादयेद्रसं तत्र निःसंगः प्रज्ञया भवेत् ॥ ५५ ॥

निवातदीपवच्चित्तो ब्रह्मात्मा शून्यवृत्तिकः ।
कृतकृत्यः क्षीणकर्मा भिन्नहृद्ग्रंथिसंशयः ॥ ५६ ॥

प्रारब्धभोक्तात्मारामो जीवन्मुक्तो भवेद्ध्रुवम् ।

सकषायं चेज्जह्यात् समं चेद्वरं श्रेष्ठं तथाविधमलीनमविक्षिप्तं ध्यानान्न चालयेत् तत्रांतरालिकं रसमपि तदधिकप्रापणीयदृष्ट्या तेन मनसांतरालिकं रसं नास्वादयेदेवं साक्षात्कारपर्यंतं ध्यानं एवानुतिष्ठन् प्रज्ञया निःसंगो भवेत् ॥ ५५ ॥ एवं वर्तमानो निवातदीपवच्चित्तो भवेत् अयमेव समाधिः यदुक्तं 'ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरं। निवातदीपवच्चित्तं समाधिरभिधीयत'इति स्मृतिश्च 'यथा दीप'इति पातंजले 'तदा द्रष्टुः स्वरूपेवस्थानम्'इति । ब्रह्मात्मा 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतेः ॥ दृढाभ्यासेन शून्यवृत्तिकः एवमात्मज्ञानेन कृतकृत्यः 'एतद्बुध्वा बुद्धि०'इति स्मृतेः क्षीणानि प्रारब्धातिरिक्तानि कर्माणि यस्य सः तत्त्वज्ञानोत्तरं नाकार्षं न करोमि न करिष्यामीत्यकर्तृब्रह्मनिश्चयान्न पापलेशः 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति न्यायात् तथैव वस्तुसामर्थ्यात्पापवत्पुण्येनापि न लिप्यते 'उभे ह्येवैष एते तरति' इति श्रुतेः 'इतरस्याप्येवमसंश्लेषः पाते तु' इति न्यायाच्च भिन्ना हृद्ग्रंथिसंशयाश्च यस्य 'भिद्यते हृदयग्रंथि०' श्रुतेः ॥ ५६ ॥ प्रारब्धभोक्तेत्यनेन ज्ञानसमकाल एव न देहनाशः 'तस्य तावदेव चिरं०'इति श्रुतेः । 'अनारब्धकार्ये एव तु पूर्वे तदवधेः' इति न्यायात् यथा स्वीकारपरित्यागयोः स्वातंत्र्येपि मुक्ते बाणे न स्वातंत्र्यं स तु क्षीणवेगः स्वयं पतति एवं तत्त्वज्ञस्यानारब्धकार्ये अपि एवं प्रारब्ध-

इत्युक्त्वोपररामेशः कार्तवीर्यस्तथाभजत् ॥ ५७ ॥

भोक्तापि सुखदुःखातीत एवात्मारामः 'आत्मक्रीड आत्मरति०' श्रुतेः ईदृशो जीवन्नेव मुक्तो भवेद्ध्रुवं निश्चितं देहपातोत्तरं न जन्मभाक् अस्यारब्धं स्वफले सुखदुःखे भोजयेत् तदर्थमेव प्रवृत्तत्वात् तेन न सुखी न दुःखी अतएव जीवन्मुक्तस्य तेन विद्यालोपाभावान्मुक्तिर्नियता 'भोगेन त्वितरे क्षपयित्वा संपद्यत' इति न्यायात् असति प्रतिबंधे ज्ञानमिहैव जन्मन्यन्यथा जन्मान्तरे 'ऐहिकमप्यप्रस्तुतप्रतिबंधे तद्दर्शनात्' इति न्यायात् अन्यच्चोच्यते 'आत्मा सेतुर्विधृतिः' इति श्रुतेर्लोके पारवान् जलस्य सेतुर्विधारकस्तं तीर्त्वा परं पारं प्रतिपद्यते तथा जगद्विधारकं ब्रह्म तीर्त्वा गंतव्येनान्येन केनचिद्भवितव्यमिति न शंकनीयं 'परमतः सेतून्मानसंभेदव्यपदेशेभ्य' इति न्यायात् न ब्रह्मणः सेतुत्वं मुख्यं अतएव मुक्तस्य देह एव प्राणलयः 'प्रतिषेधादिति चेन्न शारीरात्' इति न्यायात् यथा तप्ताश्मनि प्रक्षिप्तं जलं नान्यत्र गच्छति नापि तत्र दृश्यते किंतु स्वरूपेण लीयते तद्वत्तत्वविदः प्राणा देहादनुक्रामंतोपि न देहेवतिष्ठंते किंतु विलीयंतेऽतएव श्रुतिः 'न तस्य प्राणा उत्क्रामंति' इति तस्य करणानामपि परमात्मन्येव लयः 'तानि परे तथाह्याह' इति न्यायात् 'यथेमा नद्य' इति मुंडकश्रुतेः 'गताः कला' इति शास्त्रं तु तटस्थपुरुषप्रतीतिविषयं मूर्धन्यनाडीगमनं तूपासकानामेव तेषां ब्रह्मणा सह मुक्तिः शुक्लगत्यपेक्षापि ज्ञानिनो नापेक्षिता अन्यद्गंतव्याभावात् न च मुक्तस्य नाकवन्नूतनरूपसंपादनं अत उक्तं ब्रह्मात्मा 'संपद्याविर्भावः स्वेन शब्दात्' 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत' इति श्रुतेः स्वशब्देन विशेषितत्वात्पूर्वमपि विद्यत एव तस्मात्पुरातनं ब्रह्मैव मुक्तिरूपं ज्योतिरुपसंपद्येति वाक्यं तत्पदार्थशुद्धिविषयमुक्तं अतस्तदानीं भेदोऽस्तु अपरोक्षानुभवे मुक्तस्वरूपं ब्रह्माभिन्नं अविभागेन दृष्टत्वादिति न्यायात् एवं च सति मुक्तिर्नाम निजसिद्धब्रह्मस्वरूपमेव न तु स्वर्गवदागंतुकं 'एवं मुक्ति-

## इति श्रीगुरु० दत्तलीलाकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

फलानियम ' इति न्यायात् मुक्तः पुरुषः कदापि सर्वज्ञत्वसत्यसंकल्पत्वा-दिगुणयुक्तोहमिति न प्रतिपद्यते तत्प्रतिपत्तिहेतुभूताया अविद्याया विनाशितत्वात् अतएव शून्यवृत्तिकः अतोस्य युगपदेव सविशेषनिर्विशेषत्वेन कालभेदो न 'ब्राह्मेण जैमिनिरुपन्यासादिभ्य' इति न्यायात् इतिशब्दो विद्यासमाप्त्यर्थः 'नातः परमस्ति' इत्यादिवत् उक्त्वा ज्ञानमुपदिश्योपररामेति पूर्ववद्व्याख्येयः कार्तवीर्योऽर्जुनस्तथाभजद्यथोपदिष्टमनुष्ठितवान् ॥ ९७ ॥

इति श्रीगुरुचरिते दत्तलीलानामक० टीकायां च० ॥ ४ ॥

---

# पंचमोऽध्यायः

॥ नामधारक उवाच ॥

पुराणोक्तावतारास्तु श्रुता यद्भवतोच्यते ।
तन्मे शुश्रूषवे व्यासाच्छंस त्वन्याश्च तत्कथाः ॥ १ ॥

॥ सिद्ध उवाच ॥

साधु पृष्टं त्वया वत्स शृणुष्वाऽवहितोमलाः ।
तत्कथा याः पुनंत्यत्र श्रोतृन्वक्तारमप्यघात् ॥ २ ॥

श्रीगणेशाय नमः ॥ ॥ अथ पंचमोऽध्यायः ॥ ॥ पंचमे ब्राह्मणीभक्त्या दत्तः श्रीपादसंज्ञकः ॥ तत्पुत्रोऽभूच्छुभान्भ्रातॄन्विधाय विजहार च ॥ १ ॥ अद्वितीयात्मतत्त्वसाक्षात्कारः साधनचतुष्टयसंपन्नानां श्रवणादिक्रमेण जायते विमुखानां त्वधिकारानुरूपकर्मोपासनायोगेनांतःकरणशुद्धिचित्तैकाग्र्ये संपद्येते तत्संपत्तौ शमाद्या अर्थतः सिध्यंत्येवातो विमुखाय कर्मोपदेशस्तत्कर्म च गहनगतिकं 'कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ॥ अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः' इति स्मरणात् । अतः कर्मादितत्त्वज्ञानाभावे कृतं कर्म विकर्म भवति विकर्म च कर्म भवतीत्यादिविवेकपूर्वकं भगवत्प्रीत्यर्थं कर्मानुष्ठानात् सात्विकस्य भगवत्प्रसाद एव भवतीति ज्ञापनाय पंचमाऽध्याय आरभ्यते यदवतारद्वयं भवतोच्यते द्विवारमाविरासीत्स इत्यादिना तदवतारद्वयं ॥ १ ॥ अवहितः सावधानः सन् अमलाः पापनिवर्तकाः ॥ २ ॥ साधुत्राणेन दुष्टहननेन च वैषम्यनैर्घृण्ये स्यातामिति न शंकनीयं यथा चाहुः 'लालने ताडने मातुर्नी-

धर्मं गोप्तुं सतस्त्रातुं दुष्टान्हंतुं युगे युगे ।
लीलाधाम्नावतरति नाऽन्यत्किंचित्प्रयोजनम् ॥ ३ ॥
दीनान्हीनमतीन् ज्ञात्वा दुर्बलान्नॄन्स कच्चरे ।
आविरासीत्समुद्धर्तुं प्रेम्णा भक्तिविधित्सया ॥ ४ ॥
पीठापुरे पूर्वदेशे राजा नाम द्विजो वधूः ।
सुमतिस्तावुभौ नित्यं श्रीदत्तार्चनतत्परौ ॥ ५ ॥
एकदैत्यास्य वेश्मार्थिवेषेणान्नं स्म याचते ।
दत्तः श्राद्धेऽकृतेप्यस्मै श्राद्धाहेऽन्नं ददौ सती ॥ ६ ॥
तदा ज्ञात्वा स तद्भावं सर्वात्मा भगवान्विभुः ।
प्रीतः स्वरूपं साध्व्यै तत्करं धृत्वा व्यदर्शयत् ॥ ७ ॥
स्रक्कुंडीडमरूच्छूलशंखचक्रधरोब्रवीत् ।
व्याघ्रचर्मावृतस्त्र्यास्यो जटिलो भस्मभूषितः ॥ ८ ॥

कारुण्यं यथाऽर्भके । तद्वदेव महेशस्य नियंतुर्गुणदोषयोः' इति । 'वैषम्य-नैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति' इति न्यायात् अन्यात्किमपि प्रयोजनं न पूर्णकामत्वात् ॥ ३ ॥ दीनान्दरिद्रान्हीनमतीन्कृपणान्दुर्बलान्ब्रह्मचर्यादि-साधनविकलान् कच्चरे मलदूषिते कलौ ईदृशान्नॄन्ज्ञात्वा तान्समुद्धर्तुमलुस-विद्याशक्तित्वेनाप्रच्युतज्ञानबलवीर्यया शुद्धसत्वोर्जितसत्वमूर्त्याऽऽविरासीत् ॥४॥ राजा नाम ब्राह्मणस्तस्य वधूः शोभना मतिर्यस्याः सान्वर्थनामिका ॥ ५ ॥ अर्थिवेषेण याचकरूपेणास्य ब्राह्मणस्य वेश्म गृहमेत्यागत्य दत्तोन्नं याचते स्म सती सुमतिः श्राद्धाहे श्राद्धेऽकृतेपि श्रीदत्तायान्नं ददौ ॥ ६ ॥ तस्या भावं भक्तिं मातृबुद्ध्या तत्करं धृत्वा त्रिमूर्त्यात्मकं स्वरूपं व्यदर्शयत् ॥ ७ ॥ अधःकरयोः स्रक् माला कुंडी कमंडलुः मध्ययोर्डमरूच्छूलौ उर्ध्वयोः शंखचक्रे चैषां धारकः त्रीणि आस्यानि मुखानि यस्य सः

मातर्द्विजेष्वभुक्तेषु श्राद्धाहेऽन्नं त्वयार्पितं ।
हव्यकव्यादबुद्धया मे तत्तुष्टोस्मि वरं वद ॥ ९ ॥

॥ ब्राह्मण्युवाच ॥

धन्यास्मि सर्वे पितरोपि धन्या यद्यो भवान्योगिमनोविदूरः ।
भूत्वाद्य मे दृग्विषयोपि पित्र्यं स्वाद्वादददेन्नं किमुताधिकं सत् ॥
सृष्ट्यादिहेतो जगतोसि भक्तपुमर्थकल्पद्रुरतोर्पयाशु ।
मे सुप्रजस्त्वं जनसेवि मातरित्युक्तसंबोधनसिद्धिपूर्वं ॥ ११ ॥

एवं श्रुत्वात्रिवद्याचजां प्राह भूयात्तथैव ते ।
पुत्रस्ते भविता मादृक्तदुक्तिं मा तिरस्कुरु ॥ १२ ॥
इत्युक्त्वांऽतर्दधे दत्तः सापि वेश्मैत्य हर्षिता ।
पत्ये शशंस तत्सर्वमुभावपि ननंदतुः ॥ १३ ॥

॥ ८ ॥ भो मातः निमंत्रितेषु द्विजेषु दैवेषु पित्र्येषु च श्राद्धदिवसेऽद्याभुक्तेष्वपि हव्यकव्यादोयमिति बुद्धया श्राद्धात्पूर्वं श्राद्धान्नं यस्मान्मे मह्यमर्पितं दत्तं तत्तस्मात्परितुष्टोस्मि अभिप्रेतं वरं वद दुर्लभमपि दास्यामि ॥ ९ ॥ योगिमनसो विशेषेण दूरोपि भवान् मम दृग्गोचरोपि सन् पित्र्यमन्नं आददे स्वीकृतवान् ॥ १० ॥ भो जगत्सृष्ट्यादिकारणाशु शीघ्रं मातरित्युक्तं त्वया यत्संबोधनं तत्सिद्धिपूर्वं जनैः सेवनीयं सत्पुत्रत्वं मे मह्यं देहि त्वं मत्पुत्रो भवेति भावः अपादादाविति निषेधेऽपि मेआदेश आर्षः ॥ ११ ॥ अहमिव दृश्यत इति मादृक् मत्तुल्यः त्यदादिषु दृश इति कञ् मा तिरस्कुरु तद्वचनोल्लंघनं मा कुरु तस्य स्वतंत्रत्वात् ॥ १२ ॥ सा ब्राह्मणी शशंस कथया-

॥ ब्राह्मण्युवाच ॥

मयापराद्धमद्यान्नं दत्तं श्राद्धेऽकृतेप्यहो ।
दत्तात्रेयाय तन्नाथ क्षंतुमर्हस्यशेषतः ॥ १४ ॥

॥ विप्र उवाच ॥

पित्रर्थं भोजयित्वान्नैर्यैर्द्विजान्विष्णवेर्प्यते ।
कर्मभूत्स स्वयं तद्भुक्तत्कृतं सत्सुदुष्करं ॥ १५ ॥

रूपांतरेण मध्याह्ने दत्तोऽटत्यर्थिवत्स्वकान् ।
उद्धर्तुं भगवांस्तस्मात्तदार्च्यो नान्यथाप्यते ॥ १६ ॥

तस्माद्भद्रे कृतं भद्रं धन्ये नः पावितं कुलं ।
वरोपि दुर्लभो लब्धो लोकस्यापि हितं यतः ॥ १७ ॥

इत्युक्त्वा लौकिकं श्राद्धं शेषान्नेनाकरोद्द्विजः ।

मास ॥ १३ ॥ श्राद्धे अकृते ॥ १४ ॥ यैरन्नैः पित्रर्थं ब्राह्मणान्भोजयित्वा तद्रूपं कर्म विष्णवे समर्प्यते स विष्णुस्तानि चतुर्विधानि अन्नानि भुनक्तीति तद्भुक् अभूद्भुक्तवान् तत्कर्म सुतरां दुष्करमपि त्वया कृतं सतामपि सुदुष्करं वा ॥ १५ ॥ अन्यद्रूपं रूपान्तरं तेन अर्थिवद्याचकवत्स्वभक्तानुद्धर्तुमटति यस्मात्तस्मात्तदा मध्यान्हे भिक्षान्नदानेन भगवानर्च्यः पूजनीयोऽन्यथा भजनादिना तथा नाप्यते न प्राप्यते ॥ १६ ॥ यस्मादेवं तस्मात् यतो वरात् लोकस्याप्यनुग्रहरूपं हितं ॥ १७ ॥ ज्ञानिदृष्ट्या भगवत्प्रीत्यैव श्राद्धं सुसंपन्नं तथापि ज्ञानिदृष्टांतेनाज्ञः कर्म त्यजेत् ज्ञानिना कर्मणि कृतेऽज्ञोपि जनः करिष्यत्यतो लोकसंग्रहार्थं शेषान्नेन लौकिकं

साप्यथो गार्भिणी भूत्वा कालेऽसूताममुमप्यजं ॥ १८ ॥

मर्त्याकृतिं तदोद्वीक्ष्य तं दैवज्ञा जगुर्द्विज ।
ततपुण्यौघकल्पद्रुफलं लब्धं सुदुर्लभम् ॥ १९ ॥

अयं हि साक्षाद्भगवान्दत्तात्रेय इवार्चितः ।
अवतीर्णोऽत्र भक्त्यर्थमित्युक्त्वा ते मुदं ययुः ॥ २० ॥

श्रीपादः स्वंकितांघ्रित्वान्नाम्नोक्तः पितृलौल्यतः ।
स्वंगैर्ऋद्धिं पुपोषारं सौरांश्वाप्तेः शशीव सः ॥ २१ ॥

श्राद्धमकरोत् 'विष्णोर्निवेदितान्नेन यष्टव्यमिति तु स्थितिः' इति भागवतमतात् यद्यपि 'विष्णोर्निवेदितान्नेन न यजेद्देवतांतरम्' इति पूर्वेण विरोधस्तथापि- स्मार्तभागवतमतभेदेन व्यवस्था सापि ब्राह्मणी काले दशमे मासि अमुं वरदमसूत ॥ १८ ॥ मर्त्याकृतिं मनुष्यरूपानुकारिणं दैवज्ञा ज्योतिषिका ऊचुः जन्मकालीनग्रहानुमानेन न तु तत्त्वदृष्ट्या ततो विस्तृतो यः पूर्वपुण्यौघकल्पद्रुमस्तस्य सुदुर्लभं फलमिदं पुत्ररूपं त्वया लब्धं ॥ १९ ॥ अयं हि बालको लोकपूजितः साक्षाद्भगवान्दत्तात्रेय इव तव भक्त्यर्थं अवतीर्ण इवास्माभिर्लक्ष्यते इति शेषः । इत्युक्त्वा ते शोभनग्रहभावयोगावलोकनेन मुदं हर्षं ययुः ॥ २० ॥ शोभना अंका लक्षणान्यनयोः संजातानि स्वंकितौ तादृशौ अंघ्री पादौ यस्य तस्य भावस्तत्वं तस्माद्धेतोर्नाम्ना श्रीपाद इत्युक्तः श्रीशब्दस्य शोभासंपत्तिपद्मास्वभिधानात् पित्रोर्लौल्यतः प्रयत्नतः अरं शीघ्रं शोभनैरंगैर्वृद्धिं पुपोष क इव सूरस्येमे सौरास्ते च तेंऽशवः किरणाश्च तेषामाप्तेर्व्याप्तेश्चंद्र इव यदुक्तं 'सलिलमये शशिनि रवेर्दीधितयो मूर्छितास्तमो नैशं । क्षपयंति दर्पणोदरनिहिता इव मंदिरस्यांतः' इति । निशि भवं नैशं ॥ २१ ॥ जातकर्मादिभिः संस्कृतेन

संस्कृतेनोपनीतेन स्वयं त्र्यपि पाठिता ।
स्वोद्वाहार्थं समुद्युक्तः पितानेन निवारितः ॥ २२ ॥

मया प्रव्रजतोद्वाह्या योगश्रीरेव नापरा ।

कृतोपनयनेन त्रयोवयवा यस्याः सा त्रयी वेदत्रयी आचारो व्यवहारः प्रायश्चित्तं वा स्वयमेव शिष्यैः पाठिता ईश्वरावतारत्वात् स्वस्योद्वाहार्थं दारपरिणयार्थं समुद्युक्तः पितानेन नित्यविरक्तेन श्रीपादेन निवारितः ॥२२॥ ननु 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमं । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्' इति मनूक्तेः 'आचार्याय प्रियं धनमाहृत्य प्रजातंतुं मा व्यवच्छेत्सीः' इति श्रुत्यनुशासनात् 'जायमानो वै ब्राह्मणस्त्रिभि ऋणवा जायत' इति श्रुत्या स्वाध्यायाध्ययनेनानुरूपदाराहरणपूर्वकं यज्ञयागाद्यनुष्ठानेन पुत्रार्थमृतौ भार्योपगमनेन च देवर्षिपित्रर्णापाकरणश्रवणात्प्रजाप्रजातिप्रजननसामर्थ्यादनुत्पद्यमानेपि पुत्रे पुत्रकामेष्ट्या यजेतेति पुत्रकाम्यादिकर्मणा पुत्रोत्पत्तौ कर्तव्यप्रयत्नश्रवणात् 'नापुत्रस्य लोकोस्ति' इत्यपुत्रस्य लोकानातिश्रवणाच्च स्वोद्वाहोद्युक्तस्य पितुर्निवारणं किमर्थमित्यत आह प्रव्रजता सर्वं संन्यस्य गच्छता योगोध्यात्मयोगस्तप्राप्त्युपायांतरंगभूता श्रीः संपच्छ्रेयोरूपा सैवोद्वाह्या परिणेया लभ्येति यावत् तर्ह्यंतःकरणशुद्धिद्वारा तल्लब्धये कर्ममयी संपद्वरणीयेति चेन्नेत्याह नापरा प्रेयोरूपा बंधकत्वात् 'तयोः श्रेय आददानस्य साधु भवति हीयतेर्थाद्य उ प्रेयो वृणीत' इति श्रुतेः । यद्वा एकस्मिन्विज्ञाते सर्वं विदितं भवतीति प्रदर्शनाय ऋग्वेदादिरूपाऽपरा चित्तशुद्ध्यर्थमुक्ता सा मया नोद्वाह्या प्राप्तसाधनत्वात् अतएव श्रेयोरूपा ममैव मादृशाधिकारिण एव सुलभा यतोहं श्रीवल्लभः श्रियः प्रियः अयं भावः कर्मकांडोक्तविधिप्रतिषेधरूपाः श्रुतयो रागिणमधिकृत्य प्रवर्तंते नापरं अतएव रागतः प्राप्तानां व्यवायामिषमद्यसेवानां

मेमैव सुलभा सा तु यतः श्रीवल्लभोस्म्यहं ॥ २३ ॥

इत्युक्त्वा प्रव्रजंतं तं दृष्ट्वोभौ साश्रुलोचनौ ।
ऊचतुस्त्वयि याते क्व जीवावोब्जा इवांबुनि ॥ २४ ॥

त्वं साक्षाद्भगवान्विष्णुः पुत्रत्वेनाप्यतींद्रियः ।
प्राक्पुण्यैर्गोचरीभूतः कुतोकाब्धौ जहासि नौ ॥ २५ ॥

पंग्वंधार्भेक्षणान्नित्यं भवपाशविमोचनी ।
स्मृतिः प्रवयसोर्नौ ते हरे दूरतरा भवेत् ॥ २६ ॥

हुतशेषभक्षणविवाहपरिगृहीतदारसेवारूपा व्यवस्थितिर्नापूर्वेण न नियमेन वा विधीयते किं तु 'ऋतौ भार्यामुपेयात्' इत्यादिना नियमरूपेणाभ्यनुज्ञामात्रं क्रियते तत्पक्षेपि ऋत्वतिक्रमे 'ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ॥ घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः' १ इति भ्रूणहत्यादिस्मरणं तु तस्यां द्वेषादिनाऽरुच्या वा यो नोपेयात्तदर्थं न तु विरक्तस्य दोष एवं सर्वत्रापि यथायथमूह्यं अतएव वाजसनेयिनः 'एतमेव प्रव्राजिनो लोकमिच्छंतः प्रव्रजंत्येतद्ध स्म वै पूर्वे विद्वांसः प्रजां न कामयंते किं प्रजया करिष्यामो येषां नोयमात्माऽयं लोक' इति 'ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंति' इति ॥ २३ ॥ उभौ मातापितरौ जीवनहेतुभूते त्वयि याते क्व जीवावः अंबुनि यातेऽब्जा इव मरिष्यावः ॥ २४ ॥ अतींद्रियोपि पूर्वपुण्यप्रभावाद्दृग्विषयीभूतोपि सन्दुःखसमुद्रे नौ आवां कुतो जहासि ॥२५॥ एकोर्भो बालः पंगुरपरोंधः तद्दर्शनजन्यदुःखात्प्रवयसोर्वृद्धयोर्नौ आवयोर्मृत्युरूपभवपाशविमोचन्यपि ते स्मृतिर्दूरतरा भवेत् ॥ २६ ॥ इतीत्यादि

इति वाक्यं सकारुण्यं श्रुत्वारं भ्रातृमस्तके ।
सुखाकरं निजकरं तद्वात्सल्याद्दधौ हरिः ॥ २७ ॥
तदैव सहसा तौ तु स्वंगौ ज्ञौ च बभूवतुः ।
लीलाविहारिणीदृन्नो चित्रं भगवतीश्वरे ॥ २८ ॥
माताप्यदृष्टपूर्वं तद्रूपमाश्चर्यवत्तदा ।
दृष्ट्वा दत्तोदितं स्मृत्वा प्राह गद्गदया गिरा ॥ २९ ॥
माया दुरत्यया दैवी तव तन्मोहिता भृशम् ।
सत्वं रूपं न जानेतस्त्वयि मे पुत्रकल्पना ॥ ३० ॥

सिद्धो वदति अरं शीघ्रं सुखाकरं सुखदातृत्वात्सुखखनिरूपं हरिर्दुःखहरः श्रीपादः ॥ २७ ॥ तदैव हस्तस्पर्शनकाल एव तौ भ्रातरौ स्वंगौ शोभनान्यंगानि ययोस्तौ शोभनाभ्यां पादाभ्यां शोभनाभ्यां नेत्राभ्यां च युक्ताविति यावत् ज्ञौ ज्ञानसंपन्नौ च बभूवतुः लीलया नृरूपेण विहरतीति लीलाविहारी तस्मिन्भगवतीच्छामात्रेण जगदुत्पादके इदं न चित्रं आश्चर्यं ईश्वरत्वात् ॥ २८ ॥ एवमग्रजौ विधाय मात्रे स्वरूपं प्रदर्शितं तदा मातापि ज्ञानदृष्ट्याऽदृष्टपूर्वं स्वरूपस्यानन्यत्वेपि विक्षेपावरणरूपमायाशक्त्या राहुणार्क इवावृतत्वाददृष्टपूर्वत्वं सच्चिदानंदात्मकं तद्रूपमाश्चर्यवद्दृष्ट्वा दत्तेनोक्तं तदुक्तिं मा तिरस्कुर्वित्युक्तिं स्मृत्वा' गद्गदया गिरा प्राहाश्चर्यवन्मातेति वा योजना 'आश्चर्यो वक्ता०' श्रुतेः 'आश्चर्यवत्पश्यति' इति स्मृतेश्च ॥ २९ ॥ यस्मात्सत्वासत्वाभ्यामनिर्वचनीयत्वाद्दुरत्यया दुस्तरा दैवी अलौकिकी अत्यद्भुता तव परमेश्वरस्य त्रिगुणात्मिका मायाशक्तिर्या भृशमत्यर्थं तया मायया मोहिता संजातमोहा मोहो नाम मुह वैचित्य इति धातोरुपेक्षणीये चित्तवृत्त्यनुदयः अहं तव सत्वं यथातथ्यं रूपं न जानेऽतो हेतोस्त्वयि भगवति मे ममायं पुत्र इति कल्पनोदिता मृषेयं ॥ ३० ॥ यतो-

ब्रह्मांडलेखा यत्कुक्षौ स मत्कुक्षिज इत्यदः ।
जगद्विडंबनं दत्त माया मां नावृणोतु ते ॥ ३१ ॥

॥ श्रीपाद उवाच ॥

अदो रूपं त्वया दृष्टं नित्यं हृद्यवधारय ।
मायासिंधुं द्रुतं तीर्त्वा मत्सायुज्यं गमिष्यसि ॥ ३२ ॥
शतायुषौ सुतौ तेपि पितृशुश्रूषणोत्सुकौ ।
विद्याश्रीपुत्रपौत्राढ्यौ मातर्मंक्षु भविष्यतः ॥ ३३ ॥

संख्यातानां ब्रह्मांडानां लेखाः पंक्तयः सावकाशाः यत्कुक्षौ जठरे विद्यंते स त्वं मत्कुक्षिजो मदुदरोत्पन्न इति यददः जगति विडंबनमेव भो दत्त विक्षेपावरणशक्तिरूपा ते माया मां नावृणोतु असत्त्वावरणमभानावरणं च जन्ममरणादिरूपसंसारकारणं न विक्षेपः अपरोक्षानुभूतौ कंचित्कालं तस्मिन् विद्यमानेपि न संसारापत्तिः मंदांधकारे रज्ज्वज्ञानाद्रज्जुरेव सर्पोयमिति भाति तदा भयकंपादयो विक्षेपा अप्युत्पद्यंते दीपादिदर्शनेनायं न सर्पः किंतु रज्जुरेवेति तस्यां ज्ञातायामपि तदैव कंपादिर्न निवर्तते नापि तदुपशमाय पुरुषः प्रवर्तते स स्वयमेवोपशाम्यति तद्वद्विक्षेपोपीत्यत उक्तं माया मां नावृणोतु त इति ॥ ३१ ॥ भो मातर्यदधुना प्रदर्शितं ममादो रूपं त्वया दृष्टं वृत्तिव्याप्त्यानुभूतं तन्नित्यं मनननिदिध्यासनाभ्यां सत्वप्रधाने हृदि अवधारय शश्वच्चिंतय 'आवृत्तिरसकृदुपदेशात्' इति न्यायात् तेन मायारूपं समुद्रं प्रतिबंधापायाद्द्रुतं तीर्त्वा सच्चिदानंदस्य मम सायुज्यं गमिष्यसि ॥ ३२ ॥ अपि च तवेमौ पुत्रौ शतायुषौ भविष्यतः पित्रोर्युवयोः सेवायां तत्परौ विद्या पराऽपरा श्रीः संपत् पुत्रपौत्राः प्रसिद्धा एतैराढ्यौ युक्तौ लोकवंद्यौ च भविष्यत इति सर्वत्र संबध्यते ॥ ३३ ॥

स्तुतोपि भ्रातरौ प्राह प्रव्रजाम्यधुना सदा ।
संसेव्यौ पितरौ तौ हि गृहिसत्पुत्रदैवतम् ॥ ३४ ॥
इत्युक्त्वा त्रिःपरिक्रम्य प्रणम्य पितरौ स तु ।
जगाम तदनुज्ञातः काशीं च बदरीवनम् ॥ ३५ ॥
साधूनुद्धर्तुकामोथ गोकर्णं सज्जनाश्रयम् ।
ययौ यत्र गणेशेन शैवं लिंगं प्रतिष्ठितम् ॥ ३६ ॥

इति श्रीगुरुचरिते श्रीपादावतारो
नाम पंचमोध्यायः ॥ ५ ॥

इत्युक्तवंतं स्वानुजं श्रीपादं तौ भ्रातरावपि परमेश्वरबुद्ध्या स्तुतवंतौ ताभ्यां-स्तुतः स श्रीपादस्तौ भ्रातरावपि प्राहाधुनाहं प्रव्रजामि युवाभ्यां सदा पितरौ सम्यगकपटेन मुख्यया पुत्रवृत्त्या सेवितुं योग्यौ हि यस्मात्तौ पितरौ गृहिणः सत्पुत्रस्य दैवतं 'मातृदेवो भव पितृदेवो भव' इति श्रुत्यनुशासनाद् गृहिशब्दो ब्रह्मचारिसंन्यासिव्यावर्तकः ब्रह्मचारिणो गुर्वधीनत्वात्संन्यासिनो निर्ममत्वाच्च सच्छब्दः पुत्रस्य गुणावद्योतकः ॥ ३४ ॥ पितरौ पितामात्रे-त्येकशेषः त्रिः कृत्वा प्रदक्षिणीकृत्य तिष्ठद्गुवित्यव्ययीभावः प्रदक्षिणं संप-द्यमानं कृत्वेत्यभूततद्भावे च्विः ताभ्यां मातापितृभ्यामनुज्ञातः ॥ ३५ ॥ सज्जनाश्रयभूतं गोकर्णक्षेत्रं शिवलिंगं स्थापितं ॥ ३६ ॥ श्राद्धीयमन्नं श्राद्धा-त्पूर्वमन्यस्मै दीयते चेद्विकमैव बुभुक्षिताय गृहागताय ब्राह्मणायातिथयेन्नादा-नेपि विकमैव 'स इद्भोजोय' इति मंत्राभ्यामन्नदानश्रवणात् एवं स्थितेप्य-दानादानं वरमिति निर्धार्यातिथिः सर्वरक्षक इत्यनुस्मृत्य हव्यकव्यादोयं विष्णुरूपोतिथिरितीश्वरबुद्ध्यातिथयेन्नं दत्तवत्याः सत्वगुणोपेताया ब्राह्मण्याः श्राद्धफलादनंतफलं लब्धं एतेन न्यायेन कर्मादौ प्रवृत्तस्य बंधमोक्ष एव भवेदन्यथा कर्मणो गहना गतिरिति । श्रीगुरुचरिते श्रीपादाव० टीकायां पंचमः ॥ ५ ॥

# षष्ठोऽध्यायः

॥ नामधारक उवाच ॥

शैवं तत्र गणेशेन कुतो लिङ्गं प्रतिष्ठितं ।
सज्जनाश्रयमेतत्तु कथं श्रावय मे मुने ॥ १ ॥

॥ सिद्ध उवाच ॥

विष्णवाज्ञया गणेशेन रावणात्तं प्रतिष्ठितं ।
शैवं लिङ्गं ततोत्रासन्देवाः संतोप्यदः शृणु ॥ २ ॥

भजंतीं मृन्मयं लिङ्गं कैलासाप्त्यै तु रावणः ।
प्रसूं निषिध्य सेशाद्रिं श्रीमानाहर्तुमाययौ ॥ ३ ॥

श्रीगणेशाय नमः ॥ अथ षष्टाऽध्याय आरभ्यते ॥ रावणं वंचयित्वैशं गणेशा लिंगमाहृतं । षष्टे चंडाल्युद्धृतिश्च प्रोक्ता गोकर्णवर्णनं ॥ १ ॥ कर्मतत्त्वज्ञस्य सात्विकस्येश्वरप्रसाद उक्तः तद्विपरीतस्य लब्धप्रसादस्यापि विघ्नोपहतत्वमधुनोच्यते यत्र गणेशेन लिंगं प्रतिष्ठितमित्युक्तं तत्कुत इति पृच्छति शैवमिति एतद्गोकर्णं कथं केन प्रकारेण सज्जनाश्रयमिति प्रश्नः ॥ १ ॥ रावणात् आत्तं गृहीतं रावणात्तं शैवं लिंगं विष्णोराज्ञया गणेशेन स्थापितं ततस्तत्र गोकर्णे देवा ब्रह्मादयः संतः सावयश्चासन् सूत्रमिदं ॥ २ ॥ कैलासप्राप्तये प्रसूं मातरं निषिध्य निवार्य ईशेन सहितमद्रिं कैलासं आहर्तुमानेतुं ॥ ३ ॥ हठात्प्रसह्य उत्कमुत्सुकं उत्क उन्मना इति निपातः ओजास्विनं

हठात्कैलासमुद्धर्तुमुत्कमोजस्विनं शिवः ।
लोकोत्पातभिया गौर्या स्तुतोऽगाधोव्यरोधयत् ॥ ४ ॥
सोपि मृत्यून्मुखीभूतो ध्यानतुष्टेन शंभुना ।
समुद्धृतो दशमुखस्तत्तुष्टयै साध्वगायत ॥ ५ ॥
सुस्वरं सांगरागाढ्यं माधुर्यं स्वर्णमुत्तमं ।
कालोचितं जगौ गीतं ततानद्धघनारयुक् ॥ ६ ॥
प्राणिमात्रमनोहारि दिव्यं गानं स शङ्करः ।
प्रीतोब्रवीत्साधु गीतं रावणेष्टं वरं वृणु ॥ ७ ॥

॥ रावण उवाच ॥

पूर्मेन्यदुर्लभा हैमी श्रीर्दासी दैवविद्विधिः ।
मृत्युर्दासोनुगा देवास्तन्मे न क्वापि दुर्लभं ॥ ८ ॥
मात्राज्ञप्तोस्मि कैलासमानेतुं भो त्वयान्वितं ।
देहि मे वरणीयार्थं भगवन्वरदोसि चेत् ॥ ९ ॥

बलिनं रावणं लोकोत्पातभयेन गौर्या स्तुतः शिवोऽगाधः कैलासस्याधोभागेऽवारोधयत् ॥ ४ ॥ मरणोन्मुखीभूतः स रावणोपि तत्कृतद्ध्यानतुष्टेन शंभुना कैलासाधोभागात्समुद्धृतः तत्तुष्टयै शिवतोषाय साधु मनोहरमगायत ॥५॥ शोभनाः षड्जादिस्वरा यस्मिन् रागिणीसहितरागयुक्तम् स्वर्णं शोभनयमकगीतियुक्तं ततं वीणादिवाद्यं आनद्धं मुरजादि घनं कांस्यतालादि आरं वंशादि तैर्युज्यत इति ॥ ६ ॥ सर्वेषां प्राणिनां मनोहारि दिव्यमलौकिकं साधु शोभनं ॥ ७ ॥ पूर्लंका विधिर्ब्रह्मा दैवज्ञः अनुगा अनुचराः ॥ ८ ॥ त्वयान्वितं कैलासमानेतुं मात्रा आज्ञप्तोस्मि वरान्ददातीति आतो-

॥ शिव उवाच ॥

कैलासेन तु किं साध्यं प्राणलिङ्गं ततोधिकं।
गृहाणानेन मादृक्त्वं पूस्ते कैलासवद्भवेत् ॥ १० ॥

स्थाप्यते यत्र तत्रैव सुस्थिरं प्रतितिष्ठति।
तस्मात्स्थापय पुर्येव धृत्वेदं कर्म मा कुरु ॥ ११ ॥

इत्युक्त्वा तत्करे लिङ्गं भक्त्याकृष्टमना ददौ।
रावणोप्यतिसंतुष्टो ययौ लङ्कां खलाग्रणीः ॥ १२ ॥

ज्ञात्वैतन्नारदो योगी शशंस ब्रह्मणेपि सः।
विष्णवे द्राक् त्रयोपीशं गत्वोचुः किं कृतं त्विदं॥१३॥

बद्धाः सर्वेमरा येन प्रसिद्धो लोककंटकः।
राक्षसः प्राणिमात्राशी त्वत्समः स कथं कृतः ॥ १४ ॥

नुपसर्गे इति कः ॥ ९ ॥ ततो मत्सहितात्कैलासात्प्राणलिंगमधिकं तदेवा-हानेनेति पूः पुरं ॥ १० ॥ यदि भूमौ यत्र स्थाप्यते तत्रैवाचलं प्रतितिष्ठति पुर्येव लंकायामेव ॥ ११ ॥ भक्त्या आकृष्टं मनो यस्य स शिवः लोकान् रावयतीति रावणः अतएव खलाग्रणीः लंकां ययौ लंकां गन्तुं प्रवृत्त इति भावः ॥१२॥ योगी योगपक्वकषायतया विदितवेदितव्यो नारदः एतल्लिंग-दानादि ज्ञात्वा मनोगत्या ब्रह्मलोकमागत्य ब्रह्मणे शशंस ब्रह्माप्येतदप्रियं स्वस्यापरिहार्यं च मन्वानो नारदेन सह वैकुंठं गत्वा विष्णवे शशंस तत्र विचार्य तत्प्रतीकाराय त्रयोपि ते द्राक् शीघ्रमिच्छामात्रेणैवेशं गत्वोचुः इदं वरदानरूपं कर्म त्वया किं कृतं बत ॥ १३ ॥ देहतोर्थतश्च प्राणिमात्र-भक्षकः स स्वसदृशः कथं कृत इति प्रश्नः ॥ १४ ॥ मया भक्तिवशाल्लिंगं

॥ शिव उवाच ॥

भक्त्याकृष्टं मनो मेद्य तेन गानादिना ततः ।
दत्तं लिङ्गं मया हर्षात्स नाद्यापि पुरं गतः ॥ १५ ॥

व्याजेनैव खलो जय्य इत्युक्त्वा प्रेरयन्मुनिं ।
विघ्नेशं च तदा विष्णुर्लिंगाहरणहेतवे ॥ १६ ॥

नारदस्त्वंजसा योगी गत्वाग्रे रक्षसोब्रवीत् ।
आयातोसि कुतो ब्रूहि रावण द्राक् क गच्छसि ॥१७॥

रावणस्त्वब्रवीद्ब्रह्मन् तोषयित्वाद्य शङ्करं ।
लब्ध्वा लिंगं पुरं यास्ये पश्येदं शैवमुत्तमम् ॥ १८ ॥

तत्प्रेक्ष्योचे मुनी रक्षः शृण्वेकः सैरभाशनः ।
मृगयायां हतो ब्रह्महरीशैर्दुर्धरो मृगः ॥ १९ ॥

दत्तं यस्मै स रावणोद्यापि लंकापुरं न प्राप्तः अनेनात्रानर्थो भवेच्चंद्ववाद्धिर्वरदानाविरोधेन लिंगाहरणोद्यमः कर्तव्य इति ध्वन्यते ॥ १५ ॥ तदा विष्णुर्विचार्य व्याजेनैव खलो जेतुं योग्यो न सामादिनेत्युक्त्वा लिंगाहरणाय मार्गे विलंबनार्थं नारदं विघ्नार्थं गणेशं च प्रेरयत् ॥ १६ ॥ तयोर्मध्ये प्रथमं शीघ्रं रक्षसो रावणस्याग्रतो नारदो गत्वा तमब्रवीत् हे रावण कुत आयातोसि शीघ्रं क गच्छसि च ब्रूहि ॥ १७ ॥ हे ब्रह्मन्नारद पुरं लंकां इदं शैवं लिंगं ॥ १८ ॥ तल्लिंगं दृष्ट्वा मुनिर्नारद ऊचे हे रक्षः रावण इतिहासं शृणु एको वन्यमहिषादिभक्षकोतएव दुर्धरो मृगः ब्रह्महरीशैर्हतः ॥ १९ ॥ तच्छृंगेभ्यः

तैस्त्रीण्याप्तानि लिंगानि तच्छ्रृंगेभ्यस्तदात्मवत् ।
मतान्यैशं त्विदं दैवाल्लब्धं सायुज्यदं विभोः ॥ २० ॥
सोप्याह नाद्य श्रोतव्यं गन्तव्यं सत्वरं मुने ।
कातीत्य संध्यां यासीति मुनिनोक्त उपाविशत् ॥२१॥
अत्रांतरे गणेशोपि वर्णिलिंग्यायचौ स तं ।
करे कृत्वाब्रवीत्कोसि कस्य पुत्रः क्क गच्छसि ॥ २२ ॥
सोप्याहोमाशंकरौ मे पितरौ देयमस्ति ते ।
किं ताभ्यां भो न चेत्पाणिं मोचयाशु बिभेम्यहं ॥२३॥
रावणोप्याह नादेयं ताभ्यां लिङ्गं क्षणं वह ।
हैमीं मे गौरवाल्लंकां दर्शयामि सुखं वस ॥ २४ ॥

सकाशात्रीणि लिंगानि तैर्ब्रह्महरीशैः आप्तानि लब्धानि तदा तानि तैरात्मतुल्यानि मतानि मतिबुद्धीति वर्तमाने क्तः तेषामित्यध्याहर्तव्यं वा क्तस्य च वर्तमान इति षष्ठीसापेक्षात् इदं तु विभोर्व्यापकस्येशस्य सायुज्यदं इदं त्वैशं लिंगं त्वया दैवयोगाल्लब्धम् ॥२०॥ इति नारदवचः श्रुत्वा स रावणोप्याह भो मुने सत्वरं मया गंतव्यं अतः श्रवणानवकाशान्न मया श्रोतव्यं संध्याकर्मातीत्य क्क यासीति नारदेनोक्तः रावण उपविवेश ॥ २१ ॥ वर्णः प्रशस्तिरस्यास्तीति वर्णी ब्रह्मचारी वर्णाद्ब्रह्मचारिणीतीनिः तस्य लिंगं चिन्हमस्यास्तीति स ब्रह्मचारिवेषवान् स रावणस्तं करे कृत्वा हस्तमवलंब्य ॥२२॥ स गणेशोपि प्राह उमाशंकरनामकौ मम पितरौ ताभ्यां तव देयमस्ति किं भो राक्षस नो चेद्देयं तर्हि करं मोचय यतस्त्वत्तो बिभेमि ॥ २३ ॥ ताभ्यां त्वत्पितृभ्यां सकाशान्न आदेयं किंतु क्षणमात्रं लिंगं धारय ततो गौरवेण तुभ्यं स्वर्णमयीं मम लंकापुरीं दर्शयामि तत्र यथासुखं निवासं कुरु ॥२४॥

बालेनैवोरु लिंगं नो धार्यतेपि न गम्यते ।
लंका घोरेत्यपि प्रोक्तः स तमाश्वास्य तद्ददौ ॥ २५ ॥

दत्तलिंगोब्धितीरे स सांध्यां कर्तुं क्रियां ययौ ।
बालोप्याह त्रिराहूय नागते स्थापयामि कौ ॥ २६ ॥

इत्युक्त्वा किंचिद्विश्रम्य स्वः पश्यत्सु सुरेषु तं ।
त्रिराहूय हरिं स्मृत्वा लिंगं सोस्थापयद्भुवि ॥ २७ ॥

सोप्येत्य स्थापितं दृष्ट्वा संताड्यार्भं भुजैस्तु तत् ।
उद्धर्तुमैच्छत्क्ष्मा तेन चकंपेप्यचलं तु तत् ॥ २८ ॥

महाबलेश्वर इति लिंगं तत्संज्ञितं ततः ।
गोकर्णवद्बलोद्धृत्या जातं तत्संज्ञितं स्थलम् ॥ २९ ॥

कैलासोयं क्षितौ साक्षाद्यत्रेशः परिवारयुक् ।
सदा जागर्त्यतस्तत्र स्थिता देवर्षिसज्जनाः ॥ ३० ॥

उरु जडे अपि च घोरा लंका मया न गम्यते इति प्रोक्तोपि स रावणस्तं बालमाश्वास्य तत्करे तल्लिंगं ददौ ॥ २५ ॥ दत्तं लिंगं येन स रावणः समुद्रतीरे संध्याभवां क्रियां वंदनादि कर्तुं ययौ त्वां त्रिराहूयापि त्वयि न प्राप्ते लिंगं भुवि स्थापयामीत्युक्त्वा ॥ २६ ॥ स्वः स्वर्गे तं रावणं हरिं विष्णुं ॥ २७ ॥ स रावणोप्यागत्याऽर्भं बालं ऐच्छत् इषुगमियमां च्छ इति छकारः क्ष्मा भूमिस्तेनोद्धरणेन तत्तु लिंगमचलं जातमिति शेषः ॥ २८ ॥ तल्लिंगं महाबलेश्वर इति संज्ञितं बलादुद्धरणेन गोकर्णवज्जातं यत्र लिंगं स्थापितं तत्स्थलं च तत्संज्ञितं च गोकर्णसंज्ञितं जातं ॥ २९ ॥ अयं भूमौ साक्षात्कैलासो यत्र सपरिवार ईशो जागर्ति भक्तेष्टपूरणे न स्वपिति अतो

देवर्ष्यसुररक्षोनृतिर्यग्भिर्यत्र शंकरात् ।
लब्धोभीष्टो वरो नान्यदितः सत्पावनं स्थलं ॥ ३१ ॥
शृणु किंचिद्वसिष्ठेन शप्तोज्ञानकृतागसः ।
राक्षसत्वं द्वादशाब्दं प्राप मित्रसहो नृपः ॥ ३२ ॥
तदाहनद्द्विजं तत्स्त्रीः शापांते नृप पूर्ववत् ।
भूत्वाप्स्येष्यसि मच्छापाद्रतेऽतमिति तं जगौ ॥ ३३ ॥

हेतोः ॥ ३० ॥ यत्र गोकर्णे यतो गोकर्णादन्यत्पावनं सत्स्थलं न विद्यते ॥ ३१ ॥ एवं प्रतिज्ञातं विघ्नोपहतत्वमुपन्यस्य महापापवतोपि श्रद्धाभक्तियुतस्येश्वरप्रवणस्य प्रतिबंधकपापनिरासपूर्वकं सद्गतित्वं दर्शयति शृणु किंचिदिति श्रोतुः समाधानार्थमुक्तं अज्ञानकृतापराधनिमित्ताद्वसिष्ठेन शप्तो मित्रसहो नृपो द्वादशाब्दं राक्षसत्वं प्राप अत्र ह किल स्मर्यते एकदा राज्ञा राक्षसो हतस्तद्बंधुः कापटयेन राजसेवको भूत्वा नित्यं राजसन्निधिं तस्थौ एकदा गृहागतं वसिष्ठमातिथ्येन निमंत्र्य राजा कार्यांतरसक्तोभूत्तत्र वसिष्ठरूपधरो राक्षसो गत्वा मृगमांसपाकं देहीत्यवदद्राजापि तथा चकार परिवेषणकाले ऋषये कपटसेवकेन नरमांसं दत्तं तेन कुपितो वसिष्ठो भूपं शशाप त्वया याचितं तन्मया दत्तं व्यर्थोयं शापो दत्तोहं त्वां शपिष्यामीत्युक्त्वा राजा जलमादाय तं शप्तुमुद्युक्तस्तं निवार्य तन्महिषी वसिष्ठं प्रार्थितवती वसिष्ठोपि ध्यानेन सर्वं राक्षसकृतं ज्ञात्वा प्राह मद्वचो मृषा मा स्यादतोयं द्वादशाब्दं ब्रह्मराक्षसो भूत्वा पुनः राजा भविष्यतीत्याह तदा राजा तच्छापजलं तत्याज तत्पादयोः पतितं तेन कल्माषपादनामको राक्षसोभूदिति ॥ ३२ ॥ तदा राक्षस्यवस्थायां वनमार्गाच्चलितयोर्दंपत्योर्मध्ये ब्राह्मण्या पुनःपुनः प्रार्थितोपि द्विजं भक्षणार्थमहनत् हत्वा च भक्षितवान् तदा पश्चात्तदस्थीन्यादायानुगंतुं प्रवृत्ता तस्य ब्राह्मणस्य स्त्रीः प्राह हे नृप त्वं शापांते पूर्ववन्नृपो भूत्वा रते

अथैष पूर्ववद्भूत्वा स्वं राज्यं प्राप्य दुःखितः ।
स्मरातुरायै महिष्यै साध्वीशापं शशंस राट् ॥ ३४ ॥

ततः खिन्नावुभौ तीर्थयात्रासक्तौ यदृच्छया ।
आयांतं गौतमं दृष्ट्वा सर्वं तस्मै शशंसतुः ॥ ३५ ॥

गौतमोऽप्याह भो मा भीर्गोकर्णेघौघहारिणि ।
कामिकल्पद्रुमे क्षेत्रे किं भवेद्ब्रह्महत्यया ॥ ३६ ॥

तीर्थानि सर्वतोयानि शैवलिंगानि ताः शिलाः ।
लिंगतीर्थमये तत्र दिव्ये किं दुर्लभं नृणां ॥ ३७ ॥

मैथुने कृतेऽतं नाशमेष्यसीति शापवचनं तमब्रवीत् ॥३३॥अथ द्वादशाब्दे-ष्वतीतेषु एष राजा वीतराक्षसभावः पूर्ववद्भूत्वा राज्ञः कर्म प्रजापालनात्मकं प्राप्य ब्रह्महत्यया वृतो ब्राह्मणीशापेन दुःखितश्च कामातुरायै स्वपत्न्यै ब्राह्मणीदत्त-शापं कथयामास राट् राजा ॥३४॥ उभौ दंपती मार्गे यदृच्छया स्वेच्छया तस्मै गौतमाय ॥३५॥ भो राजन् मा भीर्ब्रह्महत्याया इति शेषः कामिनां कल्पवृक्षभूते गोकर्णे विद्यमाने ब्रह्महत्यया किं भवेन्न किमपीति भावः॥३६॥ तत्रत्यानि सर्वतोयानि तीर्थान्येव तीर्यंते महापापिन एभ्य इति तीर्थानि तत्रत्याः सर्वाः शिलाः शैवलिंगानि भजनीयानि तीर्थलिंगमये तीर्थलिंग-प्रचुरे प्राचुर्यार्थे मयट् दिव्येऽलौकिके द्योतनात्मके वा नृणां दुर्लभं किं अपि तु सर्वं सुलभमेव तीर्थदर्शनस्पर्शनपानादिनांतःकरणशुद्धौ जातायां लिंगा-र्चनवंदनादिना च शिवप्रसादादैकाग्र्येपि जाते च मोक्षोपि सुलभ इति भावः ॥ ३७ ॥ भवत्वेवमधिकारिणामनधिकारिणां का गतिरिति चेन्नात्रा-

शृणु तत्र मया दृष्टा चंडाल्येका मृता तु तां ।
शिवदूता विमानेन कैलासं नेतुमागताः ॥ ३८ ॥

मया पृष्टास्तु ते प्रोचुः प्राग्वृत्तं शृणु गौतम ।
प्राग्भवे विप्रकन्येयं बाल्येभूद्विधवा विधेः ॥ ३९ ॥

तन्वी कामपरा नित्यं युवसौंदर्यमोहिता ।
वृत्वा कांतं विशं भेजे सौपपत्यं रहोपि तत् ॥ ४० ॥

जातं लोकप्रसिद्धं हि मलो नाच्छाद्यतेपि कैः ।
संबंधिनस्तु तां त्यक्त्वा प्रायश्चित्तं तदाऽभजन् ॥४१॥

ततो रेमेपशंकं सा पानासक्ता मदोद्धता ।
विशः कुटुंबिनी भूत्वा कंदर्पहतचेतना ॥ ४२ ॥

धिकारिकारणामिति सदृष्टांतमाह शृण्विति दृष्टेत्यनेन नायमर्थवाद इति सूचयति ननु 'नान्यः पंथा अयनाय विद्यत' इति श्रुतेर्ज्ञानादेव मोक्ष इति श्रवणात् कथं क्षेत्रप्रभावान्मोक्षः तज्ज्ञानमधिकारं विना न लभ्यमधिकारोपि क्षेत्रप्रभावादाप्यते तत्पूर्वं मरणेपि सालोक्यादिलब्ध्या पुनरोंकारमात्रोपासकवज्जन्मांतरे मोक्ष इत्यनवद्यम् ॥ ३८ ॥ विधेर्दैवात् ॥ ३९ ॥ तन्वी मनोहरा कृशांगी वा वोतो गुणवचनादिति ङीप् कामव्याप्ता तरुणपुरुषसौंदर्येण मोहिता कमनीयं वैश्यं जारत्वेन वृत्वा जारकर्म सिषेवे तद्रहःकृतमपि ॥४०॥ लोकप्रसिद्धं जातं हि यतः मलः पापं कैरपि नाच्छाद्यतेऽथवा जलैर्जलमध्ये विष्टाछाद्यते किं नेति तद्वदिदमपीत्यर्थः अभजन्सांसर्गदोषनिवृत्तिं चक्रुः ॥ ४१ ॥ अपशंकं निःशंकं मद्यपानासक्ता विशो वैश्यस्य कामहतमतिः

प्रमत्ता सैकदा वत्सं मेषभ्रांत्या निहत्य कं ।
स्थापयित्वात्तुमन्येद्युः शेषं पक्त्वा चखाद ह ॥ ४३ ॥
ज्ञात्वाथ गोशिरो जारभीत्या निक्षिप्य तद्भुवि ।
व्याघ्रेणापहृतो वत्सः शिवेत्थं पर्यदेवयत् ॥ ४४ ॥
इत्याद्यवाच्यपापानि कृत्वा प्रेत्य स्वकैः समं ।
दारुणां दुर्गतिं भुक्त्वा जातेदृश्यघशेषतः ॥ ४५ ॥
जन्मतोस्या गलत्कुष्ठ आंध्ये सत्यपि रक्षिता ।
पितृभ्यां तावपि मृतौ ततोनाथा रुरोद सा ॥ ४६ ॥
संगत्य यात्रिकैः सत्रा माघे दैवादिहागता ।
क्षुधिता शिवरात्रौ सा ययाचेन्नं सुदुःखिता ॥ ४७ ॥
जनैस्तदाशनाभावात्प्रसारितकरेर्पितं ।
बिल्वमाघ्राय तत्याज मत्वाऽभक्ष्यं सुदुःखिता ॥ ४८ ॥

॥ ४२ ॥ सा एकदा मेषभ्रमेण गोवत्सं हत्वाऽन्येद्युरत्तुं तस्य कं शीर्षं स्थापयित्वाऽवशिष्टं पक्त्वा भक्षितवती ॥ ४३ ॥ अपरेहानि गोशिरो ज्ञात्वा तद्भूमौ निक्षिप्य व्याघ्रेण वत्सोपहृतः शिव शिवेत्थमिति इदमस्थमुरिति स्थमुप्रत्ययः मृषा विलापं चकार ॥ ४४ ॥ इत्यादीनि वक्तुमनर्हाणि स्वकैः पूर्वजैः सह पापशेषादीदृशी चंडाली ॥ ४५ ॥ जारकर्मरतत्वादस्या जन्मतो गलत्कुष्ठं मेषबुद्ध्या गोवत्सहननात्तद्भक्षणाच्चांधत्वं पतितत्वं च तौ पितरावपि अनाथा दीना ॥ ४६ ॥ यात्रिकैः सह संगत्येह गोकर्णे दैवाद्वत्सहननजन्यानुतापेन शिवेत्युच्चारणरूपात्प्राक्तनपुण्यात् ॥ ४७ ॥ शिवरात्रिव्रतत्वादशनाभावात् अभक्ष्यं भक्षणानर्हं ॥ ४८ ॥ लिंगे त्यक्तं बिल्वं सैव

लिंगे त्यक्तं तु तत्पूजा श्रुतमन्हीशकीर्तनं ।
उपवासोशनाभावाद्दुःखाज्जागरणं निशि ॥ ४९ ॥

एवं सांगं व्रतं चीर्णं तेन भूत्वा सुनिर्मला ।
मृताद्यात्र शिवाज्ञप्ताः स्म आनेतुमिमां द्रुतं ॥ ५० ॥

तैरित्युक्त्वामृतं सिक्त्वा विमानाग्र्ये निधाय तां ।
जग्मुः कैलासं सहोत्थक्रियागतिरियं त्विह ॥ ५१ ॥

विदुषस्तु फलाधिक्यं ज्ञात्वेदं गच्छ मुच्यसे ।
तच्छ्रुत्वा द्राङ् नृपो गत्वा क्षणान्मुक्तो बभूव ह ॥५२॥

पूजान्हि दिवसे ॥ ४९ ॥ सांगं पूजाश्रवणजागरोपोषणसहितं इमां कैलासमानेतुं वयं शिवेनाज्ञताः स्मः ॥ ५० ॥ तैर्दूतैः तां मृतां लिंग-शरीरलक्षणां न तु पांचभौतिकदेहभूतां देहस्य जडत्वात् सहोत्थक्रियागतिः कर्मज्ञानाभावेपि संजातायाः व्रतरूपक्रियायाः गतिः पर्यवासनमीदृशं इह गोकर्णे ईश्वरसांनिध्यात् न हि वस्तुशक्तिर्बुद्धिमपेक्षते अज्ञातस्याप्यग्नेर्दाह-शक्तिरिव ॥ ५१ ॥ इदं सामान्यफलं विदुषस्तु ततोप्यधिकतरं मोक्षपर्य-वसायीत्याह विदुष इति तर्हि ज्ञानकर्मसमुच्चयान्मोक्ष इति चेन्न 'कर्मणा पितृलोको विद्यया देवलोक' इति भिन्नश्रवणात् सहैवैकेनानुष्ठातुमशक्यत्वा-दत्र क्रियाविषयकज्ञानेन सहितं कर्मानुष्ठानमभ्युपगंतव्यं नाद्वितीयात्मज्ञान-पूर्वकं कर्मानुष्ठानं संभवति 'विद्यां चाविद्यां०' श्रुतेः अमृतं आपेक्षिकं मृतं मृतिर्नपुंसके भावे क्तः तन्न विद्यते यस्माद्देवत्वमिति यावत् न तु मोक्षः तस्य ज्ञानैकसाध्यत्वादकृतत्वाच्चेति दिक् मुक्तो दोषमुक्तः ज्ञानाधिकारीति

गोकर्णमीदृशं क्षेत्रं सत्तमं सज्जनाश्रयं ।
अतस्तत्रैव तस्थौ हि श्रीपादः साधुजीवनः ॥ ५३ ॥

मोचयित्वा सतोब्दांस्त्रींस्तत्रोषित्वा गतागतात् ।
कृष्णातटे कुरुपुरं प्राप्यादृश्योभवत्स तु ॥ ५४ ॥

इति० गोकर्णवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥

यावत् ॥ ५२ ॥ सतः साधून् गतागतात्संसारात् स श्रीपादोऽदृश्यो गुप्तः ॥ ५३ ॥ ५४ ॥

॥ टीकायां षष्ठः ॥

---

## सप्तमोऽध्यायः

॥ नामधारक उवाच ॥

साधूनुद्धर्तुकामोथ कुतो लीलाविहार्यभूत् ।
अदृश्यो भगवांस्तत्तु श्रोतुमिच्छामि सादरं ॥ १ ॥

॥ सिद्ध उवाच ॥

अतींद्रियोपि दृश्योत्र भूत्वा लीलात्मना पुनः ।
अवतारप्रसंगेन जातोऽदृश्य इदं शृणु ॥ २ ॥
तत्राभूच्छांदसः कश्चिदंबिका नाम तद्वधूः ।
कुपुत्रं सुषुवे दैवात्स्तब्धं हीनमतिं जडं ॥ ३ ॥
वर्णधर्मोपनीतं तं सावित्र्युच्चारणाक्षमं ।
ताडयंतं निवार्याह स्वपतिं वैदिकं वधूः ॥ ४ ॥

॥ श्रीगणेशाय नमः ॥ ॥ अथ सप्तमाध्यायः ॥ ॥ पूर्वाध्यायांते गतागतात्सतो मोचयित्वेत्युक्तं तत्केन प्रकारेणेत्याकांक्षायां मंदाधिकारिणो ज्ञानांतरंगभूतभक्तियोगेनेत्यस्मिन्नध्याये प्रदर्श्यते साधूनुद्धर्तुं कामो यस्य तुं काममनसोरपीति मकारलोपः कुतो हेतोरदृश्योभूदिति कथासंगत्यनुसारिप्रश्नः ॥ १ ॥ सप्तमे ब्राह्मणीदुःखं परिहृत्य हतं द्विजं ॥ जीवयामास चोरघ्नो गुरुः कुरुपुरेऽभवत् ॥ १ ॥ उत्तरमाह सूत्रेण इंद्रियाण्यतीतोऽतींद्रियः अत्यादयः क्रांताद्यर्थे द्वितीयया इंद्रियागोचरोपि लीलाविग्रहेण दृश्यो भूत्वापि पुनरवतारप्रसंगेनादृश्यो जातः इदं तत्कथनरूपं चरितं ॥ २ ॥ तत्र कुरुपुरे छांदसो वैदिकब्राह्मणः स्तब्धत्वाद्धीनमतित्वाज्जडत्वाच्च कुपुत्रः ॥ ३ ॥ ब्राह्मणवर्णोक्तक्रमेण 'अष्टमे वर्षे ब्राह्मणमुपनयेत्' इत्याद्युक्तेन कृतोपनयनं गायत्र्युच्चारणासमर्थं तं पुत्रं ताडयंतं स्वपतिं तस्य वधूर्निवार्य प्राह ॥ ४ ॥

भो जडोर्भोऽश्मवद्योनेरेवालं खेदहेतुना ।
ताडनेन त्यजाम्यस्मिंस्ताडितेसून्सुधीरिति ॥ ५ ॥
सोप्यजाकंठकुचवत्तं मत्वाश्रुत्य तद्वचः ।
तूष्णीं तस्थौ ततो विप्रः कालेनाल्पीयसा मृतः ॥ ६ ॥
तत्र पुत्रान्विता माता जीवनं याच्ञयाकरोत् ।
काले याते कियत्येवं निंदां चक्रुर्द्विजोत्तमाः ॥ ७ ॥
सूर्यर्च्यजैषा वृत्तिस्ते गर्ह्यास्माकं न रोचते ।
इतो व्रज त्यजासून्वा तैरित्युक्तो नदीं ययौ ॥ ८ ॥
कृष्णाविष्टं समं मात्रा मर्तुकामं विलोक्य तौ ।
निषिध्योचेनुकंपार्द्रः श्रीपादस्तीरवास्यसौ ॥ ९ ॥
साहसं मा कुरु ब्रह्मन्नात्महत्या हि दुर्वहा ।
भवे भवेप्यतोत्रैव संप्राप्तसहनं वरम् ॥ १० ॥

भो नाथायमर्भः योनेरेव उत्पत्तित एव पाषाणवज्जडः खेदहेतुना ताडनेनालं इतः परं भो सुधीः अस्मिन्बाले ताडिते सत्यसून्प्राणांस्त्यजामि ॥ ५ ॥ स ब्राह्मणोपि मेषकंठस्तनवत् निरर्थकं तं मत्वा तस्या वचोंगीकृत्य अल्पीयसात्यल्पेन कालेन ॥ ६ ॥ निंदां चक्रुः शिक्षार्थमिति शेषः ॥ ७ ॥ सूरिभिः पंडितैरर्चितुं योग्याद्ब्राह्मणाज्जातः सूर्यर्च्यजस्तत्संबुद्धौ मातृयाचितान्नभक्षणरूपा तव वृत्तिर्जीवनं गर्ह्या निंद्यास्माकं न रोचतेऽत इतो व्रज प्राणान्वा त्यज इति तैरुक्तः स निर्विण्णः सन् मर्तुं कृष्णां ययौ तज्ज्ञात्वा पश्चान्मातापि ययावित्युत्तरेण ज्ञाप्यते निषिध्य निवार्य कृपया क्लिन्नः सन्नूचे ॥ ८ – ९ ॥ भवे भवे जन्मनि जन्मनि अतो हेतोः संप्राप्तकष्टसहनं वरं ब्राह्मणस्य बुद्ध्या देहत्यागे आत्महत्यायाः ब्राह्मणहत्यायाश्च स्मरणात् ‘ असुर्या नाम ’ इति श्रुतेरंधतमःश्रवणाच्च मैवं कुरु ॥ १० ॥ पुत्रेणोत्तरं

॥ ब्राह्मण्युवाच ॥

प्राज्ञोद्भूतकुपुत्रत्वहेतुनैवाखिला हि मां।
धिक्कुर्वंत्यपि नेक्षंति तत्किं कार्यमतः परं॥ ११ ॥

॥ श्रीपाद उवाच ॥

हत्यया लिप्यसेऽग्रेतो दुःखं निस्तीर्य दैविकं।
शिवतोषात्सुपुत्रस्ते भविष्यति भवांतरे॥ १२ ॥

॥ ब्राह्मण्युवाच ॥

त्वयोक्तं साध्वहं कुर्यां तथैव तु कथं भवेत्।
शिवतोषः पुरा केन कृतः श्रावय विस्तरात्॥ १३ ॥

॥ श्रीपाद उवाच ॥

उज्जयिन्यां पुरा चंद्रसेनराजसखोऽलभत्।
मणिभद्रः शिवाच्चैवश्चिंतामणिमभीष्टदं॥ १४ ॥

किमप्यदत्तमतो मातोवाच मां धिक्कुर्वंति नावलोकयंति च न मर्तव्यं तर्हि अतः परं किं कार्यं॥११॥ अग्रे जन्मनि जन्मनि दैविकं दैवादागतं निस्तीर्य शिवाराधनं कुरु शिवतोषाद्भवांतरे जन्मांतरे सत्पुत्रो भविष्यत्यन्यथांधं तमो यास्यसि॥ १२ ॥ त्वया साधूक्तं तथाहं कुर्यामेव परं तु शिवतोषः केन प्रकारेण भवेत् पूर्वं तादृशः शिवतोषः केन कृतश्चेत्तर्हि विश्वासार्थं भक्तिदार्ढ्यार्थं च विस्तरेण मे श्रावय अहमपि तथा करिष्यामीति भावः॥ १३ ॥ चंद्रसेनराजस्य सखा चंद्रसेनराजसखः राजाहःसखिभ्यष्टच् शैवः शिवभक्तः मणिभद्रस्तन्नामकः अभीष्टार्थप्रदं चिंतामणिं प्रसन्नाच्छिवाल्लेभे॥ १४ ॥

तं ज्ञात्वार्वादिनाऽलभ्यं युद्धायाभ्यागतान्नृपान् ।
श्रुत्वाप्येकाग्रचित्तोऽसौ प्रदोषेपूजयच्छिवं ॥ १५ ॥
मंदानंगप्रदोषे तं मणिं भूपं तथाविधं ।
दृष्ट्वा गोपसुतास्तद्वत्स्वांगणे चक्रुरर्चनं ॥ १६ ॥
गोप्यो निवार्य पत्राद्यैर्लिंगकल्पनयोपलं ।
भजतो निन्युरत्तुं तांस्तस्थौ तत्रैकबालकः ॥ १७ ॥
प्रसह्याप्युद्धृतोर्चां स मात्रोद्वास्यापतद्भुवि ।
शंभुपूजाभंगभिया निर्विण्णो मर्तुमुद्यतः ॥ १८ ॥
तद्भावं विश्वसाक्षीशो ज्ञात्वाविष्कृत्य शोभनम् ।
स्वं रूपं बालमाश्वास्य वरं वृण्विति तं जगौ ॥ १९ ॥
बालोपि दिव्यरूपं तं नत्वोचे भुवनेश्वर ।
मात्रोत्सृष्टात्र ते पूजा तन्मंतुं क्षंतुमर्हसि ॥ २० ॥

तं श्रुत्वा नृपैरर्वादिभिर्याचितोपि तेन कस्मैचिन्न दत्तः एवमर्वादिनाऽलभ्यं ज्ञात्वा युद्धार्थमभित आगतान्नृपाञ्छ्रुत्वापि शिवमपूजयत् ॥ १५ ॥ शनिप्रदोषे मणिं मणिभद्रं चंद्रसेनभूपं च तथाविधं प्रदोषे शिवार्चकं दृष्ट्वा गोपकुमारकाः स्वांगणे शिवार्चनं चक्रुः ॥ १६ ॥ लिंगकल्पनया उपलं पाषाणं पत्रादिभिरुपचारैर्भजतः कुमारान्पूजनतो निवार्य तन्मातरो गोप्यः अत्तुं कुमारान्भोजयितुं यद्वा तैः कुमारैः सह वा अत्तुं भोक्तुमिति लाक्षणिकोर्थः गृहान्निन्युः अकथितं चेति नयतेर्द्विकर्मकत्वं सर्वेषु बालेषु यातेष्वपि पूर्वसंस्कारादेकांतभक्तिसंपन्नोनन्यचित्त एकबालकस्तत्र पूजास्थाने तस्थौ ॥ १७ ॥ अर्चां पूजामुद्वास्य मात्रा प्रसह्य बलादुद्धृतोपि स बालः शंभुपूजाभंगभयेन निर्विण्णो मर्तुमुद्युक्तः सन्भुव्यपतत् ॥ १८ ॥ भावं भक्तिं आविष्कृत्य प्रकटीकृत्य ॥ १९ ॥ तं शिवं नत्वा ऊचे तन्मंतुं

॥ शिव उवाच ॥

भक्त्या सायुज्यभाङ् मेसि कृतं मात्रा त्वबोधतः ।
नायं मंतुः सापि भूयाद्विष्णुमातार्चनेक्षणात् ॥ २१ ॥

इत्युक्त्वांतर्दधे सोभूद्भास्वल्लिंगं य आगताः ।
त ऊचुः पुण्यश्लोकार्थं दोषाप्यर्कोत्र तिष्ठति ॥ २२ ॥

धन्येन सह योद्धव्यं नास्माभिरिति ते नृपाः ।
निश्चित्य स्निग्धभावेन तौ द्रष्टुं सर्व आययुः ॥ २३ ॥

पूजां कृत्वापि राट् द्योतहेतुं निश्चित्य तैः सह ।
नृपैर्गोपांगणं गत्वा प्राप लिंगेक्षणान्मुदं ॥ २४ ॥

श्रुत्वा गोपमुखात्सर्वं तुष्टास्तस्मै नृपाः श्रियं ।
दत्वा गोपाधिपत्यं च स्वं स्वं स्थानं ययुर्मुदा ॥ २५ ॥

सा तु प्रेत्य यशोदाख्या गोपी भूत्वा हरिं सुतं ।
प्रापेशतोषात्तस्मात्ते तथा भूयाच्छिवार्चनात् ॥ २६ ॥

मातुरपराधं ॥ २० ॥ भक्त्या कृत्वा मे सायुज्यभागासि अबोधतोऽविवेकतोऽयं मंतुरपराधो न सापि त्वन्मातापि पूजाविलोकनाद्विष्णुमाता भूयात् ॥ २१ ॥ स शिवः बालेनार्चिता शिला तदेव भास्वन्महाकालाख्यं ज्योतिर्लिंगं अभूत् ये आगता नृपास्ते ऊचुः एतत्पुण्यश्लोकराजार्थम् दोषा रात्रावपि अत्र नगरे अर्कस्तिष्ठति यतोयं द्योतो दृश्यते ॥२२॥ धन्येन राज्ञा सहास्माभिर्न योद्धव्यं तौ चंद्रसेनमणिभद्रौ सर्वे राजानः ॥ २३ ॥ राट् चंद्रसेनः प्रकाशकारणं ॥ २४ ॥ श्रियं संपत्तिम् ॥ २५॥ सा गोपमाता तु पूजावलोकनरूपेश्वरसंतोषात् ते तथा भूयात् ॥ २६ ॥

॥ ब्राह्मण्युवाच ॥

कष्टाद्दैवाच्छिवे तुष्टे फलं भाव्यधुनामुना ।
कष्टेनायुः कथं लंघ्यं मातृत्वेनाव मामतः ॥ २७ ॥

इत्यशाठ्यं सकारुण्यं श्रुत्वा प्रीतो दयार्द्रधीः ।
ओमित्युक्त्वा दधौ पाणिं दुष्प्रापं मूर्खमूर्धनि ॥ २८ ॥

सहसा गीष्पतिसमो बभूव श्रुतिशास्त्रवित् ।
मातृभक्तौ विनीतं तं नियुज्याहांब मे शृणु ॥ २९ ॥

विस्मृत्याकमनेनेशपूजयायुःक्षयं कुरु ।
पुत्रो भाविभवे मादृक्के भविष्यति वा इति ॥ ३० ॥

साप्यत्यर्थं प्रहृष्टा तदाज्ञया सह सूनुना ।
ग्रामं गत्वेशमानर्च विद्वन्मान्यसुतान्विता ॥ ३१ ॥

कष्टेन दैवयोगेन च शिवे तुष्टे सति फलं भाविजन्मांतरे अधुनाऽमुना कष्टेनायुर्जिवितकालः कथं नेयोऽतो मातृभावनया त्वमेव मामत्र रक्ष ॥ २७ ॥ अशाठ्यं निष्कपटं ओमित्यंगीकारे ॥ २८ ॥ गीष्पतिसमो बृहस्पतितुल्यः मातृभजने विषये विनीतं नम्रं प्रयुज्य आह भो अंब ॥ २९ ॥ अनेन विदुषा पुत्रेण अकं दुखं विस्मृत्य प्रदोषे ईश्वरपूजया जीवितकालक्षेपं कुरु भाविभवे एष्ये जन्मनि मादृग्वै निश्चयेन ते भविष्यति ॥ ३० ॥ सा ब्राह्मणी तदाज्ञया श्रीपादानुज्ञया पुत्रेण सह ग्रामं गत्वा विद्वद्भिर्मान्यो यः सुतस्तेनान्विता सती शनिप्रदोष ईशमानर्च

माद्दङ् नान्यो भवेयं चेन्नास्याः पुत्रो मृषा वचः ।
अतोवतीर्य तत्कुर्यामित्यमंस्ताज ईश्वरः ॥ ३२ ॥
कृतावतारसंकल्पः कार्यानंत्यान्न सोत्यजत् ।
लीलांगं तत्र भजतामदृश्योप्यस्ति कामदः ॥ ३३ ॥

॥ नामधारक उवाच ॥

संकल्पवान्कथं कार्येऽपूर्णेप्यन्योभवत्कथं ।
स्थित्वाद्यधाम्नादृश्योपि भजतां कामदः कथं ॥ ३४ ॥

॥ सिद्ध उवाच ॥

कार्यानंत्याद्विश्वबीजे संकल्पानंत्यमव्यये ।
नृणां कलिमलांधानां स प्रत्यक्षोप्यदृश्यवत् ॥ ३५ ॥

॥३१॥ मादृगन्यः कोपि न अद्वितीयत्वात् अस्याः पुत्रोहं न भवेयं चेन्मम वचः मृषा स्यात् अतो विशुद्धसत्वेन स्वेच्छामयेन स्वरूपेणावतीर्य तन्मादृक्पुत्रो भवेदित्यस्य सत्यत्वममंस्त मन्यते स्म ॥३२॥ भक्तरक्षादिरूपकार्याणामानंत्यात्कृतावतारग्रहणसंकल्पोपि लीलाविग्रहं नात्यजत् तत्र मलिनसत्वानामदृश्योपि भक्तकामदोद्याप्यस्ति ननु 'अप्राणो ह्यमनाः शुभ्र'इत्यादिश्रुतेः 'कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरितत्सर्वं मन एव' इति श्रुतेश्च भगवतोऽमनस्कत्वात्संकल्पादेर्मनोरूपत्वात्कथं संकल्पवानिति चेत्परमेश्वरस्येक्षणवत्संकल्पनमनवद्यं वशमायत्वात्स्वतंत्र इति दिक् ॥३३॥ कार्येऽपूर्णे सत्यपि कथमवतारांतरस्वीकरणसंकल्पवान् आद्यधाम्ना रूपेण स्थित्वापि कथमन्योभवत्तत्रादृश्योपि भजतां कथं कामदः ॥३४॥ प्रश्नत्रयोत्तररूपं सूत्रं कार्यानंत्यादिति तव्द्याख्यानरूपा यावदध्यायसमाप्ति श्लोकाः प्राग्वृत्तमित्याद्याः ॥ ३९ ॥ प्राग्वृत्तमितिहासं अस्मिन्छ्रीपादे बुद्धि-

प्राग्वृत्तं शृण्वदृष्टेस्मिन्द्विजः कश्चित्कुटुंब्यभूत् ।
श्रीसांधात्स वणिग्वृत्तिः श्रीपादांघ्र्यर्पितांतरः ॥ ३६ ॥

व्यापारे मेधिलाभश्चेद्भूयात्तदनुसारतः ।
कुर्यां कुरुपुरे विप्रभोजनं श्रीशतुष्टये ॥ ३७ ॥

इत्युक्त्वाऽगात्स्मरन्श्रीशं व्यापारार्थं ततो धनं ।
लेभे भूरि तदादाय ययौ संकल्पसिद्धये ॥ ३८ ॥

मार्गे एकाकिनं यांतं तं सार्थं प्रेक्ष्य तस्कराः ।
सुहृत्तया तदनुगा भूत्वा तं विजनेहनन् ॥ ३९ ॥

तदैव सहसा तत्र श्रीपादः शूलपात्रधृक् ।
प्राप्य तान्छितधारेण त्रिशूलेन जघान सः ॥ ४० ॥

एकस्तमेत्य शरणं प्रोचे चोरधिया तु नो ।
संगीभूतोस्मि मां ज्ञात्वा यथेष्टं कुरु भो प्रभो ॥ ४१ ॥

श्रीपादोपि सकारुण्यां श्रुत्वोक्तिं विमलांतरं ।
ज्ञात्वा तं योजयामास तद्रक्षायै कृपार्द्रधीः ॥ ४२ ॥

सांधाद्वणिग्वृत्तिः 'स्ववृत्त्या जीवनाभावाद्दुर्वापद्यन्यवार्तया । जीवेतानिंद्यया' इति वक्ष्यमाणत्वात् ॥ ३६ ॥ अधिकं फलं भूयात्तथा जातं चेत्तदनुसारतः लाभानुसारतः ॥ ३७ ॥ अगादगच्छत् इणो गा लुङीति गादेशः ग्रामांतरमिति शेषः संकल्पसिद्धये ब्राह्मणान्भोजयितुं ॥ ३८ ॥ सार्थं द्रव्येण सहितं सुहृत्तया साधुत्वेन तस्यानुचराः ॥ ३९ ॥ शूलकमंडलुधरः तीक्ष्णधारेण ॥ ४० ॥ इमे चोरा इति बुध्या नैषां संगीभूतः॥ ४१ ॥ विमलांतरं निष्कपटं तद्रक्षायै ब्राह्मणरक्षार्थं ॥४२॥ कबंधे अपमूर्धकलेवरे भस्म-

कबंधे तच्छिरः कृत्वा भस्माक्तं जलमंत्रितम् ।
सजीवं तं द्विजं कृत्वा क्षणादन्तर्दधे स तु ॥ ४३ ॥
स सुप्तोत्थितवद्बुध्वा दृष्ट्वा चोरान्मृतान् द्विजः ।
हतशेषमुखात्सर्वं श्रुत्वा खिन्नांतरोभवत् ॥ ४४ ॥
कृत्वा तु मत्कृते कृच्छ्रं जातोयं चोरगोचरः ।
सर्वदाराधितो दैवान्नायं मे दृष्टिगोचरः ॥ ४५ ॥
इत्युक्त्वा धनमादाय गत्वा कुरुपुरं द्विजः ।
चतुःसहस्रसद्विप्रभोजनं श्रद्धया व्यधात् ॥ ४६ ॥
ततः श्रीशप्रसादात्स सिद्धिं प्रापोभयीं द्विजः ।
इत्याद्या भूरिशो वृत्ताः सत्यदृश्येपि तत्कथाः ॥ ४७ ॥
प्रत्यक्षस्तु सतां तत्र कच्चराणां त्वगोचरः ।
सोप्यन्यत्रावतीर्यात्र स्वरूपेणेष्टकामदः ॥ ४८ ॥
वेदयज्ञतपोदानप्रदिष्टफलतोधिकं ।

नाक्तं युक्तं स तु श्रीपादः ॥ ४३ ॥ श्रीपाददर्शनाऽलाभेन खिन्नांतरोभवत् ॥ ४४ ॥ कृच्छ्रं कष्टं गोचरो विषयः ॥ ४५ ॥ व्यधाव्द्यकृणोत् ॥ ४६ ॥ उभयीमैहिकीमामुष्मिकीं च उभादुदात्तो नित्यमिति तयप्रत्ययस्यायजादेशः टिड्ढाणञिति ङीप् ॥ ४७ ॥ कच्चराणां मलदूषितानां इष्टेभ्यः कामान्ददातीति तथा इष्टान्कामान्ददातीति वा ॥ ४८ ॥ वेदेष्वध्ययनादिभिः यज्ञेष्वनुष्ठानादिभिः तपःसु कायशोषणादिभिः दानेषु सत्पात्रार्पणादिभिः यत्प्रदिष्टं ततोप्यधिकं अविनाशि ध्रुवं मोक्षाख्यफलं श्रीपादेनाधिष्ठितं यत्कृष्णातटे स्थानं तन्निवासिनां द्राक् शीघ्रं लभेत् । ननु श्रीपादस्वरूपेणावतीर्णस्येश्वरस्य जीववद्देहसंबंधाविशेषात्कथं तदधिष्ठितस्थानवासिनां मोक्ष-

श्रीपादाधिष्ठितस्थानवासिनां द्राक्फलं लभेत् ॥ ४९ ॥

यत्र कुत्रापि ये केचिच्छ्रीपादांघ्रिसरोरुहे ।
संस्मरंत्यपि तेभ्यः स कामानिष्टान्ददात्यलं ॥ ५० ॥

इ० श्रीपादमहिमवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

लाभ इति चेज्जीवस्याविद्यया मिथ्याभूतषड्विकारिदेहसंबंधः ईश्वरस्य तु नित्यशुद्धबुद्धमुक्तसत्यस्वभावत्वाद्योगमायया चिद्घनलीलाविग्रहाविर्भाव इति जीवापेक्षया महान्विशेषोस्त्यतः तदधिष्ठितपुण्यक्षेत्रनिवासतोनायासेनैव भगवत्प्रियतमसद्भक्तसंगो भवति प्रायेण भगवद्भक्ता भगवदधिष्ठितपुण्यक्षेत्र एव निवसंति तेभ्यः श्रवणकीर्तनाद्यपि भवति विघ्नबाहुल्येनान्यत्र ध्यानं न सिद्ध्येत् । साक्षाच्छ्रीपादनिवासेन विघ्नासंभवान्निर्विघ्नेन च ध्यानयोगादिसिद्धावयत्नत एव मोक्षः ज्ञानैकसाध्यस्य मोक्षस्येश्वरानुग्रहेण ज्ञानसाधनेष्वनुकूलेष्वप्रतिबद्धज्ञानमत्र लभेदिति भावः ॥ ४९ ॥ तत्स्थानगमनासंभवे यत्र कुत्रस्था अपि ॥५० ॥ इति श्रीगुरुचरिते टीकायां श्रीपादमहिमवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

# अष्टमोऽध्यायः

॥ नामधारक उवाच ॥

ब्रह्मन्कुत्राऽवतीर्यासौ किं चकारास्य चेष्टितम् ।
मायाश्रितस्याप्रमेयं ब्रूहि शुश्रूषवेऽर्थदम् ॥ १ ॥

॥ सिद्ध उवाच ॥

उदग्देशेऽवतीर्णस्य दीनानुद्धर्तुमीशितुः ।
वक्ष्येऽल्पकं साधुयोगिदुर्विभाव्यं हि चेष्टितम् ॥ २ ॥
या श्रीपादोपदेशेन प्रदोषेऽजमतोषयत् ।
सा प्रेत्योत्तरदेशे स्त्रीजाता ब्रह्मकुलेऽमले ॥ ३ ॥
धीरूपशीललक्ष्माढ्या सुसंस्कारा गुणान्विता ।
श्रीपादेन पुरांबेति प्रोक्तत्वात्सा तदाव्हया ॥ ४ ॥
शिववृत्तिं माधवाख्यमनुरूपं द्विजं पिता ।
दृष्ट्वा तत्रैव तां तस्मै गृह्योक्तविधिना ददौ ॥ ५ ॥

॥ श्रीगणेशाय नमः ॥ ॥ अथाष्टमोऽध्यायः ॥ ॥ अष्टमे नरहर्याख्यावतारो वर्ण्यते परः ॥ बाललीला विचित्रात्र तुर्याश्रमपरिग्रहः ॥ १ ॥ श्रीभगवतो भक्तानुनुग्रहीतुमवतारांतरमाह पृच्छति ब्रह्मन्निति शुश्रूषवे श्रोतुमिच्छतेऽर्थदमभीष्टार्थप्रदं ॥ १ ॥ उत्तरं सूत्रेणाह हि यस्माद्भगवच्चेष्टितं योगिदुर्विभाव्यमतोऽल्पकं वक्ष्ये॥२॥या ब्राह्मणी ॥३॥ धीः सारासारविवेकवती बुद्धिः शीलं स्वभावः लक्ष्माणि सुचिन्हानि तैर्युक्ता शोभनाः संस्कारा व्यावहारिका यस्याः गुणैः क्षांत्यादिभिरान्विता तदाव्हयांऽबेति नाम्ना प्रसिद्धाभूत्॥४॥ शिवे तात्पर्येण वृत्तिरनुरक्तिर्यस्य तं माधवनामकं दुहितुरनुरूपं दृष्ट्वा गृह्योक्तविधानेन तस्मै माधवाय तामंबां ददौ तत्र करंजनगरे॥५॥

सा पातिव्रत्यमास्थाय भेजे छायेव तं पतिम् ।
प्रदोषेपि शिवं पूर्वसंस्कारात् पत्यनुज्ञया ॥ ६ ॥

स्नेहोन्योन्याश्रयो भावबंधोभूच्चक्रवाकवत् ।
तयोर्हर्षितयोरेवं गर्भमंबा वरं दधौ ॥ ७ ॥

सा सुदोहदलक्ष्माथ तत्त्वज्ञानमुपादिशत् ।
द्विजोप्यनुक्रमाच्चक्रे क्रियाः पुंसवनादिकाः ॥ ८ ॥

**साऽ**बा पतिव्रताधर्मं स्वीकृत्य छायेव प्रतिबिंबमिव तं पतिं सिषेवे पूर्वसंस्कारेण शनिप्रदोषे शिवमपि भेजे पत्युरनुज्ञया स्त्रीणां स्वातंत्र्याभावात् ॥ ६ ॥ चक्रवाकयोरिव परस्पराश्रयः प्रेमलक्षणो भावबंधोभूत् वरं श्रेष्ठं एवं चक्रवाकवन्मिथः स्नेहबद्धयोरित्यनेनानंदानुकूलत्वं सूचितं हर्षितयोः संजातहर्षयोः सतोरेवमंबा वरं गर्भं दधावित्यनेन परकीयावयवसंयोगरूपव्यापारजन्यानंदरती श्रौते प्रतिपादिते तथा च कौषितकिनः 'प्रज्ञयोपस्थं समारुह्योपस्थेनानंदं रतिं प्रजातिं चाप्नोति' इति तैत्तिरीयाश्च 'प्रजातिरमृतमानंद इत्युपस्थे' प्रजातिः प्रजोत्पादनं अमृतं स्त्रीक्रीडा आनन्दो गुह्येंद्रियजन्यः ईशविभूतित्वादयं कामो न निंद्यः'धर्माविरुद्धो भूतेषु कामोस्मि'इति स्मरणात् दधावित्यनेन 'यथेयं पृथिवी मह्युत्ताना गर्भमादधे एवं तं गर्भमाधेहि दशमे मासि सूतव' इति मंत्रोक्तस्त्रीव्यापारधारण आधानशब्दप्रयोगो दर्शितः भक्ताधीनस्य भगवतो मायेयं ॥ ७ ॥ शोभनदोहदलक्षणा "लक्ष्माथ" इत्यत्र "लक्ष्मापि" इति पाठः आगतेभ्यो लोकेभ्यस्तत्त्वज्ञानमुपदिदेश क्रियाः संस्कारान् 'पुंसवनमनवलोभनं च तृतीये गर्भमास इति चतुर्थे गर्भमासे सीमंतोन्नयनम्' इति सूत्रकृतः 'षष्ठेष्टमे वा सीमंत' इति स्मृतेः ॥ ८ ॥ अथ 'दशमे मासि जायत' इति श्रुतेः अब्रध्नगा अनस्तंगतास्ते

अब्रभ्रगेष्टखगसूचितसिद्धिपूर्वप्रव्रज्यके सुसमयेथ समोष्णशीते।
आत्मीयवाच्यपठनेन सतोनुगृण्हन्नोंकारवाच्यभगवान्स्वयमा-
विरासीत् ॥ ९ ॥

विश्वं तदाभूच्छुभशंसि लोका ओंकारमाकर्ण्य सुविस्मिताः स्युः।
भावान्सुखेटान्गणकाः सुयोगान्दृष्ट्वा मुदं प्रापुरदृष्टपूर्वान्॥१०॥

च ते खगा ग्रहास्तैः सूचिना सिद्धिपूर्वा प्रव्रज्या व्रजयजोर्भाव इति क्यप् प्रव्रज्यैव प्रव्रज्यका सा यस्मिन्तस्मिञ्छोभने समये आत्मीयवाच्यः ॐकारः कलितो भीतान्सतोनुगृण्हन्नोंकारवाच्यभगवान् 'तस्य वाचकः प्रणव' इति पातंजलोक्तेः 'एतदालंबनं श्रेष्ठमेतदालंबनं परं। एतदालंबनं ज्ञात्वा यो यदिच्छति तस्य तत्'इति काठकोक्तेः ॐकारस्य परापरब्रह्मत्वाद्ब्रह्मप्रतीकत्वाद्ब्रह्मप्राप्त्युपायभूतानामालंबनानां श्रेष्ठत्वाद्भगवानोंकारवाच्यः यथा प्रियनामग्रहणेन लोका हृष्यंत्युपागच्छंति च तद्वदीश्वरप्रियाभिधेयमोंकार इति भावः। स्वयमाविरासीन्नास्मदादिवत्कर्मपारतंत्र्येण भौतिकदेहेन कर्मोपार्जितेन तस्य कर्मणोऽभावात् यथा श्रीकृष्णाद्यवतारसमये ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां प्रकृतिं वशीकृत्याजोव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोपि सन्स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्षितस्तद्वदेवायमधुना स्वप्रयोजनाभावेपि भूतानुजिघृक्षया वैदिकं धर्ममुपदेष्टुं स्वयमेवाविरासीत् प्रकटोभूत यथा रामकृष्णाद्यवतारसमयेऽलौकिकदिव्यजन्मज्ञापनार्थं सालंकारः सचिह्नः षोडशवर्षात्मको देहः प्रकटीकृतस्तद्वदिहापि रुदितमकृत्वोत्पत्तित एव प्रणवः पठितः ॥ ९ ॥ तदा जन्मन्यग्निवायुप्रभृति विश्वं शुभं शंसतीति तथाभूतं अभुत् शोभनग्रहान् तन्वादिभावान्प्रव्रज्यादिशोभनयोगान्॥१०॥ते गणका

त ऊचुर्माधवेदं ते सुकृतद्रूफलं किल।
श्रीसिद्धयोस्य दास्योंघ्री स्पर्शवन्निधयोनुगाः ॥ ११ ॥
नायं गृही जनोद्धर्ता दृष्ट्या पतितपावनः।
वंद्योस्यानुग्रहात्कोपि भवेन्नैवात्र संशयः ॥ १२ ॥
इत्युक्त्वा तेन हृष्टेन पूजितास्ते गृहं ययुः।
श्रुत्वाद्भुतं जनुर्द्रष्टुं प्राप्तैर्लोकैः स नेक्षितः ॥ १३ ॥
तद्दृग्दोषभियैकांते गुरुः संस्थाप्य रक्षया।
तं ररक्षार्भबुध्येशं तन्मायामोहितो हरिं ॥ १४ ॥
भूयान्नरो हरिरिव नरतापाघदैन्यहृत्।
अयमित्याख्यया चक्रे बालं नरहरिं द्विजः ॥ १५ ॥
क्षुच्छांतिर्नास्य मत्तोऽतो धात्री वाजा पयस्विनी।
मृग्येत्युक्तेंबयोरोजौ स्पृष्ट्वार्भोध्यदुहत्पयः ॥ १६ ॥

अस्य बालस्य श्रीर्लक्ष्मीरणिमादिसिद्धयश्च दास्यः स्पर्शवच्चरणौ महापद्मादिनिधयोनुचराः ॥११॥ अयं गृही न भविष्यति दृष्ट्या ईक्षणेनैव ॥ १२ ॥ तेन माधवेन ते गणका अद्भुतं जन्म जातमात्रत ॐकारोच्चारणं शोकादिराहित्यं चाश्चर्यकारकं स बालः ॥ १३॥ तेषामागतानां दृग्दोषभयेन गुरुः पिता माधवोर्भकबुद्धयाऽयं लौकिको बाल इति बुद्ध्या बालस्य बुद्धिरिव बुद्धिस्तया वा रक्षणे हेतुस्तन्मायया मोहितः ॥ १४ ॥ अयं नरो बालः नरतापाघदैन्यहरो भूयात् इति हेतोः आख्यया नरहरिं बालं चक्रे हृञो हरणार्थे स्मरणात् ॥ १५ ॥ अस्य बालस्य क्षुधाशांतिर्मत्तो न भवत्यतो धात्री उपमाताऽथवा पयस्विनी अजा छागी मृग्या इत्यंबया उक्ते भाषितेऽर्भको बालः उरोजौ मातुः स्तनौ करेण स्पृष्ट्वाधिकं यथा तथा पयोदुहत् ॥ १६ ॥ चित्रमाश्चर्यकरं तद्बालचेष्टितं सत्साधुदृष्टिभयेन स्फुटं

तद्बालचेष्टितं चित्रं सद्दृग्दोषभियानया ।
स्फुटं नाकारि मात्रैवमन्यदप्यद्भुतास्पदम् ॥ १७ ॥
बाल्यादिना मर्त्यलिंगभाजीहाज्ञानलक्ष्मणां ।
प्रतीतेर्ब्रह्मतारोपः साक्षात्कैः कल्प्यते कथं ॥ १८ ॥
जातस्त्रैवार्षिकोप्येष लीलयाभूत्सुमूकवत् ।
खिन्नातस्तत्प्रतीकारानारेभेऽम्बा द्विजोदितान् ॥ १९ ॥
सौर्येन्ह्यश्वत्थपत्रेऽन्नभोजनैः कुलपार्चनैः ।
बालोक्तिपाठनैश्चान्यैः सूपायैर्नावदच्छिशुः ॥ २० ॥
वक्तुं श्रोतुं नायमज्ञो मूकश्चेत्कथमोंकृतिं ।
श्रुत्वान्योक्तिं ब्रूत इति पितरौ मोहमापतुः ॥ २१ ॥
मूकोयं नौ श्रमेणालं प्रदोषे शंभुरर्चितः ।
दिष्ट्यैतत्तत्फलं प्राप्तं संस्कार्योसौ कथं न्वतः ॥ २२ ॥

प्रसिद्धं नाकारि एवमन्यदप्याश्चर्यास्पदं मात्रा स्फुटं नाकारि एतेन लीलानंत्यं द्योत्यते ॥ १७ ॥ मर्त्यलिंगं भजतीति मर्त्यलिंगभाक् भजो ण्विः तस्मिन्निह भगवति अज्ञानचिन्हानां प्रतीतेः साक्षादयं ब्रह्मरूप इत्यारोपः कथं कैः कल्प्यते न कथमपि ॥ १८ ॥ त्रैवार्षिकोप्येष बालः लीलया सुतरां मूकवत् न तु मूकः ॥ १९ ॥ प्रतीकारान्निर्दिशति सौर्येन्हि मंदवारे रविवारे वाश्वत्थपत्रे निहितानामन्नानां भोजनैः कुलदेवतार्चनैः बालभाषणपाठनैः अन्यैः शोभनोपायैः ब्राह्मीवचादिसेवनोपायैः उक्तानुक्तसमुच्चयार्थश्चकारः तैरपि शिशुर्नावदत् ॥ २० ॥ वक्तुं श्रोतुं चायं नाज्ञोयं मकश्चेदन्योक्तिं संबोधनरूपां श्रुत्वोंकारं कथं ब्रते इति प्रकारेण पितरौ मातापितरौ मोहं प्रापतुः ॥ २१ ॥ अयं मूकः यस्मान्न ब्रतेऽतः नौ आवयोः श्रमेणालं तत्फलं शंभोरर्चनफलं एतत्पुत्रप्राप्तिरूपं प्राप्तं तद्दिष्ट्या शोभनं तथापि दैववशान्मूकत्वादयं बालोऽतः परं कथमुपनयनादिना संस्कार्यः ॥ २२ ॥

ताभ्यामित्युदिते मौंज्यां बद्धायां वक्ष्य इत्यसौ ।
संज्ञयादर्शयत्स्वर्णं व्यकृणोत्तन्मुदेऽयसः ॥ २३ ॥
तदा संजातविश्वासो विप्रानाहूय माधवः ।
मुदा संभृतसंभारः सुलग्नेऽमुमुपानयत् ॥ २४ ॥
सुसंस्कृतः कृतस्वस्त्ययनो भुक्तोऽम्बया सह ।
गुरूपदिष्टां सावित्रीमुपनीतोयमाददे ॥ २५ ॥
गुर्वाश्रितब्रह्मचारिधर्मो भिक्षां स मातरं ।
याचयित्वा जगौ वेदान्न चित्रं वेदवाच्यदः ॥ २६ ॥

इति ताभ्यां मातापितृभ्यामुदिते सति मौंज्यां बद्धायां सत्यां अहं वक्ष्ये इति हस्तसंज्ञयाऽसौ बालोदर्शयत् तन्मुदे लोहस्य स्वर्णं अकरोत् स्पर्श इव ॥ २३ ॥ तदा तस्मिन्काले सर्वैकान्यकिमिति दाप्रत्ययः अयं मौंज्यांबद्धायां वक्ष्यतीति संजातो विश्वासो यस्य स माधवः मुदानंदेन संभृताः संभारा येन स शोभने लग्ने द्वादशाष्टमशुद्धिसहिते खलग्रहचंद्ररहिते स्वोच्चर्क्षांशेषु केंद्रत्रिकोणेषु च सौम्येषु सत्सु अमुं पुत्रमुपानयत् उपनयनं नामाचार्यसमीपनयनांगको गायत्र्युपदेशप्रधानकः कर्मविशेषः उपनयनपदस्य योगरूढत्वात् ॥ २४ ॥ सुष्ठु संस्कृतः कृतं स्वस्त्ययनं यस्य स बटुरंबया सह भुक्तो गुरुमुपेत्योपसंगृह्य च उपनीतः कृतोपनयनः द्वितीयजन्मद्योतकवस्त्रोपवीतधारणादिनान्वितः गुरुणोपदिष्टां पच्छोर्धर्चशः सर्वां सावित्रीं गायत्रीमाददे स्वीकृतवानुवाचेत्यर्थः ॥ २५ ॥ गुरोः सकाशादाश्रुता अवधृता अंगीकृता वा ब्रह्मचारिधर्माः ‘ ब्रह्मचार्यस्यपोशान कर्म कुरु दिवा मा स्वाप्सीराचार्याधीनो वेदमधीष्व सायं प्रातर्भिक्षेत सायं प्रातः समिधमादध्यादप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वा भवान् भिक्षां ददातु ’ इत्याद्या येन स बटुर्मातरं भिक्षां भवत्पूर्वां याचयित्वा ऋग्यजुःसामाथर्वाख्यान् वेदान् जगौ यथा ऋक्शाखीयानां प्रथमोपाकरणोत्तरमुत्त-

प्रणम्य पितरौ प्राह विरक्तः प्रव्रजामि भोः।
अनित्याद्द्राक्शरीरस्य तदाज्ञां दातुमर्हथः ॥ २७ ॥
प्रत्यवायाभिक्रमांतौ नैव धीमति धीस्त्वियम्।
मम प्राग्दैहिकाक्षय्या भविष्यंत्यात्मजा हि वां ॥ २८ ॥
इत्युक्तेंबा विषीदंती तन्मायामोहिताब्रवीत्।
एक एव सुतस्त्वं मे कथं यासि विहाय मां ॥ २९ ॥

रायणे मौंज्युक्तकाले वेदारंभनियमस्तथा न याजुषाणामतो वाजिसनेयिशाखेवतीर्णस्य भगवतः सद्यो वेदारंभो नावद्यः वेदा वाग्यस्य तस्मिन्वेदवाचि भगवतीदं नाश्चर्यं 'अरेस्य महतो भूतस्य निश्वासितमेवैतद्यदृग्वेदो यजुर्वेद०' इति श्रुतेः ॥ २६ ॥ ततः पितरौ प्रणम्यासारात्संसाराद्विरक्तोहं प्रव्रजामि सर्वं संन्यस्य गच्छामि श्रवणार्थं 'संन्यस्य श्रवणं कुर्यात्' इति विधानात् तर्हि गार्हस्थ्योत्तरं प्रव्रजेति चेन्न तथा युक्तं शरीरस्यानित्यत्वात् तत्पातात्पूर्वं ज्ञानं जातं चेन्मोक्षो नान्यथा 'इह चेदशकद्बोद्धुम्' इति श्रुतेः अतो द्राक् शीघ्रं प्रव्रजामि अतो युवामनुज्ञां दातुमर्हथः ॥ २७ ॥ ननु ब्रह्मचर्याश्रमे 'स्वाध्यायोध्येतव्य' इति श्रुतेः 'वेदः कृत्स्नोधिगंतव्यः सरहस्यो द्विजन्मना' इति स्मरणाच्च स्वाध्यायपरित्याग आर्षर्णानपाकरणरूपप्रत्यवायः वैराग्याभावे चाभिक्रमस्य [रब्धस्य] संन्यासाश्रमस्य नाशश्च भवेत् 'प्रमादिनो हि बहवः पिशुनाः कलहोत्सुकाः। संन्यासिनोपि दृश्यंते दैवसंदूषिताशया' इति वार्तिकोक्तेरिति चेदुच्यते। धीः सारासारविवेकनैपुण्यं तद्वति धीमति मयि वेदाध्ययनाकरणे प्रत्यवायोभिक्रमस्य संन्यासाश्रमस्य चांतो नाशो न भविष्यति ननु कुतोन्वियं धीरत आह इयं धीर्ब्रह्मविषया मतिः पूर्वदेहभवा पूर्वदेहजन्या क्षेतुमशक्या ननु त्वया पारिव्राज्ये स्वीकृतेस्माकं का गतिरित्यत आह वां युवयोः आत्मजाः पुत्रा भविष्यंति हीति निश्चितं ॥ २८ ॥ इति पुत्रेणोक्ते भाषिते सति ॥ २९ ॥

प्रव्रजेद्वेदविद्भुक्तगार्हस्थ्योनुक्रमाद्वनात् ।
तत्त्वविद्वासनानाशमनोभंगा अतः श्रुताः ॥ ३० ॥

॥ श्रीगुरुरुवाच ॥

जैह्व्यौपस्थ्यसुखात्तानां क्रमोयं नैव मादृशः ।
प्राक्संस्कारविरक्तस्य जोष्यैः किं मेऽकयोनिभिः॥३१॥

श्रुतश्रोतव्यनिर्वेदं यास्ये संन्यस्य भो ततः ।
संसिद्धिः सुलभा नातः परं कार्यं हि धीमता ॥ ३२ ॥

कलावायुः शतं स्वापाद्धीयतेर्धं तु शेषकं ।
बाल्ययौवनवृद्धत्वैः पराधीनतया च नुः ॥ ३३ ॥

ब्रह्मचर्येण वेदवित् वेदार्थज्ञानवतः कर्माधिकारात् ततो भुक्तं गृहस्थाश्रमसंबंधि सुखं येन स ततो वानप्रस्थाश्रमादनुक्रमेण प्रव्रजेत् अतः तत्त्वज्ञानं मनोभंगो वासक्षयश्च श्रुतः ॥ ३० ॥ जैह्व्यसुखं रसास्वादः औपस्थ्यसुखं स्त्रीसंभोगजं एतत्सुखासक्तानामयं त्वयोक्तः क्रमः प्राक्संस्कारविरक्तस्य मम नायं क्रमः यतः विरक्तस्य मे भोगकालेपि स्पर्धासूयादिभिर्व्याप्तत्वादकस्य दुःखस्य योनयः कारणभूतास्तैर्जोष्यैर्विषयैः किं प्रयोजनं 'सर्वमेव दुःखं विवेकिनाम्' इति पातंजलात्॥३१॥अतः संन्यस्य श्रुतानां श्रोतव्यानां चार्थानां निर्वेदं यास्ये दुःखबुध्या प्रयत्नशैथिल्यं निर्वेदः तेषामनुपादेयत्वेन जिज्ञासां न करिष्यामीति भावः ततः संन्यासात्सिद्धिर्मुक्तिः सुलभा हि यत उक्तादन्यद्धीमता न कार्यं ॥ ३२ ॥ किं च कलावायुः शतं तस्यार्धं निद्रया ह्रियते शेषमर्धं तु बाल्येन यौवनेन वृद्धत्वेन च ह्रियते तदपि नुः पुरुषस्य पराधीनतया ह्रियते उक्तं च गारुडे 'पितृमातृमयो बाल्ये यौवने वनितामयः। पुत्रपौत्रमयो वार्ध्ये मूढो नात्ममयः क्वचित्' इति ॥३३॥ संपत्त्या

स्वप्नवत्संपदिष्टाढ्यसंसारोऽज्ञानकल्पितः ।
यौवनं पुष्पवच्चायुस्तडिद्वत्क धृतिर्बुधे ॥ ३४ ॥
कालो भ्रूणाञ्छिशून्यूनो वृद्धानार्तान्सुखस्थितान् ।
मूढान् ग्रसत्यपि प्राज्ञान्निःशेषानमरानपि ॥ ३५ ॥
यदर्थं ममताप्येतज्जलबुद्बुदवद्वपुः ।
मांसास्थिरक्तवद्धिंस्रवंचनार्थं त्वगावृतम् ॥ ३६ ॥
न भस्मविट्कीटरूपपरिणामं निजानुगम् ।
तदानुषंगिकाः स्त्र्याद्याः किमुतानर्थहेतवः ॥ ३७ ॥

इष्टैर्जनैश्च युक्तः संसारोऽज्ञानेन विजृंभितः स्वप्नवन्मृषा स्यात् यौवनमपि पुष्पवत्क्षणभंगुरं आयुश्च विद्युल्लतेव चपलं ततो बुधे विवेकशीले क धृति-धैर्यं न कापीति भावः ॥३४॥ किं च भ्रूणान्गर्भगतान्निःशेषान्सर्वान्देवानपि ग्रसति ॥३५॥ यदर्थं देहार्थं ममता क्रियते एतदपि वपुः जलबुद्बुदवदशाश्वतं पुनश्च मांसास्थिरक्तवज्जुगुप्सितं सदपि हिंस्राणां श्वकाकगृध्रादीनां वंचनार्थं त्वचा आवृतं यदुक्तमाचार्यैः 'बाह्येऽस्थिस्नायुमज्जापलरुधिरवसाचर्ममेदोयुगंतर्विण्मूत्रश्लेष्मपूर्णं स्वपरवपुरहो' इति न ह्येतादृशजुगुप्सितशरीरधारणादन्यद्विरागकारणमुपदेष्टुं शक्यते ॥ ३६ ॥ अन्यच्च 'कृमयो भस्म विष्टा वावस्था वर्ष्मण ईदृशी' इति गारुडात् भस्मविष्टाकीटान्यतमरूपपरिणामं शरीरं निजरूपमनुगच्छतीति निजानुगं मरणोत्तरं स्वानुचरं न भवति यदुक्तं 'मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ । शुभाशुभं कृतं कर्म गृहीत्वासौ प्रसर्पति १ गृहेष्वर्था निवर्तंते श्मशानान्मित्रबांधवाः । विमुखा यांति ते सर्वे दहत्यग्निः शरीरकं २ शुभाशुभं कृतं कर्म गच्छंतमनुगच्छति ३' इति । तस्य शरीरस्यानुषंगिकाः स्त्रीपुत्रप्रभृतयोनर्थहेतवस्ते किमुत ॥ ३७ ॥ देहः अचिज्जडः भौतिकत्वाद्विकारित्वाद्दृश्यत्वाच्च घटवत्

देहोचित्सर्वगो जीवश्चिदंशोजोऽव्ययो ध्रुवः ।

जीवस्तु चिदंशोतएव न व्येतीत्यव्ययः अविनाशी अतएव स्वेन चैतन्यरूपेण ध्रुवः 'ममैवांशो जीवलोक' इति स्मरणात् । अत एव सर्वगः आकाशवद्गुहाद्युपाधिना परिछिन्नत्वेन प्रतीतोपि न परमार्थतः अत एव न जायत इत्यजो 'न जायते म्रियते वा' इति श्रुतेः तथा चेत्परलोकेहलोकादिसुखादि च कथं तस्येत्यत आह सुखदुःखादिसंबंधोस्य जीवस्य तु अज्ञानाज्जा तोतः स्वप्नवत् तुशब्देन 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति श्रुत्युक्तसंकल्पितत्वं द्योतितं ननु न युक्तमिदमसंसारिणः सर्वज्ञस्य बुद्धिपूर्वकमनेकशतसहस्रानर्थाश्रयं देहमनुप्रविश्य दुःखमनुभविष्यामीति संकल्पनं स्वातंत्र्ये सत्यनुप्रवेशश्चेति । सत्यमेव न युक्तं स्यादिति (यदि) स्वेनाविकृतेन रूपेणानुप्रविशेयं दुःखमनुभवेयमिति च संकल्पितवान्न त्वेवं । तर्ह्यनुप्रवेशवचनस्य का गतिरिति चेज्जीवो ह्यात्माभासमात्रं बुद्धयादिमात्रासंसर्गजनित आदर्श इव प्रविष्टः पुरुषप्रतिबिंबः अचिंत्यानंतशक्तिमत आत्मनो बुद्धयादिसंबंधश्चैतन्यावभास आत्मस्वरूपविवेकाग्रहणनिमित्तः सुखी दुःखी मूढ इत्याद्यनेकविकल्पप्रत्ययहेतुश्छायामात्रेण जीवरूपेणानुप्रविष्टत्वात् स्वतः आत्मा न दैहिकैः सुखदुःखादिभिः संबध्यते यथा पुरुषादित्यादय आदर्शोदकादिछायामात्रेणानुप्रविष्टा आदर्शोदकादिदोषैर्न संबध्यंते तद्वदात्मापि 'सूर्यो यथा सर्वलोकस्य चक्षुः०' इति काठके 'ध्यायतीव लेलायतीव' इति वाजसनेयके च श्रवणात् ननु वाचारंभणमात्रश्चेज्जीवो मृषैव प्राप्तस्तथा चेत्परलोकेहलोकादि च कथं तस्य नैष दोषः सदात्मना सत्वाभ्युपगमात् सर्वं च नामरूपादि सदात्मनैव सत्यं विकारजातं स्वतस्त्वनृतमेव 'वाचारंभणं विकारो नामधेयम्' इति श्रुतेः तथा जीवोपीति यक्षानुरूपो बलिरिति न्यायः प्रसिद्धः अतः शब्दा(सदा)त्मना सर्वव्यवहाराणां सर्वविकाराणां च सत्यत्वं सतोन्यत्वे चानृतत्व-

**स्वप्नवत्सुखदुःखादिसंबंधोऽज्ञानजोस्य तु ॥ ३८ ॥**

**प्रसादात्सद्गुरोः शाब्दपरब्रह्मविदस्त्विदम् ।**

मिति न कश्चिद्दोषस्तार्किकैरिहानुवक्तुं शक्यः यथेतरेतरविरुद्धद्वैतवादाः स्वबुद्धिकल्पनामात्रा अतत्त्वनिष्ठा इति शक्यं वक्तुमिति पूर्वाचार्योक्तिरत्राभ्युपगंतव्या ॥ ३८ ॥ भवतु नामाज्ञानजोस्य सुखदुःखादिसंबंधः तदज्ञानं कस्मादपयाति यदपाये च कृतार्थः पुरुषोनपाये चाकृतार्थः स्यादित्यत आह शाब्दमौपनिषदमात्मविषयकं ज्ञानं परब्रह्मात्मयाथात्म्यं तद्विदः श्रोत्रियाद्ब्रह्मनिष्ठात्सद्गुरोः प्रसादाच्छ्रवणाद्युपदेशात् 'आचार्यवान्पुरुषो वेद' इति श्रुतेः नन्वौपनिषदं ज्ञानं स्वत एवोपनिषद्विचारेण लब्धुं शक्यं पदवाक्यप्रमाणविदः किं पुनः शाब्दपरब्रह्मवित्सद्गुरुप्रयोजनं तत्रोच्यते श्रुत्या तथैवोपदिष्टत्वात् 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' अत्रेदं बोध्यं यथा स्वविषयेभ्यो गंधारेभ्यः पुरुषस्तस्करैरभिनद्धाक्षोऽविवेको दिङ्मूढोशनायापिपासादिमान्व्याघ्रतस्कराद्यनेकभयानर्थव्रातयुतमरण्यं प्राप्तो दुःखार्तो विक्रोशन्बंधनेभ्यो मुमुक्षुस्तिष्ठति स कथंचित्कारुणिकेन केनचिन्मोक्षितस्तदुक्तदिग्दर्शनानुसारी गंधारानेवापन्नो निवृत्तः सुख्यभूत् तथैवमेव सतो जगदात्मनः स्वरूपात्तेजोबन्नादिमयं देहारण्यं वातपित्तकफरुधिरमेदोमांसास्थिमज्जाशुक्रकृमिमूत्रपुरीषवच्छीतोष्णाद्यनेकद्वंद्वदुःखवच्चेदं मोहपटाभिनद्धाक्षो भार्यापुत्रपशुबंध्वादिदृष्टादृष्टानेकविषयतृष्णापाशबद्धः पुण्यापुण्यादिकर्मतस्करैः प्रवेशितोहममुष्य पुत्रो ममैते बांधवाः सुख्यहं दुःखी मूढः पंडितो धार्मिको बंधुमान्जातो मृतो जीर्णः पापी पुत्रो मे मृतो धनं मे नष्टं हा हतोस्मि कथं जीविष्यामि का मे गतिः किं मे त्राणमित्येवमनेकशतसहस्रानर्थजालवानिव कथंचिदिह पुण्यातिशयात्परमकारुणिकं शब्दपरब्रह्मविदं विमुक्तबंधनं सद्गुरुं यदासाद-

छित्वाऽविद्गहनं ज्ञेयज्ञानास्त्रः स्वस्थ इद्भवेत् ॥ ३९ ॥

य उत्तमं ज्ञानपात्रं लब्ध्वा धामाग्रजातिजं ।
नाचरत्यात्मनः श्रेयस्तेनात्मा वंचितो ध्रुवं ॥ ४० ॥

तस्मान्नारब्धविघ्ना मे भव तेंव नमोपि ते ।
पुत्रो भविष्यति ध्यानाद्भवाब्धिं मे तरिष्यसि ॥ ४१ ॥

इत्युक्त्वादर्शयत्तस्यै स्वं रूपं दिव्यमुत्तमं ।
साप्यदभ्रदृशा दृष्ट्वा तद्वित्तप्राग्जनिर्जगौ ॥ ४२ ॥

नमस्ते भगवन्देव प्राग्दृष्टो मर्तुकामया ।
कुपुत्रया मया स त्वं श्रीपादो मेऽद्य गोचरः ॥ ४३ ॥

ब्रह्मापि वेत्ति नो रूपगुणांस्ते मोहिता त्वहं ।
मानुषी त्वां कथं जाने दिष्ट्याद्य ज्ञानमर्पितं ॥ ४४ ॥

यति तेन च कारुण्याद्दर्शितसंसारविषयदोषदर्शनमार्गो विरक्तः संसारविषयेभ्यः नासि त्वं संसार्यमुष्य पुत्रत्वादिधर्मवान् किं तर्हि सद्यत्तत्त्वमसीत्यविद्यामोहपटाभिनहनान्मोक्षितस्त्विदमज्ञानगहनं ज्ञेयस्यानादिमत्परं ब्रह्मेत्यादिलक्षणस्य ज्ञानसाधनैः प्राप्यस्यात्मनो यज्ज्ञानं ज्ञानसाधनममानित्वादि तदेवास्त्रं यस्य स च्छित्वा स्वस्थो भवेन्नान्यः ॥ ३९ ॥ ४० ॥ यस्मादेवं तस्मादिति स्पष्टम् ॥ ४१ ॥ अदभ्रदृशा ज्ञानदृष्ट्या ज्ञाता पूर्वजनिर्यया सा ॥ ४२ ॥ स्मारयति प्रागिति ॥ ४३ ॥ तर्ह्युत्पत्तित एव त्वया कथं न ज्ञात इत्यत आह ब्रह्मेति ॥ ४४ ॥ ईदृग्विधोहं चेत्कथं त्वत्पुत्रो जात इत्यत आह

कृतं मत्कुक्षिसंभूत इति लोकविडंबनं ।
अज ब्रह्मांडकुक्षे न उभयं पावितं कुलं ॥ ४५ ॥
सत्यसंकल्प ते विघ्नं मास्तु रूपं स्थिरीकुरु ।
मर्यादं चात्र भो स्थेयं यावत्पुत्रो भविष्यति ॥ ४६ ॥
तथेत्युक्त्वेशबुद्ध्याऽसौ स्थित्वा ताभ्यां सुपूजितः ।
तत्र शिक्षितवाञ्छिष्यान्विदुषोप्येष वेदवाक् ॥ ४७ ॥
अत्रापि गर्भिणी भूत्वा कालेऽसूत सुतौ शुभौ ।
स त्रैमासिकयोः शिश्वोः प्राहांबां शृणु मेंब भोः ॥४८॥
जातौ द्वौ ते भविष्यंति पुत्रौ पुत्री च सत्तमाः ।
देह्याज्ञां म इति प्रोक्त्वा तदाज्ञतः प्रचक्रमे ॥ ४९ ॥
रेजे शिरस्त्राणविशोभिमूर्धा सुपादुकामंडितपादपद्मः ।
काषायवस्त्रावृतपेशलांगः कौपीनधृग्दंडकरः स्मितास्यः ॥५०॥

कृतमिति ब्रह्मांडाः कुक्षौ यस्य तत्संबुद्धौ मादृङ् नान्य इति संकल्पः संपादितः उभयं पितृकं भर्तृकं च उभादुदात्तो नित्यमिति यत्प्रत्ययः ॥ ४५ ॥ अतो हे सत्यसंकल्प ते विघ्नं विघ्नो मास्तु ॥४६॥ तथेत्युक्त्वा ईशोयमिति बुद्ध्या पितृभ्यां सत्कृतोसौ स्थित्वा विदुषोपि केवलं ज्ञातवेदानपि शासनार्हान् विप्राञ्छिक्षितवान् पदवाक्यप्रमाणोत्थज्ञानमसंदिग्धं तेभ्य उपादिशदित्यर्थः यतोसौ वेदा वाग्यस्य स वेदवाक् ॥ ४७ ॥ शिश्वोर्मासत्रयात्मककालपरिच्छिन्नयोः सतोः ॥ ४८ ॥ अधुनेमौ जातौ विद्येतेतः परं पुत्री पुत्रौ चेति त्रयोपि शोभना भविष्यंति मे मह्यं गंतुमाज्ञां देहीत्युक्त्वा तया मात्रा आज्ञप्तः गंतुं प्रचक्रमे उपचक्रमे ॥ ४९ ॥ पेशलांगः कोमलांगः ॥ ५० ॥ हे अज अर्भस्य बुद्धिरिव बुद्धिर्यस्या-

क्षमस्वार्भबुद्ध्या मयाजापराद्धमिति व्याहरंतीं सतीं त्रिशताब्दैः।
पुनर्दर्शनं मेस्तु सांनिध्यमंब स्मृताविस्थमुक्त्वा ययौ तां निवर्त्य ।।

नायं मर्त्योस्तीश एनं नताः स्म एवं सद्भिः स्तूयमानो मुनीनः।
योगीशोपि द्राग्बदर्याश्रमं सद्द्रष्टुं काशीं प्राप वेषान्मुमुक्षोः ५२

स खेचरत्सह्लज्जिव्ह उन्मन्यावस्थयाऽतपत्।
तपः श्वासोच्छ्वासहीनः काश्यां वज्रासनस्थितः ।।५३।।

भागीरथ्यां त्रिषवणमथाप्लुत्य साष्टांगयोगं
युंजंतं तं सकलमुनयः प्रेक्ष्य सिद्धासनस्थं।

स्तयायं बाल इति बुद्ध्या वा मया मात्रापराद्धं निरोधनबंधनाशनादानानु-
द्धरणसमयोचितक्षालनाद्यकरणैः तत्क्षमस्वेति ब्रुवंतीं त्रिशताब्दैः पुनर्दर्शनं
मेस्तु भवतु स्मृतौ स्मरणे कृते च सति मे सांनिध्यं अस्तु हृदीति शेषः
इत्थं इदमस्थमुप्रत्ययः तां मातरं तान् आगतान्वा निवर्त्य परावर्त्य ।।५१।।
अयं मरणधर्मा न किंत्वीशोस्ति एनं अस्मै नताः स्मः मुनीनो मुनिश्रेष्ठः
शीघ्रं बदर्याश्रमं द्रष्टुं गच्छन्मुमुक्षुवेषेण न तु मुमुक्षुर्नित्यमुक्तत्वात् काशीं प्राप
।। ५२ ।। खे आज्ञाचक्रे चरंती सह्लजिव्हा यस्य स एतेन खेचरीमुद्रोक्ता।
'यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी' इत्युक्तलक्षणयावस्थयाऽतएव
श्वासोच्छ्वासहीनः एतेन केवलकुंभक उक्तः वज्रासनस्थितः सिद्धासनेनो-
पविष्टः 'एतत्सिद्धासनं प्रोक्तमन्ये वज्रासनं विदुः' इत्युक्तेः जितासनो वा
सः लोकशिक्षार्थं तपोतपत् 'तपसा ब्रह्म विजिज्ञासस्व' इति श्रुतेः ।।५३।।
भागीरथ्यां स्नात्वा त्रिषवणं योगम्प्रत्यगात्मपरमात्मैकत्वलक्षणध्यानं युञ्जन्तं
तम् अभ्यसन्तम् परतरे धीर्ययेदृश्या खेचर्याख्यमुद्रया एको मुख्यः
केवलाख्यः स चासौ कुंभः 'न कुंभः केवलोपम' इत्युक्तेः तस्मिन्नुद्युक्तं

नत्वाष्टांगैः परतरधिया खेचरीमुद्रयैक-
कुंभोद्युक्तं जगुरुपरता नादसिद्धोत्समाधिं ॥ ५४ ॥
भवान्परात्मास्ति न मर्त्यबालः सद्धर्मगुप्त्यै विधृतावतारः।
प्राक् शंकराचार्यमतोपि लुप्तः संन्यास एनं वितनोतु तिष्ये ५५
कष्टोत्थाद्यंतवत्स्पर्शभूभोगसुरतात्मभिः ।
उच्छिन्नोध्यात्मसौख्याज्ञैरयं कलिहतात्मभिः ॥ ५६ ॥

नादेनाभ्यस्तेनानाहतेन सिद्ध उत्कृष्टसमाधिर्निर्विकल्पाख्यो यस्य तं परतरधियेत्यत्रायं परतरः परमात्मेति या धीस्तया वा अष्टांगैर्नत्वा साष्टांगं प्रणम्य सकलमुनय उपरताः संतो वक्ष्यमाणं जगुः ऊचुरित्यर्थः ॥ ५४ ॥ तदाह भवानिति सतां धर्मस्य च गुप्त्यै कृतावतारः पूर्वं शंकराचार्यमतोप्यधुना तिष्येऽस्मिन्कलौ लुप्तः संन्यासमार्ग एनं भवान्विशेषेण तनोतु ननु 'अग्निहोत्रं गवालंभं संन्यासं पलपैतृकं । देवराच्च सुतोत्पत्तिं कलौ पंच विवर्जयेत्' इति निषिद्धत्वात्कथं संन्यास एनं वितनोत्विति भवद्भिरुक्तमिति चेत् 'यावद्वेदः प्रवर्तेत यावद्वर्णः प्रदृश्यते । अग्निहोत्रं च संन्यासं तावत्कुर्यात्कलौ युगे' इति स्मृतत्वादुक्तमस्माभिः संन्यास एनं वितनोतु तिष्य इति ॥५५॥ ननु पूर्वसिद्धविषयसुखासक्तैः कुतोयं कष्टरूपः संन्यास आश्रयणीयो मोक्षसुखार्थमिति चेन्मोक्षसुखस्य नित्यत्वे निरुपाधिकत्वे निरतिशयत्वे च कथं तत्प्रातिकरः संन्यासमार्गस्तैरुच्छिन्न इत्यत आह स्त्रीपुरुषयोःपरस्परप्रेमसंपादनादिलक्षणात्कष्टादुत्थिता आतश्चोपसर्गे इति कप् (कः) आद्यंतवन्तो ये स्पृश्यंत इति स्पर्शास्त एव भूरुद्भवस्थानं येषां ते च ते भुज्यंत इति भोगा विषयसुखानि पारतंत्र्यात्सोपाधिकानि क्षणभंगुराणि सातिशयानि च तेषु सुखबुध्या सुतरां रत आत्मा मनो येषां तैः आत्मन्यधिकृत्य वर्तमानं अध्यात्मं तच्च तत्सौख्यं तन्न जानंति ते तथोक्तैः कलिदोषहतबुद्धिभिरयमुच्छिन्नः ॥५६॥ भीरूणामुग्रे सुलभं क्षेमं यस्मिन् तस्मिन्

भीरूग्रे सुलभक्षेमे कलौ संन्यासवर्त्मना ।
अध्यात्मपरमानंदं भगवन्दातुमर्हसि ॥ ५७ ॥
इत्याश्रुत्योक्तमाचार्यं वृत्वा कृष्णसरस्वतीं ।
ततः संन्यास्यभून्नाम्ना स नृसिंहसरस्वती ॥ ५८ ॥
न्यस्तसूत्रशिखो रेजे न्यस्तसर्वैषणो वशी ।
संन्यस्ताखिलसंकल्पः संन्यासी निर्ममोद्वयः ॥ ५९ ॥
संन्यासपद्धतिं प्राह मुमुक्षुभ्यो जगद्गुरुः ।
विरजोमांच्छुचिर्देवीं प्रविष्टो हापितैषणः ॥ ६० ॥
संन्यस्तसकलोसूत्रचूडो दंडी गुरुं भजेत् ।
प्रज्ञानं ब्रह्मायमात्मा ब्रह्म तत्त्वमसीति च ॥ ६१ ॥

कलौ ॥५७॥ इति तैरुक्तमाश्रुत्यांगीकृत्याचार्यत्वेन कृष्णसरस्वतीं वृत्वा ततः स नामतो नृसिंहसरस्वती संन्यासी अभूत् ॥ ५८ ॥ न केवलं नामतः क्रियातोपीत्याह न्यस्ते सूत्रशिखे येन न्यस्तास्तिस्त्र एषणा येन वशी जितेंद्रियः सम्यङ्न्यस्ता अखिलसंकल्पा येन स ममतारहितस्त्यक्तसुखदुःखादिद्वंद्वसंबंध ईदृशः संन्यासी अभूत् । 'कोयं मुख्य इति चेदयं मुख्य' इति परमहंसोपनिषदुक्तो मुख्यसंन्यासोयं 'यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः' इति श्रुतेः ॥५९॥ ततो जगद्गुरुर्मुमुक्षुभ्यः संन्यासपद्धतिं प्राह प्रायश्चित्तेन शुचिः कृतविरजाहोमः देवीं गायत्रीं प्रविष्टस्त्यक्तैषणः॥ ६०॥ स्ववांतवत्सम्यङ्न्यस्तं अखिलं ब्रह्मलोकपर्यंतं भोगजातं येन स सूत्रशिखारहितः 'कौपीनं दंडमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्योपकारार्थाय च परिग्रहेत्' इत्युक्तं ज्ञापयितुं दंडीत्युक्तं तेनायं पूर्वोक्तवन्न मुख्यः यतः संन्यासो द्विविधः विविदिषासंन्यासो विद्वत्संन्यासश्चेति तत्रायं विविदिषासंन्यासः गुरुं भजेदित्युपसंहारात् । 'प्रज्ञानं ब्रह्म' इत्यृग्वेदवाक्यं १ 'अहं ब्रह्मास्मि' इति यजुषः २ 'तत्त्वमसि' इति साम्नः ३ ॥ ६१ ॥ 'अयमात्मा ब्रह्म'

अहं ब्रह्मास्मीति महावाक्यान्याप्त्वार्थतो वशी ।

इत्यथर्ववाक्यं नात्र पाठक्रमः एतानि सार्थानि ज्ञात्वा वाक्यानां त्वयमर्थः तावत्प्रज्ञानं ब्रह्मेत्यस्यार्थोयं 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' इति वाक्येन ब्रह्मणो लक्षणमभिधाय 'स ईक्षत लोकान्नु सृजा' इत्युपक्रम्य 'तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोयमावसथोयमावसथ' इति दैनंदिनव्यवहारार्थं नेत्रकंठहृदयस्थानानि देहांतरव्यवहारार्थं पितृशरीरमातृशरीरस्वशरीराणीत्यादिरूपं प्रपंचजाताध्यारोपणप्रकरणमभिधाय 'स जातो भूतान्यभिव्यैख्यत्किमिहान्यं वावदिषत्'इति तस्यारोपितस्यापवादमभिधाय 'स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती३' इति प्रत्यगात्मनो ब्रह्मस्वरूपत्वमभिहितं पुनश्च 'पुरुषेहव' इत्यादिना ज्ञानसाधनवैराग्यजननाय गर्भवासादिदुःखं प्रदर्श्य प्रज्ञारूपस्यात्मनो ब्रह्मरूपत्वं 'प्रज्ञानं ब्रह्म' इत्यनेन वाक्येन प्रदर्शितं अथ विद्यारण्यसंमतो वाक्यचतुष्टयार्थः 'येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च। स्वाद्वस्वादू विजानाति तत्प्रज्ञानमुदीरितं। चतुर्मुखेंद्रदेवेषु मनुष्याश्वगवादिषु। चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि' १ इ. ऋ. वा० 'परिपूर्णः परात्मास्मिन्देहे विद्याधिकारिणि। बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते। स्वतःपूर्णः परात्मात्र ब्रह्मशब्देन वर्णितः। अस्मीत्यैक्यपरामर्शस्तेन ब्रह्म भवाम्यहं' २ इ. य०। 'एकमेवाद्वितीयं सन्नामरूपविवर्जितं। सृष्टेः पुराधुनाप्यस्य तादृक्त्वं तदितीर्यते। श्रोतुर्देहेंद्रियातीतं वस्त्वत्र त्वंपदेरितं। एकता ग्राह्यतेसीति तदैक्यमनुभूयतां' ३ इ० साम०। 'स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतं। अहंकारादिदेहांतात्प्रत्यगात्मेति गीयते। दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते। ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम्' इति अथ.वा०४। एवमेतैश्चतुर्भिर्वाक्यैरवांतरवाक्यसहितैः परोक्षज्ञानं भवेत्॥ ततो मननादि-

पंचीकरणविल्लब्धसंज्ञः शौची स्वधर्मवित् ॥ ६२ ॥
दैवभावो योगपट्टी संन्यासी श्रेयसेर्हति ।
गतिज्ञो धारणाभ्यासाज्जीवन्मुच्येत्परात्मदृक् ॥ ६३ ॥
ब्रह्मीभूतस्य गव्यात्मा व्यसुः क्षेप्योऽप्क्रियादि नो ।
इत्युक्त्वा ग्राहयामास संन्यासं स्वधिकारिणः ॥ ६४ ॥

क्रमेण ब्रह्मापरोक्षज्ञानमसंदिग्धं भवेत् । यदुक्तं 'सर्वत्रैव महावाक्यविचारादपरोक्षधीः । ब्रह्मापरोक्षसिद्ध्यर्थं महावाक्यमितीरितं । वाक्यवृत्तावतो ब्रह्मापरोक्ष्यविमतिर्न हि ' इति । एवं सार्थानि ज्ञात्वा पंचीकरणज्ञः लब्धा संज्ञा ज्ञानं नाम वा येन बाह्यांतरशौचयुक्तः स्वधर्मज्ञः ॥ ६२ ॥ दैवीसंपत्तियुक्तः योगपट्टयुक्तश्चैवं संन्यासी मोक्षाय योग्यो भवति 'रश्म्यनुसारी अतश्चायनेपि हि दक्षिण' इति न्यायेनोत्तरायणादिकालविशेषमरणस्य विवक्षितत्वाद्दिनरात्र्यादिकालाभिमानिदेवताप्राप्यमार्गो गतिसंज्ञकः तं जानातीति वा गतिज्ञः सर्वेंद्रियप्रत्याहारपूर्वकं नाभ्यादिदेशे चित्तस्य स्थिरीकरणं धारणा तदभ्यासात्परे ब्रह्मणि आत्मनि प्रत्यग्रूपे चाभेदेन दृगयस्य स जीवन्नेवाविद्याकामकर्मादिभ्यो मुच्यते ॥ ६३ ॥ ईदृशस्य ब्रह्मीभूतस्य व्यसुः गतप्राण उपलक्षणमेतत्कलानां 'गताः कलाः पंचदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ॥ कर्माणि विज्ञानमयश्च आत्मा परेव्यये सर्व एकीभवंति ' इति श्रुत्युक्तमनुसंधेयं । व्यसुरात्मा देहो गवि सति सम्भवे जलेन्यथा भुवि क्षेप्यः न दाह्यः गोशब्दस्य जले भुवि च स्मरणात् ' यदु चैवास्मिञ्छव्यं कुर्वंति यदु च न ' इत्यत्र भाष्यकृद्भिः शवकर्मैवंविदो नेति निषिद्धं अप्क्रियादि अंजलिदानपिण्डनिर्वापैकोद्दिष्टश्राद्धसपिण्डीकरणमासिकश्राद्धादि न कार्यं मुक्तत्वात् । पुत्रश्चेत्पार्वणश्राद्धं चरेत् तत्र ब्रह्मीभूतशब्देनानुष्ठानं इतरपितृदानार्थं पुत्रस्य पुत्रत्वसिध्यर्थं च । स्वधिकारिण इत्यनेनाधिकारं विना कृतः संन्यासः पातायेति ज्ञेयं ॥६४॥ अमृ-

ततः प्रभृति संन्यासः संप्रवृत्तोमृतायनः ।
काश्यां पुमर्थवेदार्थान्प्रकाश्योत्तरवर्त्मना ॥ ६५ ॥

मेरुं प्रदक्षिणीकृत्य पूतात्मापि सुशिष्ययुक् ।
तीर्थस्नातो ययौ गंगासागरं भक्तगुप्तये ॥ ६६ ॥

कारयित्वा बहिःस्पर्शान्बाह्यान्सोन्ते दृशं भ्रुवोः ।
प्राणापानौ च खे तुल्यौ यतिभ्यो योगमादिशत् ॥६७॥

प्रयागेथैत्य संन्यासं माधवब्रह्मणे ददौ ।
विभुस्तत्त्वोपदेशं च निजोद्भवभुवं ययौ ॥ ६८ ॥

तायनो मोक्षमार्गभूतः पुंसामर्था धर्मादय एभ्यस्ते च ते वेदार्थाः 'वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वर' इत्युक्तेः तान्प्रकाश्योत्तरमार्गेण मेरुं प्रदक्षिणीकृत्य स्वयं पूतात्मापि तीर्थैः स्नातो भक्तरक्षार्थं व्रजन् गंगासागरं ययौ ॥ ६५ ॥ ६६ ॥ बाह्याः स्पर्शा रूपरसादिविषयाश्चिंतिताः संतोंतः प्रविशंति तांस्तच्चिंतात्यागेन बहिरेव कारयित्वा अत्यंतनेत्रनिमीलने निद्रया मनो लीयते उन्मीलने च बहिः प्रसरति तदुभयदोषपरिहारार्थमर्धनिमीलनेन भ्रूमध्ये दृष्टिं कारयित्वोच्छ्वासनिःश्वासरूपेण नासिकयोरभ्यंतरे चरंतौ प्राणापानावूर्ध्वाधोगातिनिरोधनेन समौ कारयित्वा खे हार्दाकाशे यद्वा यथा प्राणो बहिर्न यात्यपानो नांतः प्रविशति च किं तु नासामध्य एव द्वावपि चरतस्तथा मंदाभ्यामुच्छ्वासाभ्यां तुल्यौ कारयित्वा ॥ ६७ ॥ माधवशर्मणे ब्राह्मणाय निजोद्भवभुवं स्वजन्मभूमिम् ॥ ६८ ॥ अस्य श्रीगुरोः 'आचिनोति हि शास्त्रार्थमाचारे स्थाप-

॥ नामधारक उवाच ॥

यत्प्रसादान्नरा मुक्ता अद्वैतामृतवर्षिणः ।
भवंत्यस्य किमाचार्यैः कोयं कृष्णसरस्वती ॥ ६९ ॥

॥ सिद्ध उवाच ॥

सांदीपनिवसिष्ठाद्याः कृष्णरामादिभिर्वृताः ।
गुरवोपि तथाजेन वृतः कृष्णसरस्वती ॥ ७० ॥
मानुष्यं लीलयासाद्य स तद्वद्वर्तते न चेत् ।
वर्तेत संकरो लोके भवेत्तदनुवर्तितः ॥ ७१ ॥
येनाध्यक्षेण मा सूते जगत्तेन न बद्ध्यते ।
असक्तो यमुदासीनवत्स्थितः किमुतेतरैः ॥ ७२ ॥
शिष्यो विष्णुः पुरेशस्य विष्णोर्विधिरभूद्विधेः ।
वसिष्ठस्तस्य शाक्त्योस्य व्यासस्तस्य शुकोस्य तु॥७३॥

यत्यपि । स्वयं चाचरते यस्मात्तेनाचार्यः स उच्यते' इत्येवंलक्षणैराचार्यैः किं प्रयोजनं कोयमिति प्रश्नांतरम् ॥ ६९ ॥ अनेन श्रीगुरुणापि तथा ॥ ७० ॥ लीलया मानुष्यमासाद्य स तद्वद्वर्तते विपक्षे बाधमाह तथा न वर्तेत चेत्तदनुवर्तिलोकतः लोके संकरो भवेत् ॥ ७१ ॥ तर्हि तेन स बध्येतेत्यत आह अध्यक्षेणाधिष्ठात्रा निमित्तभूतेन कर्त्रा मा माया प्रकृतिः सूते तेन सृष्ट्यादिकर्मणा न बध्यते कर्मासक्तिर्हि बंधहेतुः स चाप्तकामत्वादीश्वरस्य नास्ति यतोयमसक्तः तत्कर्मासक्तिरहितः तर्हि कर्तृत्वमित्यत आह उदासीनवत्स्थित उदासीनत्वे कर्तृत्वानुपपत्तेः कर्तृत्वे चोदासीनत्वानुपपत्तेरतस्तद्वदित्युक्तं संनिधिमात्रेणाधिष्ठातृत्वात्कर्तृत्वमुदासीनत्वं चाविरुद्धं अत इतरैर्न बध्यत इति किमु वक्तव्यं ॥ ७२ ॥ द्वितीयमुत्तरं वक्तुं तावदादितो गुरुपरंपरामाह शिष्य इति पुरा प्रथमं शाक्त्य इत्यत्र वसिष्ठस्य शक्तिः शक्तेः शाक्त्यः पराशरः अस्य व्यासः तस्य शुकः अस्य

**गौडपादोस्य गोविंदः शङ्करस्तस्य तस्य तु ।**
**विश्वरूपस्तस्य बोधज्ञानः सिंहगिरिस्ततः ॥ ७४ ॥**

**तस्येश्वरो नृसिंहोस्य विद्यातीर्थं ततः शिवः ।**
**तस्य भागीरथीतीर्थं विद्यारण्योस्य तस्य तु ॥ ७५ ॥**

**शिष्योभून्मलयानन्दो देवतीर्थं सरस्वती ।**
**यादवेन्द्रोस्य तस्यायं शिष्यः कृष्णसरस्वती ॥ ७६ ॥**

**सर्वे स्वदीक्षांकिताख्या जाताः कृष्णसरस्वती ।**
**पारंपर्योत्तमो ज्ञानी वृद्धोतोयं वृतोमुना ॥ ७७ ॥**

**इति० नृसिंहसरस्वत्यवतारकथनं नामाष्टमोऽध्यायः॥८॥**

॥ ७३॥ गौडपादः अस्य गोविंदः तस्य श्रीशंकराचार्याः तस्य विश्वरूपः तस्य बोधज्ञानः तस्मात्सिंहगिरिः ॥ ७४ ॥ तस्येश्वरः अस्य नृसिंहः अस्य विद्यातीर्थं ततः शिवतीर्थं तस्य भागीरथीतीर्थं तस्य विद्यारण्यं तस्य मलयानंदशिष्योऽभूत् तस्य देवतीर्थं तस्य सरस्वतीयादवेंद्रः अस्यायं शिष्यः कृष्णसरस्वती ॥ ७५ ॥ ७६ ॥ एते सर्वे स्वदीक्षांकिताख्या जाताः अयं भावः तीर्थाश्रमादिदशोपपदानि उपदेशदंडदानादिदीक्षयैव गुरुवच्छिष्यस्य भवंति नान्यथा अत्र त्वयं क्रमो ज्ञानोपदेशपरंपरयैव अयं तादृशपरंपरयोत्तमो ज्ञानी वृद्धश्चातो हेतोरमुना श्रीगुरुणाचार्यत्वेन वृतः ' आचार्यस्ते गतिं वक्ता ' इति श्रुतिहार्दं दर्शयितुं ॥ ७७ ॥

इति टीकायामष्टमः ॥ ८ ॥

# नवमोऽध्यायः

॥ नामधारक उवाच ॥

**भगवानपि संन्यासं प्रगृह्य स्वजनुःस्थलम् ।**
**कुतो यातोस्य शिष्याः स्युः के के किमकरोत्ततः ॥१॥**

॥ सिद्ध उवाच ॥

**महीं प्रदक्षिणीकृत्य प्रतिज्ञातानुसार्यजः ।**
**मातरं द्रष्टुमाप्तो हि माता वंद्या यतेरपि ॥ २ ॥**

॥ श्रीगणेशाय नमः ॥ अथ नवमाऽध्यायः ॥ नवमे जन्मभूमिं स दृष्ट्वो-दररुजार्दितं ॥ द्विजं यवनभीतं च त्रात्वा तीर्थाद्यवर्णयत् १ पूर्वाध्याये न्यस्तसूत्रशिखो रेजे न्यस्तसर्वैषणो वशीत्यादिना भगवतः संन्यासमुक्त्वाप्य ध्यायांते निजोद्भवभुवं ययावित्युक्तं तत्संन्यासिनोनुचितं मन्वानो नामधारक उवाच समग्रज्ञानवैराग्यादिसंपन्नोपि लोकशिक्षार्थं संस्यासाश्रमं स्वीकृत्य स्वजन्मभूमिं प्रति कुतो यातो वद किं चास्य के के शिष्याः स्युः ततः स्वजन्मस्थलागमनानंतरं भगवान् किमकरोत्तद्वदस्व ॥ १ ॥ त्रिंशताब्दैः पुनर्दर्शनं मेस्त्विति प्रतिज्ञातानुसारेण संन्यासिनोपि वंद्याया मातुर्दर्शनार्थं भगवत आगमनमित्युत्तरं दित्सुः सिद्ध उवाच महीमिति प्रगतो दक्षिणं तिष्ठद्गु० चेत्यव्ययीभावः ततश्च्विरप्रदक्षिणं प्रदक्षिणं संपाद्यमानं कृत्वा अजशब्देनास्य लोके नृदेहविडंबनमिति सूचितं 'तस्मादेवं विदुषा सत्यमेव वदितव्यं समूलो वा एष परिशुष्यति योनृतमभिवदति' इति श्रुतेर्लोकसंग्रहार्थं प्रतिज्ञातमनुसरतीति प्रतिज्ञातानुसारी मातरं द्रष्टुं प्राप्तः हि यस्माद्यतेरपि माता वंद्या कुतो यात इत्यस्योत्तरमिदम् ॥ २ ॥ के के शिष्या इत्यस्यो-

शिष्या हि बहवो जाता बालः कृष्ण उपेंद्रकः ।
ज्ञानज्योतिः सदानन्दो माधवोहं च सप्तमः ॥ ३ ॥

सरस्वत्यंतसंज्ञाः स्युरेते मुख्यास्तु भूरिशः ।
आसन्नन्ये स तैः साकमाययौ स्वजनुःस्थलम् ॥ ४ ॥

पितरौ प्रेक्ष्य बंधूंश्च भगिनीमितरानपि ।
तत्राददे विश्वरूपः पूजां प्रत्यालयं क्षणात् ॥ ५ ॥

त्तरमाह शिष्या हीति लोके ह्यायुष्कामतया ज्येष्ठापत्यस्य नाम्नोनुच्चार्यत्वात्पित्रादिर्बाल इति नाम्ना व्यवहरति तथा भगवतापि प्राथमिकस्य पुत्रस्थानीयस्यांतेवासिनो बालसरस्वतीति नाम निर्दिष्टं शिष्यस्यापि पुत्रवद्गौणात्मत्वात् यथा व्यवहारे प्रव्रजन् म्रियमाणो वा पिता त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति पुत्रमनुशास्ति सोनुशिष्टोहं ब्रह्माहं यज्ञोहं लोक इति प्रतिवदति त्वयाधीतं ब्रह्माहं अहं ब्रह्म वेदमध्येष्याम्यध्यापयामि च त्वयानुष्ठितो यज्ञोहं अहं यज्ञमनुतिष्ठामि त्वया संपादितो लोकोहं अहं स्वरादिलोकं संपादयिष्यामीति भावः । अतएवोक्तमैतरेये 'सोस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयत ' इति एवमेव पारमार्थिके मार्गे परंपराविच्छेदाय गुरुणापि शिष्यः प्रतिधीयते शिष्यप्रशिष्यादिपरंपरायाः कुलत्वेन श्रुत्याभिहितत्वात् ' नास्याब्रह्मवित्कुले भवति'इति मुंडमांडूक्यादावुक्तत्वात् अहं सिद्धः ॥३॥परमगुरोः कृष्णसरस्वत्या दक्षिणमठसंप्रदायानुसारेण श्रीगुरोर्नरसिंहसरस्वतीत्यभिधानं यथा प्राप्तं तथाऽस्मदादीनां तच्छिष्याणां सरस्वतीति प्रतिष्ठितनाम्नोन्ते संज्ञा येषां ते सप्त मुख्या अन्ये तु बहुशस्तादृशा आसन् तैः शिष्यैः सह ॥ ४ ॥ मातापितरौ पूर्वाश्रमसंबंधिनौ अवलोक्य तत्र करंजनगरे विश्वरूपो भूत्वा तत्रत्यानां भक्तिवशात्प्रतिगृहं गत्वा पूजामाददे स्वीकृतवान् ॥ ५ ॥

पित्रार्चितममुं दृष्ट्वा प्राक्स्मृत्यांबाब्रवीत्प्रिय ।
मृत्यून्मुखीं कुपुत्रां मां योरक्षच्छ्रीपदस्त्वयं ॥ ६ ॥

मादृग्भवेत्सुत इति प्रतिज्ञातसुसिद्धये ।
स्वदृगन्यसुताभावात्स्वयमेवाभवत्सुतः ॥ ७ ॥

श्रीपाद मे त्वं न सुतोसि देव भवार्णवादुद्धर मा हरेज ।
लोकानुसारी खलु वर्तसे चेत्संबंधमेनं स्मर पुत्र मातुः ८

कालदैवक्रियेशात्मद्रव्यांगास्वात्मवैकृताः ।
तत्संघातः प्रवाहोसौ त्वन्मायैतां निवारय ॥ ९ ॥

पित्रा माधवेन पूजितं अमुं श्रीगुरुं दृष्ट्वा तत्प्रसादलब्धया प्राक् स्मृत्यांबा श्रीगुरुमाता स्वपतिमब्रवीत् हे प्रिय पूर्वजन्मनि कुपुत्रां मृत्यून्मुखीं मां योऽरक्षत्सोयं श्रीपादः ॥ ६ ॥ स्वसदृशाऽन्याभावात्प्रतिज्ञासिद्ध्ये स्वयमेव मे सुतोभवत् ॥ ७ ॥ इत्युक्त्वांबा श्रीगुरुं प्रति वदति श्रीपादेति भो पुत्राहं तव पुत्र इति लोकानुसारी वर्तसे चेन्मातुः संबंधं स्मर तत्किं नरकादुत्तारय पुंनामनरकात्त्रायत इति पुत्र इति स्मरणात् ॥ ८ ॥ कालः क्षोभकः क्रिया कर्म निमित्तं तदेव फलाभिमुखमभिव्यक्तं दैवं आत्मा स्वभावस्तत्संस्कारः ईशो जीवस्तद्वान् द्रव्यं भूतसूक्ष्माणि अंगं शरीरं असुः प्राणः सूत्रं आत्माहंकारः वैकृत एकादशेन्द्रियाणि महाभूतानि चेति षोडशकः तत्संघातो लिंगदेहः असौ प्रवाहः देहाद्बीजरूपं कर्म ततोंकुररूपो देहस्ततः पुनरेवमिति प्रवाहः असौ इयं त्वन्माया मिथ्याभूतापि भावरूपा दुरत्यया अत एव त्वमेवैतां निवारय ॥ ९ ॥ तरति विद्यमाना तारिष्यति भव्या कुलैकविंशतिः पित्रो-

॥ श्रीगुरुरुवाच ॥

संन्यासी यत्कुले जातस्तरत्यपि तरिष्यति ।
कुलैकविंशतिः पित्रोर्दुर्गताप्यमृतं लभेत् ॥ १० ॥
जातोत्रायं हि संन्यासी भो मातस्तेथ किं वद ।
संपत्प्रजान्वितानां वः काश्यां मुक्तिर्भविष्यति ॥११॥

॥ भगिन्युवाच ॥

गतिर्मे काग्रतः स्वामिन्भवसिंधोर्बिभेम्यहं ।
पापिष्ठां मोद्धर हरे सद्गुरुस्त्वं हि मे प्रभो ॥ १२ ॥

॥ श्रीगुरुरुवाच ॥

पतिसेवनमेवैकं तारकं नापरं स्त्रियाः ।
पातिव्रत्यं भज ततो भवाब्धेः पारमेष्यसि ॥ १३ ॥
दंपत्योः प्राक्कृतं वैरं त्वया गौर्लत्तया हता ।
अतः पत्युर्यतित्वं ते कुष्ठं चांगे भविष्यतः ॥ १४ ॥

मतापित्रोः दुर्गतापि नरकगतापि अमृतं आपेक्षिकं ॥ १० ॥ अत्र भवत्कुलेऽयमहं परमात्मा भो मातः किं तेवशिष्टं कृत्यं वद न किमप्यवशिष्टं तदेव दर्शयति ऐहिकसंपत्प्रजायुक्तानां युष्माकं काश्यां मुक्तिर्भविष्यति ॥ ११ ॥ अग्रतः इतः परं मे मम का गतिः भविष्यति तां वद यतोहं भवसिंधोर्बिभेमि हि यतस्त्वं मे सद्गुरुः अतः भो हरे पापिष्टां मामुद्धर ॥१२॥ यतः स्त्रियः पतिसेवनं पातिव्रत्यमेव केवलं तारकं नापरं तारकं ततस्तस्मात् भज सेवय ॥ १३ ॥ प्राक्पूर्वजन्मानि स्वगृहसमीपस्थयोर्दंपत्योर्वैरं परस्परं विद्वेषः लत्तया लत्ताप्रहारेण हता ताडिता अतः पापात् यतित्वं संन्यासित्वं दंपतीवैरसंपादकरूपपापकर्मविपाकजं फलमिदं ते तवांगे अंगान्यस्यास्तीत्यंगं अर्शआदित्वादच् तस्मिन्नंगे शरीरे श्वेतकुष्ठं च भविष्यतः कर्मफलस्या-

इति श्रुत्वातिखिन्नाभूत्तामाश्वास्याह सद्गुरुः ।
वार्धक्ये तूभयं तेस्तु नश्येन्मे दर्शनात्कुरुक् ॥ १५ ॥
इत्युक्त्वा तदनुज्ञातः सशिष्यो गौतमीं ययौ ।
याऽऽनीता गौतमेनेशाद्गोहत्याव्यपनुत्तये ॥ १६ ॥
तामेत्याप्लुत्य भगवान्मुनिं माधवसंज्ञकम् ।
भक्तं गतागतान्मुक्त्वा स्तुतस्तेनाग्रतोगमत् ॥ १७ ॥
सशिष्योग्रे व्रजन्दृष्ट्वा गंगायां मर्तुमुत्सुकं ।
विप्रं गलशिलं कंचिदादिष्टैस्तं कृपानिधिः ॥ १८ ॥
छात्रैरुद्धारितं दीनं शूलरोगाकुलं प्रभुः ।
दयनीयतमं प्राह विधत्से साहसं कुतः ॥ १९ ॥

वश्यंभावित्वात् 'अवश्यमनुभोक्त०' मिति स्मृतेः ॥ १४ ॥ इति श्रुत्वा सा भयेनातिखिन्नाभूत् तां रत्नाख्यां भगिनीं मा भीरित्याश्वास्य सद्गुरुस्तामाह प्राह हे रत्ने ( रत्नवति ) ते वार्धक्ये तूभयं पत्युर्यतित्वं कुष्ठं चास्तु भवतु तयोर्मध्ये एकं पत्युर्यतित्वं स्थास्यत्येव अपरं कुरुक् कुष्ठं मम दर्शनादेव नश्येत् ॥ १५ ॥ इत्युक्त्वा दक्षिणदिशं गन्तुकामः सशिष्यो भगवान् तैः भगिनीबांधवमातापित्रादिभिरनुज्ञातो गौतमीं प्रययौ का सा गौतमी या गौतमेन तपसा तोषितादीशाद्गोहत्याव्यपनुत्तये आनीता स्वर्गात्सह्याद्रावुत्तारिता ऋषिभिः स्वार्थसिद्धये मायाविनिर्मिताया गोगौतमस्य करस्पर्शमात्रेण प्राणोत्क्रमणाद्गोहत्या जातेति कौर्मे सविस्तरमुक्तं ॥ १६ ॥ तां गोदावरीमागत्य स्नात्वा गतागतात् द्वंद्वैक्यं जन्ममरणरूपात्संसारान्मुक्त्वा मोचयित्वेत्यर्थः तेन माधवेन स्तुतो भगवान् ॥ १७ ॥ गंगायां गोदावर्यां मर्तुमुद्युक्तं निमज्जनार्थं गळे बद्धा शिला यस्य ॥ १८ ॥ आदिष्टैराज्ञप्तैश्छात्रैः शिष्यैरुद्धारितं दीनं दयनीयतमं शूलरोगव्याप्तं विप्रं प्राह भो विप्र कुतः साहसं

॥ विप्र उवाच ॥

किं करिष्यसि मां पृष्ट्वा मरिष्ये शूलकातरः ।
कथं जीवामि रोगोन्नवैर्ययं दुःसहः सदा ॥ २० ॥
प्राणोन्नं जीवनं चान्नं लयोन्नं जीवमन्नमुत् ।
उद्भवोन्नं कथं स्थेयमृतेन्नात्तन्मृतिर्वरम् ॥ २१ ॥
भवांतरेत्र वा नान्नं दत्तं पुण्यं न वा कृतं ।
गोविप्रग्रासोपहृतो निंदिताः पितरौ गुरुः ॥ २२ ॥
नेशोर्चितो वातिथयो ह्रापिता धिक्कृता द्विजाः ।
मिष्टान्नं पितरौ त्यक्त्वा साकं भुक्तं स्त्रिया मया ॥२३॥

विधत्से करोषि हा कष्टं ॥ १९ ॥ मां पृष्ट्वा दुःखनाशं करिष्यासि किं अन्नवैरी अयं रोगः सर्वदा दुःखेनापि सोढुमशक्यः तस्मात्कथं केन प्रकारेण जीवामि कथंचिदपि जीवनप्रकारो न लक्ष्यतेऽतः शूलरोगत्रस्तो मरिष्ये ॥ 'बलासः प्रच्युतस्थानात्पित्तेन सह मूर्छितः ॥ वायुमादाय कुरुते शूलं जीर्यति भोजने ॥ कुक्षौ जठरपार्श्वेषु नाभौ बस्तौ स्तनांतरे ॥ पृष्ठ-मूलप्रदेशेषु सर्वेष्वेतेषु वा पुनः ॥ भुक्तमात्रेथवा वांते जीर्णान्ने च प्रशाम्यते॥ षाष्टिकव्रीहिशालीनामोदनेन विवर्धते ॥ तत्परिणामजं शूलं दुर्विज्ञेयं महागदम्' इति वैद्यके उक्तत्वात्सदा दुःसहः भुक्तमात्र इत्यनेन क्वचिच्छमा-भासः ॥ २० ॥ यतोन्नं प्राणः 'शुष्यति वै प्राण ऋतेन्नात्' इति हि श्रुतेः । अन्नं जीवनं अन्नं लयः निद्रारूपः अन्नं जीवनमौषधं ॥ अन्नं रेतोरूपेण परिणतं उद्भवः अन्नं विना कथं स्थातुं योग्यं तत्तस्मान्मृतिर्वरं मनाक्प्रिया ॥ २१ ॥ जन्मांतरेत्र जन्मनि वा क्षुधितेभ्योन्नं न दत्तं ॥२२॥ ईश्वरो न पूजितः ह्रापिता बलान्निःसारिताः स्त्रिया साकं भार्यया

इति भात्यन्यथा नेदृकष्टं भो मय्युपस्थितं ।
कुतो नान्योपकारो भूभारो मोघभवोऽभवं ॥ २४ ॥
॥ श्रीगुरुरुवाच ॥
मा भीर्दास्येऽन्नपथ्यं ते दिव्यौषधमहं भिषक् ।
इत्युक्त्वा विरते तस्मिन्द्विज एकः समाययौ ॥ २५ ॥
सायंदेवाभिधः कांचीवासी कौंडिण्यगोत्रजः ।
सुदीनो यवनाधीनस्तमाह प्रणतं गुरुः ॥ २६ ॥
मर्तुमिच्छति रुग्णोयं व्यथितो दिव्यमौषधं ।
ददम्यस्मै त्वमपि ब्रह्मन्पथ्यं स्वाद्वन्नमर्पय ॥ २७ ॥
॥ सायंदेव उवाच ॥
मासा पक्षेण वाल्पान्नं भुंक्त आत्यंतिकीं व्यथाम् ।
स तदाप्नोत्यन्नदानाद्भवेद्धत्येति भाति मे ॥ २८ ॥
॥ श्रीगुरुरुवाच ॥
भिषक्तमोस्मि नाशंक्यं सापूपं देहि माषयुक् ।
परमान्नं च पथ्यं मा भीर्जाने रुक्प्रतिक्रियाम् ॥२९ ॥

सह ॥ २३ ॥ ईदृक् शूलव्यथारूपं मयि नोपस्थितं न प्राप्तं अन्योपकारः परोपकारः मोघो निरर्थको भवो जन्म यस्य ॥ २४ ॥ मा भीस्ते भयं मास्तु अहं भिषग्वैद्यस्तेऽन्नपथ्यं दिव्यमौषधमनुग्रहरूपं दास्ये इत्युक्त्वेत्यादि सिद्धो वदति तस्मिन्श्रीगुरौ विरते तूष्णींभूते सति ॥ २५ ॥ वृत्तिसंबंधेन यवनराजाधीनः ॥ २६ ॥ अस्मै ब्राह्मणाय दद्मि ॥ २७ ॥ यदा मासा मासेन पक्षेण वाल्पान्नं भुंक्ते स विप्रः तदात्यंतिकीं शूलव्यथां प्राप्नोति अतएवान्नदानात् ब्रह्महत्या भवेदिति मे मम भाति ॥२८॥ भिषक्तम ईश्वरत्वात् ‘ भिषक्तमं त्वा भिषजां श्रुणोमि ’ इति श्रुतेरुत्तमवैद्यः मा भीर्भियं

॥ सायंदेव उवाच ॥

तथा कुर्यामपि भवान्सशिष्योंगीकरोतु मे ।
भिक्षां गृहेऽस्मि ते शिष्यः प्रपन्नं शाधि मां गुरो॥३०॥

इत्युक्तिं सौष्ठवौदार्यरम्यां श्रुत्वा तथेति तं ।
ऊचे ततः सशिष्यं तं द्विजो निन्ये निजालयं ॥ ३१ ॥

चित्रितेलंकृते गेहे रंगवल्यादिरंजिते ।
स्वासनेषूपवेश्यैतानुपतस्थेंगनान्वितः ॥ ३२ ॥

मास्तु यतो रुक्प्रतिक्रियां रोगचिकित्सां जाने ॥ २९ ॥ शिष्यसहितो भवान्मे गृहे भिक्षामंगीकरोतु ते शिष्योस्मि भवामि भो गुरो प्रपन्नं मां शाधि शिक्षय ॥ ३० ॥ सुष्ठुभावेनोदारत्वेन च रमणीयां श्रुत्वा तथेति तं ऊचे श्रीगुरुरिति शेषः द्विजः सायंदेवः ॥ ३१ ॥ शोभनेष्वासनेषु तानुपवेश्यांगनया पत्न्याऽन्वितः उपतस्थे देवताबुद्ध्या पूजितवान् उपाद्देवतापूजासंगतीकरणमैत्रीकरणेषु भौवादिक ' इति स्मरणात् अयं परमात्मेति ज्ञानाभावेपि वेदवित्त्वसंन्यासित्वलक्षणेनायं देव इति सायं-देवस्य बुद्धिरुत्पन्ना तथा च स्मृतिः 'ऊर्ध्वमूल० वेदवित्' इति ईदृशे वेदविदि सर्वा देवता वसंति श्रुतिश्च 'यावतीर्वै 'देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति' इति । एषणात्रयोत्थानपूर्वकं दंडादि-ग्रहणेन भैक्ष्याचरणं संन्यासित्वं तस्य संन्यासिनः साक्षाद्विष्णुरूपत्वमुक्तं स यद्गृहे भुंक्ते तत्र साक्षाद्विष्णुर्भुक्तेऽतोस्य देवताबुद्ध्या पूजनं संवा-दिभ्रमः विभोर्ब्रह्मरूपत्वात् ॥ ३२ ॥ सूपचारैः शोभनोपचारैः रौद्रैः

सूपचारैः प्रपूज्येशं रौद्रैर्मंत्रैश्च पौरुषैः ।
नीराज्य श्रद्धया गीतस्तोत्रादिभिरतोपयत् ॥ ३३ ॥
गुरुपादोदकं तीर्थं भक्त्या संपूज्य मुक्तिदं ।
पीत्वैनोहारि सस्त्रीकः शिष्यान्सर्वानपूजयत् ॥ ३४ ॥
अन्नं चतुर्विधं स्वादु सुरसं गव्यसंयुतम् ।
प्रादात्प्रकामं सर्वेभ्यो मधुरोक्त्यादरेण सः ॥ ३५ ॥
भुक्त्वान्नं गुरुपंक्त्यां स भेजे रुग्णोप्यनामयं ।
नेदं चित्रं हि यद्भक्ता घ्नंत्युद्भवमहारुजं ॥ ३६ ॥

पुरुषसूक्तेन शतरुद्रीयेन वा पौरुषैः पुरुषदेवताकैः रुद्रदेवताकैः च ॥ ३३ ॥ एनोहारि पापहरं 'शोषणं पापपंकस्य दीपनं ज्ञानतेजसः । गुरोः पादोदकं तीर्थम्' इत्यादिस्मरणात् ॥ ३४ ॥ स्वादु मधुरप्रायं यदुक्तं वैद्यके 'भोजनं मधुरप्रायम्' इति तस्य सात्विकत्वात् 'रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रिया' इति स्मृतेः षड्रसान्वितं गव्यैर्दुग्धाज्यदधिनवनीतैः समन्वितं चतुर्विधं भक्ष्यभोज्यलेह्यचोष्यरूपमन्नं तत्र यद्दंतैरवखंड्यावखंड्य भक्ष्यतेऽपूपादि तद्भक्ष्यं १ यत्केवलं जिव्हयालोड्य निगीर्यते पायसादि तद्भोज्यं २ यज्जिव्हायां निक्षिप्य रसास्वादेन क्रमशो निगीर्यते द्रवीभूतं गुडादि तल्लेह्यं ३ यद्दंष्ट्राभिर्निष्पीड्य रसांशं निगीर्याऽवशिष्टांशं त्यज्यते इक्षुदंडादि तच्चोष्यं ४ एवं चतुर्विधं प्रकामं यथेष्टं प्रार्थनारूपमधुरभाषणेनादरेण च ॥ ३५ ॥ गुरुपंक्त्यां एकस्यापि गुरोः शिष्यपंक्तिसंबंधाच्छात्रिन्यायेन गुरुपंक्तिरुक्ताऽथवा गुरुस्थानापन्नाः संन्यासिनस्तेषां पंक्तिः गुरुपंक्तिभोजनसूचनेन रुग्णद्विजस्य शिष्यत्वं लक्ष्यते स द्विजोऽनामयमारोग्यं इदं चित्रमाश्चर्यं न हि यतो यद्भक्ता जन्ममरणरूपं महारोगं घ्नंति ॥ ३६ ॥ कदलीस्तं-

स ततोसारसंसारनिर्विण्णो गुरुदर्शनात् ।
भूत्वा क्षणादुदासीनः सर्वतोभजदच्युतम् ॥ ३७ ॥
द्विजोपि भुक्तानाचांतान्सूपविष्टान्सुगंधिभिः ।
पत्क्षेवनैश्चास्यवासैस्तोषयित्वाब्रवीद्गुरुं ॥ ३८ ॥
अंघ्र्यब्जवंदनात्तेद्य सफलं जन्म कर्म मे ।
पितरोनुग्रहान्मुक्तास्तत्कृतार्थोस्मि निर्मलः ॥ ३९ ॥
गंगा पापं विधुस्तापं दैन्यं कल्पतरुर्हरेत् ।
वायुस्तूलमिवैतत्ते दर्शनं हरति त्रयम् ॥ ४० ॥
साक्षी सर्वांतरस्थस्त्वं परात्माऽधोक्षजोमलः ।
नृरूपेणावतीर्णोसि साधूंस्त्रातुमजोव्ययः ॥ ४१ ॥

भवन्निःसारात्संसाराद्विरक्तः स रोगमुक्तो ब्राह्मणो गुरुदर्शनादेव गृहादौ क्षणादुदासीनो भूत्वाऽच्युतमप्रच्युतचिदानंदस्वरूपं गुरुमभजत् ॥ ३७ ॥ द्विजोपि सायन्देवोपि आचांतान्कृताचमनान्सुखेनोपविष्टान्सुगंधिभिः करोद्वर्तनैः गंधस्येत्यादिनेत्वं आस्यवासैर्मुखवासैः संन्यासिनस्तांबूलनिषेधेपि 'एलां वापि लवंगां वा भोजनांते तु भक्षयेत्' इति प्रकारांतरस्य विद्यमानत्वादास्यवासशब्दोत्र शोभनः ॥ ३८ ॥ अद्य ते पादकमलवंदनान्मे जन्म कर्म च सफलं यस्मात्पितरोपि तेनुग्रहान्मुक्तास्तस्मान्निर्मलो ज्ञानप्रतिबंधपापरहितः सन्कृतार्थोस्मि ॥ ३९ ॥ विधुश्चंद्रः दैन्यं दारिद्रं तूलं कार्पासं ते तव दर्शनं पापतापदैन्यत्रयं हरति अत्र वायुतूलदृष्टांतेन त्रितयस्य हरणमकिंचित्करं सूचितम् ॥ ४० ॥ साक्षी द्रष्टा साक्षाद्द्रष्टरि संज्ञायामितीनिः अंतर्यामित्वेन सर्वांतरस्थः निरुपाधिकरूपेण परमात्माऽमलो रागादिमलनिवर्तकः ॥ ४१ ॥ अमलं अव्यभिचारि मे मत्कुलाय च

देहि मे तेमलं दास्यं श्रद्धोपेतं कुलाय च ।
याचेदो भगवन्नेको ममाधिस्तं निशामय ॥ ४२ ॥
यन्निघ्नोस्मि स वै हिंस्रो यवनो हन्ति भूसुरम् ।
प्रत्यब्दमाह्वयत्यद्य तदर्थमिति शुश्रुम ॥ ४३ ॥

॥ श्रीगुरुरुवाच ॥

मा भीः क्रूरमपीदानीं यवनं याह्यसंशयम् ।
मुदैष्यस्यर्चितस्तेन तावत्तिष्ठामि मा शुचः ॥ ४४ ॥
इत्याकर्ण्यापशंकं स ययौ यवनमंजसा ।
शस्त्रैर्विप्रश्छिनत्तीति भ्रांतोऽरं यवनस्तदा ॥ ४५ ॥
तं तुष्ट्वा वस्त्रभूषार्थैः प्राह गच्छ सुखं द्विज ।
सायंदेवोपि वीताधिर्हृष्टः श्रीगुरुमाययौ ॥ ४६ ॥
सर्पोप्यद्याद्विराजोर्भं हरेर्वेभो गुरुप्रियम् ।
न क्षमोप्यंतको द्रष्टुं यवनः किमुताल्पकः ॥ ४७ ॥

देहीत्यदो याचे आधिर्मानसी व्यथा निशामयाऽवधारय ॥ ४२ ॥ यन्निघ्नो यदधीनः हिंस्रो घातुकः नमिकंपीत्यादिना रप्रत्ययः भूसुरं ब्राह्मणं तदर्थं मारणार्थं शुश्रुम श्रुतवंतो वयं सपरिवाराः ॥ ४३ ॥ मा भीर्भयं माऽस्तु क्रूरं निर्दयं तेन यवनेनार्चितः सत्कृतः मुदा आनंदेन मा शुचः शोकं मा कार्षीः ॥ ४४ ॥ इति गुरुवाक्यमाकर्ण्य श्रुत्वा तदा सायंदेवागमनकाले शस्त्रैर्विप्रो मां छिनत्तीति अरमत्यर्थं भ्रांतो यवनस्तं सायंदेवं ॥४५॥ हे द्विज सायंदेव सुखं यथा तथा गच्छ स्वगृहं प्रति वीताधिर्विगतमरणभयः ॥ ४६ ॥ विराजो गरुडस्यार्भं बालं सर्पोप्याद्यादपि भक्षयेत् किं हरेः सिंहस्य वाऽर्भं इभो गजः गुरुभक्तं द्रष्टुमंतकोपि न क्षमः किमुताल्पको यवनः ॥ ४७ ॥ श्रीगुरुरागतं सायंदेवमनुगंतुमुत्सुकं च ज्ञात्वा प्राह

दासोसीष्टं लभेत्ते मे द्व्यष्टाब्दैर्दर्शनं भवेत् ।
द्विजेत्युक्त्वा वैद्यनाथं गत्वांतर्दध ईश्वरः ॥ ४८ ॥

ईदृश्यो लौकिका लीलाः कृता भक्तिविधित्सया ।
भजेयुर्मां कथमपि लोका इत्याशयोस्य तु ॥ ४९ ॥

लोके प्रत्युपकारित्वं समीक्ष्य भगवान्विभुः ।
लौकिकानन्दजनकां चमत्कृतिमिहाकरोत् ॥ ५० ॥

हेतुनानेन तल्लोका भजंति भगवत्पदम् ।
भजनादेव निर्धूतमला यान्ति मुमुक्षुताम् ॥ ५१ ॥

ततोभ्यासाच्च वैराग्यात्तं ध्यायन्त उपासते ।
महाप्रसादोनेनैव लभंते सद्गुरोर्नताः ॥ ५२ ॥

त्वं मम दासोसि इष्टमभीष्टं ते लभेत् अधुना मायाहि द्व्यष्टाब्दैः षोडशवर्षैर्मे दर्शनं भवेत् वैद्यनाथं पर्यलीस्थं ज्योतिर्लिङ्गं ॥ ४८ ॥ ईदृश्यो भक्तानुग्रहलक्षणाः अलौकिका दिव्याः लीलाकरणे हेतुः लोका मां कथमपि स्नेहेन वा लोभेन वा भजेयुरिति तु अस्य श्रीगुरोराशयः ॥ ४९ ॥ भजनं विना मोक्षाधिकाराभावाल्लोकानां भजनारुचिदर्शनाच्च दयालुर्भगवान्लोके प्रत्युपकारित्वं समीक्ष्य तद्द्वारेणैव भजने प्रवर्तयितुं लौकिकानन्दजनकं चमत्कारं पूर्वोक्तवदिहलोकेऽकरोत् ॥ ५० ॥ अनेन हेतुना लोका भगवत्पदं सगुणं रूपं भजंति अर्चनवंदनादिना मुमुक्षुतां मोक्षाधिकारित्वम् ॥ ५१ ॥ तं भगवन्तं ध्यायंतश्चिंतयंत उपासते उपासनं नाम नैरंतर्येण तात्पर्यपुरःसरव्यवहारः अहं गच्छामि ममायन्देहो ममेदं गृहमिति निरंतरमादरेण व्यवहारे जाते तदेवाभ्यासेन दार्ढ्यं यथा भवति तथैवाहं ब्रह्मास्मीत्युपासनेन देहात्मज्ञानबाधकं देहात्मज्ञानवज्ज्ञानं सुलभमेतेनोपासनेन नता लीना

ऐक्यज्ञानन्तदा लब्ध्वा महावाक्येन चात्मनोः ।
शान्तिं विनिहताविद्यास्तत्संस्थां यांति ते ध्रुवां॥५३॥
प्रसन्नात्मानः प्रशान्ता निर्बन्धाद्वैतवर्जिताः ।

भक्ताः ॥ ५२ ॥ सद्गुरोर्महाप्रसादमविद्यानिवर्तकं ज्ञानमिति यावत् 'यस्य देवे परा भक्तिः' इति श्रुतेः महावाक्येन तत्त्वमसीत्यनेन लक्षणया लक्षितेन प्रतीचः परस्य चैक्यज्ञानं अखंडैकरसत्वेन लब्ध्वा निदिध्यासनेनात्मानमभेदेनापरोक्षीकृत्येति यावत् विशेषेण नितरां हताऽविद्या सकार्या यैस्ते ध्रुवां पुनरावृत्तिरहितां शांतिं निर्वाणलक्षणां यांति ॥ ५३ ॥ निर्वाणलक्षणशांत्या द्वैतस्फूर्तिवर्जिता अतएव निर्गता बंधा घृणालज्जाभयशंकाजुगुप्साकुलशीलजातिरूपाः पाशा येषां ते प्रसन्न आत्मांतःकरणं येषां ते हृद्ग्रंथिभेदपूर्वकं संशयछेदनं प्रसन्नत्वे कारणं अतएव प्रशांता रागाद्यभावेनोपशांताः स्वात्मारामाः 'न केचन जगद्भावास्तत्वज्ञं रंजयंत्यमी । नागरं नागरीकांतं कुग्रामललना इव ' इति वासिष्ठोक्तेर्ज्ञानिनः स्वातिरिक्तान्यरमणीयाभावात्ते स्वात्मारामा एव सप्तमभूमिकारूढाः श्रुतिश्च 'आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ' इति । योगभूमयो हि 'योगभूमिः शुभेच्छाख्या प्रथमा समुदाहृता । विचारणा द्वितीया स्यात्तृतीया तनुमानसा । सत्वापत्तिश्चतुर्थी स्यादसंसक्तिस्तु पंचमी । पदार्थाभाविनी षष्ठी सप्तमी तुर्यका स्मृता । आद्यत्रयं जागरितं साधकस्य प्रकीर्तितम् । तुर्या स्वप्नः साधकोत्र प्राज्ञैर्ब्रह्मविदुच्यते । निद्रा तु पंचमी ब्रह्मविद्वरोत्र स उच्यते । षष्ठी तु गाढनिद्रा स्याद्वरीयानत्र स स्मृतः । ज्ञेयं परत उत्थानमस्य भावितचेतसः । अन्त्या तुरीयात्र ब्रह्मविद्वरिष्ठो महामतिः । स्वतो वा परतो वास्य व्युत्थानं नैव कर्हिचित्' इति 'अपि शीतरुचावर्के उष्णे पीयूषमण्डले । अप्यधःप्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी' इति वासिष्ठो-

स्वात्मारामाश्चरंत्यत्र जडोन्मत्तपिशाचवत् ॥ ५४ ॥
स्पर्शेक्षाकीर्तनादीनां सद्गुरोर्महिमा त्वियान् ।
स्नेहाद्द्वेषाद्भयाद्वापि धत्ते यत्र मनोचलम् ॥ ५५ ॥
तत्सारूप्यं स पेशस्कृद्ध्यानात्कीट इवैत्यरम् ।
इत्याद्या मार्गणोपाया हरेः स्युः सुलभा नृणां ॥ ५६ ॥
मृग्योसौ पुरुषेणैव बुद्ध्यादिगुणहेतुभिः ।
नानुमानैरतो युक्त आत्मैवात्मगुरुः किल ॥ ५७ ॥

क्तेर्विस्मयाभावात्ते जडोन्मत्तपिशाचवत् द्वैतवर्जिता इत्यनेन यथापूर्वं व्यवहाराभावादवगतब्रह्मत्वं स्फुटमुक्तम् तथाच पूर्वाचार्याः 'नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं यस्य तु यथापूर्वं संसारित्वं नासाववगतब्रह्मात्मभाव' इति । अतएवैकत्वं 'अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् । न तं पश्यामि यस्याहं तं न पश्यामि यो मम' इत्याचार्योक्तेः । एवं सति तेषां लौकिकवैदिकक्रियालोपेन प्रत्यवाय इति चेन्न 'यत्पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मीति कृतकृत्यो भवति' इति परमहंसोपनिषदुक्तेः कृतकृत्यत्वश्रवणात् सन्धिं समाधावात्मन्याचरेत्' इति तत्रैवोक्तत्वात्परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव भग्नः सा सन्ध्येति श्रुतेरभिप्रायः स्मृतिश्च 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यत' इति ॥ ५४ ॥ इयानेतावान् सद्गुरोः स्पर्शनादीनां महिमा यत्र कृष्णाद्यवतारे स्नेहाद्बल्लव्य इव द्वेषाच्चैद्यादिरिव भयात्कंसादिरिव यः कोपि न तु जात्यादिविशिष्ट इति नियमः निश्चलं मनो धत्तेऽभ्यासवैराग्याभ्यां ॥ ५५ ॥ स पेशस्कृध्द्यानात्कीट इव तत्सारूप्यं ध्येयसारूप्यमेति अरं शीघ्रं इत्याद्या हरेर्मार्गणोपायाः सुलभाः सन्ति ॥ ५६ ॥ पुरुषेणैव नरेणैव बुध्यादिगुणहेतुभिर्मृग्यो नानुमानैः देहव्यतिरिक्तत्वंपदार्थशुद्धिमात्रस्यैवानुमानेनैव विवक्षितत्वात् अतो हेतोः आत्मैव

॥ नामधारक उवाच ॥

भूतेशोन्तर्दधे कस्मात्तेजस्वी भक्तवत्सलः ।
शिष्यास्तस्थुस्तदा कुत्र तच्छ्रोतुं सादरोस्म्यहम् ॥५८॥

॥ सिद्ध उवाच ॥

सर्वे शिष्या भविष्याम इति मत्वात्र यान्त्यतः ।
मत्वा स्थेयं रह इति छात्रान्सद्गुरुरब्रवीत् ॥ ५९ ॥
लब्ध्वा द्विजत्वं संस्कारैर्ब्रह्मचारी पठन् त्रयीं ।
द्वादशाब्दं कृती सूत्रमेखलाजिनदण्डधृक् ॥ ६० ॥
सायं प्रातः स कर्माग्निकार्यं भिक्षां चरन् गुरुं ।
भजन्भक्त्याऽस्वपन्नह्नि याचितां गुरवेऽर्पयन् ॥ ६१ ॥
तद्दत्तभुग्लब्धविद्यः स्नायाद्दत्वा वरं व्रती ।
अनाश्रमी न तिष्ठेत भवेत्स प्रत्यवाय्यतः ॥ ६२ ॥

आत्मनो गुरुर्युक्तः किलेति सम्भावनायां ॥ ५७ ॥ तेजस्विनो भक्तवत्सलस्यांतर्धानं कथमिति प्रश्नः ॥ ५८ ॥ आङ् लुप्तः आयांति केवलं स्वभजनेनैवोद्धर्तुं शक्तोपि भगवान्परंपरागोपनाय शिष्यपरीक्षणाय चांतर्हित इवाभूदित्युत्तरं ददन् सिद्ध उवाच रह एकान्ते छात्रान् शिष्यान् ॥ ५९ ॥ कर्मकाण्डे वक्ष्यमाणैः संस्कारैः द्विजातित्वं ब्रह्म वेदस्तच्चरतीति ब्रह्मचारी त्रयीं श्रुतिं वेदत्रयं वा स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयीत्यभिधानात् कृती कुशलः सूत्रमुपवीतम् ॥ ६० ॥ कर्म सन्ध्यावन्दनादि अग्निकार्यं समिदाधानं च चरन्नाचरन् भिक्षां चरन्भक्षयन्नह्नि दिवसेऽस्वपन् वर्णक्रमैरादिमध्यान्तभवच्छब्दपूर्वयाचितां भिक्षां ॥ ६१ ॥ गुरुदत्तभुक् वरं गुरुदक्षिणां स्नायात्समावर्तनं कुर्यात् ॥ ६२ ॥ विद्यास्नातो व्रतस्नात

स्नातकस्तूद्वहेद्भार्यां गृह्यं परिचरेद् गृही ।
पोष्यभृद्यज्ञकृद्वेदशास्त्रधर्मपरो भवेत् ॥ ६३ ॥
पुत्रार्पितश्रीर्भार्यायुगग्राम्यविषयो वने ।
यतात्माऽकृष्टपच्याशी यावच्छुद्ध्यंतरं वसेत् ॥ ६४ ॥
स्वारोपिताग्निः स वानप्रस्थो भार्याज्ञयाऽममः ।
प्रव्रजेद्यतिधर्मज्ञो विरक्तस्तु कुतोपि हि ॥ ६५ ॥
त्रिकालस्नायी संन्यासी न्यस्तसूत्रशिखैषणः ।
जपभिक्षाटनध्यानशौचार्चनरतो वशी ॥ ६६ ॥

उभयस्नातो वा स्नातकः तुशब्दो गृहस्थाश्रमस्यैच्छिकत्वद्योतकः 'शक्तश्चेन्नैष्ठिको भूयात्' इति स्मरणात् गृही गृहस्थः 'पाणिग्रहणादिगृह्यं परिचरेत्' इति सूत्रोक्तेः गृह्यं परिचरेत् उपलक्षणमिदं श्रौताधानस्यापि यदुक्तं मुण्डके 'यस्याग्निहोत्रमदर्शमपौर्णमासमनाग्रयणमचातुर्मास्यमतिथिवर्जितं च अहुतमवैश्वदेवमविधिना हुतमासतमांस्तस्य लोकान् हिनस्ति' इति एतदभिप्रायेण प्रोष्यभृद्यज्ञकृदित्युक्तं । एतत्कर्मकाण्डे स्फुटीभविष्यति ॥६३॥ पुत्रायार्पिता श्रीर्येन स भार्यायुक् केवलो वा त्यक्तग्राम्यविषयः कृष्युद्भवेतरभक्षकोन्तःकरणशुद्धिपर्यन्तं वने वसेत् ॥ ६४ ॥ स्वभार्याज्ञया तां सन्तोष्य ममतारहितो वनस्थः स्वात्मन्यारोपिता अग्नयो येनेदृशः सन् प्रव्रजेत्संन्यसेत् वैराग्याभावेयं क्रमः यतिर्विनिर्जितेन्द्रियग्रामः तद्धर्मज्ञो विरक्तस्तु कुतोपि 'ब्रह्मचर्याद्वा गृहाद्वा वनाद्वा यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतेः आचार्यादेस्तादृक्प्रसिद्धिरिति द्योतयितुं हीत्युक्तं ॥ ६५ ॥ त्रिकालस्नायीति कुटीचकबहूदकविषयः यदुक्तं 'स्नानं त्रिषवणं प्रोक्तं कुटीचकबहूदयोः । हंसे तु सकृदेव स्यात्परहंसे न विद्यत'इति । विविदिषासंन्यासो विद्वत्संन्यास इति संन्यासो द्वेधा तत्र विदुषः कृतकृत्यत्वात्त्यक्तैषणस्य विविदिषोर्धर्मानाह प्रणवजप ईश्वरार्चनं वशी जितेन्द्रियः ॥ ६६ ॥ लौल्यमिन्द्रियचापल्यं

स्त्रीकथालौल्ययानाहःस्वापखट्वाऽस्पृगात्मदृक् ।
सद्वेणुमृद्दार्वलाबुमयभाजनदण्डधृक् ॥ ६७ ॥

सकृदन्द्याप्तसद्भिक्षाभुक्शान्तस्तत्त्वचिन्तकः ।
तीर्थान्यटन्नृते वर्षास्त्र्यहमेकस्थले वसन् ॥ ६८ ॥

स्थिरीकृतमनाः क्वापि तत्रास्तिष्ठन्सुखी भवेत् ॥
अशक्तस्तु महाक्षेत्रे हरिं ध्यायन्वसेत्सदा ॥ ६९ ॥

तस्मात्कुर्व्वं स्वाश्रमार्हं कृत्यं पातोन्यथा भवेत् ॥

यानं शिबिकाश्वादि अहःस्वापो दिवाशयनं आत्मविचारः 'विद्या दिनं प्रकाशत्वादविद्या रात्रिरुच्यते । विद्याभ्यासे प्रमादो यो दिवास्वापः स उच्यत' इत्यभियुक्तोक्तेः । स्त्रीकथादिस्पर्शरहितः चतुर्णां मध्ये एकतमपात्रधृक् दण्डधृक् च ॥ ६७ ॥ एकवारं दिवसे आप्तां माधूकरोपपन्नतात्कालिकायाचितान्यतमसद्भिक्षां भुनक्तीति तथा वर्षाकालं विना तीर्थानि पर्यटन् त्रिदिनमेकस्थले वसेत् ॥ ६८ ॥ स्थिरीकृतमनाः लक्षणया निर्बीजयोगः सन्यत्र क्वापि तिष्ठन् सुखी बुद्धिग्राह्यातीन्द्रियसुखमयो भवेत् महाक्षेत्रे काश्यादौ ॥ ६९ ॥ यस्मादेवं तस्मात्पातः प्रत्यवायेनाधःपतनं कामोकार्षीदिति तृतीयाध्यायोक्तमनुसन्धेयं अतउक्तं पात इति अतएव स्मर्यते 'अकुर्वन् विहितं कर्म निन्दितं च समाचरन् । प्रसज्जंश्चेन्द्रियार्थेषु नरः पतनमृच्छति' इति तत्र संन्यासाश्रमभ्रंशे प्रयत्नादामुष्मिकी शुद्धिः कथंचिदामुष्मिकशुद्धिसद्भावेपि प्रायश्चित्तादर्शनादैहिकशुद्ध्यभावाच्छिष्टैरेव न व्यवहार्यः 'बहिस्तूभयथापि स्मृतेराचाराच्च' इति न्यायात् एवं नैष्ठिकस्यापि 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामो येन शुद्ध्येत्स आत्महा' इति स्मृतेः । यथाकथंचिदामुष्मिकी शुद्धिः

इत्युक्त्वान्यान्प्रेरयित्वा गृहेभ्योजोब्रवींद्यतीन् ॥ ७० ॥

काशी प्रयागो गया च श्रीरंगः पुरुषोत्तमः ॥
श्रीशैलो नैमिषारण्यं कुरुक्षेत्रं बदर्यपि ॥ ७१ ॥
गोकर्णः शङ्खकर्णश्च कांच्ययोध्या च गोकुलम् ॥
मथुरा द्वार्वती मायावंतिका करवीरपूः ॥ ७२ ॥
गन्धर्वपूर्हरिहरक्षेत्रं सदेवकन्यका ।
गुहाश्रमः सेतुबन्ध इत्यादिक्षेत्रविस्तरः ॥ ७३ ॥
गङ्गासरस्वत्यर्कोत्था विपाट्पौष्णीमरुद्वृधा ।
वितस्तासिक्न्यनेकास्या चन्द्रभागा पयस्विनी ॥७४॥
शरावती मधुमती रेवा गोदामरोद्भवा ।
सरयू कौशिकी पूर्णा भीमा कृष्णा मलापहा ॥ ७५ ॥
कावेरी प्रवरा तुंगा क्षिप्रा तापी च वेदिका ।
चर्मण्वती गण्डकीति पूर्वा नद्यो नदा अपि ॥ ७६ ॥

'न चाधिकारिकमपि पतनानुमानात्तदयोगात्' इति न्यायात् अत्र चाश्रमाणामारोहणवदवरोहणाभावः रागतस्तावदवरोहणेच्छा चेद्रागो मिथ्याज्ञानमूलत्वान्निषिद्धः 'तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्य' इति न्यायात् यतीन् यतनशीलान् ॥ ७० ॥ ७१ ॥ द्वार्वती द्वारिका माया हरिद्वारं अवन्तिकोज्जयिनी करवीरं कोल्हापुरं ॥ ७२ ॥ देवकन्यका कन्याकुमारी गुहाश्रमः कार्तिकस्वामी आदिशब्दात्प्रभाससिद्धपुरादि ॥७३॥ अर्कोत्था यमुना ॥ ७४ ॥ अमरोद्भवामरजा तुंगा तुंगभद्रा ॥ ७५ ॥ इति पूर्वा इत्याद्याः शोणभद्रादिनदा अपि अन्यानि तीर्थानि पुष्करमानसबिन्दुसरोवरादीनि ॥ ७६ ॥ यदा गुरुसंचाराद्द्वादशमहानदीषु तीर्थानि

तत्संगमा अप्यघघ्नास्तीर्थान्यन्यान्यनेकशः ।
तीर्थानि गुरुसंचाराच्छश्वद्द्वादशसिन्धुषु ॥ ७७ ॥

प्रचरंति तदा तास्तु स्वर्णदीस्नानपुण्यदाः ।
कुर्ध्वं स्नानादि विधिवत्सर्वत्रात्र सरःस्वपि ॥ ७८ ॥

ग्रीष्मे रजस्वला नद्यो यद्दिनेऽम्बु नवं तदा ।
दशाहं नर्ते तीरस्थैः स्नानं मुख्यासु तु त्र्यहम् ॥ ७९ ॥

द्युरात्रमपि कूपादौ चरित्वैवं ततोखिलाः ।
श्रीशैलं बहुधान्येऽब्दे यात यास्याम्यहं ह्यपि ॥ ८० ॥

इत्युक्त्वा प्रेरयामास यात्राया अपि ते ययुः ।
तत्रैव सद्गुरुपदपद्मालिरभवं त्वहम् ॥ ८१ ॥

**प्रचरन्ति** तदा ताः गंगास्नानाधिकफलदाः सिंहस्थे गुरौ गोदा कन्यास्थे **कृष्णा** तुलास्थे मलापहेत्यादि ॥ ७७ ॥ अत्र सर्वत्र नदीषु सरःसु च **विधिवत्** विध्यर्हं यथाविधीत्यर्थः तदर्हमिति वतिः आदिशब्देन श्राद्धदान-**ब्राह्मणभोजनानि** ग्राह्याणि महानदीषु महाक्षेत्रेषु च क्षौरं न सर्वत्र ॥७८॥ **यद्दिने** यस्मिन्नहनि नूतनोदकपूरस्तद्दिने नदीनां रजस्वलात्वं ग्रीष्म इत्यु-**पलक्षणमाषाढस्य** तीरस्थान्विना नदीनां मुख्यानां त्र्यहं इतरासां दशाना-**मन्हां** समाहारो दशाहः तद्धितार्थ इति समासः रात्राह्नाहा इति पुंस्त्वं **कालाध्वन** इति द्वितीया एवं रजस्वलात्वं तदा काले सर्वैकान्यकिंयत्तदः **काल** इति दाप्रत्ययः स्नानादि नेति न कार्यमित्यर्थः ॥ ७९ ॥ **कूपादौ** **वापीकूपतडागादौ** द्युरात्रं अहोरात्रं रात्राह्नाहा इति पुंस्त्वं कालाध्वन इति **द्वितीया** पूर्ववत् कैश्चिन्महानदीनां रजस्वलात्वं नेत्युक्तम् ॥ बहुधान्येऽब्दे **संवत्सरे** श्रीशैलं यात गच्छत अहमपि यास्यामि ॥ ८० ॥ ८१ ॥

(क्षेपकौ) यद्वर्जुनाभ्यां विद्योगौ प्राहैष प्राग्यथा तथा ।
गुह्यौ मे प्राह ते शिष्य विनीत कथयामि ते ॥ ८२ ॥

इत्युक्त्वा प्रणतायोचे सिद्धः शिष्याय सत्तमः ।
याभ्यां परं पुमान्याति स्वानंदौ वैष्णवं पदम् ॥ ८३ ॥

इति श्रीगुरुचरिते० तीर्थयात्रोद्देशो नाम नवमोऽध्यायः ॥ ९ ॥

क्षेपकौ स्फुटार्थौ ॥ ८२ ॥ ८३ ॥ यद्यपि 'उत्तमा सहजा पूजा मध्यमा योगधारणा ॥ अधमा प्रतिमापूजा तीर्थयात्राधमाधम ।' इत्युक्तम् तथापि महापापवतां प्रायश्चित्तादिना पापक्षये सति ज्ञानमुत्पद्यते 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥ यथादर्शतले प्रख्ये पश्यंत्यात्मानमात्मनि' इति स्मरणाद्योगयागानुष्ठानासमर्थानां मुमुक्षूणां ज्ञानप्रतिबन्धकपापक्षयार्थं विवेकिदृष्ट्याऽधमत्वेनोक्ताया अपि तीर्थयात्रायाः कथनं समुचितं पुरुष-संस्कारत्वात्संस्कृतस्य हि विशुद्धसत्वस्यात्मज्ञानमंजसैवोत्पद्यते उदिते च ज्ञाने 'अभयं प्रतिष्ठां बिभेति न विभेति कुतश्चन किमहं साधु नाकरवम्' इत्येवमादिना कर्मनैष्किंचन्यं श्रुत्या दर्शितमतः पूर्वोपचितदुरितक्षयद्वारेण विद्योत्पत्त्यर्थानि कर्माणि। ननु तानि च यज्ञदानतपोरूपाणि 'यज्ञेन दानेन तपसानाशकेन' इति श्रुतेः अत्र तु तीर्थयात्रा कथमुक्तेति चेत् तरंत्यनेन तीर्यतेनेनेति वेति तीर्थं गंगागोदावर्याद्यृषिजुष्टजले रूढोयं तीर्थशब्दस्त-त्स्नानादिना कर्मानुष्ठानवदुपात्तदुरितक्षयः 'आपमापामपः सर्वा अस्माद-स्मादितोमुतेति आपोअद्यान्विदमाप' इत्यादिमंत्रैः कर्मस्वपि तत्प्रार्थनीय-त्वादिति दिक्। वासिष्ठेपि भौमयज्ञांगीकारार्थं भरद्वाजाय श्रीरामस्य तीर्थयात्रोपवर्णिता ॥ इति श्रीगुरुचरिते टीकायां नवमोऽध्यायः ॥ ९ ॥

॥ श्रीगुरुदेवदत्त ॥

---

# दशमोऽध्यायः

॥ नामधारक उवाच ॥

शिष्यांस्तु तीर्थयात्रायै प्रेरयित्वा स्वयं कुह ।
उवास भगवान्ब्रूहि श्रोतुमिच्छामि सादरम् ॥ १ ॥

सिद्ध उवाच

संवत्सरं वैद्यनाथसमीपमकरोद्विभुः ।
निवासमहमप्येतत्पादाब्जभ्रमरोभवम् ॥ २ ॥

तत्रैत्यैको द्विजो मन्दो नमस्कृत्याब्रवीद्गुरुम् ।
प्रपद्ये भगवंस्त्वां मे मोक्षोपायमुपादिश ॥ ३ ॥

मया तु सिद्धये कष्टं भूर्यकारि तथापि मे ।
नाप्ता सिद्धिर्नोपलब्धः सन्मार्गप्रापको गुरुः ॥ ४ ॥

श्रीगणेशाय नमः ॥ अथ दशमाध्यायः ॥ दशमेप्यज्ञविप्राय धौम्य-शिष्यकथां गुरुः ॥ प्रोक्त्वास्मा अनुतप्ताय ददौ वरमितीर्यते ॥ १ ॥ आचार्याद्विदिता विद्या साधिष्ठं प्रापयतीति श्रुतिहार्दं वक्तुं उत्तरत्वेन सिद्ध उवाच ॥ १ ॥ एतस्य श्रीगुरोः पादावेवाब्जे तयोर्भ्रमर इव सेवमानोभवं ॥ २ ॥ भो भगवन्त्वां प्रपन्नोस्मि मोक्षोपायं कथय ॥ ३ ॥ सिद्धये मोक्षसिद्धये तपआदिरूपं कष्टं भूरि प्रभूतं नाप्ता न प्राप्ता यतः शोभन-मार्गप्रदर्शको गुरुर्नोपलब्धः ॥ ४ ॥ रे वत्स गुरुं विना केनोपदेष्ट्रा कथं

श्रीगुरुरुवाच

कथं गुरुं विना वत्स सिद्धये केन योजितः ।
कस्याज्ञया कृतं कष्टमित्याकर्ण्य द्विजोऽब्रवीत् ॥ ५ ॥

सिद्धयै मया गुरुः कश्चिच्छ्रितश्चण्डः स तु प्रभो ।
सेवार्थी पीडयामास ततस्त्यक्तः स वै मया ॥ ६ ॥

श्रीगुरुरुवाच

हन्तासाधु कृतं धिक्त्वां गच्छेतः सत्वरं यतः ।
गुरुद्रोह्यास्यावलोको न भद्राय कथंचन ॥ ७ ॥

प्रणिपातपरिप्रश्नसेवाधर्मपराङ्मुखे ।

केन प्रकारेण सिद्धये योजितः यत्कष्टं कृतमिति ब्रूषे तदपि कस्याज्ञया कृतं इत्यमुना प्रकारेण गुरुप्रश्नमाकर्ण्य द्विजोऽब्रवीत् ॥ ५ ॥ चण्डोऽत्यन्तकोपनः स गुरुः ॥ ६ ॥ हंतेति खेदे 'य आवृणोत्य वितथं ब्रह्मणा श्रवणावुभौ। स माता स पिता ज्ञेयस्तं न द्रुह्येत्कदाचन' इति स्मृतेरसाध्वशोभनं कृतं अतस्त्वां धिक् इतोस्मत्सकाशाद्दूरं गच्छ हि यतः गुरुद्रोहिणो मुखावलोकनं कदापि भद्राय न भवति किं पुनर्भाषणादिना ॥ ७ ॥ ननु 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम्' इत्युक्तेः कथं तादृशस्य त्यागेन दर्शनानर्होऽहं जातो यत उक्तं गच्छेत्यत आह प्रणिपातेति गुरोरपीत्यत्रापिशब्देन द्योतितो दोषत्रयदुष्टस्य परित्यागः कैमुतिकन्यायेनेतरनिषेधकः न गुरुत्यागविधायकः अन्यथा 'अपि वा मातरं गच्छेन्न तु गंगाप्रतिग्रहः । पुत्रमांसं वरं भोक्तुं न तु राजप्रतिग्रह' इत्यादिवचनानां मातृगमनपुत्रमांसभक्षणादिचोदकत्वं स्यात्ततोनर्थ एव तेन 'चोदनालक्षणोऽर्थो धर्म' इति न्यायो हीयेताऽतस्तादृशस्यापि त्यागोऽन्याय्यः

कुतो गुरुकृपालेशस्तद्वत्येव प्रसन्नता ॥ ८ ॥

द्विज उवाच

कथं ज्ञेयः कथं सेव्यो गुरुस्तन्मे वदाखिलम् ।
अजानता गुरुद्रोहः कृतोतो मोद्धर प्रभो ॥ ९ ॥

श्रीगुरुरुवाच

गुरुर्निरुपमः साक्षाद्ब्रह्माविष्णुशिवात्मकः ।
सोज्ञेयस्त्वादृशैरंधैस्तद्वत्सेवापि सद्गुरोः ॥ १० ॥
एतदर्थं पुरावृत्तं शृणु धौम्याभिधो मुनिः ।
द्वापरेभूत्त्रयश्छात्रा आसन्तस्यांग तत्पराः ॥ ११ ॥

किं पुनरुपकारकस्य गुरोः अत्र तु सेवार्थी पीडयामासेत्यनेन सेवायाः पीडारूपदर्शकेनालसेन त्वया परित्यागः कृतः शिष्यस्य योग्यत्वार्थं विद्वद्युक्तप्रणिपातपरिप्रश्नसेवाधर्मप्रवर्तकस्यावलेपादिदोषत्रयरहितस्य गुरोः परित्यागः कृतोतस्तादृशस्यावलोको न भद्रायेत्युक्तम् तद्वति प्रणिपातपरिप्रश्नसेवाधर्मवति प्रसन्नता गुरोरिति शेषः ॥ ८ ॥ एवं श्रीगुरुवाक्यं श्रुत्वा मत्वा च स्वापराधं दूरीकर्तुं गुरुज्ञानं तत्सेवाप्रकारं च पृच्छति यत इदं गुरुसेवातत्त्वमजानता मया गुरुद्रोहः कृतः अतो हे प्रभो द्रोहरूपात्पापान्मा मामुद्धर स्वरूपतो गुरुः कथं ज्ञेयः ज्ञातश्च केन प्रकारेण सेव्यः तन्मे वदस्व ॥ ९ ॥ गुरोर्निरुपमत्वमुक्तं भगवत्पूज्यपादैः 'दृष्टान्तो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातुः स्पर्शश्चेत्तत्र कल्प्यः स नयति यदहो स्वर्णतामश्मसारं । न स्पर्शत्वं तथापि श्रितचरणयुगे सद्गुरुः स्वीयशिष्ये स्वीयं साम्यं विधत्ते भवति निरुपमस्तेन वाऽलौकिकोपि' इति । अतएव ब्रह्माविष्णुशिवरूपः ॥

वैदारुणोपमन्य्वाख्याः सेवाधर्मसुशिक्षिताः ।
तेषां परीक्षितुं भावं गुरुः प्राह दयार्द्रधीः ॥ १२ ॥
मच्छालेयेंब्वभावोस्ति जीवेत्सस्यमतः कुतः ।
गत्वा वः कोपि यत्नेन क्षेत्रमंब्वानयत्वरं ॥ १३ ॥
श्रुत्वैवमरुणोह्याय गत्वा क्षेत्रसमीपतः ।
जलमानीय यत्नेन पल्वलात्क्षेत्रमुन्नतं ॥ १४ ॥
दृष्ट्वाकरोत्क्षेत्रतुल्यं वारिवारणमाशु तत् ।
जलप्रवाहः सहसा क्षेत्रादन्यत्र निर्ययौ ॥ १५ ॥
न्यस्तोपि पाषाणचयः स्थातुं तत्र शशाक नो ।
मन्ये क्षेत्रे जलाभावाद्गुरुर्मां धिक्करिष्यति ॥ १६ ॥
गुर्वर्थमत्र मर्तव्यमिति मत्वोभयत्र सः ।
स्वांगं निधायोपरिष्टाज्जलैः क्षेत्रमपूरयत् ॥ १७ ॥

॥ १० ॥ छात्राः शिष्याः ॥ ११ ॥ अंग हे विप्र ॥ १२ ॥ शालेये शाल्युद्भवोचिते क्षेत्रे व्रीहिशाल्योर्ढक् जलाभावोस्ति सस्यं क्षेत्रगतमपक्वं अतो वो युष्माकं मध्ये कोपि कतमोपि अरं शीघ्रं ॥ १३ ॥ एवं गुरोर्वचः श्रुत्वा तेषां मध्येरुणोह्याय शीघ्रं गत्वा पल्वलादल्पसरसो जलं कुल्यानिर्माणादियत्नेनानीय किंचिदुन्नतं क्षेत्रं दृष्ट्वा ॥ १४ ॥ क्षेत्रतुल्यं वारिवारणं पाषाणादिनाऽकरोत्तदा जलप्रवाहोऽकस्मादन्यत्र निर्ययौ ॥ १५ ॥ तत्र न्यस्तोपि पाषाणचयः प्रवाहवेगेन स्थातुं समर्थो न बभूव तदा शिष्यो वदति स्वगतं क्षेत्रे जलाभावान्निमित्ताद्गुरुर्मांन्धिक्करिष्यति इति मन्ये ॥ १६ ॥ तस्माद्गुर्वर्थमत्र मया मर्तव्यं मरणप्रायकष्टेनापि जलानयनोद्योगः कर्तव्यः इति मत्वा उभयत्र कुल्यायाः पूर्वपरतटे देहस्थापनक्षमे स्वांगं निधाय तदुपरिष्टाद्गतैर्जलैः क्षेत्रमपूरयत् ॥ १७ ॥ ईक्ष्य वीक्ष्य हे वत्सा २

धौम्योऽपि क्षेत्रमेत्यांबुपूर्णं शालेयमीक्ष्य सः ।
खिन्नः शिष्यमदृष्ट्वैहि वत्सेत्यावाहयन्मुदा ॥ १८ ॥
प्रत्युत्तरं जलाक्तान्तरंगो दातुं स न क्षमः ।
किंचिद्ध्वनिं चकारासौ तच्छ्रुत्वैत्य ददर्श तम् ॥१९॥
कृपया परयोत्थाप्य भक्तिं ज्ञात्वास्य तत्क्षणं ।
तस्मिन्प्रसन्नः सम्भूय स्वीयं साम्यं व्यधान्मुनिः २०
विद्याविनयसम्पन्नो भूत्वा सन्तोष्य सद्गुरुम् ।
तदाज्ञया ययौ धाम स्वमर्च्योऽभवदत्र सः ॥ २१ ॥
ततो वैदं गुरुः प्राह सस्यं मे शिष्य सर्वतः ।
रक्षयित्वानु धान्यं तद्यत्नात्सर्वं समानय ॥ २२ ॥
आज्ञा प्रमाणमित्युक्त्वा पशुपक्षिनिवारणैः ।
सस्यं ररक्ष पश्चात्तच्छित्त्वा धान्यं स निर्ममे ॥ २३ ॥

एहीत्यावाहयत् ॥ १८ ॥ जलेनाक्तं क्लिन्नमंतरंगं यस्य स प्रत्युत्तरं दातुमपि समर्थो नाभूत् किंचिद्ध्वनिं चकार असौ धौम्यस्तद्ध्वनिरूपमुत्तरं श्रुत्वा आगत्य तं ददर्श ॥ १९ ॥ तमुत्थाप्यास्य भक्तिं ज्ञात्वा तत्क्षणं कालाध्वन इति द्वितीया प्रसन्नो भूत्वा तस्मिन्स्वकीयं साम्यं विद्याविनयादिलक्षणं कृतवान् ॥ २० ॥ दक्षिणासमर्पणेन सन्तोष्य कृतसमावर्तनोनुशिष्टस्तदाज्ञया स्वालयं ययौ स शिष्यो गुरुप्रसादाद्विद्वान्सन्नत्रास्मिन्लोकेऽर्च्यः पूज्योभवत् ॥ २१ ॥ सस्यं क्षेत्रगतं धान्यं यदुक्तं 'सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते । वितुषास्तण्डुलाः प्रोक्ताः पक्वमन्नं प्रकीर्तितम्' इति अनु पश्चात् ॥२२॥ भवतामाज्ञा प्रमाणमित्याज्ञां शिरसा धृत्वा निवारणैर्निवारणोपायैः सस्यं ररक्ष पश्चात्तच्छित्वा मर्दनेन धान्यं निर्ममे सम्पादितवान् पलालं धान्यं च पृथक् चकार ॥ २३ ॥ भो गुरो मया क्षेत्रे धान्यराशिर्न्यस्त

शशंस गुरवे न्यस्तो धान्यराशिर्मया गुरो।
क्षेत्रेत्रानेतुमेकं मे शकटं देहि सर्षभम् ॥ २४ ॥

तच्छ्रुत्वा शकटं तस्मै सलुलायेन योजितम्।
प्रददौ स तमादाय नीत्वा विन्यस्य चाखिलान् ॥२५॥

शालीनाहरदर्धाध्वं तत्र पंके सकासरः।
संलग्नोभूत्स्वयं सोथ स्वकंठेयोजयद्युगम् ॥ २६ ॥

सलुलायः स शिष्यस्तु तत्र भारातिरेकतः।
पपात तत्र सहसा धौम्यः प्राप यदृच्छया ॥ २७ ॥

तत्कर्म प्रेक्ष्य घोरं तं मोचयित्वा प्रसन्नधीः।
वरं तस्मै ददौ येन स परत्रात्र चोत्तमः ॥ २८ ॥

अथोपमन्युमाहैष गाश्चारय सदेत्यथ।
कतिकालं तथा चक्रे स्वल्पभुक्क्षुधितोभवत् ॥ २९ ॥

इति शशंस कथयामास कथयित्वात्र गृहं प्रति धान्यमानेतुं ऋषभाभ्यां बलीवर्दाभ्यां सहितं शकटं देहीति ययाचे ॥२४॥ तस्मै शिष्याय स गुरुः लुलायेन महिषेण योजितं धान्यानयनार्थं शकटं प्रददौ स शिष्यः अखिलाञ्छालीन् विन्यस्येति सम्बन्धः आहरदानयत् सकासरः महिषसहितः शकटः पङ्के संलग्नोभूत् तदा स्वयं स्वकंठे युगं यानांगमयोजयत् ॥२५॥ ॥ २६ ॥ यदृच्छया स्वेच्छया ॥ २७ ॥ घोरं शकटवाहनरूपं कर्म तं शिष्यं स शिष्यो येन गुरुदत्तेन वरेणात्रास्मिन्लोके विद्यादिभिः परत्र दिव्यभोगैर्युक्तः उत्तमः श्रेष्टो बभूवेति शेषः ॥ २८ ॥ एष धौम्यः गुरुगृहे स्वल्पं भुनक्तीति स्वल्पभुक् क्षुधितोऽभवत् ॥ २९ ॥

वने विप्रालयान्प्रेक्ष्य स्वं पुपोषान्नयाञ्चया ।
पुष्टोसि कथमित्युक्तो गुरुणा तं न्यवेदयत् ॥ ३० ॥

तन्मे देहीति गुरुणा भाषितः स तथाकरोत् ।
स पश्चाद्याञ्चयारक्षत्स्वं तद्वेदापि वै मुनिः ॥ ३१ ॥

द्विवारमर्पयेत्यूचे सच्छिष्योपि तथाकरोत् ।
पीत्वा ररक्ष गा दुग्धं वत्सपीतावशेषकं ॥ ३२ ॥

तज्ज्ञात्वा धीभ्रंशभिया वारितो गुरुणा वने ।
अर्कक्षीरं दधौ पातुं तत्तस्याक्ष्णोः पपात ह ॥ ३३ ॥

स पपातांधवद्गावो ययुर्गेहं गुरुस्तदा ।
अन्वेष्य तं तथा दृष्ट्वा तं प्राह स्तुहि रेश्विनौ ॥ ३४ ॥

स्वं देहम् अन्नरसपरिणामतः स्थौल्यं पुष्टिः तद्भिक्षाशनरूपं कर्म ॥ ३० ॥ तद्याचितकमन्नं मह्यं देहीति भाषित उक्तः तथाकरोद्भिक्षित्वाऽदात् पश्चात्पुनरन्नयाञ्चया स्वं देहरूपमात्मानमरक्षत् ॥ ३१ द्विवारं याचितां भिक्षां मेऽर्पयेति प्राह वत्सपीतावशेषकमुच्छिष्टं अंजलावादाय पीत्वा गा ररक्ष ॥ ३२ ॥ तदपि ज्ञानदृष्ट्या गुरुणा ज्ञात्वा बुद्धिभ्रंशभयेन गुरुणा मा पिबेति वारितः ततो वने केनचिदाहतादर्काद्गलितं क्षीरं दृष्ट्वा इदमनुच्छिष्टमिति मत्वा तत्पातुं करे दधौ तद्गतं क्षीरं पानसमये तस्याक्ष्णोः पपात ॥३३॥ तेन संजातनेत्रव्यथोऽधवद्भूत्वा गर्ते पपात गावः गेहं ययुः तदाऽनागतं शिष्यं वने इतस्ततोन्वेष्य तत्परिदेवनश्रवणे चागत्य तं तथाविधं दृष्ट्वा रे शिष्याश्विनौ तन्मंत्रेण स्तुहीति तं प्राह ॥ ३४ ॥ स शिष्यः

सोऽश्विस्तत्वाद्दृष्टिमाप गुरुणा तदुपर्यपि ।
कृपा कृता तेन सोपि कृतकृत्योभवद्द्रुतम् ॥ ३५ ॥

तच्छिष्या अपि तत्तुल्या बभूवुः शृणु सादरम् ।
उद्दालकोस्य शिष्यः सन्सत्रेऽहीनदहद्बहून् ॥ ३६ ॥

जनमेजयतोषार्थं स्वर्गाच्छक्रं समानयत् ।
अयं गुरुप्रसादस्तत्तोषात्प्राप्यो न चान्यथा ॥ ३७ ॥

अतस्तमेव शरणं सर्वभावेन गच्छ भोः ।
तत्प्रसादात्परां शान्तिं मोक्षं प्राप्स्यसि दुर्लभम् ॥३८॥

॥ विप्र उवाच ॥

युज्यते भिन्नधात्वैक्यं न मुक्तायास्तथा हृदः ।
तद्वृद्भिन्नं न यास्येतः प्राणांस्त्यक्ष्यामि तेऽग्रतः ॥३९॥

॥ ३९ ॥ श्रोतुः समाधानार्थं शृण्विति अत्रोत्तंकाख्योस्य शिष्य इति सम्यग्भाति अस्योत्तंकाख्यः शिष्यः सर्पसत्रे आहुतिरूपान्बहूनहीनदहत् ॥ ३६ ॥ तत्तोषाद्गुरुसन्तोषात्प्राप्तुं योग्यः न चान्यथा स्वबुद्ध्यभ्यूहेन 'नैषा तर्केण मतिरापनेया' इति श्रुतेः ॥ ३७ ॥ ज्ञानप्राप्तिरूपात्प्रसादात्परां शान्तिमाप्स्यसि 'ज्ञानं लब्ध्वा परां' इति स्मृतेः गुरुप्रसादाद्दुर्लभमपि मोक्षं प्राप्स्यसि ॥ ३८ ॥ भिन्नानां स्वर्णादिधातुमयपात्रभूषादीनां द्रुतीकरणादिना ऐक्यं युज्यते यथा तथा न मौक्तिकस्य भिन्नस्यैक्यं युज्यते तथैव हृदो मनसः तस्य गुरोर्हृन्मनः ॥ ३९ ॥ अनुतापेन

इति तन्निश्चयं ज्ञात्वा के विन्यस्य करं गुरुः ।
तावदग्धाशुभस्यास्य प्राहांग स्वगुरुं स्मर ॥ ४० ॥

द्विजोपि स्वगुरुं स्मृत्वा तत्स्वरूपमिव प्रभुम् ।
ददर्श श्रीगुरुं प्रेम्णा तुष्टाव स मुदश्रुयुक् ॥ ४१ ॥

तमाह प्रांजलिं विप्रं श्रीगुरुस्त्वं यथाक्रमम् ।
लघु निस्तीर्य कर्मौघं परां संसिद्धिमाप्स्यसि ॥ ४२ ॥

त्वया व्यालोकि रूपं मे यत्तद्भक्त्या स्मरन्क्रियाः ।
मदर्थ इत्सदासक्तः कुर्वन्सिद्धिमुपैष्यसि ॥ ४३ ॥

दग्धमशुभं यस्य तस्य के मूर्ध्नि प्राह श्रीगुरुरिति शेषः ॥ ४० ॥ स्वगुरुस्वरूपमिव श्रीगुरुं ददर्श मुदश्रुयुक्प्रेमाश्रुक्लिन्नः ॥ ४१ ॥ क्रममनतिक्रम्येति यथाक्रमं यथा सादृश्य इत्यव्ययीभावः सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखमित्यनुक्रमेणागतं सुखदुःखफलरूपं कर्मौघं लघु क्षिप्रं निस्तीर्य भोगेन क्षपयित्वा परां निर्वाणलक्षणां सम्यक् सिद्धिमाप्स्यसि ॥४२॥ ननु 'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभं। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति श्रुतेः संचितेष्वनेकेषु सत्सु क्रियमाणेषु च विद्यमानेषु कथं कर्मौघस्य लघुनिस्तरणमित्यत आह यत्त्वया मे मम स्वरूपं दृष्टं तद्भक्त्या स्मरन्यथा देवे तथा गुरावित्यैक्यलक्षणया ध्यायन् क्रिया नित्यनैमित्तिककर्माणि मदर्थ एव कुर्वन् क्रियाचरणकालेपि सर्वदाऽसक्तः कर्मासक्तिरहितः ईदृग्वर्तमानस्त्वं अन्तःकरणशुद्ध्योपलब्धेन ज्ञानेन परां द्वैतस्फूर्तिरहितां संसिद्धिं मुक्तिं उपैष्यसि ॥ ४३ ॥ सुतरां दुर्लभं यत्स्वस्य

**इति द्विजं तं निजरूपदर्शनात्सुदुर्लभस्वात्मसुखान्वितं प्रभुः ।**
**विधाय चैकं द्विजपुत्रमागतं समुद्दधार च्छितजिह्वमप्यरं ॥४४॥**

(क्षेपकः) **ये केचन श्रीगुरुमीशबुद्ध्या सन्तापदग्धैनस आव्रजन्ति ।**
**प्रच्छिद्य ते मोहसमूहमाशु स्वानन्दसौख्यं द्विजवत्प्रयान्ति ॥१॥**

**इति श्रीगुरु० गुरुभक्त्यनुशासनं नाम दशमोऽध्यायः ॥१०॥**

प्रतीचः आत्मनः परब्रह्मणश्च यत्सुखं स्वरूपं अभेदलक्षणं तेनान्वितमखण्डैकरसं विधाय कृत्वैत्य कृष्णां द्विजपुत्रमागतमिति पाठः साधुः कथासंदर्भार्थः ॥ ४४ ॥ ये केचनेति क्षेपकः स्फुटः ॥ १ ॥

इति श्रीगुरुचरिते गुरुभक्त्यनुशासनं
नाम टीकायां दशमोऽध्यायः ॥ १० ॥

•

# अथैकादशोऽध्यायः

॥ नामधारक उवाच ॥

क आगतश्छातजिह्वः कथं भगवतोद्धृतः ।
तत्कथामृतमास्वाद्य तृष्णा मेतीव वर्धते ॥ १ ॥

॥ सिद्ध उवाच ॥

करवीरे सुधीपुत्रो जातोज्ञस्तं जगुर्बुधाः ।
विपुच्छशंगो गौस्त्वं गोभाग्यं नात्तं तृणं तु यत् ॥ २ ॥

श्रीगणेशाय नमः ॥ अथैकादशाऽध्यायः ॥ आश्वास्यैकादशे छिन्नजिह्वं विप्रं च दुर्विधम् ॥ गंगानुजेष्टकृत्कृष्णातीरे स्वाश्रममादधौ १ यद्यपि गुरूपसत्त्या सम्यक्प्रत्ययैकविषयं निर्गुणात्मतत्वं निर्दिष्टं तथापि मन्दबुद्धीनां गुणवत्त्वस्येष्टत्वाद्गुणवत्त्वं वक्तव्यं यद्यपि ब्रह्मविदां स्त्र्यादिविषयेभ्यः स्वयमुपरमो भवति तथाप्यनेकजन्मविषयसेवाभ्यासजनिता विषयविषया तृष्णा न सहसा निवर्तयितुं शक्यतेऽतस्तन्निवृत्तय ईश्वराभिन्नश्रीगुरुसेवा विधातव्येत्येतदर्थं सफलगुरुसेवातीताध्याये निरूपिता अथाधुना तद्दृढीकरणायेतरोपासनादीश्वराभिन्नगुरूपासनेनैहिकामुष्मिकसुखलाभोप्यनायासेन भवतीति प्रदर्शयितुमयमध्याय आरभ्यते छिन्नजिह्वमप्यरमुद्धारेत्युक्तः स कश्छिन्नजिह्व इत्यादि पृच्छति क इति अतीव वर्धते श्रवणेच्छा शान्ता न भवति अनौपम्यश्रवणात् ॥ १ ॥ करवीरे श्रीक्षेत्रे सुधीपुत्रः प्राज्ञपुत्रः दैवादज्ञो मूढो जातः तं विद्याभ्यासपराङ्मुखं अभ्यासे प्रवर्तयितुं तद्गृहसमीपवर्तिनः सम्बन्धिनो वा बुधास्तं प्रोचुः पुच्छशृंगरहितो गौः पशुस्त्वं यथा पशुराहारविहारमात्रतुष्टस्तथैव त्वमित्यभिप्रायः यद्धि तृणं नात्तं न भक्षितं तत्तु गवां भाग्यमेव ॥ २ ॥ तर्हि विद्यायाः किं

विद्या निधिर्हर्त्रैलभ्यः स शिष्यार्पित एधते ।
श्रेष्ठेष्वर्च्यं करोत्यूनं क्काप्यस्वं च धनान्वितम् ॥ ३ ॥

सुखे स्त्रीवावनेम्बेव सखेव क्कापि तातवत् ।
हिते बोधे च गुरुवद्विद्या धिक्त्वामविद्य रे ॥ ४ ॥

इति निर्भर्त्सितस्त्रस्तो भिल्लवाटीं ययौ स तु ।
प्रायोपविष्टोनशन आनर्च भुवनेश्वरीम् ॥ ५ ॥

दत्वाऽलब्धप्रसादोस्यै जिह्वां छेत्तुं कमुद्यतः ।
स्वप्ने देव्याह तं दण्डी कृष्णार्तीरेस्ति तं भज ॥ ६ ॥

इति श्रुत्वा दुःखितोपि धृत्यागत्य स सद्गुरुम् ।
ननामाश्रूत्तगात्रस्तन्मूर्ध्न्यधाच्छ्रीगुरुः करं ॥ ७ ॥

महत्त्वमित्यत आह द्वाभ्यां विद्या निधिरेव तर्हि "तस्करोपहरतीति चेन्न हर्त्तुरलभ्य उत च स्वयं शिष्यायार्पितश्चेदेधते वर्धते ऊनं कनिष्ठं अर्च्यं पूज्यं अस्वं निर्धनं ॥ ३ ॥ अवने रक्षणे मातेव हिते पितेव क्कापि परदेशेपि रे अविद्य त्वां धिक् ॥ ४ ॥ तैर्निर्भर्सितोतस्त्रस्तः प्रायोपवेशेनानशनत्वे सिद्धेपि पुनरुक्तिर्दाढर्यार्थं ॥ ५ ॥ भुवनेश्वर्या अलब्धप्रसादः अस्यै भुवनेश्वर्यै जिह्वां छित्वा दत्वापि पुनः कं शिरश्छेतुमुद्युक्तोभूत् तदैव दैवयोगान्निद्रा आगता तदा स्वप्ने तं देवी भुवनेश्वरी दण्डी परिव्राट् इतोऽविदूरे उत्तरे कृष्णानदीतीरे विद्यते तं स्वार्थसिद्ध्यै भज ॥ ६ ॥ इति देवीवाक्यं स्वप्ने श्रुत्वा प्रबुद्धय जिह्वाछेदेन दुःखितोपि धृत्या सात्विकेन धैर्येणोत्तरकूलमागत्य स छिन्नजिव्हः सद्गुरुं ननाम कथंभूतः अश्रुभिरुत्तं सांद्रं गात्रं शरीरं यस्य सः तदा तस्य मूर्ध्नि श्रीगुरुः स्वकरं अधात् निदधौ

स्पर्शेयोपि यथा हेम हंसः काकोपि मानसे ।
यथा विद्वांस्तथाभूत्स सुजिह्वः स्पर्शनाद्विभोः ॥ ८ ॥

वज्रांकुशध्वजाब्जांकं ध्यायंत्यंघ्य्रब्जमस्य ये ।
अपैति तत्प्रसादाद्धीजाड्याद्यं नात्र चित्रमित् ॥ ९ ॥

गुर्वाज्ञया गृहं गत्वा सिद्धिं प्रापोभयीं द्विजः ।
भगवांस्तत उत्थाय दक्षिणाभिमुखो ययौ ॥ १० ॥

कृष्णावेणीपंचनदीसंगमं सुमनोहरम् ।

॥ ७ ॥ यथा स्पर्शे संलग्नमयोपि हेम भवति काकोपि मानसे सरसि प्रविष्टो हंसो यथा भवति तथा विभोः करस्पर्शनादेव स छिन्नजिव्होपि शोभना जिव्हा अतिशयेन शोभनभाषिणी मधुरालापा च यस्य स उपलक्षणमेतत्संजातात्मज्ञानयोग्यकार्यकारणसंघातः विज्ञानं व्यावहारिकं पारमार्थिकं चास्यास्तीति विद्वानभूत् ॥ ८ ॥ कैमुतिकन्यायेन नेदं चित्रं वज्राद्या अंका यस्मिन्तादृशं अस्य श्रीगुरोरंघ्रिकमलं ये ध्यायंति तेषां प्रसादान्नृणां बुद्धिजाड्यादि अपैति विनश्यति किं पुनस्तस्मिन्भगवति श्रीगुरौ प्रसन्ने धीजाड्याद्यपैतीति वक्तव्यं अतोत्र प्रकृते चित्रमाश्चर्यं नैव ॥ ९ ॥ तदा श्रीगुरोराज्ञया गृहं गत्वा गृहस्थाश्रममास्थायानासक्त्येश्वर-प्रीत्यर्थं लोकसंग्रहार्थं च नित्यनैमित्तिककर्माणि कुर्वन् ऐहिकीं इहलोक उपभोग्यां स्त्रीपुत्रादिरूपां आमुष्मिकीं निरतिशयानन्दब्रह्मानुभवरूपामेव-मुभयीं सिद्धिं प्राप ॥ १० ॥ यथाष्टप्रकृत्यन्विते देहे चिच्छक्तिजीवश-क्त्योर्योगे पंचनदीसंगमाख्य आज्ञाचक्रे सुतरां मनोहरं स्थलं दृष्ट्वा योगी ततः परे तटे ब्रह्मरंध्रे गतिनिवृत्तिं कुरुते तट इति जगज्जन्मादितटस्थ-लक्षणे अथवा परे सर्वोत्कृष्टे अतटे स्वरूपे सच्चिदानन्दाख्ये तादृशमेवा-

अष्टतीर्थान्वितं पुण्यं दृष्ट्वा तस्थौ परे तटे ॥ ११ ॥

सरस्वती शिवा भद्रा कुंभा भोगवतीत्यमूः ।
कृष्णावेण्योः संगतास्तत्संगमस्तूत्तमोत्तमः ॥ १२ ॥

स्थलं कुरुपुराख्यं तत्कुरुक्षेत्राधिपुण्यदं ।
साक्षात्प्रयागोयमग्रे काश्याः श्रेष्ठं महास्थलं ॥ १३ ॥

तत्रोदुंवरकल्पद्रुर्विश्वेट्तुल्योमरेश्वरः ।
योगिन्योपि चतुःषष्टिर्नरोप्यत्रामरो भवेत् ॥ १४ ॥

स्वर्याति ना तपःस्नायी संगतेत्र सितासिते ।

ष्टतीर्थान्वितं 'कृष्णा विष्णुतनुः साक्षाद्वेण्या देवो महेश्वर' इत्युक्तत्वात्कृष्णासहिताया वेण्या भेदरहितहरिहररूपायाः पंचनद्या सह संगमं सुमनोहरं दृष्ट्वा तस्याः पश्चिमे तटे उदुंवरमूले भगवान् तस्थौ ॥ ११ ॥ सरस्वत्यादिपंचनद्य एकीभूय कृष्णावेण्योः संगताः तत्संगमस्तूत्तमेषु गंगायमुनादिसंगमेष्वप्युत्तमः ॥ १२ ॥ तत्स्थलं कुरुपुराख्यं 'त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते । अर्धतस्तु कुरुक्षेत्रमर्धतस्तु पृथूदकम्' इति विशिष्टतरोक्तात्कुरुपुरादधिकपुण्यदम् । अयं संगमः साक्षात्प्रयागः इतोग्रे पूर्वतः काश्याः श्रेष्ठं युगालयाख्यं (जुगुल) महास्थलम् ॥ १३ ॥ अत्र भगवन्निवासस्थाने कृष्णायाः परे तटे उदुंवर एव कल्पद्रुः कल्पद्रुमः काशीस्थेन विश्वेश्वरेण तुल्योमरेश्वरोस्ति चतुःषष्टियोगिन्योप्यत्र वसन्ति रागादिर्युक्तो नरोप्यत्र निवासेनामरः शमादिसम्पन्नो भवेत् ॥ १४ ॥ अत्र सितासिते संगते अत्र तपःस्नायी माघस्नायी ना पुरुषः स्त्रीर्वा स्वर्गं याति 'सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतंति' इति श्रुतेः अवा-

तीर्थान्यवाक्प्रवाहेत्र महाघघ्नानि कोटिशः ॥ १५ ॥

मुमुक्ष्वाश्वासनं कामिहितं सत्तमरंजनम् ।
दृष्ट्वाश्रमं मूर्तिमत्स्वं परात्मोदुंबरे व्यधात् ॥ १६ ॥

सद्विद्याढ्यामरपुरं प्राङ्निरीक्ष्यैत्य तत्र सः ।
स्वाचारं वैदिकं दीनं प्रभुर्भिक्षां स्म याचते ॥ १७ ॥

भिक्षावृत्तेस्तदा साध्वी सात्विकस्य कुटुंबिनी ।
अन्नाभावाद्ददौ शाकमातिथेयी तु भिक्षवे ॥ १८ ॥

अवाक्प्रवाहे दक्षिणाभिमुखे प्रवाहे शुक्लतीर्थमारभ्य संगमपर्यंतं कोटिशस्तीर्थानि 'स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतंति चत्वारः पंचमश्चाचरंस्तैः' इति ते श्रुत्युक्ताः पंच महापापिनस्तैः कृतानि महान्त्यघानि निघ्नन्तीति महाघघ्नानि ॥ १५ ॥ मुमुक्षूणामाश्वासनभूतं कामिनां कामपूरणरूपं हितकरं सत्तमानां परमाह्लादप्रदत्वेन रंजयतीति तथाभूतमाश्रमं दृष्ट्वा परात्मा श्रीगुरुर्मूर्तिमत्स्वं स्वरूपं विशेषेणाधात् ॥ १६ ॥ उदुंबरस्याधोभागे शोभना विद्या पराख्या येषां ते सद्विद्या ब्राह्मणास्तैराढयं युक्तं अमरपुरं प्राक्पूर्वतो निरीक्ष्य तत्र पुरे कस्यचिद्द्विजस्य गृहमेत्य शोभनाचारं वैदिकं विप्रं प्रति स्वयंप्रभुरपि भिक्षां याचते स्म लट् स्मे इति भतार्थे लट् ॥ १७ ॥ यायावरसंज्ञिता भिक्षैव वृत्तिर्जीवनं यस्य तस्य सात्विकस्य विप्रस्य कुटुंबिनी पत्नी साध्वी पतिव्रता स्वयमातिथेयी अतिथिषु साधुरपि पथ्यतिथीति ढञ् टिड्ढाणञिति ङीप तद्दिनेन्नाभावाद्धेतोरन्नादाने च प्रत्यवायभीता सती तस्मै भिक्षवे भिक्षुरूपाय प्रभवे शृतं शाकं ददौ ॥ १८ ॥ तया भक्त्यार्पितं शाकमपि प्राश्य भुक्त्वा संतुष्ट ईश्वरो

भक्त्यार्पितमपि प्राश्य शाकं संतृप्त ईश्वरः ।
तत्र शाकलतां दृष्ट्वा तामुत्पाट्याश्रमं ययौ ॥ १९ ॥

तदा स्त्रीर्दुःखिता प्राह योगक्षेमकरी कुतः ।
उन्मूलिता लता नैव भिक्षाशाठ्यं मया कृतम् ॥ २० ॥

तां भर्तोचे मौनमेहि न कोपि सुखदुःखदः ।
लोकाः स्वकर्मसूत्रोता वृथाहंकारसंश्रिताः ॥ २१ ॥

ईशाधीनं जगत्सर्वं येनाप्तव्यं तु यत्ततः ।
कोपि नेशोन्यथाकर्तुमायुश्चान्नं स यच्छति ॥ २२ ॥

गच्छन् तत्रांगणे शाकलतां कुटुंबजीवनभूतां दृष्ट्वा धनं दातुमिच्छुस्तां लतामुत्पाट्याश्रमं गतः ॥ १९ ॥ तदा दुःखिता ब्राह्मणी पतिं प्राह नाथ पश्याद्य योगक्षेमकरी लता कुत उत्पाटिता शाकदाननिमित्तोत्थितेन कोपेनेति चेन्मया भिक्षाशाठ्यं भिक्षाकापट्यं नैव कृतं ॥ २० ॥ दोषकर्तुर्या गतिः सैव वक्तुरित्यर्थात्सिद्धमुपदिशति तामिति तां दुःखितां भार्यां भर्तोवाच मौनमेहि तूष्णीं तिष्ठ परदोषाविष्करणं मा कुर्विति भावः यतो 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ॥ अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इति विधिना चोदितोहं भर्तापि दुःखितो नाभवं त्वं तु भर्तुर्योग्या भार्यैवंभूतापि सती कुतः शोचसि यतः कोपि सुखदुःखदो न लोकास्तु स्वकर्मसूत्रग्रथिता न स्वतंत्रास्तथापि वृथाहंकारमाश्रिताः ॥ २१ ॥ यत ईश्वराधीनं सर्वं जगत् येन यदाप्तव्यं सुखदुःखादि तदन्यथाकर्तुं कोपि न समर्थः येनायुर्दत्तं सोन्नमपि दास्यति 'फलमत उपपत्तेः' इति न्यायात् ॥ २२ ॥ विश्वोत्पत्त्यादिकारणस्येश्वरस्य प्राज्ञादौ

विश्वोद्भवलयत्राणनिदानस्यास्य चैकदृक् ।
आज्ञेशे राज्ञि रंकेपि मा शुचस्तारकोस्त्ययं ॥ २३ ॥
इत्याश्वास्य वधूं विप्रो मूलमुत्खाय तत्र सः ।
अर्थपूर्णं घटं लेभे सद्गुरोः सम्प्रसादतः ॥ २४ ॥
सभार्योथ द्विजो गत्वा शशंस गुरवे तु तत् ।
स प्राह दंपती गोप्यमिदं श्रीर्नान्यथा ध्रुवा ॥ २५ ॥
ऐश्वर्यपुत्रपौत्राढ्यौ संभूयात्र निरामयौ ।
मोक्षं गमिष्यथो नूनं गन्तव्यं सुखमालयं ॥ २६ ॥

॥ नामधारक उवाच ॥

भिक्षावृत्तिः प्रभोः कस्मात्कल्पद्रुम उदुंबरः ।
सति पूज्यतमेश्वत्थे कुतो भगवता श्रितः ॥ २७ ॥

न विषमदृष्टिः किंत्वेकैव मा शुचः शोकं मा कार्षीः शोको नामेष्टादिवियोगनिमित्तो मानसः सन्ताप अयं नस्तारकोस्ति ॥ २३ ॥ अर्थपूर्णं स्वर्णद्रव्यपूर्णं सम्प्रसादोयं कथं यतो धननिमित्तोनर्थः स्मर्यते सत्यं शुचीनां भगवन्निष्ठानां तु धनलाभे यज्ञादिचित्तशोधकं कर्म भवति नेतरेषां विषयभोगनिष्ठानां कदर्याणां वा अत उक्तं सम्प्रसादत इति।२४॥ स गुरुः प्राह हे दंपती इदं गोपनीयं अन्यथा श्रीर्ध्रुवा न स्यात् ॥२५॥ ऐश्वर्यादियुक्तौ निरामयौ च भूत्वैहिकं सुखमत्रानुभूय मत्प्रसादान्नूनं मोक्षं गमिष्यथः भवत्सेवार्थमत्रैव स्थास्याव इत्यत आह सुखं यथा तथा युवाभ्यां स्वालयं गन्तव्यं इति श्रीगुरुणा प्रस्थापितौ तौ दम्पती गृहं गत्वा तथैव बभूवतुः आलय इति मूलं ॥ २६ ॥ ऐश्वर्यदातुः प्रभोः स्वोदरभरणार्थं कुतो भिक्षाटनमिति पृच्छति प्रभोः समर्थस्यापि कस्माद्धेतोर्भिक्षावृत्तिः प्रश्नान्तरमाह 'अश्वत्थः सर्ववृक्षाणाम्' इति स्मृतेर्भगवद्विभूतिरूपेश्वत्थे पूज्यतमे सति भगवता कुत उदुंबरः श्रितः ॥ २७ ॥

॥ सिद्ध उवाच ॥

पक्वान्नभिक्षुको भिक्षुरिति श्रुतमतं प्रभुः ।
भिक्षुः सन्लीलया भेजे शम्भुवृत्तिरियं पुनः ॥ २८ ॥
नखा नृसिंहावतारे विषार्ता दैत्यदारणात् ।
शान्ता औदुंबरैः सोथ प्रीत्यानेन सदाश्रितः ॥ २९ ॥
यत्र क्वाप्येष कल्पद्रुर्भूयात्तापाघदैन्यहृत् ।
कामदोहं श्रियात्रासमिति तस्मै वरोर्पितः ॥ ३० ॥
विश्वात्मा यत्र तत्रैव वेदतीर्थामरा अपि ।
संत्युदुंबर एवात्र कल्पद्रुर्भुवि नापरः ॥ ३१ ॥

उत्तरमाह भिक्षुः परिव्राट् पक्वान्नभिक्षुकः 'यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ' इति स्मरणात् इतीत्थं श्रुतस्य मतं मतिबुद्धीति वर्तमाने क्तः क्तस्य च वर्तमान इति षष्ठी 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरंति' इति श्रुतिमतं वा स्वयंप्रभुरपि सन् लीलया जगद्रक्षार्थं भिक्षुः सन्लोकशिक्षार्थं तन्मतं भेजे पुनश्चेयं शंभुवृत्तिः श्यति दुःखं तनूकरोतीति शं सुखं तद्भवत्यस्या इति शंभुः सा चासौ वृत्तिश्च 'भिक्षाहारी निराहारी भिक्षा नैव प्रतिग्रहः। भिक्षाहारी प्रकुरुते सोमपानं दिने दिने' इति स्मरणात् शंभोः शङ्करस्य वृत्तिर्वेयम् ॥२८॥ द्वितीयस्योत्तरमाह नृसिंहावतारेस्य विभोर्हिरण्यकशिपुदैत्यकोष्ठविदारणात् तदंतर्गतविषेण तापकेन नखा आर्तास्तप्ता अभूवन् नखोस्त्री नखरोस्त्रियामपि पुंस्त्वमपि तदा लक्ष्म्याऽऽनीतैरौदुंबरैश्चिकित्सितास्ते नखाः शान्ता जाता अथानन्तरं स उदुम्बरः प्रीत्यानेन भगवता सदाऽऽश्रितः ॥ २९ ॥ यत्र क्वापि खेटे ग्रामे तीर्थे वा भक्तकामदोहं भगवान् श्रिया सहात्रोदुम्बरे आसमित्येवं तस्मै वरोर्पितोतएव तत्र तिष्ठति ॥ ३० ॥ यत्रोदुम्बरवृक्षेतएव भुव्युदुम्बर एव कल्पवृक्षः नापरः ॥ ३१ ॥ तस्माद्धेतोः यद्वा यद्दिने ग्रामे शाकभिक्षा

तस्मादुदुंबरतले भिक्षां कुत्रापि विश्वभृत् ।
अकृत्वा कामरूपाभिर्योगिनीभिः स्थितोर्चितः ॥ ३२ ॥

अज्ञानावृतविप्रास्तदज्ञात्वोचुः परस्परम् ।
कथं जीवत्यकृत्वायं भिक्षां मृग्यं तदद्य हि ॥ ३३ ॥

इत्थं विचार्य तस्थुस्ते मध्याह्ने योगिमायया ।
त्रस्ता ग्रामं ययुः कोपि ज्ञातुं शक्योस्य चेष्टितम् ॥३४॥

श्रीगुरुं द्रष्टुमागत्य भाविको भक्तिभावनम् ।
गंगानुजाख्यभक्तोत्र दृष्टवान् चित्रमेकदा ॥ ३५ ॥

जलपूर्णापि कृष्णादान्मार्गं तेनागमत्प्रभुः ।
ददर्शान्वेत्य भक्तोपि पुरीं दिव्यामिवांतरे ॥ ३६ ॥

नीराजितो योगिनीभी रत्नसिंहासनस्थितः ।
स्वार्चितः प्रेक्ष्य तं देवः प्राह कोस्यागतः कुतः ॥ ३७ ॥

कृता तस्माद्दिनादारभ्य कुत्रापि भिक्षामकृत्वा कामरूपाभिर्योगिनीभिर्भिक्षादानार्चितो विश्वभृत् उदुम्बरतल एव स्थितः ॥ ३२ ॥ तद्विभोश्चेष्टितमज्ञात्वा परस्परमूचुः ग्रामे भिक्षामकृत्वायं कथं जीवति तज्जीवनसाधनमद्यास्माभिर्मृग्यं ॥ ३३ ॥ विलीय तस्थुः मध्याह्ने योगिन ईश्वरस्य मायया मोमुह्यमानास्त्रस्ता द्वितीयाभिनिवेशादीश्वरादेव भीताः ॥ ३४ ॥ चित्रमाश्चर्यं ॥ ३५ ॥ जलेन पूर्णागाधजलापि कृष्णा भगवते मार्गमदात् तेन प्रभुर्द्वीपे कृतमाश्रममगात् गंगानुजो भक्तोप्यनु पश्चादागत्यान्तरे द्वीपे दिव्याममरावतीमिव पुरीं ददर्श ॥ ३६ ॥ देवः श्रीगुरुः तमन्वागतं प्रेक्ष्य कोसि त्वं कुतो हेतोरागतोसीति तं प्राह ॥ ३७ ॥ अत्रत्योत्र ग्रामे

॥ गङ्गानुज उवाच ॥

गङ्गानुजाभिधोहं त्वामत्रत्यो द्रष्टुमन्वगां ।
भवान्परात्मा सर्वेशो दैवान्मेद्यात्र गोचरः ॥ ३८ ॥

त्वन्मायामोहितात्मानस्त्वां विदुः केवलं नरम् ।
संसारसागरेपारे ततो मज्जंति नेतरे ॥ ३९ ॥

इति प्रेम्णा स्तुतस्तस्मै हृद्यं दत्वेश्वरोब्रवीत् ।
मयि सत्यत्र यद्दृष्टं नाख्येयं कस्यचित्त्वया ॥ ४० ॥

इत्युक्तो गुरुणा हृष्टो भक्तः क्षेत्रं स्वमेत्य सः ।
लेभेऽसम्भाव्यसस्यर्धिं लोके श्रैष्ठ्यं च संविदं ॥ ४१ ॥

भवोहं त्वां द्रष्टुमन्वगां यतो भवान्परात्मा तर्हि कथं त्वया दृष्टोत आह दैवादिति पूर्वोपचितपुण्यपाकवशात्संजातयानन्यभक्त्याद्य भवान्गोचरो दर्शनविषयो जातः 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' इति स्मृतेः ॥ ३८ ॥ यथा त्वयाहं परात्मेति ज्ञातस्तथान्येपि कथं न जानंतीत्यत आह त्वन्मायामोहित आत्मान्तःकरणं येषां ते त्वां केवलं प्राकृतं नरं विदुः अतोऽज्ञानादपारेनेकशतकोटिजन्मभिरपि पारं ब्रह्माख्यं गंतुमशक्ये संसारेऽब्धाविव ते मज्जन्ति इतरे त्वदुपासकास्त्वत्स्वरूपज्ञाः न मज्जन्ति ॥ ३९ ॥ इति तेन प्रेम्णा स्तुत ईश्वरस्तस्मै हृद्यं वरं दत्वाब्रवीत् ॥ अत्र मयि सति विद्यमाने त्वया यद्दृष्टं तत्कस्यचिन्नाख्येयं यावदनेन रूपेणात्र स्थास्ये तावदिदं कस्मैचिन्न वाच्यं पश्चात्कथने तु न प्रतिबन्ध इत्यर्थात्सूचितं ॥ ४० ॥ असंभाव्यसस्यर्धिं अपरिमितसस्यं लोके सन्मानादिश्रैष्ठ्यं आत्मानात्मविवेकक्षमां संविदं ज्ञानं च लेभे ॥४१॥ आनर्च पूज-

स एत्य नित्यमानर्च गुरुं प्राहैकदा गुरो ।
काश्यां तु त्रिस्थलीयात्रा वरेत्याहुर्न वेद्मि तां ॥ ४२ ॥

॥ श्रीगुरुरुवाच ॥

प्रयागः संगमः काशीयं गया करवीरपूः ।
दर्शयामीदमेतद्वत्त्रिस्थलं ते द्रुतं परं ॥ ४३ ॥
इत्युक्त्वा धारयित्वा स्वपादुके त्रिस्थलीं त्विमां ।
प्रयागकाश्यौ गयां च दर्शयित्वागमत्क्षणात् ॥ ४४ ॥
तमाह त्रिस्थली त्वेषा दर्शितान्यापि तादृशी ।
साम्यं ज्ञात्वोभयोरत्र स्वाचारान्मुक्तिमेष्यसि ॥ ४५ ॥
इति योगीशवाक्यं स श्रुत्वा ज्ञात्वास्य चेष्टितं ।
तद्ध्यानात्कर्मबन्धं द्राक्छित्वा मुक्तो बभूव ह ॥ ४६ ॥
वृद्धोत्र महिमा संत आयास्यंतीतरेऽप्यतः ।

यामास वरा श्रेष्ठावोघहरा यद्यपि काश्यां त्रिस्थलीयात्रा नास्ति तथापि न वेद्मीति वाक्येनाज्ञानत एवमुक्तं तथापि लक्षणया न दोषः ॥ ४२ ॥ अयं कृष्णापंचनदीसंगमः प्रयागः यत्युगालयाख्यं कृष्णायां तीर्थमियमेव काशी करवीरपुरं गया इदन्ते दर्शयामि पुनश्चैतद्वदेतेन तुल्यं अपरं प्रयागकाशीगयाख्यं त्रिस्थलं ते द्रुतं दर्शयामि ॥४३ ॥ इमां संगमयुगालयकरवीराख्यां त्रिस्थलीं दर्शयित्वा योगगत्या तं नीत्वा प्रयागं काशीं गयां च दर्शयित्वा क्षणमात्रत एव पुनः स्वाश्रममागमत् ॥४४॥ तं गंगानुजमाह श्रीगुरुरिति शेषः स्नानदानश्राद्धाद्याचरणेन मुक्तिं मोक्षं स्वाचारशब्दान्निष्कामानुष्ठानेनेति सूचितं ॥ ४५ ॥ योगीशवाक्यं श्रीगुरुवाक्यं अस्य गुरोश्चेष्टितमलौकिकं कर्म तद्ध्यानाच्छ्रीगुरुध्यानाद्द्राक् शीघ्रं कर्मरूपं बन्धम्॥४६॥सन्तः साधव इतरेऽसाधवोपि ननु 'एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्' इति श्रुतेः कथं वृद्धोत्र महिमेत्युक्तं नैष दोषः सच्चिदानन्दात्मनो ब्रह्मणः कर्मणा न वृद्धिर्नापि क्षयः सगुणब्रह्मणस्तु लोकानां यथा-

गंतव्यं क्वापि न स्थेयं साक्षादत्रेत्यमंस्त सः ॥ ४७ ॥

नो हित्वाद्य क्व यासीति विलपंतीः स योगिनीः ।
आश्वास्योचेत्र तिष्ठामि लोकदृष्टया गमिष्य इत् ॥४८॥

अमरेशोऽन्नपूर्णात्र विघ्नेशो युष्मदादयः ।
भक्तेष्टदा मयाप्यत्र स्थेयं वस्तुष्टये सदा ॥ ४९ ॥

इतःप्रभृत्यदः क्षेत्रं सुप्रसिद्धं भविष्यति ।
बहुलोकनिवासोत्र यास्यंत्यत्र जनाः सुखं ॥ ५० ॥

यथानुभवस्तथा तथा माहात्म्यं वस्तुतस्तु एष नित्य इत्युक्तं समंजसमेव इतोन्यत्र क्वापि गन्तव्यं अत्र तु साक्षादनेन रूपेण मया न स्थेयं इत्यमंस्त मन्यते स्म ॥४७॥न इत्यारम्भेऽसमंजसं तदा नोस्मान् हित्वाद्य क्व यासीति विलपंतीः परिदेवनं कुर्वतीर्योगिनीराश्वास्य स श्रीगुरूरूचे भो योगिन्योहमत्र न तिष्ठामीति न अपि तु तिष्ठाम्येव विभोर्मे गमनासंभवात् तथाप्यवतारानुसारेण मानुषभावमाश्रित्य लोकदृष्टयैवेतो गमिष्ये न तत्वतः इदेवार्थे ॥४८॥ अमरेशोऽमरेश्वरः युष्मदादयो योगिनीप्रमुखाः भक्तानामिष्टकामदाः वो युष्माकं तुष्टयर्थं मयाप्यत्र स्थेयम् ॥ ४९ ॥ इतःप्रभृत्यद इदं क्षेत्रं सुतरां प्रसिद्धं भविष्यति अत्र विजने बहुलोकनिवासोपि भविष्यति अत्र जना दुःखिता अपि सुखं यास्यंति यद्वैतत्स्थानप्रभावाज्जनाः सुतरां खं परमानन्दं 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' इति श्रुतेः अस्यार्थः यदेव खं आकाशं तदेव खेन विशेष्यमाणं कं एतेन विषयेन्द्रियसंयोगजात्सुखान्निवर्तितं नीलेनेव विशेष्यमाणं रक्तादिभ्यः यदेव खमाकाशं तदेव कं सुखं एवं सुखेन विशेष्यमाणं खं भौतिकादचेतनात्खान्निवर्तितमित्यादि खं ब्रह्मेति श्रुतेः ॥ ५० ॥ देशादुत्थान्सांक्रमिकान् विषूच्यादीन् इदं क्षेत्रं

सन्निपाताक्षिरुङ्मेहकुष्ठश्लेष्मक्षयज्वरान्।
वातपैत्तिकगुल्माद्यान् देशाद्युत्थान्हरेदिदं ॥ ५१ ॥
पुत्रं वंध्याभयं त्रस्तो निःस्वः स्वं रोग्यनामयं।
मुमुक्षुः सद्गतिं यद्यद्यस्येष्टं स लभेत्सदा ॥ ५२ ॥
सहस्रगोदानफलं पर्वक्रांतिग्रहाप्लुतौ।
नुः कोटिफलमत्राल्पजपहोमसुरार्चनैः ॥ ५३ ॥
प्रदक्षिणाश्वमेधादिफलदा नुः पदे पदे।
दुर्गताः पितरोप्यत्र श्राद्धाद्यांति परां गतिं ॥ ५४ ॥
इत्याश्वास्य स योगिनीः परतरः कल्पद्रुमूलेमले
संस्थाप्य स्वसुपादुके नर इह स्नात्वार्चयेदष्टसु ॥
तीर्थेष्वीश्वरयोगिनीसुरयुते मत्पादुके द्राग्लभेत्
सोभीष्टं त्विति ताः प्रभाष्य स ययौ भीमातटं योगिराट् ॥५५॥
इति श्रीगुरुचरिते ज्ञानयोगे कृष्णापंचनदी-
संगमोत्कर्षकथनं नामैकादशोऽध्यायः ॥ ११ ॥

हरेद्विनापि चिकित्सया पापक्षयादेव ॥ ५१ ॥ पुत्रं वन्ध्या लभेदिति सर्वत्र सम्बद्ध्यते निःस्वो दरिद्रः स्वं धनं रोगी अनामयमारोग्यं सद्गतिं मोक्षं दर्शादिपर्वाणि मेषादिरविसंक्रांतयः ग्रहो रविचन्द्रग्रहणं एषु कृतायामाप्लुतौ स्नाने सहस्रगोदानफलं अत्राचीर्णैर्जपाद्यैर्नुः पुरुषस्य कोटिगुणितं फलं ॥५२-५३॥ दुर्गता नरकगता अपि ॥५४॥ परतरो योगिराट् स श्रीगुरुः स्वीये शोभने पादुके संस्थाप्य प्राह यो नर इहाष्टतीर्थेषु स्नात्वामरेश्वरादियुते मत्पादुकेर्चयेदर्चेत्स नरः द्रागभीष्टं लभेत् इति ताः योगिनीः भीमातटं गन्धर्वपुरं ॥ ५५ ॥

इति टीकायां एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः

नामधारक उवाच

**गतेपि भगवत्यंग कृष्णावेर्णातटाश्रमात् ।**
**कस्मात्तत्रैव भजतां कार्यसिद्धिः कुतो वद ॥ १ ॥**

सिद्ध उवाच

**गतिस्थित्यासनस्वप्ना न कदापि चिदात्मनि ।**

श्रीगणेशाय नमः ॥ अथ द्वादशोऽध्यायः ॥ परिहृत्य प्रेतदोषं ब्राह्मण्यै पुत्रदोभवत् ॥ द्वादशेपि मृतं पुत्रं जीवयामास सद्गुरुः ॥ १ ॥ एवं गुर्वनुगृहीतानां विषयतृष्णावतामपि श्रीगुरुप्रसादादैहिकामुष्मिकसिद्धिरुक्ता अथ तस्याविष्कृतगुणमयस्वरूपस्य श्रीगुरोर्भक्तवात्सल्यं प्रदर्शयति भजनरुच्युत्पादनार्थं अंग हे सिद्ध भगवति गन्धर्वपुरं गते सत्यपि तत्रैव भजतां भक्तानां कस्माद्देवतांतरात्कार्यस्य कर्तुं योग्यस्य यज्ञदानतपोजपरूपस्य कर्मणः सिद्धिरभिमतफलप्राप्तिः । यदि भगवान् गुरुर्गतस्तर्हि भक्तानां भजनानुसारेण कस्तत्र फलदाताभूदिति प्रश्नार्थः कुत इति ल्यब्लोपे पंचमी कं कालमारभ्य कस्माद्भजतां तत्रैव कार्यसिद्धिर्जातेति वदेति सम्बन्धः ॥ १ ॥ उत्तरं सोदाहरणमाह[1] गतिर्देशाद्देशांतरगमनं स्थितिर्गतिनिवृत्तिः आसनमुपवेशनं स्वप्नः शयनं एतेऽनात्मधर्मा विभौ चिदात्मनि श्रीगुरौ न सम्भवंति । ननु निर्गुणे न सम्भवन्तु सगुणे कुतो नेत्यत आह कदापीति नित्यमलुप्तभगतया सत्यज्ञानानंतानन्दैकरसेनात्मनावतीर्णस्य श्रीगुरोर्देहाद्युपाधिसम्पर्काभावात् तर्हि भीमातटं ययाविति कथमुक्तमित्यत आह स्वेच्छया नरानुकृतिकारिणः श्रीगुरोरियं मानुषी

---

१. उदाहरणं नामैकदेशप्रसिद्ध्याशेषप्रसिद्ध्यर्थमुदाह्रियते ।

लीलेयं मानुषी तस्य नरानुकृतिकारिणः ॥ २ ॥
भाव्यतेजो भावनया यद्वत्तद्वद्विभात्यसौ ।
एवं यद्भावनात्रेदृक्तादृग्जागर्ति तत्र सः ॥ ३ ॥
योगिनीवरदानादि यैर्यैर्गङ्गानुजाच्छ्रुतं ।
ते ते भक्त्याभजंस्तत्र तं स तत्कामदोभवत् ॥ ४ ॥

मनुष्यावतारसम्बन्धिनी लीला गमनादिरूपा यथा निर्गुणं ब्रह्म स्वयमेकमेव चलनादिरहितमपि स्वयं तिष्ठत्सद्धावतोन्यानन्तःकरणसहितेन्द्रियगणानत्येत्येवमेव सगुणब्रह्मरूपोपि श्रीगुरुः श्रुतिश्च 'अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत् । तद्धावतोन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति' इति ॥ ब्रह्मानन्दकृतेशावास्यभाष्यरहस्ये तदेजतीत्यस्य व्याख्याने 'तदेजति परं ब्रह्म ब्रह्मविष्णुशिवात्मकं ॥ साकारं मायया भाति निराकारं तु वास्तवं ॥ उपाधिचलनेनैव चलनन्तु विभाव्यते ॥ तन्नैजति परं ब्रह्म निर्गुणं प्रकृतेः परम्' इत्यत्र योज्यम् ॥ २ ॥ अजः श्रीगुरुर्यया भावनया यत्र यद्वद्भाव्यते तद्वदसौ भाति एवमत्रेदृशः फलदाता साक्षादीश्वरो विद्यत इति यद्भावनोत्पद्यते तत्र भगवान् श्रीगुरुः तादृक् भावनानुसारी जागर्ति अभिमतफलं दातुं सदोन्मुखीभवति एवं भावनया यस्य यस्य यादृशं ज्ञानं तस्य व्यवहारे परमार्थे वा तादृशमेव फलं श्रुतिश्च 'असन्नेव स भवति असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति । भाष्यं[1] यो नास्ति ब्रह्मेति मन्यते स सर्वस्यैव सन्मार्गस्य वर्णाश्रमादिव्यवस्थालक्षणस्याश्रद्दधानतया नास्तित्वं प्रतिपद्यतेऽब्रह्मप्रतिपत्त्यर्थत्वात्तस्य अतो नास्तिकः सोसन्नसाधुरुच्यते लोके तद्विपरीतः सन्योस्ति ब्रह्मेति चेद्वेद स तद्ब्रह्मप्रतिपत्तिहेतुं वर्णाश्रमादिव्यवस्थालक्षणं श्रद्दधानतया यथावत्प्रतिपद्यते यस्मात्ततस्तस्मात्सन्तं साधुमार्गस्थमेनं विदुः साधवः ॥ ३ ॥ काम्यत इति कामो वरः कर्मार्थे घञ् कामं ददातीति कामदः

---

१. सूत्रस्थं पदमादाय पदैः सूत्रानुसारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ १ ॥

शृण्वेवं सति तत्रत्या मृतापत्यत्वदुःखिता ।
काचिद्द्विजभर्ता विप्रान्स्वस्त्यर्थं शरणं ययौ ॥ ५ ॥

प्रपन्नां प्रेक्ष्य तां दीनां निजभक्तिविधित्सया ।
देवप्रेरितधीः कश्चित्तद्दैवं भूसुरोब्रवीत् ॥ ६ ॥

मृतापत्यत्वदोषांस्तु शृणु साध्वि पुरार्जितान् ।
मृतापत्यत्वादिदोषाः प्रायशः प्रेतहेतवः ॥ ७ ॥

ब्रह्महा भ्रूणहा वापि गोघ्नोश्वघ्नोपरार्थहृत् ।
ब्रह्मस्वात्स्वर्णहा पापी लभेज्जन्मांतरे त्विदं ॥ ८ ॥

लोहाश्मदारुचूर्णानि प्रयत्नाज्जरयेत्पुमान् ।
ब्रह्मस्वं त्रिषु लोकेषु कः कथं जरयिष्यति ॥ ९ ॥

॥ ४ ॥ ५ ॥ स्वभक्तिप्रवृत्तये देवेन श्रीगुरुणा प्रेरिता तद्दैवप्रकाशनविषये चोदिता बुद्धिर्यस्य स कश्चिद्विप्रस्तस्या ब्राह्मण्या दैवं प्राक्तनकर्माब्रवीत् न तु ज्योतिःशास्त्राद्याधारेण ॥ ६ ॥ तत्र तावत्सामान्यतोनपत्यत्वादिहेतुमाह हे साध्वि पुरा पूर्वजन्मन्यर्जितान्कर्मणा सम्पादितान् ॥ ७ ॥ ब्रह्माणं हतवानिति ब्रह्महा ब्रह्मभ्रूणेति क्विप. एवं स्त्रैणगर्भं अर्भकं वा हतवानिति भ्रूणहा अपरार्थहृत् परद्रव्यापहारी ब्राह्मणस्य स्वं द्रव्यमत्तीति ब्रह्मस्वात् बलात्कारेण चौर्येण वा ब्राह्मणद्रव्योपभोक्ता स्वर्णस्तेयी चैषामन्यतमः पापी जन्मांतरे इदं मृतापत्यत्वानपत्यत्वादिलक्षणं पापफलं लभेदनुभवेत् तुशब्दादत्युत्कटपापफलमिहाप्यनुभवेदिति सूचितं यदाहुः 'अत्युत्कटैः पुण्य-पापैरिहैव फलमश्नुत'इति ॥८॥ सर्वदोषेभ्यो ब्राह्मणस्वहरणदोषो गरीया-नित्याह लोहमश्मसारः अश्मा पाषाणः दारु काष्ठं चैषां चूर्णानि भक्षितानि पुरुषः प्रयत्नतोपि जरयेत् परंतु ब्रह्मस्वं कः कथं जरयिष्यति न कथंचिदपि

हृतस्वार्थाभिलाषेण चेन्मृतो ब्राह्मणः स तु ।
गत्वा पिशाचतां स्वार्थी सदा स्याद्धर्तृवंशहा ॥ १० ॥
त्वया भवांतरे साध्वि हृतं शौनकगोत्रिणः ।
द्रव्यं विप्रस्य सोर्भांस्ते भूत्वा प्रेतो निहंत्युत ॥ ११ ॥
भोगादेव क्षयः साध्वि नान्यथारब्धकर्मणः ।
तस्मात्प्रारब्धजफलं भुंक्ष्व कोत्र निवारकः ॥ १२ ॥
तच्छ्रुत्वा कर्णशूलाभं त्रस्तचित्ताब्रवीद्द्विजं ।
भो ब्रह्मन्मानुगृण्हीष्व मुक्त्युपायमुपादिश ॥ १३ ॥

विप्र उवाच

प्रेतौर्ध्वदेहिकं कर्म प्रायश्चित्तपुरःसरम् ।
कारयित्वांग भर्त्रा त्वं मासमात्रं व्रतं चर ॥ १४ ॥

॥ ९ ॥ अपहृतो यः स्वस्यार्थो द्रव्यं तस्याभिलाषेण ब्राह्मणो मृतश्चेत्स स्वार्थी स्वार्थाभिलाषी सन्पिशाचतां प्राप्य सर्वदा हर्तुर्वंशहा स्याद्भवेत् ॥ १० ॥ एवं सामान्यतोभिधाय विशेषतोभिदधाति त्वयेति प्रेतो भूत्वा तवार्भकान्निहन्ति ॥ ११ ॥ १२ ॥ कर्णशूलतुल्यं तद्वाक्यं श्रुत्वा ततस्त्रस्तं चित्तं यस्याः सा ब्राह्मणी मा मां अनुगृह्णीष्व येनानुग्रहेणोक्तादोषान्मुक्तिर्भवेत्तं मुक्त्युपायमुपादिश कथय ॥ १३ ॥ प्रेतस्य प्रेत्य पिशाचभावं गतस्यौर्ध्वदेहिकं तन्मुक्त्यर्थं शास्त्रोक्तपिण्डदानादि कर्म प्रायश्चित्तपूर्वकं नारायणबल्याद्यनुष्ठानसहितमिति यावत् भर्त्रा कारयित्वा णिजन्तः स्वातंत्र्यव्यावर्तकः हे अंग साध्वि त्वं वक्ष्यमाणं व्रतं मासमात्रमाचर कारयित्वेति णिजंतेन भर्तृद्वारा प्राधान्येन स्त्रियाः कर्तृत्वं दर्शितमिति न मन्तव्यं कदाचित्क्वचिदपि त्रिवर्गे स्त्रियाः स्वातंत्र्याभावात् अत्र तु स्त्रिया पृष्टत्वात् भर्त्रा कारयित्वेत्युक्तं एवं भर्त्रे कथयेति विवक्षितार्थः ॥ १४ ॥ योगे संगमे प्रथमं

कृष्णापंचनदीयोगे स्नात्वा श्रीगुरुपादुकां ।
उदुम्बरं चाष्टतीर्थस्नानपूर्वं समर्चय ॥ १५ ॥
ब्राह्मणान्भोजयित्वाथ शतद्रव्यं द्विजातये ।
देहि शौनकगोत्राय शुद्धिस्तेनैव ते सति ॥ १६ ॥

॥ ब्राह्मण्युवाच ॥

शतद्रव्यं कुतो लभ्यं मासमात्रं करोम्यहं ।
सद्गुरोरर्चनं भक्त्या स मां पायाद्भयाद्धरिः ॥ १७ ॥
इति निश्चित्य सा पत्या यथानिर्दिष्टमाचरत् ।
दिनत्रयांतरे स्वप्ने तस्या विप्रपिशाचकः ॥ १८ ॥
ब्राह्मणीं भीषयित्वा तां ययाचे द्रव्यमात्मनः
भीतोदुम्बरमूले सा ददर्श श्रीगुरुं हरिं ॥ १९ ॥
तां च तं तादृशं दृष्ट्वा पिशाचं प्राह सद्गुरुः ।
कस्त्वं पिशाचरूपेण सतीं खेदयसेऽधम ॥ २० ॥

स्नात्वा ततोष्टतीर्थस्नानपूर्वकं गुरुपादुकां पादुके उदुम्बरं च पूजय ॥१५॥ अथ मासातिक्रमानन्तरं शक्त्या ब्राह्मणान्भोजयित्वा शतसंख्याकरौप्यमुद्रारूपं द्रव्यं शौनकगोत्रजाय कस्मैचिद्ब्राह्मणाय प्रेतोद्देशेन देहि हे सति तेनैव ते शुद्धिः पापनिष्कृतिर्भविष्यति ॥ १६ ॥ कुतो लभ्यं लब्धुं योग्यं दीनत्वात् वर्तमानसामीप्यात्करोमीति अधुनैव करिष्यामीति भावः ॥ १७ ॥ पत्या सह ब्राह्मणेन यथानिर्दिष्टं तथाऽऽचरत् दिनत्रयांतरे दिनत्रयपरिच्छिन्नेऽवधौ तस्याः स्वप्ने विप्रजातीयः पिशाचकः ॥ १८ ॥ तां ब्राह्मणीं भीषयित्वात्मनो द्रव्यं पूर्वजन्मन्यपहृतं ययाचे सा तस्माद्भीता उदुम्बरमूले श्रीगुरुं ददर्श ॥ १९ ॥ तां भीतां भीषयन्तं तादृशं ब्राह्मणं पिशाचं दृष्ट्वा सद्गुरुः प्राह रेऽधम यस्त्वं पिशाचरूपेण सतीं खेदयसे स कस्त्वं ॥ २० ॥

॥ पिशाच उवाच ॥

यतींद्र त्वय्यनर्होयं पक्षपातोहमात्मनः ।
अनयाऽपहृतं द्रव्यं याचितुं हीदृशोभवम् ॥ २१ ॥

॥ श्रीगुरुरुवाच ॥

अनेन ते कथं मोक्षो ब्रह्ममंगलयोनितः ।
येनाप्यते सद्गतिस्तच्छृणु तेन हितं भवेत् ॥ २२ ॥
योन्यंतरे हृतार्थोस्ति किंत्वत्र फलभागिनी ।
प्राप्ता दरिद्रवंशेसौ लभ्यतेतः कुतो धनं ॥ २३ ॥
अतस्तया कारयित्वा शक्त्या कर्मौर्ध्वदेहिकं ।
त्वद्गोत्राय यथालभ्यं दापयित्वा धनं खलु ॥ २४ ॥
विप्राय प्रेत कस्मैचित्ततो मोक्षं ददामि ते ।
नेदं त्वां रोचते चेत्त्वां रक्षामि स्वेच्छयाचर ॥ २५ ॥

अयं पक्षपातः त्वयि अयोग्यः यतित्वात् अनया जन्मांतरेऽपहृतं द्रव्यं याचितुमीदृशोभवं हि यतः अतो मम दोषो न वासनापारतंत्र्यात् ॥ २१ ॥ अनेन भीषणेनापत्यहननेन च बहून्यमंगलानि दुःखानि यस्या तस्याः योनेः सकाशात्ते कथं मुक्तिः येन साधनेन ते सद्गतिर्भवेत्तत्साधनं शृणु तेन तव हितं इतो मोक्षरूपं भवेत् ॥ २२ ॥ योन्यन्तरेऽनयापहृतोर्थो द्रव्यं नेहास्ति किं तु अत्र तत्फलभागिनीयमस्ति फलभागिनी चेतर्हीहापि देयमिति चेदसौ दरिद्रवंशे प्राप्ता दरिद्रेण विप्रेणोद्वाहिताऽतो हेतोः कुतो धनं लभ्यते ॥ २३ ॥ यतस्ते द्रव्यं न लभ्यतेऽतः तयौर्ध्वदेहिकं कर्म शक्त्या शक्त्यनुसारेण कारयित्वा त्वत्समानगोत्राय यथालभ्यं धनं दापयित्वा खलु निश्चयेन ॥ २४ ॥ ततस्ते मोक्षं ददामि इदं त्वां न रोचते चेत्त्वं यत्कर्तव्यं तदाचर अहं त्वत्तो भीतां तां ब्राह्मणीं

॥ पिशाच उवाच ॥

देवदेव कृतार्थोऽस्मि त्वत्पादाब्जविलोचनात् ।
ममाद्य निष्कृतिर्जाता यथेच्छसि तथा कुरु ॥ २६ ॥
एवं तन्निश्चयं ज्ञात्वा ब्राह्मणीं प्राह सद्गुरुः ।
संवादो नौ श्रुतः साध्वि तथा निर्व्याजमाचर ॥२७॥
तेनासौ सद्गतिं यायाद्वंशवृद्धिश्च ते भवेत् ।
उक्त्वैवं ध्यानगम्योभूद्धरिर्बुद्धाभवत्सती ॥ २८ ॥
पत्ये शशंस तत्सर्वं तथैवाचीकरत्क्रियां ।
तया प्रेतो गतिं लेभे साप्यपापा बभूव ह ॥ २९ ॥
अपरेहनि तत्स्वप्ने फले विन्यस्य चांशुके ।
तामाह भोजयित्वाजो विप्रान्भुंक्ष्व फले त्विति ॥३०॥

रक्षामि ॥ २५ ॥ निष्कृतिर्दुष्कर्मनिवृत्तिर्जाता ॥ २६ ॥ एवमुक्तप्रकारेण तस्य पिशाचस्य निश्चयं ज्ञात्वा सद्गुरुर्ब्राह्मणीं वक्ष्यमाणं प्राह हे साध्वि नौ आवयोः पिशाचस्य मम च संवादस्त्वयाधुना यथा श्रुतस्तथा तस्यौर्ध्वदेहिकं कर्म निर्व्याजं निष्कपटं यथातथाऽऽचर ॥ २७ ॥ तेनाचीर्णेनौर्ध्वदेहिककर्मणाऽसौ पिशाचभावं गतो विप्रः सद्गतिं गच्छेत् ततस्ते वंशवृद्धिरपि भवेत् पीडकाभावात् ध्यानगम्योऽदृश्यः बुद्धा गतस्वप्ना ॥२८॥ तत्सर्वं स्वप्नदृष्टं तया आचरितया क्रियया प्रेतभावं प्राप्तो विप्रो गतिं प्रेतत्वनिवृत्त्योत्तमलोकप्राप्तिं लेभे अपापा गतदोषा ॥२९॥ एतेनोपवर्णनेन प्रेते विचिकित्सा मनुष्ये नायमस्तीति चैके इति केषांचिन्मतं तदपध्वस्तं 'योनिमन्ये प्रपद्यंते शरीरत्वाय देहिन' इत्यादिश्रुतेः अपरेहनि तस्याः स्वप्ने फले नारिकेलफलेंऽशुके परिहितवस्त्रपल्लवे विन्यस्याजः श्रीगुरुस्तां प्राह ब्राह्मणान्भोजयित्वेमे फले भुंक्ष्वेति ॥ ३० ॥ एवं स्वप्ने दृष्ट्वा प्रबुद्धापि

अबुद्धापि फले दृष्ट्वा भोजयित्वा द्विजान् फले ।
कान्तेन साकं बुभुजे ततोभूद्गर्भिणी सती ॥ ३१ ॥
काले दत्तप्रसादेन सूर्याचन्द्रमसाविव ।
पुत्रावसूत विप्रोपि जातकर्मादिकं व्यधात् ॥ ३२ ॥
ततोष्टमेब्दे ज्येष्ठस्य व्रतबन्धं चिकीर्षुणा ।
सम्भाराः सम्भृताः पित्रा तदाद्भुतमिवाभवत् ॥ ३३ ॥
अकस्मात्सन्निपातेन ज्येष्ठपुत्रो ममार हि ।
उच्चै रुरोद तन्माता कोरस्ताडनपूर्वकं ॥ ३४ ॥

ते फले दृष्ट्वा पत्ये विज्ञाप्य ब्राह्मणान्भोजयित्वा पत्या सह फले बुभुजे ततः फलरूपप्रसादात्सती सा गर्भिणी अभूत् ॥ ३१ ॥ काले दशमे मासि सूर्याचन्द्रमसावित्यत्र देवताद्वंद्वे आनङ् व्यधाद्व्यकृणोत् ॥३२॥ ज्येष्ठस्य ज्येष्ठपुत्रस्य यमयोर्मध्ये पश्चाज्जातस्य व्रतबन्धं उपनयनं कर्तुमिच्छुना पित्रा पूर्वेद्युः सर्वे सम्भाराः सम्भृतास्तदाद्भुतमिवाभवत् ॥३३॥ तदेवाह सहसा सन्निपातेन 'त्रयः प्रकुपिता दोषा उरस्रोतोनुगामिनः । आमातिवृद्ध्या ग्रथिता बुद्धींद्रियमनोगताः। जनयंति महाघोरमभिन्यासं ज्वरं दृढं। श्रुतौ नेत्रे प्रसुप्तिः स्यान्न चेष्टां कांचिदीहते। न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने। न घ्राणं न च स्पर्शं शब्दं वा नैव बुद्ध्यते। शिरो लोठयतेभीक्ष्णमाहारं नाभिनन्दति ॥ कूजति तुद्यते चैव परिवर्तनमीहते। अल्पं प्रभाषते किंचिदभिन्यासः स उच्यते। प्रत्याख्यातः स भूयिष्ठं' इति। अभिन्यास इत्यत्र चरकः 'कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः। सोभिषंगज्वरो ज्ञेयो यश्च भूताभिषंगज' इति। सान्निपातेन ज्येष्ठपुत्रो ममार प्रयतो 'वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति श्रुत्युक्तप्रकारेण हस्तपादादीन्विक्षिप्य मर्मस्थानानि निकृंतत इव प्राणानुत्सृजन्क्रमेणोपसंहृतकरणो ममार हीति विषादे हि विस्मयविषादयोरित्यभिधानात् कं शिरः

॥ ब्राह्मण्युवाच ॥

हा पुत्र क्व गतोसि त्वं पयो मे स्रवते वृथा ।
कति शेषेऽचिरं वत्स बुद्ध्यस्वेदं पयः पिब ॥ ३५ ॥

भोजनावसरोयन्ते भुक्त्वा रंतुं चरांगणे ।
वयस्या आव्हयंति त्वामुत्तिष्ठोत्तिष्ठ मा स्वप ॥ ३६ ॥

त्वं नोत्तिष्ठसि चेत्प्राणांस्त्यक्ष्याम्यग्रे तवाधुना ।
जाता ये पंच पुत्रा मे तेषां त्वं प्राणवन्मम ॥ ३७ ॥

मृते त्वयि मरिष्ये मे यतः प्राणोसि केवलं ।
रे दोहदप्रभृत्यद्य यावद्दुःखं न दापितम् ॥ ३८ ॥

गर्भे नष्टास्त्रयोर्भास्तद्दुःखं त्वन्मुखवीक्षणात् ।
मया विस्मृतमद्याकसिन्धौ त्यक्त्वा क्व यास्यसि॥३९॥

उरः वक्षःस्थलं तत्ताडनपूर्वकं रुरोद ॥ ३४ ॥ रुदती सुतं प्राह हा इति खेदे उत्संगस्थस्यापि क्व गत इति पृच्छा मरणनिमित्ता किं शेषे एतर्हि बहुकालात्ययो जातोत उत्तिष्ट कतिकालं शेषे हे वत्सा २ अचिरं शीघ्रमेव बुद्ध्यस्वेदं पयः पिब ॥ ३५ ॥ अयं तव भोजनसमयः वयस्यास्त्वां रंतुमाह्वयंत्यतो भुक्त्वांगणे रंतुं गच्छ स्वापं मा कार्षीः आक्रोशाद्द्विरुक्तिः उत्तिष्ठोत्तिष्ठेति ॥ ३६ ॥ अधुना त्वं नोत्तिष्ठसि चेत्तवाग्रतः प्राणांस्त्यक्ष्यामि ये मे पंच पुत्रा जातास्तेषां मध्ये त्वं मम ॥ ३७ ॥ प्राणतुल्योऽसि त्वयि मृते सत्यहमपि मरिष्ये यतस्त्वं केवलं मम प्राणोऽसि ॥ ३८ ॥ अर्भा अर्भकास्तन्मरणनिमित्तजनितदुःखं त्वन्मुखवीक्षणेन मया विस्मृतं स त्वमद्य मां दुःखसमुद्रे त्यक्त्वा क्व गन्तुमिच्छसि ॥ ३९॥ अस्मत्परित्याग-

धर्मोयं ते न वार्धक्ये त्राता नौ पुत्र को वद ।
एवं तद्वदितं श्रुत्वा तत्रत्या ऊचुरेत्य तां ॥ ४० ॥

किं शोचसि वृथा भीरु मृत्युर्देवर्षिदानवान् ।
न विस्मरति कालेपि मनुष्याणां तु का कथा ॥४१ ॥

अवतारा येवतीर्णास्तेऽपि कालवशं गताः ।
एवं सति वृथा शोकं त्वं मा कुरु विचारय ॥ ४२ ॥

॥ सोवाच ॥

अहो बत पिशाचोत्थं दूरीकृत्य भयं हि मे
येन देवेन यद्दत्तं फलं तद्विफलं कथम् ॥ ४३ ॥

यदि तस्य मृषा वाक्यं तं भजंति कुतोपरे ।
बिभीषणध्रुवमुखैर्मंतव्यं तद्दतं कथम् ॥ ४४ ॥

रूपोयं ते तव पुत्रस्य न धर्मः यतो हे पुत्र नौ आवयोस्तत्र मातापित्रोर्वार्धक्ये त्वत्तोन्यः कस्त्राता न कोपीति मन्ये कोपि भविष्यतीति चेद्वद पुत्रं विनेहामुत्र च न कोपि त्राता ' शश्वत्पुत्रेण पितरोत्यायन्बहुलं तमः। ज्योतिर्हि पुत्रः परमे व्योमन्' इति श्रुतेः तत्रत्यास्तत्र ग्रामे भवा जनाः ॥ ४० ॥ हे भीरु भयशीले ऊचुत इत्यूङ् वृथा किमर्थं शोचासि काले देवादीनपि न विस्मरति पुनर्मर्त्यलोकनिवासिनां मनुष्याणां तु का कथा ॥ ४१ ॥ अवतारा रामकृष्णादयस्तेपि नष्टाः विचारय देहात्मनोर्विचारं कुरु ॥ ४२ ॥ पिशाचादुत्पन्नं भयं दूरीकृत्य यद्दत्तं पुत्ररूपं फलं तद्विफलं नष्टप्रायं कथं जातं ॥ ४३ ॥ मृषा मिथ्याभूतं अपरेऽतोन्ये यथाहं भक्ता तथैव विभीषणाद्याः ममेदृशी गतिर्जाता चेत्तैस्तद्वरदानं कथमृतं सत्यमत्राधं मंतव्यं ॥ ४४ ॥ यत एवमतो लोकांतरे स्वर्गादौ पुत्रेण सह तत्कीर्ति

लोकांतरे नयाम्येतां तत्कीर्तिं सूनुना सह ।
एवं रुदित्वा संस्कर्तुं न ददौ शवमंगना ॥ ४५ ॥
ग्रामे तु भोजनाभावाल्लोकास्त्रस्तास्तदैत्य हि ।
यदृच्छयाब्रवीद्वाग्मी जटिलस्तापसः सतीं ॥ ४६ ॥
किं शोचसि मुधा साध्वि शोकस्याविषयं सुतम् ।
सुतस्तवैव देहो वा जीवो वा ब्रूहि सारतः ॥ ४७ ॥
त्वग्रक्तमांसास्थिमयो देहोयं पुरतस्तव ।

नयामि संस्कर्तुं दग्धुं ॥४५॥ वाग्मी युक्तिपटुः वाचो ग्मिनिरितीनिप्रत्ययः तद्रूपो भगवान् ॥ ४६ ॥ सुतस्य शोकाविषयत्वमाह यः सुतो ममेति त्वया मतः स तव सुत एव संनिकृष्टो देहो वा तद्व्यतिरिक्तो जीवो वा सारतः सारभूतं न्याय्यं ब्रूहि ॥४७॥ देह इति चेत्त्वग्रक्तमांसास्थिविकारः षाट्कौशिकोयमचेतनो देहस्ते पुरोभागे विद्यते तदर्थं कुतः शोचसि तर्हि जीवापेतात्षाट्कौशिकादेहाद्विलक्षणो जीवो येनायं संघातोऽचेतनोपि सचेतन इवाभाति स जीवः सुत इति चेत्स परमात्मांशो जन्मादिवर्जितः सर्वगः आत्मत्वाद्ब्रह्मरूपः यत आत्मा द्विविधो व्यवहारविशिष्टः केवलश्च व्यवहारोपि त्रिविधः सुषुप्तिः स्वप्नो जागृतिश्च सुषुप्त्यवस्थायामयं जीवः स्वोपाधिविलये सति परमानन्दरूपं ब्रह्माप्नोति 'सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति' इति श्रुतेराप्नोतीत्यात्मेत्येकं निर्वचनं ॥ १ ॥ यदा वागादिकरणोपशान्तिरूपं स्वप्नं प्राप्नोति तदा गिरिनदीसमुद्रमनुष्यपश्वादिसर्वपदार्थोपेतस्य लोकस्य तत्तत्पदार्थतोपच्छिद्य वासनारूपं लेशमादाय जागरणाभिमानं स्वयमेव विनाश्य जगद्रूपं स्वयं निर्माय जगदाकारेण स्वकीयेनांतःकरणेन स्वचैतन्योपकल्पितपदार्थावभासकेन जाग्रद्वासना आदत्त इत्यात्मेति द्वितीयं निर्वचनं श्रुतिश्च 'स यत्र प्रस्वपित्यस्य लोकस्य

जीवोजः सर्वगोनन्तः कोत्र शुग्विषयो वद ॥ ४८ ॥
कालकर्मगुणोत्पन्नं जगन्मायामयं त्विदम् ।
कथं ध्रुवं हि मन्तव्यं यथा कर्मैंद्रजालिकम् ॥ ४९ ॥
कालकर्मगुणाद्युत्थदेहिनः स्वत्वकल्पना ।
पुत्रादिरूपा मिथ्यैषा नद्यां काष्ठौघवच्चला ॥ ५० ॥
त्वया ध्रुवा मतेयं चेद्वद पूर्वापरोद्भवे ।
कस्य त्वं जननी स्त्रीर्वा के वा सम्बन्धिनस्तव ॥५१॥

सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति' इति २ जागरणावस्थायां चक्षुरादीन्द्रियैर्बाह्यविषयानत्ति भुंक्त इत्यात्मेति तृतीयं निर्वचनं तथा च श्रुतिः 'स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति' इति ३ एवमुपाधिविशिष्टस्य स्थानत्रयोपजीव्यं निर्वचनं केवलस्य तु अतति सातत्येन गच्छतीत्यात्मेति चतुर्थं निर्वचनं तथा च श्रुतिः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति अस्मिन्वाक्येऽनंतपदेन देशकालवस्तुपरिच्छेदरहितलक्षणमानन्त्यमभिहितं तदेव चात्र जीवोनन्त इति सामानाधिकरण्यात्सर्वगतत्वमजत्वं च युक्तमेवातो हेतोरत्र देहजीवयोर्मध्ये शोकविषयः क इति वद विचार्यमाणे कोपि शुग्विषयो नास्तीति भावः ॥ ४८ ॥ कालः क्षोभकः कर्माणि त्रिविधानि गुणाः सत्वादय एभ्यः उत्पन्नं ॥ ४९ ॥ कालो गुणक्षोभकः कर्म जन्मनिमित्तं गुणा उपादानं एत एव आदयो हेतवस्तेभ्य उत्थितः स चासौ देहश्च तदुत्पन्नत्वात् कालकर्मगुणाधीन इत्यर्थतः सिद्धं कालकर्मगुणानां विभागे च नाशवानेवंभूतो देहो यस्यास्तीतीदृशस्य देहाभिमानवतो जीवस्यायं ममेति पुत्रादिरूपा स्वत्वकल्पना चलाऽध्रुवातएवैषा मिथ्या ॥ ५० ॥ पूर्वापरोद्भवे पूर्वोत्तरजन्मनि ॥ ५१ ॥ ननु नात्मानं जीवं शोचामि तस्य

जन्ममृत्यू कालवशादलंघ्यौ दिनरात्रिवत् ।
शरीरिणोंगे बाल्यादि यथा देहान्तरं तथा ॥ ५२ ॥
गुरुप्रसादाद्यततो भ्रमोयं लीयतेचिरात् ।
तेनर्ते मृत्यवे कल्प्यो जातो वै जनुषे मृतः॥ ५३ ॥

जन्ममृत्युनिमित्तदुःखं पर्यालोच्य शोको जायत इति चेत्तत्राह जन्ममृत्यू इति शरीरिणो देहाभिमानिनो जीवस्यांगे देहे देहनिबन्धनमेव बाल्यादि यथा तथा देहांतरं योल्पवयस्कोशक्तो बालोहं स एवेदानीं प्रौढतरो बलिष्ठोभवमिति प्रत्यभिज्ञानं तथा देहांतरे पूर्वदेहादेरत्यन्तविस्मृतौ सत्यां पूर्वाभ्यासेन जातमात्रस्य स्तन्यादौ प्रवृत्तिदर्शनात्तस्मादविवेकिनामयं भ्रम एव ॥ ५२ ॥ तर्ह्यस्य कथं लय इत्यत आह गुर्विति यततो यतनशीलस्य 'आप्रायणात्तत्रापि हि दृष्टम्' इति न्यायादामृत्यूपासने यत्न आस्थेयः तेनर्ते गुरुप्रसादं विना जातो मृत्यवे कल्प्यः वै निश्चयेन मृतो जनुषे कल्प्यः तर्हि जन्मनोवश्यंभावित्वेस्मिन्जन्मनि भ्रमो न नष्टश्चेद्भाविजन्मनि नश्येद्यतो जन्मांतरस्यावश्यंभावित्वादिति चेदनेकेषु भोग्यकर्मसु सत्सु अधोनन्तकोटियोनिषूर्ध्वं देवादियोनिषु भ्रमतो जीवस्य कदाचिन्मनुष्यदेहो लभ्येत्स तु पुण्यातिशयत्वे सर्वेंद्रियुक्तो भविष्यति उक्तं गारुडे 'सर्वेंद्रियनिधानन्तद्बहुपुण्यैरवाप्यत' इति अन्यथा पंग्वंधादिदेहलाभे कैवर्तभिल्लयवनम्लेच्छादिवंशीयदेहलाभे परमार्थगन्धोपि न लभ्येत अधिकारिब्राह्मणदेहलाभेपि हि कष्टं मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्य जरायुत्वाशुचिपूयावृतस्य लोहितरेतोशुचिबीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्धमानस्य निरुद्धशक्तिबलवीर्यतेजःप्रज्ञाचेष्टस्य शयनं ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिर्जन्मेति जुगुप्सितं मुहूर्तमप्यसह्यं कथं दशमासानतिदीर्घकालमन्ततः शयनमतः पुत्रादिवियोगनिमित्तजशोकं विहाय ज्ञानार्थं यतितव्यं ॥ ५३ ॥ हे नारि अतो हेतोः अपरि-

नार्यतोपरिहार्येर्थे न त्वं शोचितुमर्हसि ।
मृतः शुचा पुनर्नैति नाप्युपायान्तरायुतैः ॥ ५४ ॥

सोवाच

न वेदांतार्थतत्त्वादि रोचते येन मेर्पितं ।
सुफलं तत्कुतो यातं विश्वस्तव्यः स कैर्भुवि ॥ ५५ ॥

॥ साधुरुवाच ॥

यत्र त्वया वरो लब्धस्तत्र गत्वा सविस्तरं ।
वरदं परिपृच्छेदं यास्येऽलं विस्तरेण भोः ॥ ५६ ॥
तच्छ्रुत्वा शवमादाय सद्गुरोराश्रमं ययौ ।
तत्र पादुकयोः शीर्षं ताडयामास भामिनी ॥ ५७ ॥
एवं निशीथादासायं शुशोच न ददौ शवम् ।
संस्कर्तुं स्वालयं विप्रा जग्मुस्तत्रैव दम्पती ॥ ५८ ॥
ततो निशीथे सुष्वाप साध्वी स्वप्ने ददर्श सा ।
श्रीगुरुं प्राह सोप्येनां किं मयापकृतं हि ते ॥ ५९ ॥

हार्ये कथमपि परिहारानर्हे ॥ ५४ ॥ ॥ ५५ ॥ भोः साध्वि अलं विस्तरेण ग्राहकाभावात् अहं यास्ये इत्युक्त्वा स गतः ॥ ५६ ॥ भामिनी कोपवती ॥ ५७ ॥ संस्कर्तुं शवं न ददौ तदा विप्राः स्वालयं जग्मुः तत्रैव दम्पती तस्थतुरिति शेषः ॥५८॥ सा स्वप्ने श्रीगुरुं ददर्श स गुरुरप्येनां दृष्ट्वा प्राह किमित्यादि ॥ ५९ ॥ स परोक्षत्वेन श्रुत्या निर्दिष्टः सर्वज्ञत्वादिलक्षणोंतर्यामी सर्वोत्पत्त्यादिहेतुरीश्वरो वायुर्वायुशब्दवाच्यः 'वायुर्वै गौतम तत्सूत्रम्' इति श्रुतेश्चैव स्वयंप्रकाशत्वापरोक्षत्वादिलक्षणः

**प्राणो नामैव वायुः स बहिर्यातो मुहुर्मया ।
आनीय पूर्ववन्न्यस्तस्त्यजातः शुचमंगने ॥ ६० ॥**

प्रत्यगात्मा प्राणो नामात्मैव नन्वन चेष्टायामित्यस्माद्धातोश्चेष्टाविशेषगुणकः प्राण एव स कथमात्मेति चेच्छांदोग्ये नामोपक्रम्याशांतं कार्यकारणत्वेन निमित्तनैमित्तिकत्वेन चोत्तरोत्तरभूयस्तयोपन्यस्यांते प्राणो वा आशाया भूयानिति सदृष्टान्तं भूयस्त्वं प्रतिपाद्य सर्वं क्रियाकारकफलभेदजातं प्राण एवेति वक्तुं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्य इति प्राणाद्बहिर्भूतं किंचिदपि नास्तीति प्रपंच्य सति प्राणे पित्रादीशब्दप्रयोग उत्क्रांते च तस्मिन्प्रयोगाभाव इति वक्तुं पित्रादिनां तदननुरूपमिव किंचिद्दुर्वचनवक्तारमन्यो ब्रूते ' पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्रह्महा वै त्वमसि इति ' प्राणयोगेनैवंभूतत्वं तदुत्क्रांतौ च 'अथ यद्येनानुत्क्रांतप्राणाञ्छूलेन समासं व्यतिसंदहेन्नैवं ब्रूयुः पितृहासि' इत्यादिना प्राणस्यैवात्मत्वं निर्णीय ' प्राणो ह्येवैतानि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति ' इत्युपसंहारात् । ननु प्राणशब्देनात्मोच्यते तर्हि 'नायाति प्रत्यगात्मा प्रजननसमये नैव यात्यंतकाले । यत्सोखंडोस्ति ' इत्युक्तेः प्रत्यगात्मनो बहिर्गमनं कथमिति चेत् 'अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्' इति श्रुतेरस्मिन्लिंगसंघातरूपे प्रज्ञात्मनि दैहिके मुख्ये परा देवता नामरूपव्याकरणायादर्शादौ प्रतिबिम्बवज्जीवेनात्मनानुप्रविष्टा तस्य जीवस्य तदभिन्नत्वात् ' जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत ' इति जीववियोगस्यैव मरणत्वेन विवक्षितत्वाज्जीवगमनस्य प्राणात्मन्यारोप्य बहिर्यातः स मया आनीय पूर्ववन्न्यस्तः सुबन्धोरिव तद्भ्रात्रातएवायं न मृतोतः शुचन्त्यज यतः प्राणं विना न कोपि जीवति वागाद्यभावे जीवत्येव तथा च कौषीतकीश्रुतिः 'जीवति वागपेतो मूकान् हि पश्यामो जीवति चक्षुरपेतोंधान् हि पश्यामो जीवति श्रोत्रापेतो बधिरान् हि पश्यामो जीवति मनोपेतो बालान् हि पश्यामो जीवति

इति दृष्ट्वा विनिद्राभूद्ददर्शोत्थितमात्मजं ।
हर्षशोकान्विता साध्वी प्रेम्णा भर्तारमाव्हयत् ॥ ६१ ॥
सोप्युत्थायात्मजं दृष्ट्वा रुदंतं क्षुत्तृडाकुलं ।
मंत्रवत्त्रिरवघ्राय मूर्ध्न्यस्तौपीत्परात्परम् ॥ ६२ ॥
अत्रांतरे प्रातरभूद्दग्धुं प्रापुः शवं द्विजाः ॥
ते जीवंतं सुतं दृष्ट्वा सर्वे श्रुत्वास्तुवन्हरिम् ॥ ६३ ॥
दम्पती तु ततः स्नात्वा प्रपूज्येशं सुविस्तरात् ।
नीराज्याभ्यर्च्य भूदेवान्जग्मतुर्निजमन्दिरम् ॥ ६४ ॥
विद्याविनयसम्पन्नश्चिरजीवी स भाग्यभाक् ।
बभूवाप्येवमेवान्य आसन्पूर्णमनोरथाः ॥ ६५ ॥
तत्राश्रान्तं स जागर्ति श्रीनृसिंहसरस्वती ।
अद्य कालांतरेप्येवं न निद्रात्यन्यवत्कलौ ॥ ६६ ॥

तत्रेशमाद्यं दृढभक्तियुक्ता भजन्ति ये केपि सदुक्तिसक्ताः ।
ते प्राप्नुवंति द्रुतमिष्टकामान्निदर्शनं त्वत्र सती सुकामा ॥ १ ॥

इति श्रीगुरुचरिते ज्ञानयोगे प्रेतसंजीवनं
नाम द्वादशोऽध्यायः ॥ १२ ॥

बाहुछिन्नो जीवत्यूरुभिन्न' इति ॥ ६० ॥ मूर्ध्नि मंत्रवत्समंत्रकं 'अंगादंगा-त्' इत्यादिनावघ्राय ॥ ६१ ॥ ६२ ॥ स्फुटः ॥ ६३ ॥ भूदेवान्ब्राह्मणा-नभ्यर्च्य पूजयित्वा भोजयित्वा च ॥ ६४ ॥ स पुत्रः अन्ये भक्ता अप्येव-मेव पूर्णमनोरथा आसन् ॥ ६५ ॥ तत्र कृष्णातटेऽश्रांतं सन्ततं अद्याधुना जागर्ति कालांतरे घोरे कलावपि जागर्त्यन्ये देवास्तदा निद्रिता इव भवंति अयं त्वन्यवन्न निद्राति ॥ ६६ ॥ तत्रेति स्फुटः ॥ १ ॥

इति टीकायां द्वादशोऽध्यायः ॥ १२ ॥

---

# त्रयोदशोऽध्यायः

॥ नामधारक उवाच ॥

आसाद्य भगवान् भीमां ततः किमकरोत्प्रभुः ।
श्रद्दधानाय मे शंस दुर्ग्रहं तस्य चेष्टितम् ॥ १ ॥

॥ सिद्ध उवाच ॥

गांधर्वनगरे भीमामरजासंगमे शुभे ।
कृष्णापंचनदीयोगतुल्ये तस्थौ जगत्प्रभुः ॥ २ ॥
स्थित्वात्र गुप्तभावेन तत्रत्यब्राह्मणालयं ।
गत्वा भिक्षां ययाचेसौ भक्तोद्धरणहेतवे ॥ ३ ॥
दीनभाविकसद्विप्रदत्तभिक्षाप्रियं द्विजाः ।
श्रीविद्याढ्या हसंति स्म श्रीशं भक्तिप्रियं हरिं ॥ ४ ॥
यथार्के प्रसरत्यभ्रच्छन्नेपि द्योत इद्यथा ।
सम्पुटस्थितकस्तूरीगन्धस्तद्वद्धरेर्गुणाः ॥ ५ ॥

श्रीगणेशाय नमः ॥ अथ त्रयोदशाऽध्यायः ॥ त्रयोदशे वशां दुग्ध्वा महिषीं राजसेवितः ॥ रक्षसेदाद्गतिं विश्वरूपं च यतये प्रभुः ॥ १ ॥ एवं गताध्याये तत्त्वज्ञानोपदेशपूर्वकं श्रीगुरोर्भक्तवात्सल्यं प्रदर्श्याथेदानीं स्वाचरणप्रदर्शनेन रागादिरहितस्य जीवन्मुक्तस्य जगत्पावनत्वं रागद्वेषादियुक्तस्य संन्यासिनोप्यकृतार्थत्वं च दर्शयति आसाद्य प्राप्य प्रभुर्नित्यमुक्तः श्रीगुरुः किमकरोत् कीदृशं चरितं कृतवान् मन्दबुद्धीनां दुर्ग्रहमपि तस्य चेष्टितं श्रद्दधानाय श्रद्धायुक्ताय मे मह्यं शंस कथय दुर्ग्रहमपि तस्य चेष्टितं श्रद्धया गृहीतुमुत्सहे ॥ १ ॥ २ ॥ गुप्तभावेनाप्रकटितस्वभावेन ॥ ३ ॥ दीनो भाविकश्च यः सद्विप्रस्तेन दत्ता भिक्षा प्रिया यस्य तं श्रीविद्याढ्या

एकदा दीनविप्रस्य गेहे च्युतरदां वशां ।
महिषीं प्रेक्ष्य स प्राह ब्राह्मणीं देहि मे पयः ॥ ६ ॥

सा प्राहेयं वशा भारवाहिनी नासिकागुणा ।
योगक्षेममितोस्माकं जन्मतोऽपि लुलायवत् ॥ ७ ॥

मृषा मा वद तां दुग्ध्वा क्षीरं देहीति भाषिता ।
गुरुणापि वशां दुग्ध्वा काष्ठपात्रेलभत्पयः ॥ ८ ॥

विस्मिता सार्पयत्तस्मै कोष्णं कृत्वा पयो मुदा ।
पीत्वा क्षीरं ययौ प्रेम्णा श्रीगुरुः संगमं द्रुतम् ॥ ९ ॥

तत एत्य गृहेशोऽदः श्रुत्वा सस्त्रीक एत्य तं ।
गुरुं सम्पूज्य लब्धेष्टवरो हृष्टोन्वगाद्गृहं ॥ १० ॥

अन्येद्युर्भारवाहार्थं वशामाहर्तुमागताः ।
कृषीवलाः प्रेक्ष्य दोहं शशंसुर्द्राङ् नृपाय तत् ॥ ११ ॥

नृपोप्याकर्ण्य विप्रात्तच्चतुरंगबलान्वितः ।
गुर्वर्थं राजचिन्हानि गृहीत्वा संगमं ययौ ॥ १२ ॥

इत्यनेन मदयुक्ताः सूचिताः ॥ ४ ॥ ५ ॥ च्युतरदां दन्तहीनां-वशां वन्ध्यां ॥ ६ ॥ नासिकायां गुणो रज्जुर्यस्याः सा लुलायवत्पा-लितेति शेषः ॥ ७ ॥ वशां महिषीं ॥ ८ ॥ विस्मिताश्चर्यं गता कर्तरि क्तः पूतं शृतं मन्दोष्णं पयः कृत्वा ॥ ९ ॥ अद इदं गुरुचेष्टितं ॥ १० ॥ वशां महिषीं द्राक् शीघ्रं ॥ ११ ॥ विप्रादाकर्ण्य विप्रमुखात्सर्वं श्रुत्वा राज-चिह्नानि शिबिकाछत्रचामरादीनि ॥ १२ ॥ तं गुरुं प्रणिपत्य प्रणम्य

तमेत्य प्रणिपत्योचे दण्डवद्गद्गदाक्षरः ।
पुलकांकितदेहो राड् दीनं माम्पाहि किंकरम् ॥ १३ ॥

॥ श्रीगुरुरुवाच ॥

दण्डी वनचरोऽस्म्यंग भिक्षुस्त्वं सेनया सह ।
राजन्कस्मादिहानन्दसंरंभादागतोसि किम् ॥ १४ ॥

॥ राजोवाच ॥

भवान्मायानरो भिक्षुर्नैवास्ति परमेश्वर ।
हित्वारण्यविहारं भो पावनं कुरु मे पुरं ॥ १५ ॥

उवाच गद्गदाक्षरपुलकोद्गमादि भक्तिलक्षणं दीनं किंकरं मां पाहि इत्यनेन दास्यं ज्ञापितं ॥ १३ ॥ अंग हे राजन् कस्माद्धेतोरागतोसि किमित्यनेन किं कार्यमिति सांकेतिकशब्दो लोकसिद्धः ॥ १४ ॥ मायानरोतएव भवान्भिक्षुर्नैवास्ति भो परमेश्वरारण्यविहारमरण्यसंचारमरण्यक्रीडां वा ॥१५॥

---

१ पुरं नगरं अथवाभिमानित्वेन ममतास्पदं पुरमिव पुरं शरीरं सप्त शीर्षण्यानि नाभ्यादिसहावाँचि त्रीणि शिरस्येकमेवमेकादशद्वारं एषां पालका दिग्वातादयो द्वारपालाः त्वङ्मांसरुधिरमेदोमज्जास्थिस्नायवः प्राकारसदृशाः मूलाधाराद्याज्ञान्तान्यट्टालकसदृशानि सन्धयो यन्त्राणि रोमाणि प्राकारोपरिस्थितविशाखसदृशानि धातुभिः पूर्णं पुरम् श्रुतिश्च 'पुरमेकादशद्वारमजस्यावक्रचेतस' इति स्मृतिश्च 'नवद्वारे पुरे देही' इति ईदृशं पुरं विण्मूत्रश्लेष्मपूर्णत्वादपवित्रमपि पावनं कुरु त्वज्ज्ञानसम्पादनक्षमं कुर्विति प्रार्थनाशयः तेन विना ज्ञानसाधनाभावात् ॥

एकदा दीनविप्रस्य गेहे च्युतरदां वशां ।
महिषीं प्रेक्ष्य स प्राह ब्राह्मणीं देहि मे पयः ॥ ६ ॥

सा प्राहेयं वशा भारवाहिनी नासिकागुणा ।
योगक्षेममितोस्माकं जन्मतोऽपि लुलायवत् ॥ ७ ॥

मृषा मा वद तां दुग्ध्वा क्षीरं देहीति भाषिता ।
गुरुणापि वशां दुग्ध्वा काष्ठपात्रेलभत्पयः ॥ ८ ॥

विस्मिता सार्पयत्तस्मै कोष्णं कृत्वा पयो मुदा ।
पीत्वा क्षीरं ययौ प्रेम्णा श्रीगुरुः संगमं द्रुतम् ॥ ९ ॥

तत एत्य गृहेशोऽदः श्रुत्वा सस्त्रीक एत्य तं ।
गुरुं सम्पूज्य लब्धेष्टवरो हृष्टोन्वगाद्गृहं ॥ १० ॥

अन्येद्युर्भारवाहार्थं वशामाहर्तुमागताः ।
कृषीबलाः प्रेक्ष्य दोहं शशंसुर्द्राङ् नृपाय तत् ॥ ११ ॥

नृपोप्याकर्ण्य विप्रात्तच्चतुरंगबलान्वितः ।
गुर्वर्थं राजचिन्हानि गृहीत्वा संगमं ययौ ॥ १२ ॥

इत्यनेन मदयुक्ताः सूचिताः ॥ ४ ॥ ५ ॥ च्युतरदां दन्तहीनां-वशां वन्ध्यां ॥ ६ ॥ नासिकायां गुणो रज्जुर्यस्याः सा लुलायवत्पालितेति शेषः ॥ ७ ॥ वशां महिषीं ॥ ८ ॥ विस्मिताश्चर्यं गता कर्तरि क्तः पूतं श्रृतं मन्दोष्णं पयः कृत्वा ॥ ९ ॥ अद इदं गुरुचेष्टितं ॥ १० ॥ वशां महिषीं द्राक् शीघ्रं ॥ ११ ॥ विप्रादाकर्ण्य विप्रमुखात्सर्वं श्रुत्वा राजचिह्नानि शिबिकाछत्रचामरादीनि ॥ १२ ॥ तं गुरुं प्रणिपत्य प्रणम्य

तमेत्य प्रणिपत्योचे दण्डवद्गद्गदाक्षरः।
पुलकांकितदेहो राड् दीनं माम्पाहि किंकरम् ॥ १३ ॥

॥ श्रीगुरुरुवाच ॥

दण्डी वनचरोऽस्म्यंग भिक्षुस्त्वं सेनया सह।
राजन्कस्मादिहानन्दसंरंभादागतोसि किम् ॥ १४ ॥

॥ राजोवाच ॥

भवान्मायानरो भिक्षुर्नैवास्ति परमेश्वर।
हित्वारण्यविहारं भो पावनं कुरु मे पुरं[1] ॥ १५ ॥

उवाच गद्गदाक्षरपुलकोद्गमादि भक्तिलक्षणं दीनं किंकरं मां पाहि इत्यनेन दास्यं ज्ञापितं ॥ १३ ॥ अंग हे राजन् कस्माद्धेतोरागतोसि किमित्यनेन किं कार्यमिति सांकेतिकशब्दो लोकसिद्धः ॥ १४ ॥ मायानरोतएव भवान्भिक्षुर्नैवास्ति भो परमेश्वरारण्यविहारमरण्यसंचारमरण्यक्रीडां वा ॥ १५ ॥

---

१ पुरं नगरं अथवाभिमानित्वेन ममतास्पदं पुरमिव पुरं शरीरं सप्त शीर्षण्यानि नाभ्यादिसहार्वाञ्चि त्रीणि शिरस्येकमेवमेकादशद्वारं एषां पालका दिग्वातादयो द्वारपालाः त्वङ्मांसरुधिरमेदोमज्जास्थिस्नायवः प्राकारसदृशाः मूलाधाराद्याज्ञान्तान्यट्टालकसदृशानि सन्धयो यन्त्राणि रोमाणि प्राकारोपरिस्थितविशाखसदृशानि धातुभिः पूर्णं पुरम् श्रुतिश्च 'पुरमेकादशद्वारमजस्यावक्रचेतस' इति स्मृतिश्च 'नवद्वारे पुरे देही' इति ईदृशं पुरं विण्मूत्रश्लेष्मपूर्णत्वादपवित्रमपि पावनं कुरु त्वज्ज्ञानसम्पादनक्षमं कुर्विति प्रार्थनाशयः तेन विना ज्ञानसाधनाभावात् ॥

इत्थं श्रुत्वा सकारुण्यमुदारं वाक्यमच्युतः ।
तथेत्युक्त्वाययौ प्रेम्णा पुरं पावनपावनः ॥ १६ ॥
भेजे छत्रप्रकीर्णै राट् पादचारी सुखासने ।
उपवेश्य गुरुं विप्रवाहिते तूर्यनिःस्वनैः ॥ १७ ॥
वेदघोषं द्विजाश्चक्रुर्मागधाः स्तोत्रमुत्तमं ।
जयघोषं तथाप्यन्य एवं गोपुरमागतः ॥ १८ ॥
गुरुः प्रत्यक्पथं पुर्या एत्याऽश्वत्थे भयंकरम् ।
स ब्रह्मराक्षसं शक्रं ददर्शातींद्रियः प्रभुः ॥ १९ ॥
तद्दर्शनान्नराद्भूत्वा प्रशांतो ह्यवरुह्य सः ।
गुरुं नत्वोद्धर हरे कुयोनेर्मेत्युवाच तं ॥ २० ॥
करस्तन्मूर्ध्नि विन्यस्तो गुरुणाथाभवन्नृवत् ।
तमाह संगमस्नानाच्छीघ्रं मुक्तो भविष्यसि ॥ २१ ॥

उदारं प्रौढं पावनानां 'अग्निः पवित्रमुच्यते वायुः पवित्रमुच्यते सोमः पवित्रमुच्यते सूर्यः पवित्रमुच्यत इंद्रः पवित्रमुच्यत'इत्युक्तानामग्न्यादीनां पावनानामपि पावनः ॥ १६ ॥ छत्रं च प्रकीर्णे चामरे च तैः राट् राजा विप्रवाहिते सुखासने शिबिकायां तूर्यध्वनिस्वनैर्मंगलवाद्यघोषैः ॥ १७ ॥ जयघोषं जयजयकारशब्दं गोपुरं पुरद्वारं ॥१८॥ पुर्याः पश्चिममार्गमागत्य शक्रं वातुकं अतींद्रियत्वेनातींद्रियविषयज्ञानसम्पन्नता सूचिता प्रभुशब्देन निग्रहानुग्रहत्वमपि सूचितम् ॥१९॥ तद्दर्शनाच्छ्रीगुरुदर्शनात् नराद्राक्षसोश्वत्थादवरुह्य स राक्षसः तं गुरुं नत्वा मा मां कुयोनेरुद्धरेत्युवाच ॥२०॥ तस्य राक्षसस्य मूर्ध्नि गुरुणा स्वकरो विन्यस्तः अथ करविन्यासानन्तरं स राक्षसः नृवत् मनुष्यसमानशरीरोभवत् तं राक्षसं प्राह श्रीगुरुरिति शेषः त्वं भीमामरजासंगमस्नानाच्छीघ्रं मुक्तो भविष्यसि कुयोनेः ॥ २१ ॥ इति श्रीगुरु-

इति श्रुत्वा नमस्कृत्य गुरुं स्नात्वा स संगमे ।
विहाय भौतिकं कायं मुमुचे कर्मबन्धनात् ॥ २२ ॥
दृष्ट्वेदं राडभिष्टूय तस्मा आम्रेडितोक्तिभिः ।
पुरं नीत्वा सुमठिकां निर्मायास्मा उपानयत् ॥ २३ ॥
खेदं विनयते स्मेशपूजारार्तिकगायनैः ।
घोरं सांसारिकं प्रेम्णा नित्यं तदनुगो नृपः ॥ २४ ॥
आह्निकं संगमे भिक्षां ग्रामे निवसतिं मठे ।
स कृत्वा भक्तवात्सल्याद्राण्निघ्नो भगवानभूत् ॥ २५ ॥

वाक्यं श्रुत्वा तं नत्वा संगमे स्नात्वा भौतिकं पंचभूतविकारं देहं त्यक्त्वा कर्मबन्धनात्स्वयमेव मुमुचे ॥ २२ ॥ इदं भगवच्चेष्टितं दृष्ट्वा राट् राजा तस्मै तादर्थ्ये चतुर्थी आम्रेडितोक्तिभिः द्विस्त्रिरुक्ताभिरुक्तिभिः स्तवरूपाभिः अभिष्टूय स्तुत्वा श्रीगुरुं पुरं नीत्वा शोभनां मठिकां अल्पो मठो मठिका अल्पीयसि कन् निर्माय विरचय्यास्मै श्रीगुरवे निवासार्थमुपानयत्समर्पयत् ॥२३ ईशस्य गुरोः पूजारार्तिकगायनैः सांसारिकं घोरं खेदं विनयतेस्मापनीतवान् कर्तृस्थे चाशरीर इत्यात्मनेपदं लट् स्मे इति भूतार्थे लट् गानैरिति वक्तव्ये गायनैरितिशब्दो लोकव्यवहारतः 'उषसि मागधमंगलगायनैः' इत्यादिपूर्वाचार्यैरप्युक्तत्वात् यः स्फोटकादिवेदनावानपि गीताद्यासक्ततया तदेकमनाः सन् विद्यमानामपि वेदनां विस्मृत्य गीतादिजन्यमानन्दमनुभवति तथा विद्यमानमपि घोरं सांसारिकं खेदमीश्वरपूजारार्तिकगानादिजानंदेनापनीतवान् अनेनैव न्यायेनेश्वरभजनप्रवृत्तानां रागादयो विलीयंत एवेति ज्ञेयं प्रेम्णा स्नेहेन नित्यं तस्य श्रीगुरोरनुगः तमनुगच्छतीति तदनुगो नृपोभूत् ॥ २४ ॥ आह्निकं शौचस्नानदण्डतर्पणप्रणवजपभिक्षाध्यानादि नैत्यकं कर्म लोकसंग्रहार्थं विदुषापि कार्यमिति सत्संप्रदायमनुस्मृत्य निवसतिं निवासं भक्तवात्सल्याद्राण्निघ्नः राजाधीनः॥२५

श्रुत्वाश्रमानर्हचेष्टामस्यामंस्ताल्पधीर्यतिः ।
भ्रष्टोयं दाम्भिक इति तं त्रिविक्रमभारती ॥ २६ ॥
तज्ज्ञात्वाशेषहृत्संस्थः सर्वसाक्षी जगत्प्रभुः ।
भूपं प्राहाद्य गन्तव्यं निन्दकार्दनहेतवे ॥ २७ ॥
मन्निन्दकोस्ति कुमसीग्रामे भिक्षुस्त्रिविक्रमः
इति श्रुत्वा नृपो हृष्टो गमनायोपचक्रमे ॥ २८ ॥
सुपालके तूपवेश्य नृपचिन्हैः परिष्कृतं ।
श्रीगुरुं कुमसीग्रामं निन्ये राड् यत्र भारती ॥ २९ ॥
नृसिंहध्याननिष्ठोपि स तदा योगिमायया ।
सम्भूय चंचलमना आजन्हे स्तोतुमीश्वरं ॥ ३० ॥
सुप्रसन्न नृसिंहेश दयाब्धे भक्तभावन ।
कस्मात्तेद्य न सामीप्यं ध्याने स्तोष्ये दयस्व भोः॥३१॥

आश्रमायोग्यचेष्टां राजोपचारसेवनरूपां अयं संन्यासी दाम्भिको भ्रष्ट इत्यमंस्त मन्यते स्म कुतोऽल्पधीः॥२६॥तत्कृतनिन्दाज्ञानाय त्रीणि विशेषणानि निंदकार्दनहेतवे निंदकशिक्षार्थं ॥ २७ ॥ तर्ह्यहं निंदकाय शिक्षां करिष्यामीति वदसि चेत्तवाधिकारो न यतो मन्निंदको भिक्षुः न हि राजभिर्भिक्षुर्दण्डयोपराध्यपि ॥ २८ ॥ नृपचिह्नैश्छत्रादिभिरलंकृतं श्रीगुरुं राट् राजा यत्र त्रिविक्रमभारती स्थितस्तं कुमसीग्रामं निन्ये ॥ २९ ॥ नुर्जीवस्य सिमविद्यां हंतीति नृसिंहः तस्य ध्याने निष्ठांतःकरणस्थितिर्यस्येदृशोपि स तदा योगिनः श्रीगुरोर्माययाऽलब्धभूमिकं चंचलं विक्षिप्तं मनो यस्येदृशो भूत्वा ईश्वरं निजदैवतं नृसिंहं स्तोतुमाजह्रे आरेभे ॥ ३० ॥ ध्याने ध्येयाकाराखण्डचित्तवृत्तौ कस्मात्ते सामीप्यं न भवति अपराधेनेति चेद्भो नृसिंह त्वां स्तोष्ये दयस्व ॥ ३१ ॥ एवं स्तुत्वा स त्रिविक्रमस्तं नदीतीरस्थं

स्तुत्वैवं स नदीतीरे ध्यानाज्ज्ञात्वा स्थितं विभुं ।
त्रस्तचित्तोभ्यगाद्द्रष्टुमचिंत्याव्यक्तविग्रहं ॥ ३२ ॥
त्रिविक्रमो जवेनैत्य योगिमायावृतांतरः ।
उच्चावचान्यतीन् दृष्ट्वा भूरिशो मोहमाप सः ॥ ३३ ॥
व्यालोकि परितस्तेन सर्वे संन्यासिरूपिणः ।
ज्यायांसोपि कनीयांसः प्रशांता दण्डिनोमिताः ॥३४॥
आहेशो विस्मितं तं यं धिक्करोष्यस्मि दाम्भिकः ।
भ्रष्टः स इन्मयोद्भाव्य मायामसि परीक्षितः ॥ ३५ ॥
नृसिंहचिन्तकोसि त्वं यतिधर्मसुशिक्षितः ।
संन्यासी लोकविज्ञातः संन्यस्तं ब्रूहि किं त्वया ॥३६॥
न्यस्तसूत्रशिखो दण्डी रागद्वेषाकुलांतरः ।
वेषानुकारी संन्यासी धर्मज्ञो वा भवेदपि ॥ ३७ ॥

ध्यानेन ज्ञात्वा सांनिध्याभावात् त्रस्तं चित्तं यस्य स तत्राचिंत्योव्यक्तश्च विग्रहो यस्य तं द्रष्टुमभ्यगात् ॥ ३२ ॥ जवेन वेगेनैत्यागत्य उच्चावचानुच्चनीचान्भूरिशो यतीन् दृष्ट्वा स त्रिविक्रमो मोहं प्राप मोहस्तु विपरीतप्रत्ययप्रभवोऽविवेकभ्रमः ॥ ३३ ॥ सर्वे दण्डिनः प्रशांतचित्ताः केचिज्ज्यायांसः केचित्कनीयांस एवंभूता अपरिमिताः संन्यासिरूपिणस्तेन त्रिविक्रमेण व्यालोकि दृष्टाः ॥३४॥ विस्मितं तमीशः श्रीगुरुराह यं धिक्करोषि स एव गन्धर्वपुरस्थः दाम्भिको भ्रष्टोहं संन्यासी मया मायामुद्भाव्य कल्पयित्वा परीक्षितोसि॥३५॥ लोके विज्ञातः विश्रुतः संन्यासी त्वमसीति चेत्त्वया किं संन्यस्तं तद्ब्रूहि॥३६॥शिखासूत्रे संन्यस्त इति चेत्तावता संन्यासित्वं किं न अहं दण्डीति ब्रूषे चेदीदृशो वेषानुकारी तद्धर्मज्ञस्तद्धर्मनिष्ठावान्वापि रागद्वेषाकुलचित्तश्चेत्स संन्यासी भवेत्किं अपिः प्रश्ने॥३७॥संन्यस्य श्रवणादिना

दम्भिलक्षणजिज्ञासुरागतोस्म्यद्य कृत्स्नशः ।
त्वं नृसिंहप्रसादेन विद्वंस्तद्वक्तुमर्हसि ॥ ३८ ॥

॥ त्रिविक्रम उवाच ॥

प्रत्याहृतमतिस्तेस्मि भगवन्नीश मायया ।
नापि वक्तुं हृषीकेश शक्यः पाहि दयानिधे ॥ ३९ ॥
प्रपन्नोस्मि क्षमस्वेश मंतून्मे ध्यानपुण्यतः ।
साक्षाद्दृष्टं हि ते धाम नृसिंहोसि दयस्व भोः ॥४०॥
इति स्तुवति तस्मिन्स भगवान्पूर्वरूपतः ।
प्रादुरासीत्तथाप्यन्ये सैन्या मंत्री नृपः स्फुटं ॥ ४१ ॥

संजातापरोक्षानुभवोश्मवद्दर्शनादिव्यापाररहितो मुक्तः 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति श्रुतेरिति मन्यसे चेत् 'स्त्रीभिर्वा यानैर्वा' इत्यादिश्रुतिं न स्मरसि किं इहात्मदर्शने सांख्या द्रष्टारं देहव्यतिरिक्तमवगम्यापि त्यक्तागमसिद्धांतत्वान्मृत्युविषय एवान्यत्वदर्शने तस्थुः कणादाद्याः कषायरक्तमिव क्षारादिभिर्वस्त्रं नवभिरात्मगुणैर्युक्तमात्मद्रव्यं शोधयितुं प्रवृत्ताः कर्मिणस्तु वेदप्रमाणा अपि बाह्यविषयापहृतचेतसः परमार्थसत्यमात्मैकत्वं विनाशमिव मन्यमाना घटीयंत्रवद्बंभ्रमन्ति तद्वृत्तमास्थातुं भवान्न क्षमः यतः संन्यासी यत्त्वं मां दाम्भिकोयमिति ब्रूषेऽतो दम्भिलक्षणं ज्ञातुमिच्छुरहमागतोस्मि ॥३८॥ अहं ते तव मायया प्रत्याहृता नष्टा मतिर्यस्य वक्तुमप्यशक्यः ॥ ३९ । मे मन्तून्कृतानपराधान् क्षमस्व इदमपि भवद्धाम स्वरूपं नृसिंहध्यानपुण्यतः मया साक्षाद्दृष्टं ननु श्रीनृसिंहध्यानेन नृसिंहः स्वधाम दर्शयत्वित्यत आह त्वमेव नृसिंहोस्यागमकालेद्य तथैव दृष्टत्वादतो दयस्व ॥ ४० ॥ तस्मिन्त्रिविक्रमे तथान्येपि प्रादुरासन् सेनायां समवेताः सैन्याः सेनाया वेति ण्यप्रत्ययः स्फुटं स्पष्टं यथा तथा ॥ ४१ ॥ चाम-

सैन्यमध्ये स्थितं भूपवीजितं च त्रिविक्रमः ।
विश्वरूपं स्वनेत्रेण न शशाकापि वीक्षितुम् ॥ ४२ ॥

तमाह दुर्निरीक्ष्यं मे रूपं दिव्यदृशापि ते ।
दर्शितं ध्यानहृष्टेन धामाथो पश्य लौकिकं ॥ ४३ ॥

ततः प्रशांतसंन्यासिरूपेणावस्थितं हरिं ।
दृष्ट्वा प्रकृतिगः प्राह भगवंतं त्रिविक्रमः ॥ ४४ ॥

कायेन मनसा वाचा केवलैरिंद्रियैरपि ।
असत्कृतोसि विश्वात्मन्मया त्वां क्षामयेद्य तत् ॥ ४५ ॥

धन्योस्म्यनुगृहीतोस्मि कृतकार्योस्मि दर्शनात् ।
रूपं पुरार्जुनायेदं दर्शितं मेद्य तत्पुनः ॥ ४६ ॥

रहस्तेन भूपेन वीजितं विश्वरूपं प्रकटितविराड्रूपं स्वनेत्रेण न तु ज्ञानमयेन विशेषेणेक्षितुमिदमीदृशमिति विषयीकर्तुं न शशाक समर्थो न बभूव ॥ ४२ ॥ दुःखेन योगादिकष्टेनापि निरीक्षितुमशक्यं मे रूपं दिव्यदृशा ज्ञानदृष्ट्यापि दुर्निरीक्ष्यं ध्यानहृष्टेन मया ते प्रदर्शितं अथो लौकिकं धाम पश्य ॥ ४३ ॥ इत्युक्त्वास्मै दर्शयामास ततः प्रशान्तं शमाद्युपेतं यत्संन्यासिन इव रूपं तेन स्वाग्रेवस्थितं प्रभुं दृष्ट्वा स्वप्रकृतिगस्त्रिविक्रमो भगवन्तं प्राह ॥ ४४ ॥ कायेन करकृततर्जनविकृताननादिना अतिविदूयता मनसा धिकाररूपिण्या वाचा केवलैरपीन्द्रियैरसत्कृतोसि मया तदपराधजातं मनस्यानीयानुततः सन्त्वामद्य क्षामये ॥ ४५ ॥ ४६ ॥ त्रिविध-

हरेविद्याप्रवाहे मां मज्जन्तं ज्ञाननौकया ।
कृपामरुत्संगतया स्वात्मरूपतटं नय ॥ ४७ ॥

तीर्त्वाऽविद्यानदीं ज्ञानप्लवेन परमं पदं ।
द्राग्यास्यत्रैव तिष्ठेति तमुक्त्वा श्रीगुरुर्ययौ ॥ ४८ ॥

दुःखं हरतीति हरिः तत्सम्बुद्धौ अविद्यारूपे प्रवाहे मज्जंतं मां त्वत्कृपैवानुकूलमरुत् तेन संगतया ज्ञानं आत्मयाथात्म्यं तदेव नौका तया स्वस्य प्रतीच आत्मनः परमात्मनश्चाखण्डैकरसं रूपं तदेव तटं नद्यादेः परं कूलमिव रूपकालंकारोयं नय प्रापय ॥ ४७ ॥ एवमुपसन्नं योग्यं शिष्यं दृष्ट्वोवाच श्रीगुरुः ज्ञानं तत्त्वमस्यादिवाक्यजन्यं लक्षणया लक्षितं तदेव प्लवस्तेन अविद्यैव नदी दुर्विगाह्यत्वात् तां तीर्त्वा श्रवणादिना भानाचरणरूपां चिदन्वयदृष्ट्या प्रारब्धभोगेन विक्षेपरूपां चाविद्यां प्रतिहायेति यावत् परमं देशाद्यनवच्छिन्नं सजातीयादिभेदरहितं पदं पद्यते योगिभिर्गम्यते तत्पदं प्रत्यगभिन्नपरमात्मस्वरूपं यासि अस्मिन्नेव जन्मनि ते मोक्षः न क्रमत इति वक्तुं यासीत्युक्तं अत्र नृसिंहध्यानपूर्वकं तत्त्वज्ञानविवेचन एव तिष्ठ स्था गतिनिवृत्तावित्यस्माद्धातोः मनोगतिनिवृत्तिं कुरु अत्रैवेत्यवधारणेनानात्मनि देहेहं दण्डी संन्यासी मयेदमाह्निकं शौचाचारजपादिरूपं करणीयं ये संन्यासिनो नानुतिष्ठन्ति ते निन्द्या ये चानुतिष्ठन्ति ते वन्द्या इत्यादिरूपं दुराग्रहं सर्वथैव परित्यज ईशावास्येति श्रुत्यनुशासनात् यद्यपि 'कुर्वन्नेवेह कर्माणि' 'विद्यां चाविद्यां च' इति श्रुत्यनुशासनं त्यक्तैषणस्याधिकारिणस्तव तदनुष्ठानं नोचितं चित्तविक्षेपेण ज्ञानस्यासम्भवात् अन्यस्य तु विमुखस्य जिजीविषोः साधनविकलस्य स्वाश्रमोचितानुष्ठाने प्रत्यवायादुभयतोऽपि भ्रंश एवेति सूचितं इति तमुक्त्वा श्रीगुरुर्ययौ मठमिति शेषः ॥ ४८॥ क्षणाद्योगगत्येत्यर्थः ईश्वरेण

क्षणात्ससैन्यभूपेन साकमेत्य मठं प्रभुः ।
कर्ममार्गं ततानेशश्चिकीर्षुर्लोकसंग्रहं ॥ ४९ ॥

इति श्रीगुरु० भीमामरजासंगमनिवासो०

त्रयोदशोऽध्यायः ॥ १३ ॥

मया परित्यक्ते स्वाश्रमोचितकर्मणि लोका अपि तथैव त्यक्ष्यन्ति तेन चानर्थ एवातएव स्वयमनुष्ठेयो धर्मोन्यतोनुष्टातव्य इति लोकसंग्रहं चिकीर्षुः ॥ ४९ ॥ इति टीकायां त्रयोदशाऽध्यायः ॥ १३ ॥

---

# चतुर्दशोऽध्यायः

॥ नामधारक उवाच ॥

ज्ञानयोग इयानुक्तः सिद्ध्यै संन्याससत्पथः ।
कुतो भगवता पश्चात्कर्मयोगः प्रकाशितः ॥ १ ॥

अविद्याघातकं कर्म तदुत्थं कथमित्यमुम् ।
छिंधि मे संशयग्रंथिं भगवच्चरितासिना ॥ २ ॥

श्रीगणेशाय नमः ॥ अथ चतुर्दशाऽध्यायः ॥ एवं त्रयोदशाध्यायैर्ज्ञानकाण्डः समर्थितः ॥ शुद्धांतःकरणोनेन मुच्यते कर्मबन्धनात् ॥१॥ येऽशुद्धमानसास्तेषां पापकर्मक्षयाय हि ॥ वैराग्योत्पत्तये चेयं पंचाध्यायी वितन्यते ॥ २ ॥ मत्तद्विजाभ्यामाभाष्य वेदतत्त्वं चतुर्दशे ॥ ज्ञानं दत्वांत्यजायाशु प्रभुर्विप्रावशिक्षयत् ॥ ३ ॥ 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' 'नान्यः पन्था विद्यतेयनाय' 'ब्रह्मविदाप्नोति परं' इत्यादिश्रुतिभ्यः कर्मन्यासपूर्वकश्रवणादिजन्यज्ञानेनैव मोक्षश्रवणात् 'कर्मणा बध्यते जन्तुः' इति कर्मणो बन्धकत्वस्मरणाच्च किमर्थोयं पुनः कर्मकाण्ड इति नामधारकः पृच्छति द्वाभ्यां संन्यास एव शोभनः पन्था यस्येदृश इयान्ज्ञानयोगो मोक्षसिद्धया उक्तः कुतः कारणात्पश्चाद्भगवता कर्मयोगोयं प्रकाशितः॥१॥ ननु नवमाध्याये 'तस्मात्कुर्ध्वं स्वाश्रमार्हं कृत्यं पातोन्यथा भवेत्' इति श्रीगुरुणैवोक्तत्वात्कुतो न्वियमाशंकेत्यत आहाविद्येति तदुत्थं अविद्योत्थं अविद्ययाऽविवेकोविवेकाद्देहाद्यभिमानोभिमानाद्रागादि रागादेः कर्म चैवं परंपरयाविद्योत्थं कर्माविद्याघातकमित्यमुं मे संशयग्रन्थिं भगवच्चरितरूपासिना छिंधि ॥२॥ एवं प्रश्नं श्रुत्वा ज्ञानं फले मोक्षे नैरपेक्ष्यं 'अतएव

॥ सिद्ध उवाच ॥

**कर्कटीं तद्भवा घ्नंति यथा मृत्क्षालनं मृदा ।**

चाग्नींधनाद्यनपेक्षा ' इति न्यायात् स्वनिर्वर्त्यनिर्वर्तनेन्यानपेक्षमपि स्वोत्पत्तौ कर्मादिसापेक्षं 'सर्वापेक्षा च यज्ञादिश्रुतेः' इति न्यायात् ज्ञानकाण्डस्य कर्मकाण्डेन सह साध्यसाधनभावसम्बंधः ज्ञानं साध्यं कर्माणि तु संस्कारत्वेन वा विविदिषोत्पादनेन वा ज्ञानसाधनानि संस्कारत्वमेवं स्मर्यते 'यस्यैते चत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्यं सलोकतां जयति' इति ते च संस्काराः गर्भाधानं पुंसवनं सीमन्तोन्नयनं जातकर्म नामकर्मान्नप्राशनं चौलमुपनयनं प्राजापत्यसोम्याग्नेयवैश्वदेवाख्यानि चत्वारि वेदव्रतानि स्नानं सहधर्मिणीसंयोगः देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञ इति पंच महायज्ञा अष्टकान्वष्टकापार्वणश्राद्धश्रावण्याग्रहायणचैत्र्याश्वयुज्याख्यसप्तपाकयज्ञा अग्न्याधानाग्निहोत्रदर्शपूर्णमासाग्रयणचातुर्मास्यनिरूढपशुबंधसौत्रामण्याख्यसप्तहविर्यज्ञा अग्निष्टोमोत्यग्निष्टोम उक्थ्यः षोळशी वाजपेयोतिरात्रातोर्याम इति सप्त सोमयज्ञा एवं चत्वारिंशत्संस्काराः कैश्चिदष्टात्मसंस्कारसहिता अष्टाचत्वारिंशत्संस्कारा उक्ता एतैः पुरुषस्य चित्तं संस्क्रियते ज्ञानयोग्यतामापद्यते 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसानाशकेन' इति श्रुतेर्विविदिषोत्पादनं श्रूयते 'विहितत्वाच्चाश्रमकर्मापि' इतिन्यायाद्विद्याहेतुभिरेवाश्रमसिद्धिः 'महापापवतां नृणां ज्ञानयज्ञो न रोचते ॥ प्रत्युत ज्ञानयज्ञस्तु प्रद्वेष्यो भासते स्वत' इति स्मरणाच्च ज्ञानप्रतिबंधके पापे परमेश्वरार्पितकर्मभिर्नाशिते सति श्रवणादौ रुचिरुत्पद्यते सैव विविदिषा पारंपर्यलभ्या उक्तं च वार्तिकसारे 'रुचिद्वारोपकुर्वंति कर्माण्यात्मविमुक्तये । अज्ञानस्याविरोधित्वान्न साक्षादात्मबोधवत् । अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्षते । ज्ञानोत्पत्तौ तु नैवान्यच्छमादिभ्यो ह्यपेक्षते । शमाद्युत्पत्तये नान्यद्बुद्धिशुद्धेर-

तथाऽविद्या च कर्मापि कर्मणैव विलीयते ।। ३ ।।
साधनावधि तत्कार्यमुपात्तपरसाधनः ।

पेक्षते । बुद्धिशुद्धौ च नित्यदिकर्मभ्यो नान्यादिष्यते । पारंपर्येण कर्मैवं ज्ञानायैवोपयुज्यत' इति । अपि च साधनं कर्म तेनैतत्साद्ध्यं ब्रह्मात्मज्ञानमित्यभिप्रेत्य ज्ञानकर्मकाण्डयोः साध्यसाधनभावसम्बंध इत्युत्तरं दातुं सिद्ध उवाच कर्कटीमिति । अविद्याघातकं कर्मेत्यस्य तावदुत्तरमाह तद्भवाः कर्कटीपोताः क्षुरधारावत्तीक्ष्णप्रपदाग्रैर्गर्भाशयस्था अपि मृदुलतरोदरां स्वमातरमपि कर्कटीं घ्नंति तस्मात्तदुत्पन्नं तद्घातकं नेति नात्र नियमःकिं तु यद्यस्य विरोधि तत्तस्य घातकं अपि च यथा भाण्डादौ नितांतसंलग्नमृत्क्षालनं सजातीयया मृदा भवति तथाऽविद्य कर्मजननी तज्जं जन्मांतरप्रापकं कर्मः चेश्वराराधनबुद्ध्या संगफलाभिसंधिवर्जितेन पुरुषेणानुष्ठितेन कर्मणैव योगसंज्ञितेनैव विलीयते तथाविधानुष्टानाभावे 'वीरहा वा एष देवानां योग्निमुत्सादयते' इत्यादिश्रुतेः प्रत्यवायोत्पत्त्या ज्ञानवार्तापि दुर्लभेति भावः स्मृतिश्च 'तस्माद्योगाय० कर्मजम्बुद्धियुक्ता० जन्मबंध० त्यनामयम्' इति ।। ३ ।। तर्हि'कुर्वन्नेवे० समाः' 'यावज्जीवमग्निहोत्रं जुहोति' 'तं यज्ञपात्रैर्दहंति' इत्यादिश्रुतिभ्यो नृणां सर्वायुषः कर्माभिव्याप्तत्वात् 'संन्यस्य श्रवणं कुर्यात्'इति चोदनया सहानुष्ठानासम्भवाज्ज्ञानोत्पादनकालाभावे मोक्षोपि न स्यादित्यत आह तन्निष्कामतया नित्यनैमित्तिककर्मानुष्ठानं शमादिसाधनावधि कार्यमनुष्ठेयं पूर्वमन्तःकरणशुद्ध्ये साधनं बहिरंगं कर्म तसाद्ध्याः शमादयोन्तरंगभूताः तत्साद्ध्यं ज्ञानं अत उपात्तपरसाधनः शमादिसम्पन्नस्ततः कर्म संन्यस्य शमवान्नैष्कर्म्यसिद्धिभाग्भवेत् 'नैष्कर्म्यसिद्धिं०ति'इति स्मृतेः । कर्मत्यागवदारूढस्य शमत्यागप्राप्तौ तच्छंकापनुत्यै शमवान्भवेदित्युक्तं 'आरुरुक्षोर्मु०च्यत' इति स्मृतेः अयं भावः 'कर्मब्रह्मोभयभ्रष्टं तं त्यजेदंत्यजं यथा'

ततः संन्यस्य शमवान्भवेन्नैष्कर्म्यसिद्धिभाक् ॥ ४ ॥
प्रकृत्युत्थगुणैः कोपि जात्वकर्मा न तत्क्षणे ।
सक्तोऽज्ञोऽसक्त इद्विद्वानस्येदं लोकसंग्रहे ॥ ५ ॥
अहं यथानुतिष्ठामि लोकस्तदनुगो भवेत् ।
नेदं साध्विति मत्वाजः कर्मयोगं जगौ प्रभुः ॥ ६ ॥
कर्मयोगमयं तस्य चेष्टितं शृणु सादरं ।
यच्छ्रुत्वा भवसम्बन्धं छित्वा याति परं पदं ॥ ७ ॥
ब्रह्मध्रुग्यवनो राजा कश्चिद्दिस्त्रोभवत्खलः ।
सदस्याहूय विप्रान्स स्वाग्रे वेदानपाठयत् ॥ ८ ॥

इति वचनाच्छमाद्यसम्पत्तौ संन्यासः पातित्याय तत्सम्पत्तौ तु 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति श्रुतेर्ब्रह्मचर्याद्वा गृहाद्वा वनाद्वा संन्यासोन्यथा यावज्जीवश्रुत्या कर्मानुष्टेयं एवं सति पूर्वापरकाण्डश्रुत्यविरोधः अन्यच्च ॥४॥ कोपि जातु कस्यांचिदवस्थायां प्रकृतिजैर्गुणैरकर्मा न भवति तर्हि ज्ञोपि करोतीति चेज्ज्ञाज्ञयोः को विशेष इत्यत आह सक्त इति विद्वानात्मतत्त्वमिति शेषः विदेः शतुर्वसुरिति वस्वादेशः न लोकाव्ययेति षष्ठीनिषेधः अज्ञः फलबुद्ध्या कर्मसक्तः फलनिरपेक्षो ज्ञस्तु कर्मानासक्त इति शेषः तर्हि फलरूपप्रयोजनाभावे 'प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत' इति वचजाज्ज्ञस्य कुतः कर्मणि प्रवृत्तिरित्यत आह अस्येदमिति ॥ ५ ॥ ज्ञस्य तु लोकसंग्रहार्थं युक्तमेव श्रीगुरोः किमर्थमिति चेत्तन्मतमेवानुवदति अहमिति यथानुतिष्ठामि तुर्याश्रमविरुद्धतया राजभक्तिवशाच्छिबिकारोहणादि करोमि लोकः स्वाश्रमवर्ती तदनुगः तदनुसारी न साधु संकरपर्यवसायित्वात् ॥ ६ ॥ कर्मयोगप्रचुरं तस्य श्रीगुरोः ॥७॥ ब्रह्मद्वेष्टा कश्चिद्ब्राह्मणघातुको यवनजातीयो राजा ॥ ८ ॥ अर्थसहितान् वेदान् पठन्ति वर्तमानसामीप्यात्

वेदान्पठंति ये सार्थास्तेभ्यो दास्ये धनं बहु ।
इत्याकर्ण्य तदुक्तं ये रैलुब्धास्ते तथाभजन् ॥ ९ ॥

श्रुत्वा खलोपि वेदार्थं द्विजाग्रे ब्राह्मणाञ्छ्रुतीः ।
अकुत्सयद्गवाशेन मिथ्याचारो मतोखिलः ॥ १० ॥

एवं सत्येकदा विप्रौ वैदिकावेत्य दुर्विधौ ।
मत्तौ तमूचतू राजन्वेदशास्त्रविदौ स्व इत् ॥ ११ ॥

अस्मत्तुल्यौ न के क्वापि त्वन्निघ्नाश्चेदिहानय ।
श्रुत्वेदं स्वाश्रितेभ्यो राट् शशंसोचुः खलं हि ते ॥ १२ ॥

न यांति संमुखे केपि तयोस्तत्तौ समर्चय ।
राजाप्यानर्च तौ विप्रौ गजावारोह्य भूषितौ ॥ १३ ॥

पठिष्यंति रैलुब्धा द्रव्यलम्पटाः तथाऽभजन् तदग्रे सार्थान्वेदानपठन्॥९॥ खलो राजा ब्राह्मणान् यज्ञशेषामिषभक्षकान् श्रुतीः स्वर्गाद्यर्थप्रतिपादकाः अद्वैतात्मतत्त्वप्रतिपादकाश्च गर्हयामास गवाशेनाकालपक्वमांसभक्षकेनाखिलो मुखाद्यवयवैर्देहसाम्ये वर्णाश्रमादिरूपोऽचेतनोपलादौ अन्यत्राश्वत्थादौ वा देवताकल्पनरूपश्च ॥ १० ॥ दुर्विधौ दरिद्रौ मत्तौ विद्यामदमोहितौ तं यवनराजं वेदशास्त्राभिज्ञौ आवां स्वः इदेवार्थः ॥ ११ ॥ त्वन्निघ्नास्त्वदधीनाः सन्ति चेत्तानिह वां प्रत्यानय इदं मत्तविप्रवचः राड्राजा शशंस कथयामास ते आश्रिताः खलं राजानमूचुः ॥ १२ ॥ तयोः संमुखे न यांति न यास्यंतीति भावः तत्तस्मात् आनर्च पूजयामास ॥ १३ ॥ जैव्हासुखं

जैव्ह्यौपस्थ्यसुखासक्तिनिदानेनेदृशी स्थितिः ।
वेदज्ञानामधःपातशंकावर्जितचेतसां ॥ १४ ॥

॥ विप्रावूचतुः ॥

विद्यापरिश्रमो वादं विना न सफलोस्ति नौ ।
तदाज्ञापय गच्छावो गां जेतुं विदुषो द्विजान् ॥ १५ ॥

स तथाप्यादिशद्विप्रपराभवपरो नृपः ।
जयपत्रं द्विजान्जित्वा गृण्हंतौ चेरतुर्भुवं ॥ १६ ॥

वावदूकतया मिथ्या द्विजांस्तर्जयतोः सदा ।
विवादं त्याजितैः प्राज्ञैर्जयोभूद्विशदस्तयोः ॥ १७ ॥

त्रिविक्रमं त्रर्याज्ञं तौ श्रुत्वागत्योचतुः कुरु ।
चेद्वेदज्ञोसि वादं नौ देहि वा जयपत्रमित् ॥ १८ ॥

रसास्वादः औपस्थ्यं सुखं स्त्रीलम्पटताऽनयोरासक्तिरेव निदानं वेदविक्रयस्यादिकारणं तेनाऽधःपातशंकावर्जितचेतसां मृत्युगोचराणां नास्तिकानां '.अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे' इति यमोक्तेः ॥ १४ ॥ गां भूतलं ॥ १५ ॥ स नृपः ॥ १६ ॥ वावदूकतयातिवक्तृत्वेन मिथ्या छद्मना द्विजांस्तर्जयतोः तर्जिभर्त्स्योरनुदात्तत्वेपि चक्षिङो ङित्करणस्वात्परस्मैपदमिति वामनः प्राज्ञैर्विवादं त्याजितैस्त्यजेर्ण्यंताद्द्विकर्मकादप्रधाने कर्मणि क्तः तयोः विशदः स्फुटः उल्वणं विशदं स्फुटमिति यादवात् अभूत् ॥ १७ ॥ तमागत्योचतुः वेदज्ञोसि चेद्वादं कुरु वाथवा जयपत्रमेव देहि नौ आवाभ्यां ॥ १८ ॥ वेदज्ञा इति सोपहासवचनं 'न ह्यनद्वयात्म-

॥ त्रिविक्रम उवाच ॥

वेदज्ञास्त्वादृशाः पूज्या द्विजौ नाहं तथाविधः ।
यतो जयाजयसमे जिते किं वां भवेदिह ॥ १९ ॥
पश्येमान्यमितानि त्वं पत्रं देहीति भाषितः ।
ताभ्यां दास्ये गुरोरग्र इत्युक्त्वा श्रीगुरुं ययौ ॥ २० ॥
तौ मत्तौ स्वासनारूढौ मूढौ तमनुजग्मतुः ।
मठे श्रीगुरुमासाद्य तमस्तौषीत्त्रिविक्रमः ॥ २१ ॥
नम ॐकाररूपाय निर्गुणाय गुणात्मने ।
जगद्गुरो परानन्दमूर्ते जय जयाच्युत ॥ २२ ॥

विद्वेदं ज्ञातुं शक्नोति तत्त्वतः। न ह्यनद्धयात्मवित्कश्चित्क्रियाफलमुपाश्नुत' इति ॥ १९ ॥ इमानि जयपत्राणि तथा त्वं देहीति ताभ्यां भाषितः गुरोरग्रे दास्यामीत्युक्त्वा गुरुं ययौ ॥ २० ॥ स्वासनारूढौ पादचारिणं तं यतिमनुजग्मतुरतो मूढौ आसाद्य प्राप्य ॥ २१ ॥ हे भगवन्यतस्त्वं माया-गुणविलसितसंसारबन्धरहितः सहजसुखनिमग्नो द्वैताद्वैतसंगशून्यस्त्रिविध-परिच्छेदरहितः सजातीयादिभेदविधुरस्तुल्यनिंदास्तुतिः शत्रौ मित्रे चैकरूपः भवाब्धिपतितजनतारणनौकाभूतः प्रसन्नेन्द्रियकलापः प्रहसितवदनो निश्चिंतः कृतार्थः सच्चिदानन्दब्रह्मरूपेणावस्थितः अत एव ॐकाररूपोसि तस्मै ते ॐकाररूपाय नमः किं सगुणत्वेन नमस्करोषि न निर्गुणाय निर्गुणत्वे कथं शब्दगोचरत्वमत आह गुणात्मने भक्तानुग्रहार्थं स्वीकृतगुणात्मदेहाय ते नमः जगतां गुरुस्तत्सम्बुद्धौ परमानन्दो निरुपाधिको निरतिशयः स एव मूर्तिर्यस्य नास्मदादिवत्कर्मोपात्तमूर्तिस्तत्सम्बुद्धौ भक्तानामावरणशक्तिरूप-मायानिवारणेन जयोत्कर्षमाविष्कुरु द्विरुक्तिरादरार्था ईदृक्संपादनसामर्थ्यद्योत-नायाच्युतेति सम्बुद्धिः अवतीर्णस्यापि तव सर्वज्ञत्वसर्वेश्वरत्वसर्वशक्तित्वा-देरप्रच्युतत्वात्त्वं परमेश्वर इति भावः जयानंतकृपाब्धे भक्तवत्सल इति पाठे

नाज्ञानांधः परं वेत्ति यं घूक इव भास्करं ।
स त्वं भो मत्तविप्रद्विड्द्विजौ शासितुमर्हसि ॥ २३ ॥
स्तुत्वैवमादितः सर्वं शशंसागमकारणं ।
तौ प्राह गुरुरप्याप्तौ साध्यमेतेन किं द्विजौ ॥ २४ ॥

॥ विप्रावूचतुः ॥

राज्ञाज्ञप्तौ द्विजान्जेतुमावां विद्वत्तमौ भुवि ।
अत्रानीतावनेनोभौ भिक्षू किं वेदपारगौ ॥ २५ ॥

॥ श्रीगुरुरुवाच ॥

गर्वेणैव प्रणष्टाः स्यू राक्षसा 'असुरा द्विजौ ।
अनादीन्कृत्स्नशोनन्तान्कोपि वेदान्न वेद रे ॥ २६ ॥
ब्रह्मचर्याश्रमे वेदान्पठितुं प्राक्तपोतपत् ।
भरद्वाजो विधिः प्रीतस्तस्मै वेदानदर्शयत् ॥ २७ ॥

स्फुटार्थ एव ॥ २२ ॥ तर्हीदृशं मां लोकः कुतो न जानात्यत आह कार्यकारणेभ्यः परं ज्योतीरूपं यं अज्ञानांधो भास्करं घूको दिवांध इव न वेत्ति स त्वं ज्ञानप्रदीपोसि भवतु नाम तथा किमर्थं तवागमनं तत्राह इमौ मत्तौ विद्यामदगर्वितौ अतो विप्रद्विषौ द्विजौ शासितुं योग्योसि ॥ २३ ॥ आप्तौ प्राप्तावपि तौ प्राह हे द्विजौ एतेन ब्रह्मद्वेषेण किं साध्यम् ॥२४॥ अनेन त्रिविक्रमेण उभौ युवां भिक्षू वेदपारं गतौ किमिति गर्वोक्तिः ॥ २५ ॥ हे द्विजौ असुरा बलिबाणप्रभृतयः राक्षसा रावणादयः रे इत्याक्षेपसम्बोधनं अपौरुषेयत्वादनादीन् ननु 'त्रयो वेदस्य कर्तारो मुनिभांडनिशाचरा' इत्युक्तत्वात्कथं तेषामनादित्वमिति चेत्तन्मतस्य शास्त्रबाह्यत्वात् 'अरेस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोथर्वांगिरस' इति श्रुतेरनादित्वं अनन्तान् 'अनन्ता वै वेदा' इति श्रवणात् कोपि ब्रह्मापि ॥ २६ ॥ 'मुढे भरद्वाजमिमं भरद्वाजं बृहस्पते' इति मरुद्भिर्जन्मन्युक्तत्वाद्भरद्वाजनामा ऋषिः

-

दृष्ट्वा भास्वद्वेदराशीन् शंकितोभूद्दषिर्ददौ ।
त्रीन्मुष्टीनृषयेद्यापि पठ्यमानो न पारगः ॥ २८ ॥
पैलो वैशम्पायनश्च जैमिनिश्च सुमन्तुकः ।
ऋग्यजुःसामाथर्वाख्या अशिक्षंत श्रुतीः क्रमात् ॥ २९ ॥
गुरुर्व्यासो हरिः साक्षात्ततोत्र प्रसृता श्रुतिः ।
पठिताः कतिचिद्वेदा आयुष्मद्भिर्युगान्तरे ॥ ३० ॥
शाखयैवाल्पायुषोऽत्र मंदा वेदज्ञमानिनः ।
प्रतिग्रहपरान्नस्त्रीसक्ताः सिद्धिविवर्जिताः ॥ ३१ ॥
व्यासेनोक्ताश्चतुर्वेदाः शाखांगोपांगसंयुताः ।
आयुर्वेदस्ततो रुग्हृदृग्वेदस्योपवेद उत् ॥ ३२ ॥

॥२७॥ भास्वतो वेदराशीन्ब्रह्मणा दर्शितान्दृष्ट्वा कदाहं पारं गमिष्यामीति शङ्कितोभूत्तदा ब्रह्मा स्वमुष्टित्रयपरिमितान्पुस्तकरूपान्वेदानृषये भरद्वाजाय ददौ सोप्यायुष्मान्मेधावी तान्पठ्यमानोप्यद्यापि न पारग इतरेषां तु का कथा इतिहासस्यास्य नार्थवादत्वं वैदिकत्वात् ॥ २८ ॥ पैलादयोनुक्रमेण ऋगादिसंज्ञकाः श्रुतीरशिक्षंताभ्यस्तवन्तः गुरोरिति शेषः आख्यातोपयोग इति पंचमी सापेक्षत्वात् ॥ २९ ॥ यतोत्रास्मिन्काले श्रुतिः प्रसृतास साक्षाद्धरिर्व्यासस्तेषां गुरुः युगांतरे कृतादिषु आयुष्मद्भिः कतिचिद्वेदा अधीताः ॥ ३० ॥ अत्र तु कलौ मन्दा दुर्मेधसोल्पायुषोपि एकयैव शाखयाधीतया वेदज्ञमानिनस्तथापि दुष्प्रतिग्रहपरान्नस्त्रीसक्ताः अतएव मन्त्रसिद्धिविवर्जिताः ॥ ३१ ॥ शाखा आश्वलायन्यादयोंऽगानि शिक्षाप्रभृतीनि अन्यान्युपांगानि च तैः सहिताः ऋग्वेदस्योपवेद आयुर्वेदः रुजं हरतीति रुग्हृत्ताद्विशेषणं ततो विस्तृतः न तु संकोचितः उत् उत्कृष्ट आयुर्वर्धकत्वात् ॥ ३२ ॥ शोभना अर्णा अक्षराण्यस्य स

स्वर्णोत्रिगोत्रजो गायत्रच्छंदो ब्राह्मदैवतः ।
द्व्यरत्निमात्रो दीर्घाक्ष ऋग्वेदो व्यक्तकंधरः ॥ ३३ ॥
शाकला बाष्कला तस्याः सांख्यायन्याश्वलायनी ।
मांडूक्येत्थं पंच शाखा अष्टौ विकृतयस्त्वृचः ॥ ३४ ॥
निरुक्तं व्याकृतिर्ज्योतिश्छंदः शिक्षा च कल्पकः।
अस्येमानि षडंगानि वेत्तीमं कोद्य कृत्स्नशः ॥ ३५ ॥
पंचारत्निमितोर्काभः कपाली कृशदीर्घकः ।
यजुर्वेदो धनुर्वेदः क्षत्रेष्टोस्योपवेद उत् ॥ ३६ ॥
त्रिष्टुप्छंदो भरद्वाजगोत्रजो विष्णुदैवतः ।
षडशीतिभिदोंगानि प्राग्वदष्टादशास्य तु ॥ ३७ ॥
परिशिष्टान्युपांगानि षडेवैष इयान् ततः ।
क्षमी दांतः शुचिः स्रग्वी चर्मी दण्डी तृतीयकः ॥३८॥

परिमिताक्षरगायत्र्यादिछंदोभिर्ऋक्शः शोभमानत्वात् सुवर्णसदृशवर्णो वा द्व्यरत्निमात्र इति ध्यानार्थं रूपकल्पना मूर्तिध्यानार्षछंदोदेवतानुस्मरणं चोपासनांगमिति गम्यते ॥ ३३ ॥ ऋच इत्थं शाखा अष्टौ च विकृतयः ताश्च 'जटा माला शिखा लेखा ध्वजो दण्डो रथो घन' इति ॥ ३४ ॥ व्याकृतिर्व्याकरणं ज्योतिर्ज्योतिःशास्त्रं कल्पः सूत्रं अस्य ऋग्वेदस्य इमं वेदं व्याकरणादीनि मूलान्येव ॥ ३५ ॥ अर्काभः सूर्यकांतिः कपाली कपालहस्तः कृशो दीर्घश्च अस्य यजुर्वेदस्य क्षत्रेष्टः क्षत्रियप्रियः धनुर्वेद उपवेदः ॥ ३६ ॥ त्रिष्टुप् छन्दो यस्य षडशीतिशाखा भेदा अस्य षडंगानि पूर्ववत् ॥ ३७ ॥ अस्य त्वष्टादश परिशिष्टानि षडुपांगानि एष यजुर्वेद इयान्ततः विस्तृतः क्षमीत्यादि साम्नः स्रङ्मालास्यास्तीति स्रग्वी अस्मायेति विनिः ॥ ३८ ॥ अरत्निस्तु निष्कनिष्ठेन मुष्टिनेति लक्षण-

षडरत्निमितोस्योपवेदो गान्धर्वसंज्ञकः।
रुद्राधिदेवो जगतीच्छंदः काश्यपगोत्रजः ॥ ३९ ॥

हता नष्टाश्चापि शिष्टा नवाष्टौ च भिदोस्य तु।
सामांगोपांगभेदेन कः पुमान्वेदितुं क्षमः ॥ ४० ॥

चण्डस्तीक्ष्णोसितः कामरूपी क्षुद्रक्रियोशुभः।
स्वदारातुष्टोथर्वाख्यः शस्त्रास्त्रोपांगवेद उत् ॥ ४१ ॥

वैजानगोत्रजोनुष्टुप्छंदा एषैन्द्रदैवतः।
नवास्य भेदाः सम्पूर्णाः कल्पाः पंचात्र वेत्ति कः॥४२॥

वर्षेद्य भारते कर्मभ्रष्टा हीना द्विजातयः।
वेदान्क्षीणंत्यंत्यजाग्रे सत्वहीना अतोभवन् ॥ ४३ ॥

लाक्षितमानेन षडरत्निपरिमितः अस्य साम्नः गान्धर्वसंज्ञकः उपवेदः॥३९॥ केचनेन्द्रेण हताः केचन कालवशान्नष्टा एवं सत्यपि नवाष्टौ चास्य भेदाः शाखाः ॥ ४० ॥चतुर्थमाह चण्डोभिचारादिप्रयोगप्रवर्तकत्वाच्चण्डस्तीक्ष्णः क्षुद्रक्रियः वशीकरणाद्यैहिकफलदक्रियाप्रवर्तकत्वात् ईदृशश्चेत्पातायेत्यत आहाशुभः ईश्वरोद्देशेन सेवितोसौ शुभदः अथवा प्रश्नमुण्डकमाण्डूक्याद्युपनिषद्भागेन मोक्षदत्वान्न विद्यते शुभो यस्मात् 'अथर्वांगिरसः पुच्छं प्रतिष्ठा' इति श्रुतेः शस्त्रास्त्रशब्देन यन्त्राद्यत्र गृह्यते पूर्वं धनुर्वेदस्योक्तत्वात् ॥४१॥ सम्पूर्णाः सांगाः भेदाः शाखाः अत्रेदृशान्वेदान्को वेत्ति न कोपि ॥४२॥ कर्मभ्रष्टाः स्वाचारहीनाः अतएव हीना अतो हेतोः सत्वेन मंत्रवीर्येण हीनाः केवलाक्षरधारिणोभवन् ॥ ४३ ॥ सुतीर्थादागतं व्यक्तमित्यादि-

उत्सृष्टोपाकृताभ्यस्तगुप्तवेदमनुर्भुवि ।
किं न दास्यति विप्रेभ्यः प्रत्येकः कामधेनुवत् ॥४४॥
देवाधीनं जगन्मंत्रनिघ्ना देवास्तु मंत्रकाः ।
ब्रह्माधीना ब्राह्मणा मे देवता विष्णुरब्रवीत् ॥ ४५ ॥
सर्वस्वदक्षिणा भूपैर्दत्तापि ब्राह्मणैः पुरा ।
नात्ता कृतोद्रिस्तृणवत्सुसत्वाच्चाद्रिवत्तृणं ॥ ४६ ॥
वशसर्वामरास्तेपि तदा स्वल्पज्ञमानिनः ।
युवां भ्रष्टौ भ्रष्टमंत्रौ स्वल्पज्ञौ प्राज्ञमानिनौ ॥ ४७ ॥
आत्मस्तुतिपरौ ब्रह्मद्विषौ साध्वात्मवंचकौ ।
त्वत्तुल्या ये पुरा जाता जातास्ते ब्रह्मराक्षसाः ॥ ४८ ॥

शिक्षयाभ्यस्तः स्त्रीशूद्रादिश्रुत्यगोचरत्वेन भोजनादिनियमेनानध्यायादिपालनेन च गुप्त उत्सृष्ट उपाकृतश्चासौ अभ्यस्तगुप्तवेदमनुर्मंत्रः सर्वमपि दास्यत्येकैकः किं पुनर्वेदः ॥ ४४ ॥ जगद्देवाधीनं अधिदैवतरूपेण ते देवा मंत्राधीनाः 'प्रनूनं ब्रह्मणस्पति० यस्मिन्निन्द्र०र' इति श्रुतेर्मंत्रा ब्रह्माधीना ब्राह्मणाधीनास्तेषामधिकारित्वात् ॥ ४५ ॥ भूपैः सर्वस्वदाक्षिणा दत्तापि ब्राह्मणैः पुरा नात्ता न स्वीकृता प्रतिग्रहस्य तपस्तेजोयशोनाशकत्वात् सुसत्वाच्छोभनमन्त्रबलात् अद्रिस्तृणप्रायः कृतः अद्रिवत्तृणं कृतं ॥ ४६ ॥ वशा अधीनाः सर्वेऽमरा येषां ते 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' इति श्रुतेः आत्मानं स्वल्पज्ञमानिनः गर्वमत्सरादिहीनाः स्वज्ञातिभ्यो भ्रष्टौ म्लेछाग्रे वेदपाठात् भ्रष्टमन्त्रौ सुतरामल्पज्ञावपि आत्मानं प्राज्ञमानिनौ ॥ ४७ ॥ आत्मस्तुतिप्रियौ अकुटिलस्वभावप्रत्यगात्मवंचकौ आत्मा हि सर्वजन्तूनां प्रत्यक्स्वसंवेद्यः ब्रह्मद्रोहिणौ ॥ ४८ ॥ एतावन्मात्रं श्रोतुं न प्राप्तौ अयं वा त्वं वा विवादं कुरु वां

॥ विप्रावूचतुः ॥

नैतावच्छ्रोतुमासौ स्वो विवादं कुरु चेन्न त्वां ।
तच्छक्तिर्जयपत्रं नौ युवाभ्यां दीयतामिति ॥ ४९ ॥
तथेत्युक्त्वोद्वीक्ष्य यांतमानयित्वांत्यजं प्रभुः ।
लेखा उल्लिख्य सप्ताभ्युत्क्रामयन्तमवाचयत् ॥ ५० ॥
प्राचीनसप्तजन्मज्ञो रेखास्पर्शनतोभवत् ।
आद्यां गत्वास्मि बुरडो मातंग इति भाषितम् ॥ ५१ ॥
द्वितीयां तु किरातोत्थो रावण्याख्य इतीरितं ।
तृतीयां च नदीतीरस्थो गांगेय इतीरितं ॥ ५२ ॥
चतुर्थी वै कृषिपटुः शूद्रोस्मीत्यभिभाषितं ।
पंचमीं सोमदत्ताख्यो वैश्योस्मीत्युदितं ततः ॥ ५३ ॥
षष्ठीं गोवर्धनाख्योहं क्षत्रः शूर इतीरितं ।
सप्तमीं वेदशास्त्रज्ञो ब्राह्मणोस्मीति भाषितं ॥ ५४ ॥
तदास्य मंत्रितं भस्म क्षिप्त्वांगे प्रभुराह तं ।
चेद्वेदज्ञोसि विप्रौ द्राग्विवादेन पराजहि ॥ ५५ ॥

युवयोर्वादशक्तिर्न चेत्तर्हि युवाभ्यां जयपत्रं दीयतां तद्वाक्यसमाप्त्यर्थ इतिशब्दः ॥ ४९ ॥ प्रभुः समर्थः श्रीगुरुस्तथेत्युक्त्वा किंचिद्दूरतो यांतं गच्छंतं अन्त्यजमुद्वीक्ष्य तं स्वसमीपमानीय सप्त लेखा भुवि उल्लिख्य शब्दतः एकैकां लेखां अभ्युत्क्रामयन्तमवाचयत् ॥ ५० ॥ वर्तमानसहितानि प्राचीनान्यतीतानि सप्त जन्मानि तेषां ज्ञः ज्ञुपधेति कप्रत्ययः ॥ ५१ ॥ द्वितीयां गत्वेत्यध्याहर्तव्यमेवमग्रेपि ॥ ५२ ॥ ५३ ॥ ५४॥ तदास्यांत्यजस्यांगे पराजहि पराभवं कुरु ॥५५॥

इति श्रुत्वेशवाक्यं तौ प्रत्याहतधियौ भिया ।
कंपितौ श्रीगुरुं गत्वा विप्रौ शरणमूचतुः ॥ ५६ ॥
ब्रह्मद्विषौ स्वः पापिष्ठौ दुष्टसंगाहितभ्रमौ ।
मूढौ नौ दुर्गतिं यांतौ समुद्धर्तुं हरेर्हसि ॥ ५७ ॥

॥ श्रीगुरुरुवाच ॥

म्लेछाग्रे पठिता वेदा धिक्कृता ब्राह्मणा यतिः ।
तत्कर्मपरिपाकार्थं राक्षसौ द्राग्भविष्यथः ॥ ५८ ॥
सन्ततत्वाद्द्वादशाब्दानुपित्वा शांतरूपतः ।
पठ्यमानानुवाकोपदेशाद्विप्राय वां गतिः ॥ ५९ ॥

ईशस्य श्रीगुरोर्वाक्यं श्रुत्वा ततो भिया भयेन प्रत्याहता नष्टा धीर्ययोस्तौ संजातकम्पौ ॥ ५६ ॥ हितः जनितः भ्रमो मिथ्यामतिर्ययोस्तावतएव मूढौ पापिष्ठौ इत उर्ध्वं दुर्गतिं नरकं गच्छंतौ आवां समुद्धर्तुं योग्योसि ॥५७॥ ‘गोमांसभक्षको यस्तु विरुद्धं बहु भापते। सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयत’ इत्युक्तलक्षणो म्लेछः तदग्रे ‘एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा’ इति श्रुतेर्ब्राह्मणधिकार एव देवधिकारः अतएवोक्तं छांदोग्ये ‘ब्राह्मणान्न निंदेत्तद्व्रतम्’इति । यतिः साक्षाद्गुरुः ‘गुरुं हुंकृत्य तुंकृत्य विप्रान्निर्जित्य वादतः। अरण्ये निर्जले देशे जायते ब्रह्मराक्षस’ इति वचनात्तत्कर्मपरिपाकार्थं युवां शीघ्रं ब्रह्मराक्षसौ भविष्यथः ॥ ५८ ॥ सन्ततत्वादनुततत्वात्केनचिद्विप्रेण पठ्यमानो यो यजुःसम्बन्ध्यनुवाको मोहाद्विस्मृतिं प्राप्तस्य तस्योपदेशाद्युवाभ्यां ब्राह्मणाय शंसनात् वां युष्माकं सद्गतिर्भविष्यति यद्यप्युपदेशस्याद्योच्चारणत्वं तथाप्यत्र लाक्षणिकेनार्थेन शंसनं ग्राह्यम् ॥ ५९ ॥ इति

इत्युक्तौ गुरुणा गत्वा भीमां स्नात्वा मृतावुभौ ।
राक्षसौ गुरुवाक्यात्तौ भूत्वा तत्रैव तस्थतुः ॥ ६० ॥

तत्र यान्द्वादशाब्दांते द्विजो विस्मृतवान्मनुं ।
तस्मै शशंसतुस्तं तौ तदा मुक्तौ स्वरीयतुः ॥ ६१ ॥

स्वधर्ममुत्सृज्य मदेन ये द्विजान् गुरून् द्विषंतः खलु राक्षसा वने ।
भवंति पापोपि यदानुतापितः कनिष्ठशिक्षो भवति द्विजाविव ॥

इति श्रीगुरुचरिते कर्मयोगे वेदोपदेशो नाम प्रथमोऽध्यायः॥१॥

आदितश्चतुर्दशोऽध्यायः ॥ १४ ॥

गुरुणोक्तौ भीमां गत्वा तत्रैव भीमातीरे वृक्षोपरि ॥६०॥ द्वादशाब्दांते तत्र यान् गच्छन् कश्चिद्द्विजः मंत्रं विस्मृतवान् तं मंत्रं तस्मै शशंसतुः स्वः स्वर्गलोकं ॥ ६१ ॥ स्फुटार्थः॥ ६२ ॥

इति श्रीगुरुचरिते टीकायां कर्मयोगे प्र० आदितश्चतुर्दशोऽध्यायः ॥१४॥

# पंचदशोऽध्यायः

॥ नामधारक उवाच ॥

पतितस्य ततो जातं किमु हीनोप्यनुग्रहात् ।
श्रीमद्भगवतो वेदशास्त्रज्ञोस्मीति योब्रवीत् ॥ १ ॥

॥ सिद्ध उवाच ॥

प्रसादात्सद्गुरोर्ज्ञानी भूत्वाह पतितो हरिं ।
ब्राह्मणस्यापि मे कस्मादधःपातोभवद्धरे ॥ २ ॥

॥ श्रीगुरुरुवाच ॥

कर्मणा भ्रममाणस्य यन्त्रवत्पुण्यपापतः ।
प्रकृत्यायत्तचेष्टस्य जन्तोरूर्ध्वमधोगती ॥ ३ ॥
गुरुमातापितृस्त्र्यर्भधर्माचारकुलेश्वरान् ।
यो जहाति मुधा सोपि जीवहिंस्रोनृतप्रियः ॥ ४ ॥

श्रीगणेशाय नमः ॥ अथ पंचदशोऽध्यायः ॥ क्रियाविपाकोन्त्यजाय प्रायश्चित्तं च भिक्षवे ॥ प्राह पंचदशे भस्ममाहात्म्यं राक्षसोद्धृतिं १ एवं कर्मकाण्डोपक्रमे 'अहं यथानुतिष्ठामि लोकस्तदनुगो भवेत्। नेदं साधु' इति श्रीगुरोश्चिकीर्षितं मतमनूद्य वेदावमानेन ब्राह्मणधिक्कारेण च द्विजयोरपि दुर्गतिं प्रदर्श्याधुना संवादमिषेण विकर्मतो दुर्गतिं प्रायश्चित्तेन संशुद्धिं च वक्ष्यति हीनोपि श्रीमद्भगवतोनुग्रहात् वेदशास्त्रज्ञोस्मीति योऽब्रवीत्तस्य पतितस्य किं जातं ॥ १ ॥ हे हरे कस्मात्कर्मणः ॥ २ ॥ पुण्येनोर्ध्वगतिः पापेनाधोगतिः ॥ ३ ॥ तां प्रपंचयति अर्भः पुत्रः कुलेश्वरः कुलदेवता मुधा निरपराधं त्यजति अनृतप्रियोऽसत्यवक्ता ॥ ४ ॥ काले प्राप्तस्याति-

खलः कन्याश्वगोक्रेता गृहग्रामवनाग्निदः ।
त्यक्तश्राद्धः परान्नाशीः कालाप्तातिथिहापकः ॥ ५ ॥

सद्विप्रदेवतीर्थार्च्यवेदशास्त्रादिनिंदकः ।
तडागकूपारामाध्वक्रतुध्वंसी व्रताह्भुक् ॥ ६ ॥

श्राद्धार्च्याहांबुपर्वाह्नि स्त्रीभुग्विश्वासघातकः ।
दत्तदानहरः स्वोक्तव्यस्ताचारोन्यकर्मकृत् ॥ ७ ॥

स्वपुण्यपरपापास्यो दम्भाद्यैः सत्वदर्शकः ।
खलहिंस्रस्तेयिसंगी घातघ्नो जारणादिकृत् ॥ ८ ॥

ज्ञानं विना चिकित्साशी कर्मभ्रष्टोन्यतापकृत् ।
इत्याद्याः प्रेत्य नरकं भुक्त्वा चण्डालयोनिगाः ॥ ९ ॥

क्रोधी शूद्रीरतस्त्यक्तनित्यनैमित्तिकक्रियः ।
वृषगोवृषलीसक्तो रसगोवेदविक्रयी ॥ १० ॥

थेहापकः तिरस्कर्ता ॥ ५ ॥ सन् साधुः अर्च्यः पूज्यः ॥ ६ ॥ श्राद्धाहे अर्च्याहे व्रतदिने अम्बुनि जले दर्शादिपर्वणि दिवा च स्त्रीभुक् मैथुनकर्ता स्वोक्ताद्व्यस्तोन्यथाचारो यस्य अन्यकर्मकृत् हीनजातीयकर्मकर्ता ॥ ७ ॥ स्वपुण्यं परपापं च मुखे यस्य तदुच्चारणशीलः दम्भादिभिर्लोके सत्त्वस्य साधुत्वस्य दर्शकः ॥ ८ ॥ ज्ञानं विना चिकित्साशी रुक्प्रतिक्रियाकरणशीलः परतापकरः ॥ ९ ॥ एवं सामान्यतः सर्वेषां पापफलमुक्त्वा ब्राह्मणानां विशेषत आह वृषमारुह्य गमनकर्ता रसा लवणगुडमधुगोरसाद्या रसाः गौः वेदः प्रसिद्धः आपदि स्ववृत्त्या जीवनाभावे वैश्यवृत्त्या जीवेत तदा रसविक्रयो न कार्य इति भावः ॥ १० ॥ ईशमीश्वरायासमर्प्य कापि-

अदत्त्वेशं कपिलगोदुग्धपोतिनिषिद्धभुक् ।
प्रतिग्रही पराजीवजीवी सन्ध्याशयी कुवाक् ॥ ११ ॥
इत्याद्या ब्राह्मणास्तेपि पूर्ववत्सम्भवन्ति हि ।
जीवजातिमिताः सन्ति नरका एकविंशतिः ॥ १२ ॥
तेषु श्रेष्ठा जीवपापविपाका अन्तकालये ।
तेष्वंतकः क्षिपत्येतान्पापिनः पापभुक्तये ॥ १३ ॥
त्यक्त्वा पुष्टमपीह वर्ष्म कलुषी यान्यातनांगेन तृट्-
क्षुच्छीतोष्णसुपीडितो यमचरैर्बद्धोयने दुर्गमे ।
मूर्छन् तर्जनताडनादिभिरमन्वै वैतरिण्यर्दितो ।
भुंक्ते याम्यमवाप्य राष्ट्रमवशस्तां यातनां नारकीम् ॥१४॥
ततो योन्यंतरं याति भुक्तदुःखोप्यघांशतः ।

लागोदुग्धपः कंदर्पलशुनगृंजनाद्यनिर्निषिद्धभुक् कुवाग्गालिप्रदः ॥ ११ ॥ ॥ १२ ॥ जीवजातिमिताः ८४०००० तेषु श्रेष्ठा जीवपापपरिपाकशीला एकविंशतिः ॥१३॥ इह लोके पुष्टमपि शरीरं त्यक्त्वा कलुषी पापी यातनादेहेन गच्छन्तृषादिपीडितोऽयने मार्गेसन्नसभ्यः वैतरिण्यां 'दानं वितरणं प्रोक्तं मुनिभिस्तत्वदर्शिभिः । इयं सा तीर्यते यस्मात्तस्माद्वैतरणीति सा' इत्युक्तलक्षणायामर्दितः याम्यं राष्ट्रमवाप्यावशः पराधीनः तामनिर्वाच्यां यातनां तीव्रवेदनां भुंक्तेनुभवति ॥१४॥ततो यमलोकाद्भुक्तदुःखोप्यघांशतोवशिष्टपापवशात् योन्यंतरे देहभावं याति विरुद्धानेकयोन्युपभोगफलानां च कर्मणामेकैकस्य कर्मणोनेकजन्मारम्भकत्वस्मरणात्स्थावरादिप्राप्तानां चात्यंतमूढानामुत्कर्षहेतोः कर्मण आरम्भकत्वासम्भवात् गर्भभूतानां च स्रंसमानानां कर्मासंभवे संसारानुपपत्तिः तस्मान्नैकस्मिन्जन्मनि सर्वेषां कर्मणामुपभोगः। यत्तु कैश्चिदुच्यते सर्वकर्माश्रयोपमर्देन कर्मणां जन्मा-

प्रायशो वासनाभूम्नो भूतप्रेतपिशाचतां ॥ १५ ॥

हुंतुंकाराद्गुरोर्विप्राभिभवाद्ब्रह्मराक्षसः ।
गर्दभो हीनसेवी स्यात्कुक्कुटोतिथिहापकः ॥ १६ ॥

उष्ट्रोर्थहृद्वनचरः फलपत्रार्थहृद्भवेत् ।
मधु दंशः पलं गृध्रोन्नमाखुश्चातको जलं ॥ १७ ॥

नारंभकत्वं तत्र कानिचित्कर्माण्यनारब्धकत्वेनैव तिष्ठन्ति कानिचिज्जन्मांतरमारभंत इति नोपपद्यते मरणस्य सर्वकर्माभिव्यंजकत्वात्स्वगोचराभिव्यंजकप्रदीपवदिति तदसत् सर्वस्य सर्वात्मकत्वाभ्युपगमात् न हि सर्वस्य सर्वात्मकत्वे देशकालनिमित्ताविरुद्धत्वात्सर्वात्मनोपमर्दः कस्यचित्क्वचिद्भिव्यक्तिर्वा सर्वात्मनोपपद्यते तथा कर्मणामपि साश्रयाणामुपमर्दो भवेत् यथा च पूर्वानुभूतमनुष्यमयूरमर्कटादिजन्मभिः संस्कृताविरुद्धानेकवासना मर्कटत्वप्रापकेन कर्मणा मर्कटजन्मारभमाणेन नोपमृद्यन्ते तथा कर्माण्यप्यन्यजन्मप्राप्तानि नोपमृद्यन्त इति युक्तं यदि हि पूर्वाः पूर्वजन्मानुभववासना उपमृद्येरन् मर्कटादिजन्मनिमित्तेन कर्मणा मर्कटजन्मन्यारब्धे मर्कटस्य जातमात्रस्य शाखायाः शाखांतरगमने मातुरुदरसंलग्नत्वादिकौशलं न प्राप्नोति इह जन्मन्यनभ्यस्तत्वात् न चातीतानंतरजन्मनि मर्कटत्वमेवासीत्तस्येति शक्यं वक्तुं 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतेः तस्माद्वासनावन्नाशेषकर्मोपमर्द इति कर्मशेषसम्भवः यत एवं तस्माच्छेषेणोपयुक्तात्कर्मणो योन्यंतरगमनरूपः संसार उपपद्यते ॥ १५ ॥ विप्रपराभवात् ॥ १६ ॥ अर्थो द्रव्यं मधु हृत्वा दंशो भवेत् एवमग्रेपि पलं मांसं अन्नं हृत्वा आखुरुंदुरः ॥ १७ ॥ विषं हृत्वालिर्वृश्चिकः स्वर्णस्तेयिनः

गन्धान् छुच्छुंदरी धान्यं शलभोऽलिर्विषं तथा ।
कृमिः कीटः पतंगः स्यात्स्वर्णं हृत्वा तृणं पशुः ॥१८॥

काको निर्मन्त्रभुग्गृध्रो मित्रध्रुग्दाम्भिको बकः ।
इत्याद्या बहुशो योनीर्भुक्त्वा रुग्णा भवंत्यथ ॥ १९ ॥

हृद्रोगी परहृद्भेत्ता गुरुत्यागी महामयी ।
क्षयी तु ब्रह्महा कुष्ठी स्वर्णहृत्पुस्तकापहा ॥ २० ॥

जन्मांधो विश्वासघाती वमी गण्डी गणार्थहृत् ।
अपुत्रोन्यार्थहृद्वस्त्रहृच्छ्वित्री चानृती कुवाक् ॥ २१ ॥

गुल्म्यन्नहृत्कुरुङ्मांसभोक्ता कास्यस्तु तैलहृत् ।
पामी फलादिहृच्छ्वित्री कांस्यकार्पासलोहहृत् ॥ २२ ॥

देवार्थहृत्पाण्डुरोगी रोगाः सर्वत्र पापतः ।
परस्त्र्यालिङ्गनाज्जन्म शतं श्वा तद्भगेक्षकः ॥ २३ ॥

कृमिकीटपतंगत्वं त्रैवर्णिकः निर्मंत्रभुक् आपोशनाद्यकृत्वा भोजनकर्ता काकः मंत्रो निमंत्रणमामंत्रणं वा तं विना परान्नभुग्वा मित्रद्रोही गृध्रः ॥ १८ ॥ एवमन्यत्राप्यतिदिशति इत्याद्या इति योनीनां बहुत्वाद्ग्रंथविस्तरभिया संकोचः अथानन्तरं मनुष्ययोनिगता अपि रुग्णा भवंति ॥१९॥ पुस्तकापहा जन्मांध इत्यग्रिमेणान्वयः ॥ २० ॥ वमी वांतिशीलः गणार्थोनेकैरेकत्र धर्माद्यर्थं संचितं धनं तस्यापहर्ता गण्डमालारोगार्तः अन्यार्थहृत्परद्रव्यापहारकोऽपुत्रः श्वित्री श्वेतकुष्ठी ॥ २१ ॥ मांसभोक्ता कुरुग्गलत्कुष्ठार्तः तैलहर्ता कुत्सितमुखः कांस्यादिहृच्च श्वित्री ॥ २२ ॥ देवद्रव्यापहारी पाण्डुरोगी एवमत्रोक्तानुक्ताः सर्वे रोगाः पापत एव ॥ २३ ॥ स्त्रीयोनिवीक्षकोंधः

अंधो वंध्वंगनाभोगी गर्दभोहिश्च दुर्धिया ।
परस्त्र्यालिङ्गनान्नूनं हृद्रोगी ह्यष्टधा रतिः ॥ २४ ॥
श्वा मातुलसखिर्व्रा शुक्कृमिः स्यादौपपत्यतः ।
स्वैरिण्योपि स्त्रियः श्वादियोनिं गत्वा ऽयथंत्यलम्॥२५॥
इति संवादमाकर्ण्य गुरुं प्राह त्रिविक्रमः ।
ज्ञानाद्वाज्ञानतो जातं कथं पापं प्रणश्यति ॥ २६ ॥

॥ श्रीगुरुरुवाच ॥

पश्चात्तापेन संशुद्धिः प्रायश्चित्तादिभिः पुनः ।
सदस्युच्चार्य पापं स्वं ब्रह्मदण्डं निधाय च ॥ २७ ॥
सभ्याज्ञया क्षौरपूर्वं कृतपापानुसारतः ।
कृच्छ्राद्यादि चरेच्छक्त्याशक्तो गोर्घादिनाऽशठः ॥२८॥
स्वल्पं तीर्थे दशस्नानाद्द्विशतास्वायमैरघं ।
स्वर्णदानात्प्रणश्येत सद्गुरोर्दर्शनान्महत् ॥ २९ ॥

गर्दभोहिश्चेति जन्मद्वयं दुष्टबुद्ध्या स्त्र्यालिंगनेनापि हृद्रोगी ननु केवलमालिंगनेनापि कथं दोष इत्यत आह हि यतोष्टधा रतिर्मैथुनं 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणं । उत्साहोध्यवसायश्च क्रियानिष्पत्तिरेव च ॥ एतदष्टांगमिथुनं प्रवदंति मनीषिण' इत्यष्टधा रतिः ॥ २४ ॥ स्त्री वा पुमान्वा जारकर्मतः कृमिः स्यात् ॥ २५ ॥ २६ ॥ २७ ॥ गोवृषनिष्क्रयादिरूपं ब्रह्मदण्डं सभायां साधवः सभ्याः सभाया य इति यप्रत्ययः कृच्छ्राद्यनुष्ठातुमशक्तश्चेद्गोदानं तदर्घो वा शक्त्या निष्कादिपरिमितं मूल्यं अशठः कपटरहितः ॥ २८ ॥ स्वल्पं पंचमहापापातिरिक्तं तीर्थे यावत्क्लेशशोषणं विरम्य दशस्नानात् द्विशतप्राणायामैर्वा महत्पंचमहापा-

त्र्यहं दिवा त्र्यहं सायं त्र्यहमद्यादयाचितं ।
नाद्यात्त्र्यहं कायकृच्छ्रोयुतगायत्रिकाजपात् ॥ ३० ॥
सहस्रहवनाद्वापि द्वादशद्विजभोजनात् ।
गोदानाच्छक्तितोर्वाद्वा प्राजापत्यः प्रसिद्ध्यति ॥३१॥
द्वादशघ्नः पंचदशग्रासा भोज्याः सदा निशि ।
मासाच्छुद्धिः स्वल्पभुज्या क्षीराज्याद्याशनैश्च वा ॥३२॥
बिल्वाश्वत्थाब्जदर्भांबुपानात्तीर्थाटनादपि ।
वाराणसीस्नानमात्राल्लीयन्ते पापकोटयः ॥ ३३ ॥
अन्यतीर्थे त्वनुष्ठानाद्रामेश्वरसमीपतः ।
अब्धिस्नानाद्ब्रह्महत्याकृतपाद्यघसंहृतिः ॥ ३४ ॥
लक्षसंख्याकगायत्रीजपान्मद्यपसंशुचिः ।
कोटया ब्रह्मघ्नोष्टलक्षैर्गुरुतल्पगतस्य च ॥ ३५ ॥
सप्तलक्षात्स्वर्णहर्तुः पावमानीभिरप्युत ।
इन्द्रं मित्रं शुनःशेपसूक्तं पौरुषशांतिके ॥ ३६ ॥

पाख्यं ॥ २९ ॥ प्राजपत्यलक्षणमाह त्र्यहमिति तत्प्रत्याम्नायानाह अयुत-संख्याकगायत्रीजपात् ॥ ३० ॥ गायत्र्या तिलाज्येन तिलैर्वा हवनाद्वा गोदानाभात्रे शक्तितस्तदर्वाद्वा प्राजापत्यः प्रसिद्ध्यति ॥ ३१ ॥ सदा मासपर्यंतं ॥ ३२ ॥ ३३ ॥ वाराणस्या अन्यत्र तीर्थे तु गायत्र्याद्यनुष्ठानान्न स्नानमात्रतः अघसंहृतिः पापनाशः ॥ ३४ ॥ मद्यपस्य सम्यक् शुद्धिः ब्रह्मघ्नो ब्राह्मणहंतुः ॥ ३५ ॥ स्वादिष्ठयेत्याद्याः क्षीरं सर्पिर्मधूदकमित्यन्ताः पावमान्यः इन्द्रं मित्रं एको मन्त्रः शुनःशेपमाश्वलायनशाखायां-कस्य नूनमित्यारभ्यास्मेरयिं निधारयेत्यंतं शंनइन्द्राग्नीति पंचदशर्चं

त्रिसुपर्णं नाचिकेतमघमर्षणवैष्णवे ।
माममात्रं जपेत्स्वल्पे षण्मासं च महत्यघे ॥ ३७ ॥

चान्द्रायणं चरेद्ग्रासानेकैकं वर्धयेत्सिते ।
पक्षेन्यके ह्रासयेत्तैः शुचिर्गव्याशनेन च ॥ ३८ ॥

गोमूत्रं गोमयं क्षीरं दध्याज्यं सकुशोदकं ।
मिलित्वा मन्त्रवद्धुत्वा पिबेत्सर्वाघशांतये ॥ ३९ ॥

उभौ समं ह्यन्यतरकृताघेणापि दम्पती ।
लिप्यते पापिसंसर्गी सोपि पापी भवेत्समः ॥ ४० ॥

प्रायश्चित्तानि चीर्णानि दुष्टं हरिपराङ्मुखं ।
नदीव सौरभाण्डं न निष्पुनंति कथंचन ॥ ४१ ॥

शांतिकं पौरुषं प्रसिद्धं ॥ ३६ ॥ त्रिसुपर्णं नारायणोपनिषदि नाचिकेतं काठके ऋतं चेत्यघमर्षणं अतोदेवा इति षड्वैष्णवं ॥ ३७ ॥ चान्द्रायणमाह ग्रासानास्याविकारेण शिख्यंडकुक्कुटांडार्द्रामलकान्यतमतुल्यान् ग्रासान्मासपर्यंतं चरेद्भक्षयेत् संख्यामाह सिते शुक्ले एकैकं वर्धयेत् । अन्यके ऱ्हासयेत् । तच्च कृष्णे एकैकं पौर्णिमाद्यमांतं पिपीलीकामध्यसंज्ञं शुक्लप्रतिपदादि यवमध्यसंज्ञं नियमेन सायंप्रातश्चतुरो वा प्रत्यहमेकदैवाष्टावष्टौ वा चत्वारिंशच्छतद्वयग्रासाऽशनाच्छिशुचान्द्रायणं यतिचांद्रायणं च भवति तैः शुचिर्भवेत् गव्यं पंचगव्यं ॥ ३८ ॥ मंत्रवत्समन्त्रकं ॥ ३९॥ उभयोर्मध्ये एकतरेण कृतेनाघेन दम्पती लिप्येते समः पापितुल्यो वर्षांते ॥ ४० ॥ छन्नमुखं सुरापात्रं यथा गंगादिनदी न निष्पुनाति तद्वद्भक्तिबद्धमुखं प्रायाश्चित्तानि न निष्पुनंति ॥ ४१ ॥ प्रागतीतसप्तमे जन्मनि

इति त्रिविक्रमं प्रोक्त्वा पतितं प्राह सद्गुरुः ।
प्राङ्मातापितृसंत्यागाल्लब्धा चण्डालतात्र ते ॥ ४२ ॥

मासमात्रं नदीस्नानात्प्रेत्य विप्रो भविष्यसि ।
प्राहांत्यजो योजय मां त्वद्दृक्पूतं द्विजातिषु ॥ ४३ ॥

॥ श्रीगुरुरुवाच ॥

भूत्वापि पतिताद्वृद्धो देहस्तेसंस्कृतोशुचिः ।
वदंति पतितं न त्वामन्यत्प्रोक्तं कथं त्वया ॥ ४४ ॥

विश्वामित्रः पुरा क्षत्रो देवर्षिन्वं तपोबलात् ।
देवान्ययाचे प्रोक्तं तैर्वसिष्ठात्स्वीकुरुष्व तत् ॥ ४५ ॥

वसिष्ठेनापि हीनत्वान्न दत्तं तत्सुतान्छतं ।
हत्वा तं हंतुकामोभूच्छंकितो ब्रह्महत्यया ॥ ४६ ॥

तदाज्ञया तपस्तप्तं तत्तु मेनकया हृतं ।
विश्वामित्रः पुनस्तप्त्वा दग्धांगोभूदृषीश्वरः ॥ ४७ ॥

तस्माद्भवांतरे तेस्तु ब्रह्मत्वं गच्छ तेस्तु शं ॥ ४८ ॥

॥ पतित उवाच ॥

जाते स्वर्णेयसः पश्चात्कुतोयस्तद्वदप्यहम् ॥ ४९ ॥

॥ ४२ ॥ नदी अमरजा ॥४३॥ पतिताद्भूत्वापि तत्रैव वृद्धस्ते देहोऽशुचिः संस्कारानधिकारत्वात् ॥ ४४ ॥ ४५ ॥ ४६ ॥ तदाज्ञया वसिष्ठाज्ञया 'विश्वस्य ह वै मित्रम्' इति श्रुतेर्मित्रे चर्षेरित्यानङ् ॥४७॥ शमस्तु भाविजन्मनि ॥ ४८ ॥ अयसः स्पर्शयोगात्स्वर्णे जाते पुनः कुतोऽयो लोहं

तच्छ्रुत्वा श्रीगुरुर्विप्रभ्रांत्या दूरात्त्रियं सुतान् ।
स्नापयंतं वीक्ष्य शिष्यमाहामुं स्नापय द्रुतं ॥ ५० ॥
तदा लुब्धद्विजेनैष स्नापितः पतितः स्वकैः ।
सहागादिस्मृतप्राप्तज्ञानो हीनो निजालयं ॥ ५१ ॥

॥ त्रिविक्रम उवाच ॥

पतितोपि कृपादृष्टया पावितः स्नानमात्रतः ।
कथं स पूर्ववज्जातो भगवन्छिंधि संशयं ॥ ५२ ॥

श्रीगुरुरुवाच

क्षिप्तं भस्मार्पितं ज्ञानं विनष्टं क्षालनात्तु तत् ।
इयान् भस्मप्रभावः प्राग्वामदेवो महामुनिः ॥ ५३ ॥
वने चचार तं प्राप्तुमागतो ब्रह्मराक्षसः ।
स्पर्शमात्रात्प्रशांतोभूज्ज्ञाताऽखिलनिजोद्भवः ॥ ५४ ॥
प्राक् श्रीमत्तोस्मि राट् कामी ब्राह्मणाद्यंत्यजातिजाः ।
भुक्ताः श्रेष्ठाः स्त्रियोल्पाश्च सहैकैकामनंतशः ॥ ५५ ॥

तद्वदहं जातः ॥ ४९ ॥ ५० ॥ द्रव्यलुब्धेन द्विजेन तत्करेण स्नापितः विस्मृतं लब्धज्ञानं येनातो हीनः ॥ ५१ ॥ ५२ ॥ श्रौतस्मार्तकर्मणि भस्मधारणस्यावश्यकत्वात्तद्विषये रुच्युत्पादनार्थमुत्तरत्वेन भस्ममहिमानं सेतिहासं वर्णयति प्राक्पूर्वं श्रुतिप्रसिद्धत्वान्महामुनिरित्युक्तम् ॥५३ ॥ प्रकर्षेणात्तुं भक्षयितुं राजजन्मारभ्य ज्ञाता अखिला निजोद्भवाः स्वजन्मानि येन ॥ ५४ ॥ पूर्वं श्रिया मत्तः ब्राह्मणादयश्चतुर्वर्णाश्चांत्यजातयश्च तेभ्यो जाता श्रेष्ठाः वयोधिकाः अल्पानागतार्तवाः एकैकां सह एकवारं भुंजे न भूय एवमनन्तशोपरिमिताः ॥ ५५ ॥ दानादिना वेति विकल्पो योज्यः कातरा

हठाद्दानादिनानीय भुक्ता मद्राष्ट्रसंस्थिताः ।
नरा राष्ट्रांतरं जग्मुः ससीका दोषकातराः ॥ ५६ ॥

ततो रुग्णस्य मे राज्यमाक्रांतं शत्रुभिस्ततः ।
कृच्छ्रात्प्रेत्य मया भुक्ता पितृभिः सह दुर्गतिः ॥ ५७ ॥

प्रेतो व्याघ्रश्चाजगरः सालावृक उ सूकरः ।
शरठः श्वा क्रोष्टुमृगौ कुक्कुटः कपिचिल्लकौ ॥ ५८ ॥

नकुलः काक ऋक्षश्च कुक्कुटः खर ओतुकः ।
भेकः कूर्मो मत्स्य आखुर्घूको हस्तीह राक्षसः ॥ ५९ ॥

एता योनीर्मया भुक्ताः कृछ्रात्क्षुत्तृड्भ्रपीडितः ।
त्वामत्तुमागमन् सद्यः शांतो जातोस्म्यदः कथं ॥ ६० ॥

॥ वामदेव उवाच ॥

अंगे भस्मास्ति तत्स्पर्शाज्ज्ञानं जातं तवादितः ।
तन्माहात्म्यमिदं यत्तु सदा प्रीत्या शिवो दधौ ॥६१॥

पुरेको द्राविडे विप्र औपपत्ये हतो बहिः ।
त्यक्तस्तत्रैव भस्माक्तश्वस्पर्शाद्भस्मभूषितः ॥ ६२ ॥

जातिसंकरदोषभीताः कृच्छ्रात्कष्टेन दुर्गतिर्नरकः ॥ ५६–५७ ॥ प्रेतो भूतविशेषः उः पादपूरणे चिल्लो घार इति प्रसिद्धः ॥५८॥ ऋक्षो भल्लूकः पुनः कुक्कुटो वन्यः ओतुर्बिडालः भेको मण्डूकः घूको दिवा-भीतः इहाधुना ब्रह्मराक्षसः ॥ ५९ ॥ अदः शान्तत्वं कथं जातं ॥ ६० ॥ ॥ ६१ ॥ औपपत्ये जारकर्मणि बलिना जारांतरेण हतः भस्मलिप्तश्वस्प-

असून् जहौ तदा ग्रामान्याम्यान्दूतान्निवार्य तं ।
भस्मदग्धमलं शैवा दूता निन्युः शिवांतिकं ॥ ६३ ॥

॥ राक्षस उवाच ॥

एवं चेद्भस्ममाहात्म्यं तत्स्वीकर्तुं समुत्सहे
तन्निर्माणप्रकारं मे शंस धार्यं कथं च तत् ॥ ६४ ॥
प्राग्ब्रह्मभ्योर्पिता वार्ता वाप्याद्या निर्जलस्थले ।
रचितास्तत्फलं त्वेतत्पापांते तव दर्शनं ॥ ६५ ॥

॥ वामदेव उवाच ॥

त्र्यक्षं सायुधपंक्तिहस्तमहिसत्सूत्रं शिवं श्वेतभं
पंचास्यं च कपर्दिनं स्मितमुखं वैय्याघ्रचर्माम्बरं ।
चार्वंबान्वितमिंदुभालमु शिरोगंगं गणाद्यन्वितं
स्वस्थं प्रेक्ष्य सनत्कुमारमुनिराण्नत्वाब्रवीत्प्रांजलिः ६६

जयेश्वरानंत हराज शम्भो जगन्निदानाल्पकसाधनं नः ।
मुक्त्यै शिवोपादिश दुष्कराणि प्रोक्तानि सर्वाणि तु साधनानि ॥

शाद्भस्मभूषितोऽभून्न तु विधिना ॥ ६२ ॥ असून्प्राणान् ॥ ६३ ॥ शंस कथय ॥६४॥ वार्ता भूम्यादिरूपा जीविका ब्रह्मभ्यो विप्रेभ्यः॥६५॥ त्र्यक्षं त्रिनेत्रं पंक्तिहस्तं दशकरं अहिसत्सूत्रं नागयज्ञोपवीतं पंचास्यं पंचमुखं चार्वी चासौ अम्बा च तयान्वितं इन्दुर्भाले यस्य तं शिरसि गंगा यस्य तं ॥६६॥भो अनन्तापरिच्छिन्न भो जगन्निदान मुक्त्यै अल्पकमत्यल्पं साधनं नोऽस्मभ्यमुपादिश कथय भो शिव कल्पतंत्रादौ प्रोक्तानि साधनानि दुष्कराणि अत्राजानंतेति सम्बुद्धिभ्यामपरिच्छिन्नत्वेनाविकारित्वेन च ब्रह्मत्वमुक्तं जगन्निदानेति जगत्कारणत्वं तटस्थलक्षणं ईश्वरेतीशनशीलत्वेन स्थितिहेतुत्वं शम्भो इत्यनेन स्वरूपलक्षणं स्वीयानां सुखदातृत्वं हरेति संहारहेतुत्वं

॥ शिव उवाच ॥

दर्शनात्परिहृत्याघं भुक्त्वा शं विधिवद्धृतेः ।
भस्मनः पुरुषोह्याय जीवन्मुक्तो भवत्यलं ॥ ६८ ॥
यज्ञोत्थं वा करीषोत्थमग्निरित्यादिमंत्रितं ।
धार्यं त्र्यायुषमित्येतैरंगुलीभिः प्रतिस्थलं ॥ ६९ ॥
त्रिपुंड्रा भ्रूसमा रेखया वर्णादिस्मृतिपूर्वकं ।
त्र्यर्णास्त्रिदेवास्त्रिगुणास्त्रिरात्मानस्त्रिशक्तयः ॥ ७० ॥
त्रिछंदसस्त्रिलोकास्त्रिवेदास्त्रिपवनाः स्मृताः ।
सवांघहृत्सदा सर्वैर्धार्यं तद्विधिवन्नरैः ॥ ७१ ॥
भक्त्याज्ञेनापि तद्धार्यं तारकं नापरं ह्यतः ।

शिवेति मुक्तिहेतुत्वमतो युक्तेयं प्रार्थना ॥ ६७ ॥ अवं पापं भस्मनो विधिवद्धृतेर्धारणेन शं सुखं भुक्त्वान्हाय शीघ्रं ॥ ६८ ॥ करीषोत्थं जाबालोक्तप्रकारेण शुष्कगोमयहवनसम्भवं अग्निरिति भस्मेत्यादिमंत्रितं प्रतिस्थलं ललाटादिप्रदेशे ॥ ६९ ॥ अकारोकारमकारास्त्र्यर्णाः त्रिदेवाः ब्रह्मविष्णुमहेश्वराः त्रिगुणाः सत्वादयः ॥ ७० ॥ विश्वतैजसप्राज्ञास्त्रिरात्मानः इच्छाद्रव्यक्रियास्त्रिशक्तयः गायत्रीत्रिष्टुब्जगत्यस्त्रीणि छन्दांसि येषान्ते त्रिच्छंदसस्त्रिपुंड्रा एवं सर्वत्र समासः त्रिवेदा ऋग्यजुःसामाख्याः भूर्भुवःस्वस्त्रिलोकाः प्रातर्मध्यंदिनं सायमिति त्रीणि सवनानि सदा नित्यं सर्वैराश्रमिभिः वर्णैर्विधवादिभिश्च तद्भस्म विधिवद्धार्यं ॥ ७१ ॥ हि यतः अतः परं सुलभं तारकं नास्ति तस्मादज्ञेन समग्रक्रियाकलापज्ञानवर्जितेनापि धार्यं ज्ञानिना तु धार्यमिति पुनः किमु वक्तव्यं अत्रेदृशी भस्मनः शक्तिश्चेत्तर्हि ज्ञानस्य किं प्रयोजनं दृष्टं हि लोके हरीतकीं भक्षयतोस्तद्रसाभिज्ञेतरयोर्विरेचनं । नैवं दृष्टं हि लोके वणिक्शवरयोः पद्मरागादिमणिविक्रये वणिजो विज्ञाना-

परस्त्रीगोनिंदकोऽसन् क्षेत्रहृत्परपीडकः ॥ ७२ ॥

गृहदाही मृषावादी खलो वेदरसक्रयी ।
नीचाच्च दुष्प्रतिग्राही वृषलीविधवादिगः ॥ ७३ ॥

ज्ञानाज्ञानकृताऽघोपि मुक्तः स्याद्भस्मधारणात् ।
भस्मत्रिपुंड्ररुद्राक्षैः स्वः पूज्यो ना पुमर्थदैः ॥ ७४ ॥

सहस्रप्राक्परोत्पत्तिदोषघ्नं व्याधिनाशनं ।
तीर्थाप्लुतिजपाधिक्यफलदं भस्म धारकं ॥ ७५ ॥

स्वरादिलोकं नीत्वांते शैवे स्थापयति ध्रुवं ।
सनत्कुमार सुलभं तारकं भस्मधारणं ॥ ७६ ॥

एवं सनत्कुमारेशसंवादस्ते मयोदितः ।
तस्मात्त्वं परिधत्स्वांगे भस्मेत्युक्त्वा ददौ मुनिः ॥७७॥

धिक्यात्फलाधिक्यं श्रुतिश्च 'यदेव विद्यया करोति श्रद्धयोपानिषदा तद्वीर्यवत्तरं भवति'इति तस्माज्ज्ञात्वा कर्माणि कुर्वीतेति श्रवणाज्ज्ञानपूर्वकस्य फलोत्कर्षं एवं सर्वत्रोह्यं सन्धर्मतत्परः धर्मविषये साधुशब्दप्रयोगात् 'साधुकारी साधुर्भवति' इति श्रुतेः तद्विपरीतोऽसन् ॥७२–७३॥ अक्षै रुद्राक्षैः स्वः स्वर्लोके ना पुरुषः पूज्यः ॥ ७४ ॥ पूर्वापरसहस्रजन्मदोषहरं तीर्थाप्लुतिस्तीर्थस्नानं भस्म कर्तृ ॥ ७५ ॥ शैवे शिवलोके निरतिशयानन्दरूपे ध्रुवं पुनरावृत्तिरहितं यथा तथा हे सनत्कुमारेति शंकरोक्तिः ॥ ७६ ॥ एवमित्यादिवामदेवोक्तिः उदित उक्तः हे राक्षस यस्मादेवं तस्मात्त्वं ॥७७॥विधिवत्समंत्रकं

राक्षसोपि तदादाय भस्मांगे विधिवद्धधौ ।
तदैव राक्षसीं हित्वा तनुं मुक्तोभवत् क्षणात् ॥ ७८ ॥
तदैवाप्तं विमानं स तेनागात्तत्क्षणाद्दिवं ।
तस्मान्मुने भस्मशक्तिं ज्ञात्वांगे धेहि मुच्यसे ॥ ७९ ॥
एवं गुरूक्तं ह्यभिगृह्य हृष्टो भक्त्योपसंगृह्य तमाज्ञयागात् ।
त्रिविक्रमोन्येपि हि तत्प्रमाणं मत्वोत्तमं चेरुरथो तथैव ८०
एवं क्रियाविपाकोयमीदृक्श्रुतिभयंकरा ।
दण्डधृग्यातना तस्माच्छ्रेय एव सदाचरेत् ॥ ८१ ॥

इति श्रीगुरुचरिते कर्मयोगे कर्मविपाको
नाम पंचदशोऽध्यायः ॥ १५ ॥

॥ ७८ ॥ तदैव स्वर्गलोकाद्विमानं प्राप्तं दिवं स्वर्गं ॥ ७९ ॥ एवमुक्तप्रकारेण गुरूदितं हि यथावत् अभिगृह्य स्वीकृत्य धर्ममहिमश्रवणेन सम्यक् सन्तुष्टस्त्रिविक्रमः भक्त्या तं श्रीगुरुं अभिगृह्य स्वीकृत्य तदाज्ञया कुमसीमगात् अन्येपि मिलितास्तत्रत्या ब्राह्मणाः हि निश्चयेन तत्प्रमाणमुत्तमं मत्वा अथो तथैव चेरुः ॥८०॥ एवंभूतोयं क्रियाविपाकः दण्डधृग्यातना यमयातना ईदृगीदृशी श्रोतुरपि श्रुतिभयंकरी किं पुनर्भोक्तुर्भयंकरेति वक्तव्यं यतः कर्मपक्तिर्विचित्रा तथा च श्रुतिः 'अथ य इह कपूयचरणा अभ्याशोह यत्ते कपूयां योनिमापद्येरन्छ्वयोनिं वा शूकरयोनिं या चण्डालयोनिं वा ' इति। यस्मादेवं तस्मात्सर्वदा श्रेय एव श्रुतिस्मृत्युदितमाचरेत्सदाचारेण सद्गतिरेव तथा च श्रुतिः 'तद्य इह रमणीयचरणा अभ्याशोह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा ' इति गारुडे च ' मानुष्यं यः समासाद्य स्वर्गमोक्षैकसाधनं। द्वयोर्न साधयत्येकं तेनात्मा वंचितो ध्रुवम् ' इति ॥ ८१ ॥

इति श्रीगुरुचरिते टीकायां पंचदशोऽध्यायः ॥ १५ ॥

•

# षोडशोऽध्यायः

॥ नामधारक उवाच ॥

नमस्ते ब्रूहि चरितं हरेरद्भुतकर्मणः ।
शृण्वतोपि न मे तृप्तिरमृतं पिबतो यथा ॥ १ ॥

॥ सिद्ध उवाच ॥

सत्पृष्टं वत्स धन्योसि भवाब्धिर्लीलया जितः ।
चित्तं ते चरितैर्विद्धं हरेस्तेनास्मि तोषितः ॥ २ ॥

श्रीगणेशाय नमः ॥ अथ षोडशोऽध्यायः ॥ षोडशे मृतविप्रस्य भार्यायै प्राह सद्गुरुः ॥ स्त्रीधर्मास्तत्पतिं क्षिप्रं दययाजीवयन्मृतं ॥ १ ॥ पूर्वाध्यायांते श्रेय एव सदाचरेदित्युक्तं तत्किं श्रेयः कथमाचरणीयमित्यपेक्षायां कठवल्लीषु 'अन्यच्छ्रेयोन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषꣳसिनीतः । तयोः श्रेय आददानस्य साधु भवति हीयतेर्थाद्य उ प्रेयो वृणीत' इत्युपक्रम्य 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' इति प्रेयःशब्देनैहिकामुष्मिकभोगसाधनभूतमविद्यापरपर्यायनायकं कर्मोक्तं श्रेयःशब्देन निरतिशयानन्दास्पदविद्यापरपर्यायनामकं ज्ञानमुक्तं तच्च ज्ञानकाण्डे दर्शितं तच्चाविपक्वकषायाणां सहसा न स्फुरतीत्यतश्चित्तशुद्ध्येश्वरोद्देशेन निष्काम-कर्म नित्यनैमित्तिकरूपं सविधानकं त्रिभिरध्यायैरुच्यते तत्रतावदध्यायद्वयेन स्त्रीणां धर्मा उच्यंते भो सिद्ध ते नमः चरितं श्रेयःसाधनभूतं ॥ १ ॥ 'श्रेयो हि धीरोभिप्रेयसो वृणीत' इत्युक्तं तदेव बुभुत्सितमतएव सत्पृष्टं नैतां सृंकां वित्तमयीमवाप्तोतएव धन्योसि श्रेयोर्थित्वात् यतः भवो जन्ममरणरूपः संसारः स एवाब्धिरपारत्वाद्दुस्तरत्वात्स त्वया लीलया श्रवणादृतया जितः क्तांतेन जितप्रायस्यापि जितत्वमुक्तं ग्रामासन्नगतो ग्रामं गत इतिवत् ॥२॥

को ब्रूयाद्भगवल्लीलां कति चित्राणि वच्मि ते।
मूको ब्रूते प्रेक्षतेंधो मृतो जीवति यद्दृशा ॥ ३ ॥
शृण्वेको माहुरे विप्रो गोपीनाथो धनी मृताः।
तत्पुत्रा बहवोथैको जीवितो दत्तसेवया ॥ ४ ॥

दत्तप्रसादाच्चिरजीवितं सुतं नाम्नाकरोद्दत्तमिति द्विजातिजः। कांतः सुलक्ष्मा मतिमान्सुसात्विकः पित्रोर्मृतार्भाकविनाशयन्नवर्धत सुसंस्कृतस्यास्य विधेः सुरूपिणी लब्धा वधूर्धीगुणशीलशालिनी रतिः स्मरस्येव परस्परोत्थितमासीत्तयोः प्रेम रथांगनामवत् ६ सरूपौ सुरूपौ स्वयोर्मन्यमानौ वियोगं कुयोगं क्षणं धर्मदक्षौ। उभौ तौ स्मरंतौ सदान्योन्यभद्रं न तंद्रा न निद्रा पतिप्रेम्णि साध्व्याः ॥ ७ ॥

भगवल्लीलां कार्त्स्न्येन को ब्रूयान्न कोपि चित्राण्याश्चर्याणि भगवच्चरित्राणि चित्रत्वमाह मूक इत्यादि यद्दृशा यत्कृपावलोकनेन ॥३॥ गोपीनाथनामकः विप्र आसीदिति शेषः तत्पुत्रा बहवो मृताः ॥ ४ ॥ कांतो मनोहरः सुलक्ष्मा शोभनचिह्नः पित्रोर्मातापित्रोः पिता मात्रेत्येकशेषः तयोर्मृता येऽर्भास्तन्निमित्तजं अकं दुःखं विनाशयतीति तथोक्तोऽवर्धत ॥ ५ ॥ अस्य विप्रपुत्रस्य विधेर्दैवात् वधः सहधर्मिणी तयोर्दम्पत्योः परस्परोत्थितं प्रेम चक्रवाकवत्सुदृढमासीत् ॥ ६ ॥ असपिण्डां यवीयसीमिति स्मृतेः स्वापेक्षया वयसा वपुषा च न्यूना यवीयसी तादृशी उद्वाह्येति शास्त्रेण नियमितत्वेपि सरूपावित्यत्रोक्तं लक्षणया तदनुरूपत्वं लक्ष्यं परस्परं स्वयोरात्मनोः क्षणं वियोगं कुयोगं मन्यमानौ अन्योन्यभद्रम् परस्परक्षेम तयोर्मध्ये स्त्रिया विशेषमाह पतिप्रेम्णि निमग्नायाः साध्व्यास्तंद्रालस्यं न निद्रापि न ॥ ७ ॥ लेपो यक्षकर्दमादिः अनलोग्निः सुमस्त्रक्पुष्पमाला भूषा

लेपोत्युष्ण इवानिलोनलसमः शीतांशुरुष्णांशुव-
च्छय्या वृश्चिकवत्सुमस्रगहिवद्भूषाः समाः कंटकैः ।
त्वाश्माधुर्यमपि प्रदीपनसदृक्स्वाद्वन्नमप्युत्कटु
प्रेष्ठे त्वंतरिते क्षणं दृढतरं साध्व्या अभूत्सर्वदा ॥ ८ ॥

एवं सतोश्चापरिहार्यशोषवान्
भर्ता सुसाम्यासहनाद्विधेरभूत् ।
क्षीणो रुचिः श्वासकफार्दितोनिशं
दुःखोज्झितस्वापभुजिः सुमन्दवाक् ॥ ९ ॥

भुंक्ते यथान्नं स सती तथान्नं शेतेपि यावत्स सती तु तावत् ।
कृशोऽपि यद्वत्स सती तु तद्वत्छायापरेवास्य पतिव्रताभूत्॥१०॥

भूषणानि प्रदीपनं विषं स्वादु मधुरमप्यन्नं उत्कटु उत्कृष्टं कटु यथा मरीच्यादि मुखदाहकं तद्वत्प्रेष्ठे प्रियतमे पत्यौ अन्तरिते तुशब्देन प्रोषितस्य विरहेणेदृशी दशा किमु वक्तव्यमन्यत् दृढतरामित्यत्र च सुतरां इति समंजसं द्विवचनविभज्येति सुशब्दात्तरप् किमेत्तिङव्ययादिनाम्प्रत्ययः तद्धितश्चासर्वविभक्तिरित्यव्ययम् ॥ ८ ॥ एवं सतोर्विद्यमानयोस्तयोः शोभनसाम्यासहनादिति वर्तमानयुगमानेन विधेर्लोकानुसारेण दूषणं दत्तं अप्रतीकार्यक्षयरोगवानभूत अरुचिः कांतिरहितो रसरुचिरहितो वा दुःखेन उज्झिते निद्राभोजने येन सः चरके शिरःप्रतिपूरणं कासः श्वासः स्वरभेदश्लेष्मणश्छर्दनं शोणितष्ठीवनं पार्श्वसंरोधनं अंसामर्दोज्वरोतिसारस्तथा रोचक इत्येकादशलक्ष्माण्युक्त्वा दुर्बलं त्वतिक्षीणमांसशोणितमल्पलिंगमप्यजातारिष्टमपि बहुलिंगमेव विद्यात् असहत्वाद्व्याध्यौषधबलस्य तं परिवर्जयेदित्युक्तत्वादपरिहार्य इत्युक्तं ॥ ९ ॥ स रुग्णो यथा स्तोकं स्तोकमन्नं भुंक्ते यावत्कालं स शेते शयनं करोति सती अपि तावत् क्षीणो धातुक्षयेण कृशः अस्य भर्तुरपरा छायेव सापि क्षयं विनैवाऽभूत्

वैद्योन्तिके तस्य कुगंधशंकया न याति साध्वी सुमना न तं जहौ ।
भेजे पतिं स्नानसुगन्धिलेपनैः पादांगसंवाहनभेषजार्पणैः ॥ ११ ॥
शांत्यार्चनैर्होमजपैश्च भेषजैर्दानैर्न यक्ष्मा किमपि व्यहीयत ।
श्यामासुखेन्दुं परिपूर्णमुद्ग्रसन्मंदस्मितज्योत्स्नमभूत्परो ग्रहः ॥ १२
द्विजं रुजार्तं च तथाविधां वधूं तयोर्न शेकुः पितरौ निरीक्षितुं ।
निवारिता तैरपि सा पतिव्रता न तं जहावर्यमणं प्रभा यथा ॥ १३ ॥

॥ विप्र उवाच ॥

प्राग्वैरतः कष्टमिदं मयार्पितं धृत्या पितः सात्त्विकयात्र जीवितुं ।
साध्व्हर्थस्ते सति पूर्ववैर्यहं तन्मां विहायाशु पितुर्गृहं व्रज ॥ १४ ॥

॥ १० ॥ तस्य रुग्णस्यांतिके समीपे शोभनं मनो यस्याः सा तं पतिं भेजे सिषेवे ॥ ११ ॥ शांत्या कर्मविपाकोक्तया यदुक्तं 'पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते । तच्छांतिरौषधैर्दानैर्जपहोमसुरार्चनैः' इति नात्रैकैकेन शांतिरुक्ता किंतु समुच्चितैः तथैवात्राप्युक्तं ननु 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतेः क्रियमाणस्य कर्मणो जन्मांतरे फलोपलब्धेः कथमत्रैवानुष्ठितस्यात्रैवारोग्यादिफलमिति चेत् 'अत्युत्कटैः पुण्यपापैरिहैव फलम्' इति वचनात्तच्छांतिरित्यादिना च पूर्वकर्मणोप्युपशमप्रतिपादनाच्चारोग्यादिफलं निरवद्यं श्यामा षोडशाब्दा शीतकाले उष्णोष्णकाले शीतला वा तन्मुखरूपमिंदुं आल्हादकत्वाच्चन्द्रौपम्यं मुखं परितः शोभया पूर्णं एतेन पूर्णचन्द्रेणोपमितमित्युच्यते तर्ह्याल्हादकत्वेनोपमित उपमेये मुखचन्द्रे का ज्योत्स्नेत्यत आह मर्यादया यन्मन्दस्मितं तदेव ज्योत्स्ना यस्य तत् उद्ग्रसन् परो राहुरिव यक्ष्माभूत् उपमालंकारः पत्युः क्षयेण तस्या वदनं म्लानमभूदित्यर्थः ॥ १२ ॥ तयोर्दम्पत्योः ॥ १३ ॥ भो पितः यथा च हे अम्ब मातः पूर्वजन्मवैरतः साधु सम्यक् सात्त्विकया धृत्या धैर्येण एवं पितरावुक्त्वा हे सतीति पत्नीं भाषते आशु शीघ्रं ॥ १४ ॥ स्त्रीत्वादन-

॥ साध्व्युवाच ॥

नार्हास्यनन्यशरणा परिहापितुं ते नन्वर्धसुन्दरशरीरविभागिनीयं। जीवोस्य साधुवपुषोस्ति भवान्वियुक्ते जीवे तनोर्ननु भवेत्खलु जीवहत्या ॥ १५ ॥

सदा मदास्यं शशिशालि कालिमा कुतो यतो भैधत एवमेव ते।
अकी सुखी यत्र भवत्यवत्यघात्तमीशमीडे स तु देवदेवतः॥१६॥

नमो नमो वां श्वशुरौ मया श्रुतो गुरुः स गन्धर्वपुरेस्ति तारकः।
असुप्रियोऽनामयमेति भाति मे सहामुना यास्य उ रोचतेपि वां १७

तावूचतुः क्वापि तव श्रमेण संम्राज्ञि जीवेत स तत्र गच्छ।
श्रुत्वैवमाराच्छ्वशुरौ प्रणम्य तदाज्ञयागात्सह तेन साध्वी ॥१८॥

न्यशरणा अर्धं यत्ते सुन्दरं शरीरं तदेव विभागोस्त्यस्या 'अर्धो वा एष आत्मा पत्नीशरीरम्' इति श्रुतेः तादृशीयमहं मम तनोः सकाशाज्जीवरूपे भवति वियुक्ते सति इयं मरिष्यति ततो भवतः खल्वियं हत्या जीवच्छरीरघातो न भवेत्किं अपि तु भवेदेव जीवेति संबोधनं वा ॥ १९ ॥ कुतः कालिमा एष्यति यतः भा शोभा एधते वर्धते यत्र यस्मिन्भगवति तात्पर्येण स्थित इति शेषः अकी दुःखी सुखी भवति सोवादवति तं देवतेति पाठः साधुः देवात्तल् ॥ १६ ॥ एवमुक्त्वा श्वशुरौ प्रार्थयते आदरादृद्विरुक्तिः असुप्रियः पतिरनामयमारोग्यमेत्येष्यतीति मे भाति अमुना पत्या सह यास्ये इदं वां रोचतेपि अपिः प्रश्ने उः पादपूरणेनर्थकः ॥ १७ ॥ तव श्रमेण यत्र क्वापि जीवेत स त्वत्पतिः तत्र तेन साकं त्वं गच्छ संम्राज्ञीत्यनेन वेदोक्ताशीः सूचिता सा च 'संम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव। ननांदरि संम्राज्ञी भव संम्राज्ञी अधिदेवृषु' इति श्वशुरौ श्वश्रूश्वशुरौ श्वशुरः श्वश्र्वेत्येकशेषः तेन सह भर्त्रा सह ॥१८॥ सुखासने आन्दोलिकायां

सुखस्थितं मंथरवाहवाहितं तमन्वगच्छत्पतिमंघ्रिचारिणी ।
दधौ कराकृष्टधवा गमानतक्ष्मेभिभासुत्कुचगण्डकर्शिता ॥१९॥
क्रांतेऽयनेथो कतिचिच्छनैः शनैर्मृत्युं धवोगात्स तदैव दैवतः ।
सा मर्तुमुत्कापि निवारितेतरैः शुक्तामसीम्लानमुखाम्बुजावदत् ॥
कालात्ययं मा कुरु कुर्वथाह्निकमुत्तिष्ठ शेषे कति नाथ विप्रराट् ।
कस्मान्न मे दास्यसि वल्लभोत्तरं प्रेष्ठं नु किं ते वचनं व्यलंघयं २१

स्थितं मन्दगामिवाहकैर्वाहितं तं पतिमन्वगच्छत् कथं स्वयमंघ्रिचारिणी पादचारिणी करेणाकृष्टोन्वारब्धो धवो यया गमनेनाऽनता क्ष्मा यया पातिव्रत्यप्रभावात्तद्गमनेन पृथ्वी स्वयमेवानता जातेति तात्पर्यं उत्कुचावेव गण्डौ तेन कर्शितातएव इभ्याः करेण्वाः भेव भा तामिति निदर्शनालंकारः इभीभेति वक्तव्ये च्छन्दोभंगाभिया ह्रस्वत्वमुक्तं 'अपि माषं मषं कुर्याच्छन्दोभंगं न कारयेत्' इत्यनुशासनात् ॥१९॥ अथ पत्या सह कतिचिद्दिनैः शनैरयने गंतव्यमार्गे क्रांते सति गन्धर्वपुरसमीपमागमे कृते सति चिच्छनैः शनैरिति पाठः तदैव दैवयोगात्तस्य धवो रुग्णो मृत्युमगात् मर्तुमुत्कोत्कण्ठितापि सान्यैर्निवारिता शुक्शोक एव तामसी रात्रिः अज्ञानांधकारहेतुत्वात्तया म्लानं मुकुलितं मुखाम्बुजं यस्याः साऽवदत् तामस्या हि कमलं मुकुलीभवतीति प्रसिद्धम् ॥ २० ॥ कालात्ययं सन्ध्याकालातिक्रमं मा कुरु प्रत्यवायश्रवणात् आह्निकं कर्म कुरु अतो हे नाथोत्तिष्ठ विप्रराट् इत्यनेन कर्मशीलत्वं सूचितं प्रेष्ठं प्रियतमं ॥ २१ ॥

१ कुचयोः काठिण्यादेव गण्डोपमा तथा वर्णयन्ति कवयः 'नीता गण्डस्थलकठिणता कामिनीनामुरोजैः स्तेयं कृत्वाद्भुतमणिगणैः कंचुकेनावृता च ॥ इत्याख्यातुं नरपतिगृहद्वारि ते वारणेन्द्राः शुण्डादण्डैर्वपुषि बहुलां धूलिमुद्धूलयन्ति' ॥ १ ॥ नेदं शृंगारोद्दीपकं तारुण्यस्य जातीकुसुमवत्क्षणभंगुरत्वदर्शनेन वैराग्योत्पादनार्थमिति मन्तव्यम् ॥

प्राणाः क्व याताश्च मनः क्व ते गतं द्राक्तान्परावर्तय जीवितुं चिरं ।
लिप्तःस्वमातापितृदारहत्यया भविष्यसि त्वं न तथा करोषि चेत् ॥
उद्वाहितां क्वैषि विहाय मां प्रियां पुत्राननुत्पाद्य कथन्वृणोत्थ्रुतिः।
स्थातव्यमीश क्व कथं न भाषितं कथं व्रजेयं सदनं गुरोश्च वः २३
सर्वत्र पूता त्वयि जीवतीशितर्मदास्यमप्यद्य न कोपि पश्यति ।
सव्रीडनर्मोक्तिसुतल्पहावयुक्तांबूललेपादि कथं न ते हृदि ॥२४॥
सुखं स्वपोरूत्कुचभारभंगभीभीतमध्यात्मसुतल्प ईश ।
किं ते शिलाढ्ये शयनं कुपृष्ठे सुप्तः पृथङ्नर्तुमृतेद्य किं तत्॥२५॥

मनःपूर्वको हि वाग्व्यापारः 'यद्वै मनसा ध्यायति तद्वाचा वदति' इति श्रुतेः वाच्युपसंहृतायां मनोपि मननव्यापारेण केवलं वर्तते मनोपि यदोपसंह्रियते तदा मनः प्राणसम्पन्नं भवतीत्यतः प्रत्युत्तरालाभे तदेव कारणं पृच्छति प्राणाः क्व गताः इतो लोकांतरं गताः संति चेत् द्राक् शीघ्रम् तान्परावर्तय चिरं जीवितुं यतस्त्वं विप्राडसि एवं न करोषि चेत्स्वमात्रादिहत्यया लिप्तो भविष्यसि त्वयि मृते तेपि मरिष्यन्तीति भावः ॥ २२ ॥ कृतोद्वाहां मां प्रियां विहाय क्व एषि गच्छसि मयि पुत्राननुत्पाद्य कथं नु नाम तव पितृणामृणादुद्धारः तत्तु तावदस्तु हे ईश मया क्व कुत्र कथं स्थातव्यं तन्न भाषितं वो युष्माकं गुरोः पितुर्गृहं व्रजेयं ॥२३॥ तत्कारणमाह सर्वत्रेति पूता पविता मदास्यं मम मुखमपि व्रीडासहितनर्मोक्तिश्च सुतल्पं च हावयुक् ताम्बूललेपश्चादिर्यस्य तत्र व्रीडा लज्जा तल्पं शय्या हावः शृंगारभावजा क्रिया यक्षकर्दमलेपश्च आदिशब्दादालिंगनादि कृतन्नो मा भवेति भावः ॥ २४ ॥ स्थूलोच्चस्तनभारपातभयभीतो मध्यः कटिप्रदेशो यस्य स स चासावात्मा मदीयदेहः स एव सुतल्पं तस्मिन्सुखं यथा तथा स्वप हे ईश कुपृष्ठे धरातले किमर्थं शयनं यतो ऋतुकालीनचतुर्दिनं विना त्वं पृथङ्न सुप्तः अतस्तत्पृथक्शयनं किमर्थं यतो नारीणामशस्त्रवध

नक्रोप्सु यद्वत्तृषितं यथा द्रुः श्रांतं यथा गां तृणगां च हिंस्रः ।
प्रासाद ईशेक्षकमुन्निहंति जातं तथा मे गुरुदर्शनाप्तेः ॥ २६ ॥
जयेश्वरानन्त कथं त्वया कृतं भियाः त्वयात्रापहृतोस्ति किं पतिः ।
रुक्शांतिशक्तिर्यदि ते न गम्यतामिति त्वयोक्ते कलमोर्दितुं क्षमः ॥
त्वया कृतं साधु यशो दिवं ते वहामि भर्त्रा सह गौरिमातः ।
केता ह्यवैधव्यकदानशक्तिर्व्रतेश्वरीशे न कथं स्मृतिर्मे ॥ २८ ॥
मांगल्यतंतुं च निशां च कुंकुमं हर्तुं महांश्चोर इहागतः कुतः ।
सौभाग्यनौर्मे भवसिन्धुसंस्थिता सा कालमीनेन कथं नु चर्विता ॥
एवं रुदित्वोरुकुचत्रुटत्पटा संस्मृत्य संस्मृत्य तदीयचेष्टितं ।
प्रत्यंगमालंब्य रुरोद मोहतः साध्वी तदा कश्चन साधुरायया ३०

एव पृथक्शय्या ॥ २५ ॥ यद्वन्नक्रोप्सु तृषितं हंति तृणगां गां हिंस्रो व्याघ्रादिर्हंति ईश्वरदर्शनाकांक्षिणं प्रासाद उच्चैः पतित्वा नितरां हंति गुरुदर्शनप्राप्तेस्तथा मे मम तथा जातमित्यभिप्रायः मार्ग एव पतिमरणात् ॥ २६ ॥ अत्र मार्गेनामयसम्पादनभयेनायं पतिरत्रापहृतोस्ति किं रुक्शांतिसामर्थ्यं यदि ते न चेद्भवद्भिः पश्चाद्गम्यतामिति त्वयोक्ते सति जीवयैनमिति त्वामर्दितुं याचितुं कोपि न समर्थः अर्द याचने ॥ २७ ॥ साधूत्तमं भर्त्रा सह ते यशो दिवं स्वर्गं वहामि भो मातर्गौरि तवाऽवैधव्यदानशक्तिः क्व गता हे व्रतेश्वरि 'विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे' इति प्रार्थितवत्या मम स्मरणं कथं न कृतम् ॥ २८ ॥ निशां हरिद्रां महानपरिहार्यश्चोरः कालरूप इहाभये गुरुसमीपे चर्विता भक्षिता ॥ २९ ॥ स्थूलकुचाभ्यां त्रुटत्पटः कंचुकाख्यो यस्याः सा एतेन तारुण्यभरो द्योतितः ॥ ३० ॥ ममायं पतिर्मृत इति मिथ्याज्ञानेन शोकसागरे निमग्नायाः

**रुद्राक्षभूषो भस्मिताक्तदेहः शूली बभाषे जटिलः स साध्वीं ।**
**बाले शुचा नैति मृतः कुतस्त्वं मुधोच्चकै रोदिषि तिष्ठ तूष्णीं ३१**

**मृत्युर्न केषां विषयोपि देवान्ग्रसत्यसौ चापरिहार्य एव ।**
**द्रौ व्यैक्यमब्धौ च यथेंधनैक्यं भवप्रवाहेपि तथा धवादिः॥३२॥**

**सम्बन्ध एषां नियतो मतश्चेत्प्राग्जन्मनि त्वं वद कस्य का वा ।**
**सम्बंधिनः कस्य न केऽद्वयत्वाज्जीवश्चिदंशोखिलगोव्ययोजः ३३**

साध्व्यास्तत्त्वज्ञानादन्यदुद्धरणमपश्यन्श्रीगुरुः कृपया रूपांतरेणागत्य तामुद्धिधारयिषुः स साध्वीं बभाषे हे बाले यः कश्चिन्मृतः स तत्सम्बंधिजनकृतशोकेन पुनर्जीविष्यति चेत्तर्हि शोकोवश्यं कार्यः तथा न दृश्यते यतो मृतः शुचा नैति न जीवति तस्मात्कुत उच्चैरुच्चकैः अव्ययसर्वनाम्नामित्यकच् मुधा व्यर्थं रोदिषि शुच आनर्थक्यात्तूष्णीं तिष्ठ ॥ ३१ ॥ मृत्युग्रस्तस्य पत्युर्विरहादयं शोक इति चेन्मृत्युः केषां देहधारिणां न विषयो गोचरः यतो देवानपि चिरकालेन ग्रसत्यतोसौ अपरिहार्य एव सम्बन्धिविरहदुःखनिमित्तशोकः कथं निवार्य इत्यत आह द्रौ वृक्षे रात्रौ वीनां पक्षिणामैक्यं एकत्र निवास इति लक्षणया विवक्षितार्थो लक्ष्यते न त्वखण्डैकरसत्वं अब्धौ इंधनैक्यं काष्ठसंयोगः तथा भवरूपप्रवाहेपि संगतो धवादिः प्रारब्धयोगात्क्षणभंगुरसम्बन्ध एषामिति भावः ॥ ३२ ॥ ध्रुवो नित्यः सम्बन्धो मतश्चेत्तवेति शेषः मतिबुद्धीति षष्ठया अपेक्षितत्वात् प्राग्जन्मनि त्वं कस्य जात्यादिविशिष्टपुरुषस्य का वा पत्नी माता वासीः 'एकमेवाद्वितीयं ब्रह्म तत्त्वमसि ' इत्यादिश्रुतेर्जीवस्याद्वयत्वात्कस्य केपि सम्बन्धिनो न यतो जीवश्चिदंशः 'ममैवांशो जीवलोक' इति स्मृतेरखिलगः व्यापकः प्रत्यक्त्वात् अव्ययोजश्च 'न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः॥ अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे' इति स्मृतेः

पंचात्मकेस्मिन् खलु संगतेत्र भर्त्रादिबुद्धिर्न तु तत्त्वतोस्य।
काष्ठाग्निवत्तं तु पुमादिलिंगहीनं धवादिं प्रकृतिस्थमाहुः ॥३४॥
प्राप्तः प्रकृत्युत्थगुणानुगोसौ शरीरतादात्म्यमतोस्य वृद्धा।
द्वंद्वप्रतीतिर्न तु सामलेजे द्वंद्वोत्थकर्माश्रयिणो भवोस्ति ॥ ३५ ॥

भवोद्भवः कर्मत एव कर्म भवोद्भवं तूभयमङ्गभावात्।

॥ ३३ ॥ तर्ह्ययं कथं व्यवहार इत्यत आह पंचात्मके पांचभौतिके देहेऽस्मिन्जीवे संगतेनुप्रविष्टे सति अत्र देहे भर्त्रादिबुद्धिर्मृषा न त्वागमप्रमाणजन्येत्याह अस्यानुशायिनो जीवस्य ममायं भर्तेत्यादिबुद्धिर्न तु तत्त्वतः 'अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव। एकस्तथा सर्वभूतांतरात्मा रूपं रूपं प्रतिरूपो बहिश्च' इति श्रुतेः काष्ठाग्निवत्प्रकृतिस्थं पुरुषादिलिंगविहीनं धवादिं मूढा वदन्ति 'नैव स्त्री न पुमानेष न चैवायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स लक्ष्यते' इति श्रुतेर्लिंगानुपपत्तेः ॥ ३४ ॥ तर्हि पुरुषोहमेषाहं स्त्रीति प्रतीतिः कथमित्यत आह प्रकृत्युत्थगुणानुगोसौ जीवः शरीरतादात्म्यं प्राप्तः 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते। पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान्। कारणं गुणसंगोस्य सदसद्योनिजन्मसु' इति स्मृतेः। अतो हेतोरस्य सुखदुःखादिद्वंद्वप्रतीतिरपि वृद्धा अमले प्रकृतिगुणरहितेऽजे न तु विद्यते तर्हि जन्मादिप्रत्ययः कस्येत्यत आह द्वंद्वोत्थेति ॥ ३५ ॥ तर्हि देवदत्तो जातः स च शास्त्रीयेण संस्कारेण संस्कार्य इति लोकप्रसिद्धिः शास्त्रप्रवृत्तिश्च कथमित्यत आह भवतीति भवः देहस्तस्योद्भवो जन्म जीवस्य प्राचीनकर्मतः पुनर्देहोपाधिना जातस्य देहद्वारागामिजन्मार्थं क्रियमाणं कर्म उभयन्तु जन्म च मरणं चाङ्गभावात् 'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् आत्माऽश्रुतेर्नित्यत्वाच्च ताभ्य' इत्यधिकरणन्यायात् स्थावरजंगमविषयो जन्म-

धीरेण येनोभयमेव कृत्तं तत्त्वासिना तस्य न वै भ्रमोयं ॥३६॥
अस्यास्त्यविद्यैव घटादिवद् द्योरुपाधिरात्मत्वमुपाध्यपाये ।
मालाहिवत्कल्पित एति नाशं भ्रमोस्य सद्दर्शिततत्वदीपात् ॥३७॥

मरणशब्दः शरीरप्रादुर्भावतिरोभावित्वात् जातकर्मविधानमपि देहप्रादुर्भावापेक्षमेव जन्मव्यपदेशस्तु गौण इति प्रथमसूत्रार्थः जीवात्मा नोत्पद्यते उत्पत्त्यश्रवणात् पुनश्च ताभ्यः श्रुतिभ्यो नित्यत्वश्रवणात् चकारादजत्वाविकारित्वश्रवणाच्च नोत्पद्यत इति द्वितीयसूत्रार्थः यद्वोभयमिति जन्म च कर्म चेति ते तथात्वेप्युपाधिजन्मनैव जन्म उपाधिनाशेनैव नाशो जीवात्मनो न तु स्वतः येन धीरेण विवेकिना उभयं जन्म च कर्म च तत्त्वज्ञानासिना छिन्नं तस्यायं जन्ममरणलक्षणो भ्रमो नैव ॥ ॥ ३६ ॥ येनोपाधिना जायते म्रियते च कोसावुपाधिरित्यत आह द्योराकाशस्येव घटादिवदस्य जीवस्याविद्योपाधिरस्ति भावरूपत्वादस्तीत्युक्तं उपाधिनाशे आत्मत्वं निर्विकल्पं स्फुटमेव 'एको देवः सर्वभूतेषु गूढ' इति श्रुतेरविद्योपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानं ज्ञानमयो मनोमयः प्राणमय इत्यादितन्मयत्वं चास्य विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं स्त्रीमयो जाल्म इत्याद्यर्थतः सिद्धं 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति श्रुतेरुपाधिप्रलय एवाभ्युपेयो नात्मनः अस्तु नाम तथात्वं अनादिकालप्रतीतभ्रमनाशः कथमित्यत आह मालेति सता साधुना प्रदर्शितः यस्तत्वदीपस्तस्मात् यद्वाऽज्ञानोत्थमिथ्याप्रत्ययलक्षणमोहान्धकारनाशार्थं स्वभक्तान्तःकरणाशयस्थितेन सता सत्यज्ञानानन्तादिलक्षणेनेश्वरेण स्वानुकंपानिमित्तं स्वभक्ताय प्रदर्शितो यो ज्ञानदीपो विवेकप्रत्ययरूपो भक्तिप्रसादस्नेहाभिषिक्तो भगवद्भावनाभिनिवेशवातेरितः ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिविरक्तांतःकरणाधारः विषयव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकास्थितो नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वानीदृशा-

तावद्भ्रमांतौ नियतौ घुरात्रिवज्जन्तोरतस्तत्त्वविचारवान्भवेत् ।
त्वग्रक्तमांसास्थिमयात्मशोकतः स्वार्थः कुतः साध्वि समुद्भवेदद ॥
तस्माच्छुचं मुंच मतिं प्रसाधय स्वार्थं यथा येन भवं तरिष्यसि ।
तत्काल एषैव यदा प्रमादतो याता नृयोनिस्तु पुनर्न तत्कथा ॥

॥ साध्व्युवाच ॥

प्राप्ता धवानामयहेतुनाधुना दैवात्पथेस्मिन्दयितो मृतः पितः ।
सम्बन्धिनोप्यंतरितास्त्वमेव मे सर्वोसि मामुद्धर दुःखसागरात् ॥

॥ साधुरुवाच ॥

भर्तैव तारकं साध्व्या नोपाया बहवो नृवत् ।
शृण्वगस्त्यसतीस्तोत्रप्रसंगोक्तं वृषं सुरैः ॥ ४१ ॥
विंध्योत्कर्षभियैत्य तद्गुरुमगस्त्यं तद्वधूं निर्जरैः
साकं देवगुरुर्जगौ सतिरमामाविन्द्युमारुंधती ।

दीपात् स्मृतिश्च 'तेषामेवानु०' ॥ २७ ॥ घुरात्रिवज्जन्मलक्षणस्त्रम उपाधि-वियोगलक्षणनाशश्च यावत्तत्वदीपो न दृष्टस्तावत्तौ नियतौ अतस्तत्त्वविचार-वान् भवेत् हे साध्वि त्वगादिमयदेहशोकतः कुतः स्वार्थो भवेत् अपि तु नैव ॥ ३८ ॥ स्वार्थः सांपरायः येन भवं यथा तरिष्यासि तथाभूतं सांप-रायाख्यं स्वार्थं प्रसाधय तत्समय एष एव छन्दानुरोधेन संधिलोपः सर्वेन्द्रि-यपाटवरूपं यावत्तारुण्यं तावदेव न तु पराधीने वार्धक्ये नापि योन्यंतरे इत्याह यदेति यदा यर्हि ॥ ३९ ॥ मामुद्धरेत्यनेन गुरूपसदनमुक्तं ॥४०॥ उपाया योगयागाद्याः देवैरगस्त्यपत्नीस्तुतिप्रसंगेनोक्तं वृषं धर्मं ॥ तारक-मिति पाठे तारकं हृदयालम्बनं ब्रह्म ॥ ४१ ॥ विंध्योत्कर्षभयेन देवैः साकं गुरुर्बृहस्पतिः तस्य विंध्यस्य गुरुमगस्त्यं एत्यागत्य तद्वधूं लोपामुद्रां वक्ष्य-

इत्याद्या अपि साध्व्य उत्तमतमा तासां त्वमेवास्यहो ।
छायेवानिशमीशसेवनपरा त्वन्निघ्नमेतज्जगत् ॥ ४२ ॥

भक्त्या छायेव याश्रांतं स्वभर्तृपरिचारिणी ।
पतिरेव व्रतं यस्या अखण्डं सा पतिव्रता ॥ ४३ ॥

पादाम्बु तीर्थमुच्छिष्टं प्रसादो देवतार्चनं ।
तत्सेवा भूषणं तोषो धर्मोऽनुज्ञानुपालनम् ॥ ४४ ॥

वशानुवर्तनं देहयात्रा श्वश्र्वादिगौरवं ।
लोकयात्रेश्वरो भर्ता करणं पोष्यपोषणं ॥ ४५ ॥
कार्यं नाज्ञां विना किंचिद्दूरात्स्थेयं स्थिते प्रिये ।
सुप्तोत्थितात्प्रागुत्थाय सेव्योऽश्रांतं पतिर्मुदा ॥ ४६ ॥
तस्मै दत्त्वेष्टमाप्लुत्य गृहसंमार्जनादिकं ।
दत्त्वेशायेष्टसंभारा देयाः स्वादु च भोजनम् ॥ ४७ ॥
क्रुद्धश्चेत्प्रार्थनीयो न गंतव्यं परसद्मनि ।
नाज्ञां विना गुरोर्गेहे न वक्तव्यं सदेतरैः ॥ ४८ ॥

माणं जगौ जगत्त्वन्निघ्नं त्वदधीनं ॥ ४२ ॥ अश्रांतं श्रमरहितं निरन्तरं च ॥ ४३ ॥ पत्युः पादाम्बु पतिव्रतायास्तीर्थं तोषः सन्तोषो भूषणं पत्युराज्ञानुपालनमेव धर्मः ॥ ४४ ॥ ईश्वर उपास्यो भर्ता उपासनं नाम यथाशास्त्रसमर्पितं किंचिदालम्बनमुपादाय तस्मिन्समावृत्तिसन्तानलक्षणसेवनं तद्विलक्षणप्रत्ययानन्तरितं 'तं यथायथोपासते तदेव भवति' इति श्रुतेः ॥४५॥ भर्तुराज्ञां विना ॥ ४६ ॥ इष्टं जलादि पूजाविधाविष्टसम्भारा देयाः ॥४७॥ गुरोः पितुर्गेहे सदा आवश्यकं विना ॥ ४८ ॥ श्वश्र्वादिसामीप्ये मन्दं

मन्दं श्वश्र्वादिसामीप्ये वक्तव्यं सन्धयेशितुः ।
इष्टं देहीति नो वाच्यं वक्तव्यं परवक्त्रतः ॥ ४९ ॥

स्वीकार्यं वस्त्रभूषादि भर्त्रा दत्तं यदृच्छया ।
न निंद्यो दुर्भगो दीनो दुःशीलोपि शिवोपमः ॥ ५० ॥

न कार्यं स्वैरिणीसख्यं स्वानां पार्थक्यमप्युत ।
धार्याः सौभाग्योपचारा न भूषाः प्रोषिते प्रिये ॥५१॥

दर्शितव्यं मुखं नर्तो श्रोतव्यं नागमादिकं ।
स्नात्वा चतुर्थेह्नि भर्ता प्रेक्ष्यो वासम्भवे रविः ॥ ५२ ॥

प्रोषितेर्च्याज्ञया स्थेयं प्रत्युद्गंतव्यमागते ।
सव्रीडहावरत्यंघ्रिसेवाद्यैस्तोषणीय इत् ॥ ५३ ॥

सुप्तेस्मिन्च्छयनं कार्यं नोच्चार्यं पतिनाम च ।
भोक्तुं नान्यत्र गन्तव्यं यात्रा कार्या न कुत्रचित्॥५४॥

वक्तव्यं ईशितुः पत्युः समीपे संधया मर्यादया वक्तव्यं इष्टं वस्तु देहीति पत्ये स्वयं न वाच्यं यद्व्यवहारसम्बन्ध्यावश्यकं वक्तव्यं तत्परवक्त्रतो वाचनीयं ॥ ४९ ॥ यदृच्छया भर्त्रा दत्तं स्वीकार्यं न स्वेच्छया दीनो दरिद्रः ॥५०॥ स्वानां स्वेषां देवरादिनां पार्थक्यं पृथग्भावो न कार्यः उपचाराः कुंकुम-हरिद्रांजनसिंदूरभूषाः प्रिये देशांतरगते भूषा न धार्याः ॥ ५१ ॥ ऋता-वार्तत्वे प्राप्ते आगमे वेदः असम्भवे रविः प्रेक्ष्यः ॥ ५२ ॥ प्रोषिते पत्यौ अर्च्यानां श्वशुरादीनां आज्ञया स्थातुं योग्यं पत्यौ प्रोष्यागते संमुखं गन्तव्यं तोषणीयः पतिरिति शेषः ॥ ५३ ॥ अस्मिन्पत्यौ अन्यत्र परगृहे ॥ ५४ ॥

वैषम्येपि सुखं कल्प्यं कल्प्येशे दुःखिते न मुत् ।
त्याज्यमुच्चासनं लीला धवाद्यग्रे हसस्तथा ॥ ५५ ॥
प्रतिवादाच्छुनी भर्तुरुलूकी गुरुवर्जनात् ।
पतिं विना स्वादुभुक्त्या वराहोलूकयोनिगा ॥ ५६ ॥
मूका रोषोक्त्या व्याघ्री स्यात्कृतताडनभाषिणी ।
सपत्नीवैरतः स्त्री स्याद्दुर्भगा जारगा कृमिः ॥ ५७ ॥
पत्यौ मृतेनुगंतव्यं स्थेयं वा विधवावृषे ।
शवाभावे गर्भिणीत्वेऽल्पेर्भे वैधव्यपालनं ॥ ५८ ॥
शिरसो वपनं कार्यं भुवि शय्या सकृद्भुजिः ।
वर्ज्यास्ताम्बूलगन्धादिसुभोगा मंगलाप्लुतिः ॥ ५९ ॥
त्याज्याः सौभाग्योपचारा धार्यं गौरांशुकं सदा ।
राधमाघोर्जेषु कार्यं स्नानदानव्रतादिकम् ॥ ६० ॥
शक्तौ चांद्रायणं कार्यं भोज्यं वाज्यफलादिकं ।
यत्प्रियं सति पत्यौ तद्देयं विप्राय भक्तितः ॥ ६१ ॥

दारिद्र्यादिना कालवैषम्येपि सुखं कल्प्यं ईशे पत्यौ दुःखिते स्वयं मुत् आनन्दः न कल्प्यः हसो हास्यं ॥ ५५ ॥ भर्तुः प्रतिवादाज्जन्मान्तरे शुनी भविष्यति गुरोः श्वशुरादेर्वर्जनादुलूकी पतिं विहाय कृतेन स्वादुभोजनेन ॥ ५६ ॥ पतिं प्रति रोषोक्त्या मूका पत्याहं ताडितेति भाषिणी व्याघ्री ॥ ५७ ॥ विधवावृषे विधवाधर्मे अर्भे अल्पवयस्के वैधव्यपालनं मुख्यम् ॥ ५८ ॥ तदाह सकृद्भुजिर्दिवैकवारं भोजनं कार्यं मंगलस्नानं वर्ज्यम् ॥ ५९ ॥ गौरं श्वेतं रक्तं वा राधो वैशाखः माघः प्रसिद्धः ऊर्जः कार्तिकः ॥ ६० ॥ पत्यौ विद्यमाने यदात्मनः प्रियं तद्विप्राय भक्त्या देयं ॥ ६१ ॥

मासव्रतं च कल्पोक्तं कार्यं यद्यत्तु वर्जितं ।
देयं विप्राय चोष्णांबु तोपर्णीयस्तु तैर्थिकः ॥ ६२ ॥
पुत्रे तदाज्ञया स्थेयं सम्पूज्यः पतिवद्धरिः ।
गुरुगोतिथिसद्विप्राः पूज्यास्त्याज्यं कुभोजनं । ६३ ॥
हरिलीलारतिः कार्याऽपुत्रया पितृतर्पणं ।
गोप्यं शीलं स्वकैः साकं तद्वैगुण्यादधोगतिः ॥ ६४ ॥
एतद्धर्माश्रयात्साध्वी दुर्गतिस्थमपि प्रियं ।
प्रसह्योद्धृत्य चिल्लीव सर्पं स्वर्विशति ध्रुवं ॥ ६५ ॥
लोपामुद्रे त्वत्ततोसौ भर्ताधर्मोत्र तारकः ।
एवं जीवोक्तधर्मस्ते मयोक्तः स्वेच्छयाचर ॥ ६६ ॥
भेवार्कं पतिमन्वेहि रोचतेनुगमो यदि ।
स्वर्याति गौरवाद्येन प्रोद्धृत्येशं यमादपि ॥ ६७ ॥

उष्णांबु स्नानाद्यर्थं विप्राय देयं तैर्थिकः तीर्थयात्रातत्परः ॥ ६२ ॥ पुत्रे विद्यमाने तदाज्ञा पालनीया हरिर्विष्णुः कुभोजनं कन्दर्पलशुनादिगर्हितभक्षणं त्याज्यं सुरापानसमत्वेनोक्तत्वात् यदाहुः 'ब्रह्मोज्झं वेदनिंदा च कौटसाक्ष्यं सुहृद्वधः । गर्हितान्नाद्ययोर्जग्धिः सुरापानसमानि षट्' इति ॥ ६३ ॥ अपुत्रया भर्त्रादित्रयीं पित्रादित्रयीं चोद्दिश्य तर्पणं कार्यं शीलं स्वभावः पालनीयः ॥ ६४ ॥ दुर्गतिगतमपि प्रियं बलादुद्धृत्य स्वर्विशति चिल्ली सर्पमिवेत्युद्धृत्य गमने एव दृष्टांतः ॥ ६५ ॥ हे लोपामुद्रे त्वत् त्वत्तस्ततो-विस्तृतः एवमित्यादि साधुर्वदति ॥ ६६ ॥ अपुत्राया अपि विधवायाः स्वर्गतिः स्मर्यते 'मृते भर्तरि या नारी ब्रह्मचर्ये व्यवस्थिता ॥ स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिण' इति स्वेच्छया वैधव्यपालनं वानुगमनं वाचर नात्र ममाग्रहः भा प्रभार्कमिवेति योग्यो दृष्टांतः येनानुगमेन गौरवादेवकृत-

प्रत्यंघ्र्यश्वक्रतुफलं कोटचब्दं प्रतिरोमतः ।
स्ववासः सार्धत्रिकोटिरोमहोमात्प्रियान्वितः ॥ ६८ ॥
रूपलावण्यसम्पन्नाः स्त्रियः सन्ति गृहे गृहे ।
ताभिः किं कार्यमेकैव साध्वी त्रिकुलपावनी ॥ ६९ ॥
क्ष्मावातोर्कोऽग्निर्बिभेति स्वत्रासोस्या भवेदिति ।
तिष्ठन्ति प्रणता देवाः स्वपदच्युतिशङ्कया ॥ ७० ॥
साध्व्या इयान्प्रभावोस्ति धन्यैषा पितृतारका ।
धिग्दुःशीलामधःशेते या चिरं त्रिकुलैः समं ॥ ७१ ॥

॥ साध्व्युवाच ॥

वैधव्यपालनं कष्टं तारुण्याद्यत्र घातकं ।
प्रीतिर्धवानुगमने नूनं मे वर्धते गुरो ॥ ७२ ॥

॥ साधुरुवाच ॥

साधु साध्वि तदिष्टं ते मा शुचो दैवमुन्नतं ।
आयुष्मद्भीष्मपौलस्त्यमुखाः कालवशं गताः ॥ ७३ ॥
कालोजय्योमरैश्चापि दुर्धरः सद्गुरुं विना ।
गुरुदर्शनकामाप्ता दूरात्तत्वं समाचर ॥ ७४ ॥

गौरवपूर्वकं स्वर्याति॥६७॥प्रत्यंघ्रि स्वनिवासात्श्मशानांतं प्रतिपादं अश्वमेधफलं प्रतिरोमतः कोटिवर्षपर्यंतमेवं सार्धकोटित्रयरोमहोमात्पत्या सह स्वर्वासः ॥६८॥६९॥ अस्याः साध्व्याः स्वकाठिण्यादितस्त्रासो भवेदिति शंकया तस्याः क्ष्मादिर्बिभेति ॥ ७० ॥ ७१ ॥ ७२ ॥ पुनर्धर्मपरीक्षार्थं तामुपदिशति साधुः साध्वितिः॥ ७३ ॥ अमरैरप्यजय्यः कालः सद्गुरुं विना दुःखेनापि धर्षयितुमशक्यः ॥ ७४ ॥ पीताम्बरं कौशेयवित्रक्षयोक्तं अंग हे

स्नात्वा पीताम्बरं धृत्वा प्रायश्चित्तपुरःसरं ।
सौभाग्यवायनान्यंग सपत्नीकद्विजेभ्य इत् ॥ ७५ ॥
दत्वा श्रुत्योर्गले चेमान्बध्वाक्षान्भस्म मस्तके ।
लिप्त्वांगं गुरुपादाद्भिः प्रोक्ष्येशमनुयाह्ययि ॥ ७६ ॥
इत्युक्त्वा भस्म रुद्राक्षान्दत्वागात्सोपि सा द्विजान् ।
आहूयादात्सुसौभाग्यदानानि बहुशो मुदा ॥ ७७ ॥
प्राहानुगान्यात गृहमुमेशौ पितरौ मम ।
यास्ये तत्रात्र हर्षात्स्वरिति वाच्यं गुरून्प्रति ॥ ७८ ॥
इत्युक्त्वा नीयमानस्य पत्युरग्निकराग्रतः ।
गच्छंती मन्थरोमेव रेजे मुद्रूपिणी सती ॥ ७९ ॥
भर्तृसौख्यानभिज्ञेयं षोडशाब्दातिसुन्दरी ।
कुलोद्धर्त्री सुधन्येति स्तूयमाना जनैर्ययौ ॥ ८० ॥
श्मशानमेत्य संस्कृत्य कुंडेग्निं वायनादिभिः ।
सुवासिनीस्तोषयित्वा सस्मार गुरुभाषितं ॥ ८१ ॥
लिप्त्वांगे भस्म बद्ध्वाक्षान्पत्युर्विप्राज्ञया गुरुं ।
द्रष्टुकामा ययौ साध्वी संगमं तं स्तुवंत्यजम् ॥ ८२ ॥

साध्वि ॥७५॥ श्रुत्योः कर्णयोरक्षान्रुद्राक्षान् अयीति कोमलामंत्रणे ॥७६॥ स साधुरगात् अदाद्दत्तवती मुदा न दुःखेन ॥ ७७ ॥ अनुगान्सहागतान्दासान् अत्र गुरुस्थाने आवां हर्षेण स्वरिति गुरून्प्रति श्वशुरपितृन्प्रति वाच्यं ॥ ७८ ॥ श्मशाने नीयमानस्य पतिशवस्य मन्थरा मंदगामिनी उमेव रेजे शुशुभे ॥ ७९ ॥ ॥ ८० ॥ ८१ ॥ तं श्रीगुरुं ॥ ८२ ॥ त्वं सतां

दाता सर्वेश्वरस्त्वं शरणमपि सतां त्र्यात्मको विश्वसर्ग-
स्थित्यंतानां निदानं ततविरुदचयः श्रीहरिस्त्वं दयाब्धिः।
मत्तुल्यास्त्वत्कृपांशात्सुपतिसुतसुखाः संति नार्योज यास्ये
स्वर्भूत्वा पूर्णकामा पतिसुतमुदिता कीर्तिमादाय तेद्य ॥८३॥

मृतो जीवितो रुग्ण आरोग्यमाप्तो
गतः शर्म भीतोपि दीनोर्थयुक्तः।
गतः प्राज्ञतामज्ञ ईश प्रभावात्
तवाहं धवाढ्याद्य सायुज्यमेष्ये ॥ ८४ ॥

एवं स्तुवंती पथि सांजनाश्रुलीढस्तनस्वर्णघटा हठात्स्वां।
उद्धर्तुकामापि समं धवेन जवेन सागत्य हरिं ननाम ८५
आयांतीं प्रणतां देवस्त्वं सौभाग्यवती भव।
अष्टपुत्रा पुनश्चेति भगवान्प्रीत आह तां ॥ ८६ ॥
तच्छ्रुत्वा चकिता लोकाः शशंसुः सर्वमादितः।
प्रभुः प्राह न मे वाक्यं मोघं शवमिहानय ॥ ८७ ॥

अपिशब्दाद्धर्मस्य च शरणं यत ईश्वरः त्र्यात्मकः ब्रह्मविष्णुहरस्वरूपोतः विश्वसर्गस्थियिलयादिकारणं ततो विततो विरुदचयो विरुदावलिर्यस्य सः हे अजाहं पूर्णकामा पतिसुतमुदिता च भूत्वा ते कीर्तिमादाय स्वर्गं यास्ये ॥ ८३ ॥ शर्म सुखं अहं तु धवाढ्या पतिसहिता तव सायुज्यमेष्ये ॥ ८४ ॥ अंजनसहितैर्नेत्रोदकैर्व्याप्तौ स्तनावेव स्वर्णघटौ यस्याः सा हठाद्बलात्स्वां धवेन समं उद्धर्तुकामापि सा जवेनागत्य गुरुं ननाम ॥८५॥ सुभगस्य भावः सौभाग्यं हृद्भगसिंध्वंते पूर्वपदस्य चेत्युभयपदवृद्धिः सौभाग्यमस्या अस्तीति सौभाग्यवती ॥ ८६ ॥ ८७ ॥ आनीतं विप्रशवममृत-दृष्ट्या वीक्ष्य तं स्वसन्निधौ स्थापयित्वा ॥ ८८ ॥ रुद्रदेवतामंत्रैर्मिलिताभि-

अत्रांतरे द्विजा एत्य शैव्यानर्चुर्गुरुं तदा ।
आनीतं शवमुद्वीक्ष्य सुधादृष्ट्या स्वसन्निधौ ॥ ८८ ॥
स्थापयित्वा स तं रौद्रमन्त्रिताद्भिस्तनुं समां ।
स्नापयामास सोऽकस्मात्सुप्तोत्थितवदुत्थितः ॥ ८९ ॥
तदा हर्षाश्रुपूर्णाक्षी लज्जितं विस्मितं पतिं ।
प्रेक्ष्या शशंस तत्सर्वमूचतुः प्रांजली उभौ ॥ ९० ॥
आवां स्वो दुर्धियौ पापौ भवत्स्मृतिपराङ्मुखौ ।
तथापि त्वं दयासिंधो सच्चिदानन्द हंसि नो ॥ ९१ ॥
जगद्गुरो विश्वमूर्ते परात्मन्त्राहि विश्वप ।
विश्वसाक्षिन्विश्वसंस्थ सर्वानंदनिधे हरे ॥ ९२ ॥
कर्ताकर्तान्यथाकर्ता त्वमेवासि पुमर्थदः ।
आवाभ्यामपराद्धं तत्क्षामये त्वाद्य कार्त्स्न्यतः ॥ ९३ ॥
एवं तौ बहुशो नत्वा प्रणतीश्चक्रतुर्मुदा ।
तच्चित्रं प्रेक्ष्य लोकोपि तुष्टाव परमेश्वरं ॥ ९४ ॥

रद्भिः सर्वां तनुं स्नापयामास तदा मृतोपि विप्रोकस्मात्सुप्तोत्थितवदुत्थितः ॥ ८९ ॥ तदा लज्जितं विस्मितं पतिमभिवीक्ष्येति शेषः शशंस तस्मै सर्वं श्रीगुरुचरितं कथयामास तत उभौ दम्पती प्रांजली भूत्वा श्रीगुरुमूचतुः ॥ ९० ॥ आवां भवत्स्मरणपराङ्मुखौ अतएव दुष्टधियौ पापौ च हे दया-सिन्धो सच्चिदानन्द तथाप्यावां न हंसि ॥ ९१ ॥ ९२ ॥ यदावाभ्याम-पराद्धं तत्कार्त्स्न्येनाद्य त्वां क्षामये एकवचनांतक्रियादर्शनात्स्त्रिया स्वात्मनः पत्युश्चापराधक्षमापनं याचितमिति गम्यते ॥९३॥ प्रणतीश्चक्रतुः नमश्चक्रतुः तन्मृतसंजीवरूपमाश्चर्यं प्रेक्ष्य तत्र मिलितो लोकोपि परमेश्वरं तुष्टाव ॥९४॥ तत्र मिलितेषु लोकेषु कश्चिद्धूर्त ईशं गुरुमाह के मस्तके ब्रह्मलि-

तत्रैको धूर्त आहेशं केस्ति ब्रह्मलिपिर्न वा ।
नाल्पो मृत्युर्महानेष सास्ति चेज्जीवितः कुतः ॥ ९५ ॥

॥ श्रीगुरुरुवाच ॥

धात्रात्र लिखितं त्रिंशदायुरेष्यभवे शतं ।
याञ्चयैष्यं शतं त्वत्र गृहीत्वा व्यस्तमाचरम् ॥ ९६ ॥
तच्छ्रुत्वा मिलिता लोका उच्चैश्चक्रुर्जयध्वनिं ।
स्वर्वासिश्रोत्रविवरविश्रांतिमघमर्षणं ॥ ९७ ॥
दम्पती प्राह भगवानायुष्मन्तौ निरामयौ ।
सुपुत्रधनकीर्त्याढ्यौ लोकवन्द्यौ भविष्यतः ॥ ९८ ॥

श्रुत्वा गुरोर्गां प्रमुदान्वितावुभौ स्नात्वा गुरोश्चक्रतुरर्चनं तदा ।
अस्तं गतोर्कोप्यज आह्निकीं क्रियां कृत्वा मठं सर्वजनैः सहाययौ॥

इति श्रीगुरुचरिते कर्मयोगे मृतसंजीवनं नाम तृतीयोऽध्यायः ॥ ३ ॥ आदितः षोडशोऽध्यायः ॥ १६ ॥

पिरस्ति वा न वा यतोयं नाल्पो मृत्युः क्षयेणागतो महानेव सा लिपिरस्ति चेन्मृतोपि कथं जीवितस्तद्वद ॥ ९५ ॥ अत्रास्मिन्जन्मनि धात्रा त्रिंशद्वर्षात्मकमायुर्लिखितं एष्यजन्मनि शतं वर्षाणि अत्र तु याञ्चया एष्यं शतं गृहीत्वा व्यस्तं विपरीतमाचरं ईश्वरस्याघटितघटनापाटवेपि परप्रसित्व्या परो बोधनीय इति न्यायेनेदमुक्तं ॥ ९६ ॥ स्वर्वासिनां देवानां श्रोत्रविवराणि विश्रांतिर्यस्य तं अघहरं जयध्वनिं ॥ ९७ ॥ ९८ ॥ गुरोर्गां वाचं श्रुत्वा प्रमुदान्वितौ दम्पती स्नात्वा गुरोरर्चनं चक्रतुः ॥ ९९ ॥

इति टीकायां षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः

सिद्ध उवाच

अन्येद्युराह साध्वीशं पूर्वेद्युः कश्चनैत्य मन्।
तत्त्वज्ञानेन माश्वास्य भस्माक्षान् चतुरो ददौ ॥ १ ॥

प्राह दृष्ट्वा गुरुं तीर्थैः पतिं प्रोक्ष्यानुयाहि तं।
इत्युक्त्वागात्स कस्तीर्थरुद्राक्षमहिमा कियान् ॥ २ ॥

श्रीगुरुरुवाच

रूपान्तरेण ते भावो मयैवांग परीक्षितः।
धन्यासि सुभगे साध्वि तीर्थाक्षमहिमा त्वियान् ॥ ३ ॥

तन्माहात्म्यं कोत्र वक्ति भूपेशस्य मृतत्वदा।
नृणामेकादिवक्त्राक्षा गंगास्नानादिपुण्यदाः ॥ ४ ॥

वराः स्युर्धातुरत्नाढ्याः शिव एव सहस्रधृक्।
नाक्षैर्विना पुण्यलब्धिः पापनाशोक्षधारणात् ॥ ५ ॥

श्रीगणेशाय नमः ॥ अथ सप्तदशोऽध्यायः ॥ रुद्राक्षभस्ममाहात्म्यं प्राह सप्तदशे स्त्रियाः॥ मन्त्रजाप्यानर्हतां च सोमवारव्रतं महत् ॥१॥ सद्यः परुदित्यादिनोभे अप्यव्यये ईशं श्रीगुरुं सन्साधुरेत्यागत्य मा मां आश्वास्य भस्म चतुरो रुद्राक्षांश्च चतुर इति साधुविशेषणं वा ॥ १ ॥ स प्राह ॥ २ ॥ अंग हे साध्वि ॥ ३ ॥ ईशस्य भूषा भूषणं ॥ ४ ॥ ५ ॥ ईशनाम नमः

इशनामाक्षभस्माढ्यो दुर्धरो मरुतामपि ।
जपेक्षाः प्राज्यफलदा ना भस्माक्षैर्विना पशुः ॥ ६ ॥
दंताभ्राब्ध्यर्कनृपभूक्ष्मार्काष्टाशोन्मिताक्षरः ।
कण्ठकश्रुतिदोश्चूडादृक्करोरांसि भूषयेत् ॥ ७ ॥
काश्मीरे भद्रसेनस्य सुतस्तन्मंत्रिणोप्युभौ ।
भूषां मत्वाश्मवत्स्वक्षान्बाल्येपि दधतुर्मुदा ॥ ८ ॥
शाक्त्यो राजाग्रहात्प्राह तद्धेतुं शृणु भूपते ।
नंदिग्रामे पुरा तन्वी वारमुख्येन्दुभा सती ॥ ९ ॥
गजाश्वधनदाराढ्या धर्मज्ञा दानतत्परा ।
तन्नाट्यमण्डपे त्वेतौ साक्षौ मर्कटकुक्कुटौ ॥ १० ॥
शिवोस्या वैश्यरूपेण पातिव्रत्यं परीक्षितुं ।
धृत्वाप कंकणं लिंगं भास्वद्वेश्याब्रवीत्सखीं ॥ ११ ॥

शिवायेति पंचाक्षरात्मकं तेनाढ्यो निरन्तरजापकः अक्षा रुद्राक्षास्तैराढ्यः वक्ष्यमाणसप्तमश्लोकोक्तप्रकारेण भस्मनाढ्यस्त्रिपुंड्रधरः अक्षा रुद्राक्षाः बहुफलदाः ना पुरुषः ॥ ६ ॥ दन्तादिसंख्याकैः कण्ठादिस्थानानि भूषयेत् दंतैर्द्वात्रिंशन्मितैः कण्ठं अभ्राब्धिभिश्चत्वारिंशता कं मस्तकं अर्कैर्द्वादशभिः श्रुती कर्णौ नृपैः षोडशभिर्भुजौ भुवा एकेन चूडां शिखां क्ष्मया एकेन दृशं मस्तकोपरि न्यस्तमालाग्रथितसूत्रालम्बितेन भ्रूमध्यगेन अर्कैर्द्वादशभिः करौ अष्टोत्तरशतेनोरश्चेति ॥ ७ ॥ भूषणानि पाषाणवन्मत्वा शोभनरुद्राक्षान् ॥ ८ ॥ शाक्त्यः पराशरः तद्धारणहेतुं कथयेति राज्ञा शश्वत्कृताग्रहात् सती साध्वी ॥ ९ ॥ एतौ कुमारौ साक्षौ रुद्राक्षभूषितौ ॥ १० ॥ अस्या वेश्यायाः धृत्वा प्राप तं तादृशं दृष्ट्वा वेश्या सखीं प्राह ॥ ११ ॥

परिपृच्छैनमर्घांचेद्रत्या वा दास्यति त्र्यहं ।
साध्वीत्वेन वधूर्भूत्वा रमयास्यस्मि पद्मिनी ॥ १२ ॥
श्रुत्वोचे स तया पृष्टं स्वैरिण्यां सत्यता कुतः ।
युष्माकं कुलधर्मस्तु व्यभिचारो हि केवलम् ॥ १३ ॥

॥ वेश्योवाच ॥

न स्वैरिणीयं साध्व्येव लिंगं त्वत्र प्रमा खलु ।
अहं त्र्यहं सतीत्वेन भजे त्वां सर्वभावतः ॥ १४ ॥

॥ वैश्य उवाच ॥

गृहाणेदं पुष्पवंतौ साक्षिणावत्र मेसुवत् ।
स्ववाक्यं दृढभक्त्यैव विचार्य पुनःपुनः ॥ १५ ॥
इत्युक्त्वा तत्करे बध्वा कंकणं लिङ्गमर्पयत् ।
साध्वीत्वेनापि सा भेजे लिङ्गं संस्थाप्य मण्डपे ॥ १६ ॥
सलिङ्गो मण्डपो दग्धोग्निनाकस्माद्रतिक्षणे ।
सकीशकुक्कुटो वैश्यो जुहावाग्नौ तनुं तदा ॥ १७ ॥
वेश्यापि भर्तृनाशार्ता कुलाचारविरुद्धतां ।
मा भजेति निषिद्धापि स्वैः सिद्धानुगमेभवत् ॥ १८ ॥

एनं वैश्यं अर्घान्मूल्येन रतिदानेन वा रमयामि यावत्पुरानिपातयोरिति भविष्यदर्थे लट् ॥ १२ ॥ तया पृष्टं श्रुत्वा स वैश्य ऊचे ॥ १३ ॥ इयमहं साध्वी एवात्र विषये लिंगं प्रमाणं त्र्यहं त्रिदिनपर्यन्तं सतीत्वेन पातिव्रत्येन ॥ १४ ॥ गृहाणेत्यादिवैश्यवाक्यं पुष्पवन्तौ सूर्याचन्द्रमसौ असुवत्प्राणवत् ॥ १५ ॥ १६ ॥ रतिक्षणे मैथुनावसरे सकीशकुक्कुटो मण्डपो दग्धः कीशो मर्कटः ॥ १७ ॥ स्वैरिणीकुलाचारविरुद्धतां मा कुर्वीति स्वजनैर्नि-

दत्त्वा दानानि नत्वार्कं ध्यात्वेशं वह्निमाविशत् ।
प्रादुर्भूतस्तदा त्र्यक्षः पंचास्यः प्राह पंक्तिदोः ॥ १९ ॥

मायामुद्राव्य ते सर्वं मयेशेन परीक्षितम् ।
त्वत्सत्याधि साध्वी त्वं प्रीतोस्मि वरयेप्सितं ॥ २० ॥

जैव्ह्यौपस्थ्यसुखं क्वापि न कांक्षे मे स्वकैः समं ।
सायुज्यं मेर्पयेत्यूचे सा शिवोपि तथाकरोत् ॥ २१ ॥

तौ कीशकुक्कुटावेतौ पूर्वसंस्कारकारणात् ।
एतौ स्तोक्षप्रियौ शैवौ मताश्मसमभूषणौ ॥ २२ ॥

तच्छ्रुत्वा भावि मे सूनोर्मुने शंसेति पृच्छते ।
राज्ञे तस्य मृतिर्नूनं सप्ताहादिति सोब्रवीत् ॥ २३ ॥

मुहू राज्ञातिखिन्नेन प्रणतेनार्थितोब्रवीत् ।
पराशरऋषिर्मा भी राजन्रुद्रोस्ति तारकः ॥ २४ ॥

षिद्वापि ॥ १८ ॥ त्र्यक्षस्त्रिलोचनः पंचास्यः पंचमुखः पंक्तिदोर्दशभुजः शिवः प्रादुर्भूतः ॥ १९ ॥ मयेश्वरेण मायामुद्राव्य कल्पयित्वा ते सर्वं धर्मधैर्यादि ॥ २० ॥ क्वापीह वा स्वर्गादौ वा मम स्वजनैः सह ते तव सायुज्यं मे मह्यं अर्पय देहि सा वेश्या ऊचे तथाऽकरोत्सायुज्यं दत्तवान् ॥ २१ ॥ एतौ रुद्राक्षप्रियौ शिवभक्तौ स्तः अतएव मतान्यश्मसमानि भूषणानि ययोस्तौ ॥ २२ ॥ तत्पराशरोक्तं श्रुत्वा मे सूनोः पुत्रस्य शुभं वाऽशुभं वा भावि हे मुने मह्यं कथयेति पृच्छते राज्ञे तस्य राजपुत्रस्य सप्ताहान्मृतिर्मृत्युरिति स पराशरोऽब्रवीत् ॥ २३ ॥ अर्थितः प्रार्थितः पराशरोब्रवीत् राजन्रुद्रस्तारकोस्त्यतो भयं मास्तु ॥ २४ ॥ स्रष्ट्रा ब्रह्मणा तयोर्धर्माधर्मयोः

स्रष्टा सृष्टौ जगद्वृद्ध्यै धर्माधर्मौ तयोः पती ।
इन्द्रांतकौ तौ स्वरधोनेतारौ बन्धपापिनां ॥ २५ ॥

यमसारथयः कामक्रुधा नानाघहेतवः ।
तत्साहाय्याद्यमो लोकान्पापान्क्षिपति दुर्गतौ ॥ २६ ॥

बुद्धीन्द्रियमनःसंस्था अमी कामादयोऽबलाः ।
भीरून्निघ्नंति यमितगोहृद्धीनामगोचराः ॥ २७ ॥

वेदान्स्रष्टाऽसृजत्तत्र ब्रह्मास्यांश्च यजुश्रुतेः ।
महाकद्रोषवहलुब्धो मुनिभिः प्रसृतस्ततः ॥ २८ ॥

विप्रा यत्र पठंत्येतं कामाद्याः सकला न तं ।
देशं शेकुरपि द्रष्टुं यास्यं शून्यमभूत्पुरम् ॥ २९ ॥

पालकौ इन्द्रयमौ बन्धान्मुक्तिनः इन्द्र ऊर्ध्वं नयति यमः पापिनामधो नयति ॥ २५ ॥ सारथयः सहायभूता नाना पापहेतवः कामक्रोधप्रमुखास्तत्कृतसहायाद्यमः पापकारिणो लोकान्दुर्गतौ नरके प्रक्षिपति ॥ २६ ॥ बुद्धींद्रियमनांसि संस्था अधिष्ठानानि येषां 'इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते' इति स्मृतेः अबला अल्पबला अपि भयशीलानां नितरां घ्नंति यतः यमिताः नियमिताः गाव इन्द्रियाणि हृन्मनः धीर्बुद्धिश्च यैस्तेषां यतीनां अगोचराः अविषयाः यमितगोहृद्धीनां कामादयोऽगोचरा इत्यर्थः काठकेप्युक्तं 'इंद्रियेभ्यः परा ह्यर्था' इति मंत्रद्वयेन यस्मादात्मनः सर्वपरत्वं तस्माद्बुद्ध्यादिनियमनं कुर्वतां यतीनां कामादिदर्शनमपि नैवेत्यर्थः ॥ २७ ॥ तर्हि जितेन्द्रियतया कामजयाय योगोभ्यसनीयो नेत्याह वेदानिति ईश्वरेण ह्याहितान्मुखतोसृजत्प्रकटीचकार 'यो ब्रह्माणं' इति श्रुतेः ततो मुनिभ्यः शिष्यादिद्वारा प्रसृतः ॥२८॥ एतं रुद्रं पापाभावाच्छून्यं ॥२९॥ स्वपन्नित्यादि-

यमः शशंस तद्गात्रे स्वपन्तिघ्नन्त्रजन्कुधीः ।
सत्तोऽभक्तिर्जपति चेत्स पापी शाधि तं भृशं ॥ ३० ॥
तद्भिन्नान्जापकान्रुग्णान्सा प्रेक्ष मृतिगानपि ।
श्रीविद्यारोग्यादिभाजस्त इत्याह यमं विधिः ३१ ॥
तस्मान्मृत्युंजयस्त्राता मा भीः सद्ब्रह्मतः शिवे ।
अतिरुद्राभिषेकात्स भवेद्भूपायुतायुरित् ॥ ३२ ॥
तच्छ्रुत्वा द्राक्समाहूय सद्विप्रानृष्यनुज्ञया ।
राजानुष्ठानमारेभे श्रद्धाभक्त्या यथाविधि ॥ ३३ ॥
पाशदण्डधराः प्राप्ताः सप्तमेन्हि यमाऽनुगाः ।
गूढांगा मूर्छितः पुत्रस्तदा तदुपरि द्विजैः ॥ ३४ ॥
प्रक्षिप्तरौद्रांबुतीर्थमंत्रिताक्षतसम्भवैः ।
रौद्रैर्दूताः पराभूता जग्मुस्तेथोत्थितः सुतः ॥ ३५ ॥
प्रीतो राजा तदा विप्रान् भोजयित्वाभ्यतोषयत् ।
सभां विरच्योपवेश्य स्वासने शाक्त्यमाभजत् ॥ ३६ ॥
रणद्वीणो हरिं गायन्तत्रासो नारदो नृपः ।
तं प्रत्युद्गम्य सम्पूज्य लोकोदंतमपृच्छत ॥ ३७ ॥
स प्राहात्र महामृत्युस्त्वत्पुत्रं हर्तुमागतः ।
शिवदूतैः सदूतः स पराभूतो यमं ययौ ॥ ३८ ॥

यममाह कुधीर्लोभग्रस्तमतिः ॥ ३० ॥ तेभ्यः पापेभ्यो भिन्नानितरान् ॥३१॥ मृत्युभयात्त्राता सद्ब्रह्मतो ब्राह्मणद्वारा रुद्रेण वा ॥ ३२ ॥ ३३ ॥ गूढांगा गुप्तदेहाः ते यमदूताः ॥ ३४ ॥ ३५ ॥ शाक्त्यं पराशरम् ॥ ३६ ॥ तत्रातः प्राप्तः प्रत्युद्गम्य संमुखं गत्वा ॥ ३७ ॥ स नारदः ॥ ३८ ॥ क

यमोपि तैः सहैत्यैशान्दूतान्प्राहेश्वराज्ञया ।
नियतं कर्तुमुद्युक्ते मयि यूयं क्व विघ्नदाः ॥ ३९ ॥
ऊचुस्तेद्धाश्विनगुतं पृष्ट्वा स्वस्थो भवांतक ।
स पट्टे द्वादशाब्देल्पं मृत्युं तीर्त्वायुतायुरित् ॥ ४० ॥
भविष्यतीति सम्प्रेक्ष्य भ्रांतः शैवान्क्षमापयत् ।
दृष्टं मयेदं ते पुत्रस्त्रातः शाक्त्येन भूपते ॥ ४१ ॥
इत्युक्त्वा नारदोगात्स्वराशीर्भिरभिनंद्य तौ ।
शाक्त्योप्यगात्स्वधामेयान्तीर्थाक्षमहिमा सति ॥ ४२ ॥

॥ सावित्र्युवाच ॥

यत्त्वद्दग्गोचरा साक्षाज्जाता धन्यतमा गुरो ।
उपादिश मनुं मे ते पादाब्जस्मृतिहेतवे ॥ ४३ ॥

॥ श्रीगुरुरुवाच ॥

नोपदेश्यो मनुः स्त्रीणां पतिभक्तिस्तु तारका ।
दत्तोप्यनुपयुक्तः स्याद्दातुर्हानिश्च शुक्रवत् ॥ ४४ ॥
शृणु साध्वि पुरा देवदैत्ययुद्धमभून्महत् ।
काव्यो मंत्रजपाद्वज्रिहतान्दैत्यानजीवयत् ॥ ४५ ॥
गत्वेन्द्रः शरणं शम्भुं तच्छशंस शिवेन तु ।
आनयित्वा कविर्लीढः सोपि मूत्राद्बहिर्गतः ॥ ४६ ॥

कुतो हेतोः ॥ ३९ ॥ ते शिवदूताः अद इदं स यमः इयं किंवदन्ती न दृष्टं मया ॥ ४० ॥ ४१ ॥ स्वः स्वर्गं तौ कुमारौ स्वधाम स्वाश्रमं ॥ ४२ ॥ मनुं मन्त्रं ॥ ४३ ॥ ४४ ॥ तदर्थमितिहासमाह काव्यः शुक्रः वज्रिहतानिन्द्रेण घातितान् ॥ ४५ ॥ तच्छुक्रकर्म कविः शुक्रः लीढो भक्षितोपि उदर

दैत्यानेत्य पुनः शुक्रस्तान्मृतानप्यजीवयत् ।
त्रस्तस्तदेंद्रो धीमन्कः पाहीति प्रार्थयद्गुरुं ॥ ४७ ॥

स प्राह तन्मनौ व्याजाद्भ्रंशिते वो जयो ध्रुवः ।
त्रिलोककण्टकोत्कर्षान् मंत्रसारहृतिर्वरं ॥ ४८ ॥

इत्युक्त्वा स कचं प्राह स्वसुतं गच्छ रे कविं ।
विद्यार्थित्वेन तं तुष्ट्वा मंत्रसारं तिरस्कुरु ॥ ४९ ॥

तं नत्वापि कचो गत्वा शुक्रं प्राहाऽस्मि ते गुरो ।
शिष्यो मां प्रणतं शाधि पक्षित्वं मा निधा मयि ॥५०॥

एवमुक्तवतस्तस्य रूपसौंदर्यमोहिता ।
शुक्रं प्रियात्मजोचेमुं शिष्यत्वेनोररीकुरु ॥ ५१ ॥

तच्छ्रुत्वोशनसा सोपि तद्वात्सल्यादुरीकृतः ।
कचोपि सर्वभावेन शुक्रं गुरुमतोषयत् ॥ ५२ ॥

एव स्थित्वा मूत्राद्बहिर्गतः ॥ ४६ ॥ पूर्वं भार्गवोपि सन् शिवशुक्रसम्बन्धतः शुक्रसंज्ञो जात इति स्कांदे प्रभासखण्डे द्रष्टव्यं तदनुस्मृत्यर्थमत्र शुक्र इत्युक्तं गुरुं बृहस्पतिं ॥४७॥ स बृहस्पतिः तन्मन्त्रे कपटाद्भ्रंशिते सति वो युष्माकं देवानां ध्रुवो जयो भविष्यति दैत्योत्कर्षान्मंत्रसारहरणं मनाक्प्रियं नेदमवद्यं भविष्यतीति भावः ॥ ४८ ॥ तं शुक्रं ॥ ४९ ॥ कचोपि तं गुरुं नत्वा शुक्रं गत्वा पक्षित्वं देवपक्षपातित्वशंकां मयि मा निधाः मा निधेहि निपूर्वाद्धाङ्धातोर्लुङ् न माङ्योग इत्यडागमप्रतिषेधः ॥ ५० ॥ प्रियात्मजा देवयानी उररीकुर्वंगीकुरु ॥ ५१ ॥ उशनसा शुक्रेण ॥ ५२ ॥ तच्छाठ्यं

ज्ञात्वा तच्छात्रमसुराः समिदर्थं गतं वनं ।
तं जघ्नुर्देवयान्याह शुक्रं नाप्तः कुतः प्रियः ॥ ५३ ॥
शुक्रोपि तं हतं ज्ञात्वा ध्यानान्मंत्रप्रभावतः ।
जीवयित्वानयद्गेहं कचं हृष्टाभवत्सुता ॥ ५४ ॥
मुहुर्दैत्या वने हत्वा हिंस्रेभ्यस्तत्पलं ददुः ।
तमदृष्ट्वैव शोचंतीं कन्यामाश्वास्य भार्गवः ॥ ५५ ॥
ज्ञात्वा तं भक्षितं हिंस्रैस्तत्कुक्षेर्मंत्रशक्तितः ।
कात्स्न्यान्निष्काश्य कृत्वैक्यं सजीवं पूर्ववद्व्यधात् ५६
पुनर्दैत्याः कचं हुत्वा तद्भस्म मधुयोजितम् ।
ददुः शुक्राय प्रमादात्स पपौ दैत्यवत्सलः ॥ ५७ ॥
पुनः कन्यातिखिन्नाभूच्छुक्रो ज्ञात्वोदरस्थितं ।
दैत्यान्छशाप ब्रह्मघ्नान्कन्यामाह स नाप्यते ॥ ५८ ॥
दैत्यैः क्षिप्तः स मत्कुक्षौ तदानयनतो हि मे ।
मृत्युर्भवेन्न को वेद दिव्यं मंत्रं हि मां विना ॥ ५९ ॥
कन्योचे तात मे मंत्रमुपादिश च जीवय ।
तं त्वां यदेष्यति मृतिर्जीवयामि सुमंत्रतः ॥ ६० ॥

कचकापटयं प्रियः कचोद्यापि कुतो न प्राप्तः ॥ ५३ ॥ ५४ ॥ तत्पलं मांसं ॥ ५५ ॥ तत्कुक्षेर्हिंस्रोदरात् मंत्रबलतः कात्स्न्यात्संपूर्णत्वेन मांसादिरूपं तं निष्काश्य ऐक्यं कृत्वा पूर्ववद्देहं स सजीवं व्यधाद्व्यकरोत ॥ ५६ ॥ मधुयोजितं मद्यमिश्रितं स प्रमादादनवधानात्पपौ ॥ ५७ ॥ उदरस्थितं कचं ज्ञात्वा स कचोतः परं न प्राप्यते ॥५८॥ न वेद न वेत्ति विदो लटो वेति लणादेशः ॥ ५९ ॥ तं कचं मृतिर्मृत्युः ॥ ६० ॥ अस्यै

नोचेत्प्राणांस्त्यजामीति निर्विण्णास्यै स मोहतः ।
दत्वा मंत्रं जपित्वा तं जीवयित्वा मृतिं ययौ ॥ ६१ ॥
विदार्य जठरं प्राप्तं कचं दृष्ट्वा मृतं कविं ।
मंत्रेण जीवयामास तदातेजाभवन्मनुः ॥ ६२ ॥
कृतकृत्यः कचो नत्वा गुरुं प्राह तदासुराः ।
घ्नंति मां तद्गृहं यास्ये मदर्थे भवतोप्ययकं ॥ ६३ ॥
सोपि गच्छेत्यादिदेश कन्योचे मत्पतिर्भव ।
मयैतदर्थमेव त्रिर्जीवितोसि मृतोप्यहो ॥ ६४ ॥
कच ऊचे गुरोः कन्या स्वसाम्बास्वर्पणाच्च तत् ।
नोद्वाह्यातस्त्यजास्वर्ग्यं विरुद्धाग्रहमम्ब भोः ॥ ६५ ॥
सा विद्यां विस्मरेत्येनं शशापापि स तां नृपः ।
त्वां वरिष्यति मौर्ख्यात्ते नश्येन्मंत्रो गुरोरिति ॥ ६६ ॥
मंत्रोऽतेजास्तदैवाभूच्छुक्रो दीनत्वमाप्तवान् ।
स्त्रियै मंत्रस्ततोऽदेयः कार्यं गुर्वाज्ञया व्रतं ॥ ६७ ॥

देवयान्यै ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ अस्वर्पणात्प्राणदानादंबा माता भवितुमर्हसि ॥ ६५ ॥ एनं कचं स कचस्तां देवयानी ॥ ६६ ॥ यस्माच्छुक्रस्येदृश्यवस्था जाता तत्तस्मात्स्त्रियै मंत्रः अदेयः दातुमयोग्यः यद्यपि गोधाघोषाविश्ववाराप्रभृतयो युगान्तरे ब्रह्मवादिन्यः श्रूयन्ते तथापि वर्तमाने युगेयं विशेषः तर्हि 'स्त्रियो वैश्यास्तथा शूद्रास्तेपि यांति परां गतिम्' इति स्मृत्या मोक्षे स्त्रियोप्यभ्युपगमात्स्त्रीणां किं मोक्षसाधनमित्यत आह व्रतं कार्यं तच्च न स्वातंत्र्येण गुर्वाज्ञया कार्यं वितानकर्मणि स्त्रीणां मंत्रपाठे श्रवणे चाधिकार एव ॥ ६७ ॥ भवत्स्मृतिप्रदं तारकं व्रतमवश्यमेवाभ्युपेयं

॥ सावित्र्युवाच ॥

भगवन्सद्गुरो मंत्रो यद्यग्राह्यो हि योषितां ।
तर्ह्येकं व्रतमाख्याहि तारकं ते स्मृतिप्रदम् ॥ ६८ ॥

॥ श्रीगुरुरुवाच ॥

सुलभं तारकं साध्वि सोमवारमहाव्रतं ।
व्रतोत्तमं सुधामेष्टदं केप्यस्याधिकारिणः ॥ ६९ ॥

सीमंतिन्या यत्प्रभावान्नष्टोप्याप्तः पतिः शृणु ।
आकृचित्रवर्माऽऽर्यावर्ते राजा शूरो वशी कृती ॥ ७० ॥

धीरूपशीललक्ष्म्याढ्यां पुत्रीं लेभेजसेवया ।
शांत्याद्याढ्या सती भर्त्राद्भुताब्दं राज्यभोक्त्र्यसौ ॥७१॥

इत्यूचुर्गणकास्त्वेको बाल्ये वैधव्यमित्यपि ।
राजा हृष्टोपि खिन्नोभूद्वधूर्वे मा स्मितेंदुवत् ॥ ७२ ॥

सा द्वादशाब्दिका श्रुत्वा वैधव्यं भावि दुःखिता ।
नत्वैकदाप्तां मैत्रेयीं साऽवैधव्यं स्म याचते ॥ ७३ ॥

यतो व्रताद्भवद्व्यपाश्रयोवश्यं भवेत् तेन चास्माकमपि गतिरिति भावः 'मां हि पार्थ' इति स्मृतेः ॥ ६८ ॥ उमाध्यात्मविद्या हैमवती वा तया सहितः सोमः शिवस्तस्य वार आनंदवर्धको दिवसः प्रेष्टः यद्दिने कर्तव्यं यन्महाव्रतं नित्यकाम्यभेदेनोभयात्मकत्वान्महत्वं पूज्यतमत्वं वा सुष्ठु धाम प्रभावो यस्य केपि धर्मबाह्या यवनादिरहिताः सर्वे वर्णा आश्रमिणस्तत्स्त्रियश्चास्य व्रतस्याधिकारिणः ॥ ६९ ॥ आप्तो लब्धः ॥ ७० ॥ ७१ ॥ वैधव्यमित्यपि उवाच ॥ ७२ ॥ आप्तां हितोपदेष्ट्रीं ब्रह्मवादिनीत्वात् गृहागतां वा

तां साब्रवीत्सोमवारव्रतात्त्राताऽस्ति शंकरः ।
प्रतींदुवारं संसेव्यो गोहृत्कायैः सदाशिवः ॥ ७४ ॥

उपोष्य नक्तं भुक्त्वा वा भक्त्यास्मिन्न क्षणं स्वपेत् ।
नश्येत्प्राप्तापि भीस्त्यक्ते व्रते कुप्येत शङ्करः ॥ ७५ ॥

पापक्षयोस्याभिषेकात्साम्राज्यं पीठपूजनात् ।
गंधादिदानात्सौभाग्यं सौगंध्यं धूपदानतः ॥ ७६ ॥

दीपात्कांतिर्भोज्यदानाद्भुक्तिस्तांबूलतो रमा ।
नत्या पुमर्था ऐश्वर्यं जपाद्ब्राह्मणभोजनात् ॥ ७७ ॥

सर्वतृप्तिः कोशवृद्धिर्होमाल्लभ्याखिलं स्तवात् ।
तद्व्रतं कुर्विति प्रोक्त्वा सागात्कन्याकरोद्व्रतम् ॥७८॥

भूयाद्भाव्येषा देयेति मत्वा चन्द्रांगदाय राट् ।
तां वरायानुरूपाय नलगोत्रभुवे ददौ ॥ ७९ ॥

गजाश्वदासराष्ट्रादि दत्त्वापि स्वपुरे मुदा ।
पुत्राभावात्स तं राजा मेने संस्थाप्य पुत्रवत् ॥ ८० ॥

॥ ७३ ॥ गोहृत्कायैः वाङ्मनःकायकर्मभिः सदेत्यव्ययं वा ॥ ७४ ॥ अस्मिन्वारे क्षणमपि न स्वपेत् अथवा स्वप्रकाशापरोक्षरूपे शिवे प्रमादं न कुर्यात् भीर्भयं प्राप्तमपि नश्येत् व्रते त्यक्ते शंकरः कुप्येत व्रतसांतत्यार्थमिदं शासनं ॥ ७५ ॥ ७६ ॥ रमा श्रीर्नत्या पुरुषार्थाः चतुर्विधाः ब्राह्मणभोजनात्सर्वतृप्तिरित्यग्रिमेणान्वेति ॥ ७७ ॥ सा मैत्रेयी ॥ ७८ ॥ 'यदभावि न तद्भावि भावि चेन्न तदन्यथा' इति निश्चित्य चन्द्रांगदाय देयेति मत्वा ॥ ७९ ॥ ८० ॥ कालिंद्यां यमुनायां दृव्यञ्मगधेत्यण् स चन्द्रांगदः

कालिंद्यामेकदा क्रीडन्मज्ञति स्म स तच्चराः ।
पितरौ श्वशुरौ गत्वा तदूचुस्तत एत्य ते ॥ ८१ ॥

अन्वेष्यापि न तं प्रापुः शोकं चक्रुस्तदाखिलाः ।
कन्यानुगन्तुमुत्कापि श्वाभावान्निवारिता ॥ ८२ ॥

तामाश्वास्यानयद्राष्ट्रं चित्रवर्मा नृपः सुता ।
शोकार्ताप्यकरोत्प्रेम्णा सोमवारव्रतं शुभं ॥ ८३ ॥

पुत्रशोकाकुलं त्विंद्रसेनं सस्त्रीकमुत्तमं ।
खिन्नं संस्थाप्य कारायां तद्राज्यं बुभुजेहितः ॥ ८४ ॥

तं नागिन्योंबुमग्नं स्वं लोकं नीत्वामृतोपमं ।
सर्पेशाय ददुः सर्पेंद्र सुधया तं व्यजीवयत् ॥ ८५ ॥

अलौकिकं पुरं नागान्दृष्ट्वा स चकितोभवत् ।
वासुकिः प्राह तं कस्त्वं कस्य भक्तोसि मे वद ॥८६॥

तच्चरास्तद्दूताः तच्चन्द्रांगदनिमज्जनं ते मातापितरौ श्वश्रूश्वशुरौ च कन्या सीमंतिनी अनुगमनं कर्तुमुद्युक्तापि ॥ ८१ ॥ ८२ ॥ शोकपीडितापि सीमंतिनी ॥ ८३ ॥ कारायां बन्धनालये अहितः शत्रुः ॥ ८४ ॥ तं चन्द्रांगदं स्वं लोकं पातालं सर्पेशाय वासुकये सुधयाऽमृतेन ॥ ८५ ॥ स चन्द्रांगदः । ननु कर्मकाण्डप्रक्रमे व्रतार्चनादिरूपमुपासनं प्रकृतासंगतमिति चेन्न देवताज्ञानपूर्वकस्य कर्मणः श्रैष्ठ्यात् केवलकर्मणोन्धतमःप्रवेशश्रवणात् । व्रतोपलक्षणेन देवताज्ञानेन सह कर्मानुष्ठेयमिति ज्ञाप्यते श्रुतिश्च 'अन्धं तमः प्र०' अग्निहोत्रादिलक्षणा केवलाऽविद्या केवलं देवताज्ञानं विद्या ॥ ८६ ॥

॥ चन्द्रांगद उवाच ॥

सच्छ्लोकनलवंशोत्थ इंद्रसेनसुतोस्म्यहं ।
चन्द्रांगदाभिधो राजा जामाता चित्रवर्मणः॥ ८७ ॥
कालिंद्यां पतितस्त्वत्र केनानीतो नि वेद्मि तत् ।
दैवाद्वो दर्शनं जातं सफलं जन्म कर्म मे ॥ ८८ ॥
सृष्ट्यादिहेतुः सर्वेशः सर्वात्मा चिन्मयोऽप्यजः ।
कैलासे मूर्तिमद्योऽस्ति शंभुर्नः कुलदैवतं ॥ ८९ ॥

॥ वासुकिरुवाच ॥

पूतोस्यत्र पुरे तिष्ठ भुंजन्भोगानमानुषान् ।
सुधाकल्पद्रुपूर्णे रुक्शुग्भीनिद्रालयोनिते ॥ ९० ॥

॥ चन्द्रांगद उवाच ॥

मां तु मत्वा मृतं नद्यां पितरौ मे मरिष्यतः ।
शोकार्तापि वधूर्वर्षे वर्तमाने विवाहिता ॥ ९१ ॥

सच्छ्लोकः पुण्यश्लोकः ॥ ८७ ॥ वो भवतां ॥ ८८ ॥ कस्य भक्त इत्यस्योत्तरमाह जगज्जन्मस्थितिभंगानामादिकारणं प्रधानादेः परत्वात् कुतः सर्वेशः अन्तर्यामित्वेन नियन्ता तर्ह्यस्माज्जीवो भिन्नो वा नेत्याह सर्वात्मा जीवरूपेणानुप्रविष्टत्वात् अतएव चिन्मयश्चिदेकरसः अतएवाव्ययः तर्हि कथं तस्य भजनं तदाह यो भक्तानुग्रहार्थं मायां वशीकृत्याविकृतेन स्वरूपेण कैलासे मूर्तिमान्योस्ति तर्हि भूमिष्ठस्य तव गोचरः कथं तदाह नोस्माकं कुलदैवतं कुलपरंपरोपासनेनैवास्माकं विषयो भवति 'तं यथायथोपासत' इति श्रुतेः ॥ ८९ ॥ पूतः पवित्रोऽमानुषानलौकिकान् अमृतकल्पद्रुमाकीर्णे रोगशोकभयनिद्रारहिते पुरे ॥ ९० ॥ नद्यां कालिंद्यां वधूरपि मरिष्यति यतो वर्तमाने वर्षे उद्वाहिता ॥ ९१ ॥ वासुकिस्तच्छ्रुत्वा प्राह इति इत्थं

श्रुत्वेति चेद्व्रजेत्युक्त्वा रत्नभूषामृतादिकं ।
दत्वाह्यश्वौ मनोवेगौ गमयामास तौ स तु ॥ ९२ ॥
स समर्पोश्वमारुह्य गच्छन् प्रेक्ष्य मनोजवः ।
कालिंद्यां सोमवारे स्वां विरूपां महिषीं जगौ ॥ ९३ ॥
वधूः कस्यासि कन्या त्वं शोकार्तासि कुतोंगने ।
सा तच्छ्रुत्वा सखीं प्राह कथयास्मै सविस्तरं ॥ ९४ ॥

॥ सख्युवाच ॥

चन्द्रांगदवधूश्चित्रवर्मकन्येयमत्र तु ।
प्रियो नष्टस्तच्छुभाता स्नात्यत्राद्यास्ति सद्व्रतं ॥ ९५ ॥
कारायां श्वशुरावस्याः संस्थाप्य बुभुजे स्वयं ।
राज्यं रिपुः सोमवारव्रतमेषा करोत्यतः ॥ ९६ ॥
सीमंतिन्यपि तद्रूपं दृष्ट्वा स्वपतिसन्निभः ।
कोयं धूर्तोस्ति यक्षो वा भाति वा स्वप्नहृद्भ्रमः ॥९७॥
इति मत्वा शुशोचैनामाश्वास्याहैष्यति त्र्यहात् ।
पुण्याद्भर्ता तवेत्युक्त्वा राष्ट्रं चन्द्रांगदो ययौ ॥ ९८ ॥

वदसि चेत्तर्हि व्रज इत्युक्त्वाऽहिः सर्पः सहायार्थं अश्व आरोहणार्थं च तं चन्द्रांगदं स वासुकिः ॥ ९२ ॥ स चन्द्रांगदः विरूपां सौभाग्योपचाररहितां स्वां महिषीं पत्नीं ॥९३ ॥ कस्य वधूः पत्नी असि कस्य च कन्या दुहिता अस्मै पृच्छते सखीं वयस्यां सख्यशिश्वीति ङीप् सविस्तरं सप्रपंचं प्रथने वावशब्द इति वञो निषेधात् ॥९४॥ अत्र नद्यां प्रियो भर्ता नष्टः सद्व्रतं सोमवारव्रतं अतोत्र स्नाति ॥ ९५ ॥ ९६ ॥ सीमन्तिन्यपि तद्रूपं दृष्ट्वा स्वगतं प्राह स्वप्नभ्रमो हृदयभ्रमो वा भाति ॥ ९७ ॥ एनां सीमन्तिनीमाश्वास्य आह तव पुण्यान्निमित्तात्त्र्यहात्त्रिदिनेन भर्ता एष्यति इत्युक्त्वा

साऽपि तूष्णीं ययौ राष्ट्रं पितुश्चंद्रांगदस्त्वरिं ।
स्वागमं श्रावयामास स भीतो मुक्तवान्नृपं ॥ ९९ ॥

द्विषा क्षमापितो मुक्तश्चन्द्रसेनः समागतं ।
श्रुत्वा नष्टं सुतं वध्वा प्रेमाश्रूत्तोऽभवत्क्षणात् ॥ १०० ॥

अलंकृतं पुरं सोऽपि प्रविश्य पितरौ दृढं ।
समालिंग्यादितः सर्वं शशंस पुलकांकितः ॥ १०१ ॥

सर्पं सत्कृत्य राज्याय प्रेरयत्पित्रनुज्ञया ।
गत्वा श्वशुरराष्ट्रं स्वभार्याशोकं जहार सः ॥ १०२ ॥

आनीतानर्घवस्तूनि तस्यै दत्वा तया सह ।
राज्यमेत्याभिषिक्तः स जिष्णुवद्बुभुजे श्रियं ॥ १०३ ॥

इयान् व्रतप्रभावस्तद्व्रतं कुर्वित्यजोऽब्रवीत् ।
ततः प्रभृत्युभौ भक्त्या चेरतुर्व्रतमुत्तमं ॥ १०४ ॥

गुर्वाज्ञयेयितुर्गेहं प्रत्यब्दं गुरुदर्शनं ।
कृत्वा श्रीपुत्रपौत्राढ्यावुभयीं सिद्धिमापतुः ॥ १०५ ॥

राष्ट्रं ययौ । ९८ अरिं शत्रुं स्वागमं नृपमिंद्रसेनं ॥ ९९ ॥ द्विषा शत्रुणा वध्वा पत्न्या सह प्रेमाश्रुसांद्रः ॥ १०० ॥ १०१ ॥ स चन्द्रांगदः ॥ १०२ ॥ अनर्धवस्तून्यमूल्यवस्तूनि जयशीलो जिष्णुरिंद्रः ग्लाजिस्थश्चेति ग्स्नुः तेन तुल्य इति वतिः इन्द्रवद्राजश्रियं ॥ १०३ ॥ १०४ ॥ ईयितु- र्जग्मतुः ॥ १०५ ॥ जगदानन्दानन्दभूत आत्मा विग्रहो यस्य स मानुष्य-

एवं जगन्मंगलमंगलात्मा मनुष्यभावात्परिगृह्य भक्तान् ।
संचारपूतां जगतीं विधाय ततान लीलाममलामघघ्नीं ॥ १०६ ॥

इति श्रीगुरुचरिते कर्मयोगे दम्पतीगुरुसंवादो नाम चतुर्थोऽध्यायः ॥ ४ ॥ आदितः सप्तदशोऽध्यायः ॥ १७ ॥

नटनेन अत्र च कर्मकाण्डे प्रसंगाच्चिरंटीनां पातिव्रत्यमेवोभयत्र तारको धर्मो नापरः मृते भर्तरि सति सम्भवेनुगमनमेव मुख्यधर्मस्तदसम्भवे वैधव्यपालनं तेनापुत्राया अपि ब्रह्मचारिवत्स्वर्गातिः पूर्वाध्याये प्रतिपादिता इह तु संवादमिषेण मन्त्रानधिकारेपि व्रताचरणेनोभयसिद्धिरुक्ताऽतो मोक्षे स्वातंत्र्यं द्योतितमिति दिक् ॥ १०६ ॥

इति टीकायां सप्तदशोऽध्यायः ॥ १७ ॥

# अष्टादशोऽध्यायः

॥ नामधारक उवाच ॥

निद्रितं मोहतम्यां मे मनोहंकारघूर्णितं ।
बोधार्कोदयबुद्धं तत्पातुमैच्छत्कथामृतं ॥ १ ॥

॥ सिद्ध उवाच ॥

वत्स विष्णौ प्रबुद्धोसि यत्तृप्तिः शृण्वतोपि नो ।
मन्ये त्वयि प्रसादोस्ति श्रीमद्भगवतो हरेः ॥ २ ॥
शृण्वेको ब्राह्मणस्तत्र त्यक्तान्यान्नप्रतिग्रहः ।
दैवात्मश्रुगृती शांतोसक्तः कर्मपरो गृही ॥ ३ ॥
तत्स्त्रीः कृत्येव सस्त्रीकाः स्वादु भुक्त्वान्यसद्मनि ।
लभंते स्वंशुकार्थांस्तद् दृष्ट्वा पतिमगर्हयत् ॥ ४ ॥

श्रीगणेशाय नमः ॥ अथाऽष्टादशाऽध्यायः ॥ ब्राह्मण्या दुःस्वभावं च परिहृत्य द्विजातये ॥ शशंसाष्टादशे कृत्स्नमाह्निकं श्रीगुरुः स्वयं ॥ १ ॥ मोहतम्यां मोहमय्यां रात्र्यां निद्रितं संजातप्रमादनिद्रं भवत्कृतबोधसूर्योदयसमये बुद्धं जातविवेकं मे मनः कथामृतं पातुमैच्छत् यथा सुतो बाल उत्थाय दुग्धं पातुमिच्छति तद्वत् ॥ १ ॥ विष्णौ व्यापके गुरौ विषये संजातबोधोसि यद्यस्मात्तच्चरितं श्रृण्वतोपि तृप्तिर्न विद्यतेऽतस्त्वयि भगवत्प्रसादोस्तीति मन्ये ॥ २ ॥ तत्र गन्धर्वनगरे त्यक्तपरान्नप्रतिग्रहः ऋती सत्यवक्ता शमादिसम्पन्नः गृही कर्मपरोप्यनासक्तोभूत् ॥ ३ ॥ सस्त्रीकास्तत्रत्याः परगृहे स्वाद्वन्नं भुक्त्वा शोभनवस्त्राणि धनं च लभंते इति दृष्ट्वा स्वपतिमकुत्सयत् ॥ ४ ॥ सा भर्त्रा सह भोक्तुमेकेन धनिना आमन्त्रितापि काम-

भोक्तुं भर्त्रा सहाहूता धनिनैकेन सैकदा।
पत्याऽक्रुद्कामलोभेन निषिद्धैत्यावदद्गुरुं ॥ ५ ॥

दीनां कुचैलां क्षुधितां पत्या साकं धनी गृहे।
दाताह्वयति भोक्तुं मां पतिं बोधय नैति सः ॥ ६ ॥

तच्छ्रुत्वाहूय तं गच्छ भोक्तुं वध्वेत्यजोऽब्रवीत्।
स प्राह नियमं हित्वा तथा कुर्वे त्वदाज्ञया ॥ ७ ॥

इत्युक्त्वागात्तया भोक्तुं श्वक्रोडोच्छिष्टपाकतः।
भुंजंती ददतेऽन्नं सा दृष्ट्वा पत्ये शशंस तत् ॥ ८ ॥

उत्थायोभौ ततः खिन्नौ गुरुं प्राप्य तदूचतुः।
स प्राहांगाद्य लब्धं ते स्त्रीः परान्नसुखं परं ॥ ९ ॥

सोचेद्य च्छलितो भर्ता क्षंतव्यो मंतुरद्य मे।
तामाह श्रीगुरुरितः पत्यनुज्ञानुगा भव ॥ १० ॥

क्रोधलोभहीनेन पत्या मा गच्छेति निषिद्धा सती गुरुमागत्यावदत् ॥ ५ ॥ दीनां दरिद्रां कुचैलां वस्त्रहीनां दाता भोक्तुमाव्हयति स पतिर्न गच्छति तं बोधय ॥ ६ ॥ तद्वाक्यं श्रुत्वा तं विप्रमाहूय पत्न्या सह भोक्तुं गच्छेति स विप्रः ॥ ७ ॥ तया पत्न्या सहागात् तत्र श्वक्रोडोच्छिष्टं पाकतोऽन्नमानीय भोक्तृभ्यो ददत इति दृष्ट्वा स्वयं भुंजानापि दुर्मानसा भूत्वा तत्स्वपत्ये कथयामास ॥ ८ ॥ यद्वृत्तं तत् सः गुरुः अंग हे स्त्रीः परं परान्नसुखं ते लब्धं ॥ ९ ॥ सा स्त्री ऊचे मे मंतुरपराधः इतः परं पत्यनुज्ञावशवर्तिनी

॥ विप्र उवाच ॥

निष्ठान्यथाकृता मेद्य दुष्टयाघं कथं व्रजेत् ।
जन्मप्रभृत्यद्य यावन्नेदृक्पापं मया कृतम् ॥ ११ ॥

॥ श्रीगुरुरुवाच ॥

मा भीस्त्वय्येष दोषो न दुश्चित्तं न कुलस्त्रियः ।
कार्यं सातः परं नेच्छेत्तथात्तुं क्वापि नैद्यतः ॥ १२ ॥

कदाचिद्यस्य कस्यापि कर्माभाव उपस्थिते ।
द्विजाभावात्तु भोक्तव्यं तत्र दोषोन्यथा भवेत् ॥ १३ ॥

॥ विप्र उवाच ॥

परान्नं कस्य भोक्तव्यं कस्मिन्गेहे न कुत्र वा ।
कस्माद्दानं गृहीतव्यं निषिद्धं चापि शंस मे ॥ १४ ॥

भव ॥ १० ॥ दुष्टया पत्न्या अघं पापम् ॥ ११ ॥ दुश्चित्तं कष्टयुक्तं चित्तं साप्यतः परं तथा परान्नं नैच्छत् त्वमत ऊर्ध्वं क्वापि भोक्तुं न गच्छ ॥ १२ ॥ नायं नियमः द्विजालाभान्निमित्ताच्छ्राद्धादिकर्मलोपे प्राप्ते तत्र भोक्तव्यं अन्यथा रसासक्त्या दोषो भवेन्नेदृशेन भोजनेन यद्वान्यथा द्विजासंभवे कर्मलोपं जानन्नप्यहं परान्नं भोक्तुं न व्रजामीति दुराग्रहाद्दोषो भवेत् ॥ १३ ॥ कस्य पवित्रान्नं कस्मिन्गेहे भोक्तव्यं कुत्र वा न भोक्तव्यं निषिद्धं दानं च शंस कथय ॥ १४ ॥ सदाचारसम्पन्नो वैदिकश्च गुरवः

॥ श्रीगुरुरुवाच ॥

सद्विप्रवैदिकगुरुश्वशुरस्वशिष्यमातामहालय उ भोजनतो न दोषः। नाऽचारहीनपरकर्मरताहितार्तक्षुद्राशुचिस्वगुरुदुःखकरान्नमद्यात्॥ दातारमेति सततं सुकृतं तदन्नभुक्त्यास्य भोक्तुरघमेति तथाप्यमंत्रात् ॥ हूत्यांघ्रिजस्य च तथा खलु मासपुण्यं दर्शे परान्नग्रहणादपयाति भोक्तुः ॥ १६ ॥

कन्यालयेऽभजननोत्तरमन्नमद्याल्लक्ष्मीरपैति सततं परगेहवासात्। ग्राह्यं च दानमपि सज्जनतो ग्रहे सत्क्षेत्रादिके न न कुहाप्यतिनिंद्यदानम् ॥ १७ ॥

उत्तमं यज्ञशिष्टान्नं दीक्षितब्राह्मणोरपि।
स्वार्थं पक्कं क्वापि नाद्याद्याद्यज्ञार्पितं शुभं ॥ १८ ॥

अध्यापकान्नदातृभयहर्त्रादयः श्वशुरः पत्नीपिता स्वाः बांधवाः मातामहश्चैषां गृहे भोजनतो दोषो न ना पुरुषः आचारहीनः परकर्मतत्परः अहितार्तः लोभादिग्रस्तः क्षुद्रः कदर्यः अशुचिः जाताशौचमृताशौचयुक्तः पतितो बहिष्कृतो वा स्वजनगुरुपीडकश्चैषामन्नं नाद्यात् ॥ १९ ॥ निरन्तरपरान्नभोजनेन भोक्तुः सुकृतं अन्नदातारं प्रति गच्छति अस्यान्नदातुरघं पापं भोक्तुः कर्माणि षष्ठी भोक्तारं प्रति गच्छति तथाप्यमंत्रादामंत्रणं विना परान्नभोक्तुस्तथैव पूर्ववत् तथा ब्राह्मणगृहे अंघ्रिजस्य शूद्रस्य हूत्या ब्राह्मणगृहे भोक्तुमागच्छेत्याह्वानेन गत्वा भोक्तुस्तथैव पूर्वोक्तवत् दर्शे परान्नभोजनान्मासपुण्यं भोक्तुरपयाति दातारमिति शेषः पूर्ववत् ॥ १६ ॥ पुत्रोत्पत्त्यनन्तरं स्वदुहितुर्गृहेन्नमद्यात् निरन्तरं परगेहवासाल्लक्ष्मीर्गच्छति सज्जनतः स्वधर्मनिष्ठावतो दानं ग्राह्यं ग्रहे ग्रहणे सत्क्षेत्रे तीर्थे च दानं न ग्राह्यं अतिनिंद्यदानं महादानं वा क्षेत्रे तीर्थेन्यत्र वा न ग्राह्यं ॥ १७ ॥ १८ ॥ आपदि दानप्रतिग्रहदोषः पुनर्मामैत्विति

---

१ पितृव्यमातुलमातामहेति निपातनात्साधुः

नश्येज्जपाद्वापदि दानदोषः स्वाचारमप्यापदनापदिष्टम् ।
विविच्य विप्राः प्रचरंति ये न क्वाप्याधिदैन्यर्णगदान्स्पृशन्ति ॥
स्वाचारहीनाः परकर्मसक्तास्तेमुत्र चात्रापि सदार्तिभाजः ।
तस्माद्द्विजाचारममुं निराशीस्त्वं कर्तुमर्हस्युभयार्थदं वै ॥ २० ॥

॥ विप्र उवाच ॥

देव देव जगन्नाथ दयाब्धे भगवन्प्रभो ।
सद्गुरो सर्वमाचारं वक्तुमर्हसि मे हरे ॥ २१ ॥

॥ श्रीगुरुरुवाच ॥

विस्तृतोऽब्धिवदाचारो मुनीनामपि दुर्ग्रहः ।
तस्मात्सारं सद्गतिदं वक्ष्ये शाक्त्यादिसंमतम् ॥ २२ ॥
आचार आद्यो धर्मो नुः सुखदस्तूभयत्र सः ।
श्रुतिस्मृतिपुराणोक्तचरणं विष्णुचिंतनं ॥ २३ ॥
श्रद्धया देशकालाप्तदानं पात्रे दया क्षमा ।
शौचानसूयानायासाऽतृट्ताकार्पण्यमंगले ॥ २४ ॥
सत्ता दैवीसम्पदेतल्लक्षणो धर्म उच्यते ।
श्रैष्ठ्यं कर्माप्यते तस्मात्ततो ज्ञानं ततोमृतम् ॥ २५ ॥

मंत्रद्वयजपेन नश्येत् आश्वलायनः 'अगमनीयां गत्वायाज्यं याजयित्वा-भोज्यं भुक्त्वाप्रतिग्राह्यं प्रतिगृह्य चैत्यं यूपं वोपहत्य पुनर्मामैत्विंद्रिय-मित्याभ्यां आज्याहुतीर्जुहुयात्समिधो वा जपेद्वा' इति विविच्य विशोध्य दैन्यं दीनतां ऋणं देवादेर्गदं रोगं ॥ १९ ॥ २० ॥ २१ ॥ शाक्त्यः पराशरः ॥ २२ ॥ आद्यः पुरातनः नुः पुरुषस्य श्रुत्यादिलक्षणो धर्मः तस्माच्छ्रैष्ठ्यं कर्म ॥ २३ ॥ २४ ॥ २५ ॥ तद्दूरे श्रुतिस्मृतिपुराणानां

श्रुतिस्मृतिपुराणानि धर्ममूलं श्रुतिर्वरा ।
तद्वैधे द्वौ वृषौ श्रुत्योर्द्वैधे स्मृत्योस्तु लौकिकः ॥ २६ ॥

वर्णाश्रमविभागोक्तो देशकालोचितो वृषः ।
लौकिकोपि चतुर्वर्णैः सेवनीयः प्रयत्नतः ॥ २७ ॥

स्वनुष्ठितादन्यधर्माद्विगुणोपि स्वको वरः ।
स्वगृह्योक्तोविरुद्धोपि स्मार्तो ग्राह्यो द्विजातिभिः ॥२८॥

विरोधे श्रुतिर्वरा श्रुत्योः परस्परं द्वैधे द्वौ वृषौ धर्मौ स्मृत्योर्द्वैधे लौकिकधर्मानुकूलस्मृतिसम्मतो धर्मः ॥ २६ ॥ वर्णा ब्राह्मणक्षत्रियवैश्याः शूद्राः आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थसंन्यासिनः तेषां विभागश्च उक्तः देशः काश्मीरादिः कालः शिशिरादिः तयोरुचितः योग्यः वृषो धर्मः सेवनीयः लौकिकोपि यदुक्तं 'यद्यपि स्यात्स्वयं ब्रह्मा त्रैलोक्यस्थापनक्षमः । तथापि लौकिकाचारं मनसापि न लंघयेत्' इति प्रयत्नत इत्यत्र भारतोक्तिः स्मर्तव्या 'न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः । धर्मो नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्य'इति ॥२७॥ सुतरामनुष्ठितात्परधर्माद्विगुणोऽग्यंगादिवैकल्योपि स्वको धर्मो वरः श्रेष्ठः 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्टितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावह'इति स्मृतेः द्विजातिभिस्त्रैवर्णिकैः स्वगृह्योक्तस्तदविरुद्धोपि स्मार्तो ग्राह्यः स्वगृह्यशब्देनात्र शाखाभेदो विवक्षितः शाखाभेदेपि विध्यभेदादुपासनं न भिद्यते 'सर्ववेदांतप्रत्ययं चोदनाद्यविशेषात्' इति न्यायवत् त्रैवर्णिके द्विजातित्वम् ॥ २८ ॥ नित्यं सन्ध्योपासनहोमपंचयज्ञदर्शादि नैमित्तिकं पुत्रजन्मनिमित्तकं जातेष्ट्यादि कर्म नातीयात् काम्यं त्वैच्छिकं तदतिक्रमे

नित्यं नैमित्तिकं कर्म नातीयात्काम्यमैच्छिकं ।
तत्त्यागी क्वापि न सुखी ब्रह्मीभूतमृते भवेत् ॥ २९ ॥
प्रमादलुप्तकर्मा तु प्रायश्चित्त्या शुचिर्विना ।
अनुतप्तं प्रयत्नाद्वीदुःसंगापहृतक्रियः ॥ ३० ॥

च दोषाश्रवणात् कृते च बन्धकत्वश्रवणात् 'अयुक्तः कामकारेण फले सक्तो निबध्यत' इति स्मृतेः ननु तर्हि काम्यं नैव कार्यमिति किमिति न निषिद्ध्यते यत ऐच्छिकमित्युच्यत इति चेद्रागिविरागिभेदेनेदं नियम्यते तथाहि 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः' इत्यत्र भाष्यकृद्भिरिदमुक्तं आचार्येणानुज्ञातोनुरूपान्दारानाहृत्य प्रजातंतुं प्रजासन्तानं मा व्यवत्सेत्सीः प्रजासंततेर्विच्छित्तिर्न कर्तव्यानुत्पद्यमानेपि पुत्रे काम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्य इत्यभिप्रायः प्रजाप्रजननप्रजातित्रयनिर्देशसामर्थ्यात् अन्यथा प्रजननश्चेत्येकमेवावक्ष्यदिति इदं च रागिविषयकमेव 'नापुत्रस्य लोकोस्ति' इति श्रुतिहार्दज्ञानां विरागिणां तु 'एतद्ध स्म वै तद्विद्वांसः प्रजां न कामयंते किं प्रजया करिष्यामो येषां नोयमात्मायं लोक' इति 'ते ह स्म०' इति श्रुतिरेषणात्रयोत्थानं ब्रूते यदि तेषां तीव्रतरा मुमुक्षा चेत्संन्यास एव श्रेयान् तदितरेषां त्वारुरुक्षूणां नित्यनैमित्तिककर्मानुष्ठानमेव विमुखानां तु प्ररोचनार्थं काम्यकर्मप्रतिपादनमित्यतः काम्यमैच्छिकमित्युक्तम् तत्त्यागी नित्यनैमित्तिकत्यागी क्वापीह वामुत्र वा सुखी न भवेत् किंतु दुःखभागेव तर्हि ज्ञानिनामपि कर्मात्यये तथैवेति चेन्नेत्याह ब्रह्मीभूतमृते ज्ञानिनं विना ज्ञानिनां तु न विधिनिषेधापत्तिः कार्याभावात् स्मृतिः उक्तं च गीतायां 'यस्त्वात्मरतिः' इति द्वाभ्यां ॥ २९ ॥ प्रमादेनानवधानेन लुप्तं कर्म यस्य स प्रायश्चित्त्या शुचिः 'विद्वद्यपराधे प्रायश्चित्तिः' इति सूत्रकारवचनात् बुद्धिपूर्वकं दुःसंगेन च लुप्तं कर्म यस्य स प्रयत्नाच्छुचिः अनुतप्तं विनानुतापात्तु सद्यः

भजेत्सलक्षणं धर्मं श्रद्धाभक्तियुतो नरः ।
ब्राह्मणस्तु विशेषेण यतोस्मै श्रैष्ठ्यमर्पितं ॥ ३१ ॥
दानादाने याजनेज्येऽध्ययनाध्यापने द्विजः ।
स्नानसन्ध्याजाप्यहोमपाठयज्ञपरश्चरेत् ॥ ३२ ॥
वैदिकां तांत्रिकां मिश्रामाद्यां वैकां चरेत् क्रियां ।
विमलः सुमुखस्नातो द्विराचांतो गुरुक्तिमान् ॥ ३३ ॥
त्रिकच्छी धौतमच्छुष्कद्विवासा यतगोशिखः ।
मृद्भस्मगन्धान्यतमलिप्तो दर्भकरः शुचिः ॥ ३४ ॥
पीठस्थोऽतर्जानुकरः प्रकुर्यात्कर्म सत्स्थले ।
उपोषितो विना नैशं कुर्याद्यज्ञजपाऽर्चनम् ॥ ३५ ॥
दोषो नौषधगव्येक्ष्वप्फलतांबूलभक्षणे ।
कर्म संकल्प्य कार्यं सम्पूर्णतास्येश्वरार्पणात् ॥ ३६ ॥

शुचिः ॥ ३० ॥ ३१ ॥ दानं पात्रे द्रव्यसमर्पणं आदानं प्रतिग्रहः याजनं पौरोहित्यार्त्विज्यादिकरणं इज्या यजनं अध्ययनं वेदपाठः शिष्याय विद्या-दानमध्यापनं च त्रीणि कर्माण्युपजीवनार्थं त्रीणि चागंतुसाधनार्थं बुधो विवेकी प्रत्यहं चरेत् कथंभूतः स्नानादियुक्तः ॥ ३२ ॥ आद्यामेकां केवलां वैदिकीं वा विमलः कृतमलाद्युत्सर्गः सुमुखः कृतदन्तधावन यतगोशिखः मौनी बद्धशिखश्च ॥ ३३॥ ३४ ॥ पीठस्थ आसनारूढः नैशं रात्रिकर्तव्यं कर्म विना उपोषितः ॥ ३५ ॥ गव्यं गोरसः इक्षुः प्रसिद्धः आपः जलं औषधादीनां भक्षणे न दोषः एतदशक्तविषये प्रथमतः कर्म संकल्प्य कार्यं अन्तेस्य कर्मणः ईश्वरार्पणात्सम्पूर्णता ''यस्य स्मृत्या० प्रमादात्कुर्व०' स्मृतेः ॥ ३६ ॥ खे आकाशे यत्र प्रदेशेर्कः सूर्य उद्गमास्तौ एति प्राप्नोति

॥ क्षेपकः ॥

खेकौं यत्रैत्युद्गमास्तौ प्राक्प्रत्यक्ते ततोपराः ॥ ३६ ॥

ने प्राक्प्रत्यक्च ततस्ताभ्यामपरा अवांतरा दिशः साध्याः यस्मिन्प्रदेशे प्राची साध्यते तत्र वृत्तं कृत्वा द्वादशांगुलशंकुर्मध्ये निखेयः तस्य केंद्रस्थितस्य शंकोश्छाया पूर्वाह्णे यं प्रदेशं प्रविशति तस्मिन् छायाग्रे चिह्नं कार्यं सा पश्चिमा दिक् अपराह्णे छाया वृत्ताद्बहिर्यत्रापैति तस्मिन् छायाग्रे चिह्नं कार्यं सा पूर्वा दिक् तदर्धप्रदेशे वृत्ते दक्षिणोत्तरे दिशौ तदंततो विदिशश्च साध्या एतद्दिक्साधनं सायनांशसूर्यो यस्मिन्दिने मेषादिगो भवति तस्मिन्दिने कार्यं तदन्यदिने वार्कक्रांतिलवाक्षकर्णनिहतिरित्याद्युक्तप्रकारेण साध्यं एवं सूर्योदयवशाद्दिक्साधनं उदयश्च नाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरापत्तिः तदत्ययश्चास्तमयं न परमार्थत उदयास्तमये स्तः तन्निवासिनां प्राणिनां चाभावे तान्प्रति तेनैव मार्गेण गच्छन्नपि नैवोदेता नास्तमेति चक्षुर्गोचरापत्तेस्तदत्ययस्य चाभावात् तर्हि 'मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः । दैवे युगसहस्रे द्वे ब्राह्म' इति तेषां दिनव्यवहारः कथमिति चेत्तथैवामरावत्याः सकाशाद् द्विगुणकालं संयमिनी पुरी वसत्यतस्तन्निवासिनः प्राणिनः प्रति दक्षिणत एवोदेत्युत्तरतोस्तमेति इत्युच्यतेऽस्मद्बुद्धिं चापेक्ष्य तथोत्तरास्वपि पुरीषु योजना यथात्र भारते षष्टिघटिकात्मकोहोरात्रस्तथैव मनुजमानेन मासेन पितृणामहोरात्रः तत्र शुक्लपक्षे संततं सूर्यदर्शनं कृष्णे चास्तमयं एवमेव स्वर्गे देवानां मानवाब्दात्मकोहोरात्रः तत्रोत्तरायणे संततं सूर्यदर्शनं दक्षिणायनेऽस्तमयं च सर्वेषां च मेरुरुत्तरतो भवति यदाऽमरावत्यां मध्यान्हगः सविता तदा संयमिन्यामुद्यन्दृश्यते तत्र मध्याह्नगोचरो वारुण्यामुद्यन्दृश्यते तथोत्तरस्यां प्रदक्षिणावृत्तेस्तुल्यत्वात् इलावृतवासिनां सर्वतः प्राकारनिवारितादित्यरश्मीनां सवितोर्ध्व इवोदेतार्वागस्तमेता दृश्यते पर्वतोर्ध्वछिद्रप्रवेशात्सवितुः प्रकाशस्य एवमन्यत्राप्यूह्यम् एवमुक्तन्यायेनात्र मनुष्याणां षष्टिघट्यात्मकोहोरात्रः मासात्मकः पितृणां वर्षात्मको देवानां च ब्रह्मलोके तु नास्तो नोदयश्च तथा च छंदोगाः 'न वै तत्र निम्लोच

द्युनक्तं प्रागुदग्वक्रो होमाद्येग्न्यादिसंमुखः ।
सौम्यैन्द्यैशान्यनुक्तायां दक्षांगं चोपवीतता ॥ ३७ ॥
आसीनत्वं मध्यपाठो देवतीर्थमनुक्तके ।
निवीतं कण्ठलंब्यार्षं दक्षांसस्थं तु पित्र्यकम् ॥ ३८ ॥
प्राचीनावीतमन्यांसस्थं सूत्रं तूपवीतकं ।
भ्रष्टं वा त्रुटितं सूत्रं त्यक्त्वा दद्यान्नवं विधेः ॥३९॥
त्रिर्गीकृत्य त्रिपद्या षण्नवतिस्वकरोन्मितं ।
तूलादिसूत्रं पुनस्त्रिरावृत्य नवसूत्रकम् ॥ ४० ॥
कृत्वा त्रिरावृतं ग्रन्थिं दत्वा काजशिवानमन् ।
प्रोक्ष्याब्लिंगैः पंक्तिवारं सावित्र्या धेहि मन्त्रवत् ॥४१॥

नोदियाय कदाचन' इति ॥ ३६ ॥ दिवा प्राङ्मुखः नक्तमुदङ्मुखः होमपूजादौ अग्निदेवादिसंमुखः अग्नेः संमुखत्वमुक्तमाश्वलायनगृह्ये 'एते वै यज्ञस्य यदाज्यभागौ तस्मात्पुरुषस्य प्रत्यङ्मुखस्यासीनस्य दक्षिणमक्ष्युत्तरं भवत्युत्तरं दक्षिणम्' इति अनुक्तायां दिशि पूर्वोत्तरैशान्यः अनुक्तस्थले दक्षिणांगं उपवीतत्वं च ॥ ३७ ॥ स्थित्यानुक्तायामासीनत्वं चानुक्ते पाठे मध्यमपाठोनुक्ते तीर्थे देवतीर्थं कण्ठलंबिसूत्रं निवीतमृषिकर्मणि दक्षिणबाहुस्थं प्राचीनावीतं पितृकार्ये ॥३८॥ वामबाहुस्थमुपवीतं देवकार्ये पतितांत्यजोदक्या स्पर्शे स्थानाच्च्युते मासचतुष्टयातीते सूतके च प्राप्ते यज्ञोपवीतं भ्रष्टं भवति भ्रष्टं त्रुटितं वा सूत्रं त्यक्त्वा नवीनं विधिवद्दद्यात् ॥३९॥ त्रिपद्या गायत्र्या त्रिगुणीकृत्य पुनस्त्रिरावृत्य त्रिगुणीकृत्य संजातं नवतंतुकं त्रिरावृतं कृत्वा ॥४०॥ काजशिवान्ब्रह्मविष्णवीश्वरान्नमन्ग्रंथिं बद्ध्वाब्लिंगैर्बहुवचनस्य त्रित्वे पर्यवसानादापोहिष्ठेति तिसृभिर्दशवारं गायत्र्या च प्रोक्ष्य समन्त्रकं यज्ञोपवीतमिति मन्त्रेण धेहि धारणं कुरु हे द्विज त्वमिति शेषः

शश्वद्योज्याः सत्स्थिताग्निमंत्रदर्भासनद्विजाः ।
पिण्डादिस्थाः कुशा विप्रः प्रेतश्राद्धाच्चितानलः ॥४२॥
मंत्रा गौस्तुलसी नीचेऽसन्तः सन् शोधितो द्विजः ।
सोंकारान्सर्वदा होमे स्वाहांतान्वामहस्तहृत् ॥ ४३ ॥
आर्षच्छंदोदेवताविनियोगज्ञो मनूञ्जपेत् ।
शूद्राहृतं द्विजक्रीतं समिद्दर्भाप्सुमाद्यसत् ॥ ४४ ॥
अफेनानुच्छिष्टहस्तनखास्पृष्टामलांबु सत् ।
कुशकाशयवोशीरगोधूमव्रीहिकुन्दराः ॥ ४५ ॥
दूर्वामौंजस्तृणं दर्भा वर्षामास्वीकृताः शुभाः ।
मूलतो ब्रह्मविष्ण्वीशा दर्भे सर्वेभितोमराः ॥ ४६ ॥

॥४१॥ शोभनकर्मस्थिता अग्न्यादयः पुनः पुनः कर्मणि योज्याः पिण्डादिषट्स्थानस्थाः कुशा असंतोऽशोभनाः प्रेतश्राद्धं महैकोद्दिष्टश्राद्धं भुनक्तीति तथा स विप्रोऽसन् चिताग्निरसन्मंत्रा गौस्तुलसी च नीचगता अशोभना एषां मध्ये प्रेतश्राद्धभुक्स संस्कारप्रायश्चित्त्याद्या शोधितश्चेच्छुद्धो भवेत् जपादिसमये सोंकारानोंकारपूर्वान्होमे च स्वाहांतान्मंत्रान् जपेत् वामहस्तो हृदि यस्य सः ॥ ४२ ॥ मंत्रर्ष्यादिज्ञः यदुक्तम् 'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ॥ योऽध्यापयेद्यजेद्वापि पापीयाञ्जायते तु स' इति शूद्रेणानीतं ब्राह्मणेन क्रीतं समिद्दर्भाऽप्सुमादि असत् समिदिध्मं दर्भाः प्रसिद्धाः आप उदकं सुमं पुष्पं यदुक्तं 'समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ॥ शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्व्रजत्यधः' इति ॥४४॥ फेनरहितं अनुच्छिष्टं मलरहितं जलं कर्मणि सत् कुशादयो दशप्रकारा दर्भाः श्रावणमासेमावास्यायामाच्छिद्य स्वीकृता वर्षपर्यन्तं शुभाः 'अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः' इति स्मृतेः भाद्रामायां क्वचिदुक्तं तत्कृष्णादिमासाभिप्रायेण मूले ब्रह्मा मध्ये विष्णुरग्रे रुद्रोभित आसमंतात्सर्वे देवाः

कर्मोत्तरांतं प्राक्संस्थं व्यस्तं वा पित्र्यमग्निगं ।
याम्यंतं तद्वदास्यं च ज्ञेयोंगे वामतः क्रमः ॥ ४७ ॥
तर्जन्यल्पाधःकराग्रमध्यादिषु यथाक्रमं ।
तीर्थं पित्र्यं कायदैवमाग्नेयं ब्राह्ममुच्यते ॥ ४८ ॥
पित्र्यर्षिदेवादानोपस्पर्शकार्यं चरेत्तु तैः ।
वामान्वारब्धान्यपाणिः कर्माद्यंताम्बुदानदृक् ॥ ४९ ॥
त्वक्फलकृमिरोमोत्थश्वेतासृक्पीतमेचकं ।
वासो दग्धं द्विजादेः सद्धौतमस्फाटितं स्वकं ॥ ५० ॥
ब्राह्मे मुहूर्त उत्थाय गणेशब्रह्मविष्ण्वजान् ।
देवान्नत्वा गुरून्खेटान्गां सच्छ्लोकांश्च संस्मरेत् ॥ ५१ ॥
ग्रामाद्बहिस्तु नैर्ऋत्यां सद्द्रुवम्ब्वध्वादिवर्जिते ।
स्थलेम्बु दूरात्संस्थाप्य यतनासाक्षिवाक् तृणे ॥ ५२ ॥

॥ ४५ ॥ ४६ ॥ प्राक्संस्थमुत्तरांतं उदक्संस्थं पूर्वांतं वा दैवं पित्र्यं तु अग्निगं याम्यंतं मुखमपि तद्वत् अंगे वामांगादिक्रमः ॥ ४७ ॥ तर्जन्यधः पित्र्यं कनिष्ठाधः कायमार्षं कराग्रे दैवं मध्ये तले आग्नेयं करमूले ब्राह्मं तैः ॥ ४८ ॥ पित्रादिकार्यं आदानं प्रतिग्रहः 'आग्नेयेन प्रतिगृह्णीयात्' इति श्रुतेः उपस्पर्शं आचमनं अन्यपाणिर्दक्षिणहस्तः ॥ ४९ ॥ त्वगादिवस्त्राणि श्वेतादीनि च ब्राह्मणादेः क्रमेणोक्तानि स्वकं स्वीयं इति परिभाषा समाप्ता ॥ ५० ॥ ब्राह्ममुहूर्तः स चिंतनार्हकालोंतिमो रात्रेश्चतुर्थप्रहरः तस्मिन् काले गुरून् मातापित्रादीन् खेटान् ग्रहान्सिद्धान्वा गां भूमिं धेनुं वा पुण्यश्लोकान्धर्मादीन् ॥ ५१ ॥ सद्द्रुः पुण्यवृक्षोश्वत्थादिः अम्बु जलमध्वा मार्गः अम्बु जलपात्रं यतनासाक्षिवाक् पिहितनास इतस्ततोपश्यन्मौनी तृणास्तृतभूमौ

उदङ्मुखोन्यथा नक्तमासीनो वस्त्रमस्तकः ।
आर्षसूत्रं दक्षकर्णे कृत्वा मूत्रविशौ त्यजेत् ॥ ५३ ॥

लिङ्गं सहाद्भिरप्स्थार्द्रधात्रीमात्रमृदा गुदं ।
त्रिर्वामो दशवारं च करः शोध्याः करांघ्रयः ॥ ५४ ॥

प्रत्येकं सप्तवारं द्विगुणं वीर्येर्धमन्यके ।
वर्णिवानप्रस्थभिक्षोः शौचं द्वित्रिचतुर्गुणं ॥ ५५ ॥

अर्धार्धार्धं निशाशक्तिमार्गेष्वज्ञाबलासु तु ।
गन्धलेपांतावधि स्याद्गंडूषान्वामतस्त्यजेत् ॥ ५६ ॥

द्विजो द्वादश चान्योल्पान्तर्जन्यास्यं न शोधयेत् ।
क्षीरिकण्टकिवृक्षाम्रनिम्बापामार्गदारुणा ॥ ५७ ॥

॥५२॥ दिवोदङ्मुखो नक्तमन्यथा दक्षिणामुखः आसीनो मुक्तकच्छ उपविष्टः वस्त्रं मस्तके यस्य आर्षसूत्रं निवीतं दक्षिणकर्णे कृत्वा मूत्रं मलं चोत्सृजेत् ॥५३॥ उदकस्थितयार्द्रधात्रीफलमितया मृदा सहैकवारं लिंगं त्रिवारं गुदं चाद्भिः सह मृदा शोध्यं दशवारं वामकरः शोध्यः उभौ पादौ करौ च सप्तवारं प्रत्येकं शोध्याः ॥५४॥ रेतोत्सर्गे द्विगुणं मूत्रोत्सर्गेर्धं एतद्ब्रह्मचारिणो द्विगुणं वनस्थस्य त्रिगुणं भिक्षोश्चतुर्गुणं ॥ ५५ ॥ निश्यर्धं अशक्तौ तदर्धं मार्गे प्रवासे तदर्धं अज्ञेषु बालेषु अबलासु स्त्रीषु गंधलेपक्षयपर्यंतं शौचं न तु पूर्वोक्तसंख्यया द्विजो द्वादशगंडूषान्स्ववामतस्त्यजेदित्यग्रिमेणान्वयः ॥ ५६ ॥ अन्यः क्षत्रियोल्पान्दश अष्टौ वैश्यश्चतुरः शूद्रः तर्जन्या मुखं न शोधयेत् क्षीरिणः प्लक्षादयः कण्टकिनः खदिरादयः आम्रादयः प्रसिद्धा एषामन्यतमस्य काष्ठेन ॥ ५७ ॥ सत्वचेनार्द्रेण द्वादशांगुल-

द्वादशांगुलमात्रेण द्विजोन्योल्पेन मन्त्रवत् ।
शुद्धास्योब्गोविशा प्रातः स्नायान्मध्यंदिनेम्मृदा ॥५८॥

भिक्षुर्व्रती त्रिकालं न चिरंटी शिरसा सदा ।
शीतैः शीताप्सम्पुटितोष्णकैर्वाब्लिगमंत्रितैः ॥ ५९ ॥

धाम्न्याचमनसंकल्पमार्ष्टितृप्त्यघहारि नो ।
दीपाल्युत्सवमांगल्याऽब्दाद्येभ्यंगं सदैच्छिकम् ॥ ६० ॥

अनिद्याहेऽध्वाभिक्ष्वोर्नेदं स्नायान्न शीतकैः ।
मांगल्येऽसोत्पत्तिपर्वक्रांतिश्राद्धेषु नोष्णकैः ॥ ६१ ॥

स्नायाद्वांत्यशुचिस्पर्शदुःस्वप्नरतिदुर्गमे ।
नद्यां प्रवाहाभिमुखो वरुणं प्रार्थ्य मंत्रवत् ॥ ६२ ॥

परिमितेन अन्यः क्षत्रियोल्पेन दशांगुलेन वैश्योष्टांगुलेन मन्त्रवत्समन्त्रकं मुखदुर्गंधीति मंत्रसहितं यथा स्यात्तथा शुद्धं दंतधावनजिह्वोल्लेखनादिना विमलीकृतं आस्यं येन सः अब्गोविशा गोमयलेपनपूर्वकमुदके स्नायात् मध्यंदिने तथैवाम्मृदा स्नायाद्गृहस्थः ॥५८॥ भिक्षुः कुटीचको बहूदश्च हंसे तु सकृदेव स्यादिति पूर्वमेवोक्तं व्रती वनस्थश्चांद्रायणादिव्रतकर्ता च त्रिकालं स्नायात् सुवासिनी नित्यं शिरसा न स्नायात् शीतैः कैः जलैः अथवा आपोहिष्ठेत्यादिमंत्रितैः शीतोदकेन सम्पुटितोष्णोदकैः ॥५९॥ धाम्नि गृहे मार्ष्टिमर्जनं तृप्तिस्तर्पणं अघहार्यघमर्षणं नो कुर्यात् दीपावल्यामुत्सवे विवाहादिमांगल्ये वर्षारंभे चाभ्यंगस्नानं कार्यं सदा तदतिरिक्तकाले ऐच्छिकं न नित्यं ॥ ६० ॥ तदप्यनिंद्ये षष्ठ्यष्टमीचतुर्दश्यमारहिते दिवसे विधवाया भिक्षोश्चेदं अभ्यंगस्नानं न मांगल्ये शीतोदकैर्न स्नायात् पुत्रोत्पत्तौ पर्वणि संक्रांतौ श्राद्धाहे च नोष्णोदकैः स्नायात् ॥ ६१ ॥ वांतौ अशुचिस्पर्शे

स्नात्वालोड्यांब्वम्बुमंत्रैः स्वमुन्माज्यीघमर्षणं ।
कृत्वा स्नात्वा तर्पयित्वा जले देवानृर्षान्पितृन् ॥ ६३ ॥
निष्पीड्योदग्दशं वासः शोधितांगो गृहं व्रजेत् ।
स्रवत्यात्मा सरंध्रोतः प्रातःस्नानं विशोधनं ॥ ६४ ॥
त्रिसप्तद्वादशाहं चेत्संध्यास्नानाग्निवर्जितः ।
द्विजोपि शूद्रोशक्तश्चेन्मांत्राद्यन्यतमं चरेत् ॥ ६५ ॥
हृद्यभौमाग्नेयमांत्रानिलदिव्यैः शुचिर्हरेः ।
ध्यानमृद्भस्माम्मनुगोरजोवर्षात्मकाप्लवैः ॥ ६६ ॥
मेधालोलुपतारोग्यरूपतेजोयशोबलं ।
शौर्यदुःस्वप्नहृत्यायुर्लभेत्स्नातोन्यथापरम् ॥ ६७ ॥

दुःस्वप्नदर्शने मैथुने श्मशानादौ निषिद्धस्थानगमने च स्नानं कुर्यात् नद्यां प्रवाहाभिमुखो मंत्रवत् हिरण्यशृंगमित्यादिमंत्रैः जलमालोड्य स्वमात्मानमुन्माज्यीघमर्षणं कृत्वा स्नात्वा जले देवानृषीन्पितृन्तर्पयित्वा परिभाषोक्तवत् ॥ ६३ ॥ उदग्दशं वासो निष्पीड्य प्रोक्ष्य तेन शोधितं अंगं येन स गृहं व्रजेत् नवरंध्रसहित आत्मा देहः स्रवति अतः प्रातःस्नानं विशेषेण शोधनं ॥ ६४ ॥ त्रिदिनं स्नानवर्जितः सप्ताहं सन्ध्यावर्जितः द्वादशाहमाधानाग्निवर्जितः द्विजोपि शूद्रो भवेत् अशक्तो मंत्रस्नानादीनां मध्ये यदेव सम्भवति तदाचरेत् ॥ ६५ ॥ हरेर्ध्यानं हृद्यं मानसिकस्नानं भौमं मृल्लेपः आग्नेयं भस्मस्नानं मांत्रमापोहिष्ठेति तिसृभिर्मार्जनं आनिलं गोरजःस्नानं दिव्यं सातपवर्षस्नानं ॥ ६६ ॥ मेधा धारणावती बुद्धिः अलोलुपत्वं दुःस्वप्नहतिस्तन्नाश एतत्सर्वं प्रातःस्नायी लभेत् अन्यथा स्नानाभावे अपरं दुर्मेधाइन्द्रियलौल्यरोगकुरूपाप्रागल्भ्यापकीर्तिमुखं लभेत् ॥ ६७ ॥

स्नात्वा मृद्भस्म हुत्वांगे धार्यमभ्यर्च्य चन्दनं।
केशवाद्यैर्द्वादशभिः सिते पक्षेऽसिते परैः ॥ ६८ ॥
ललाटोदरहृत्कण्ठदक्षकुक्षिभुजश्रुतिः।
कुक्षिदोःश्रुतिपृष्ठांगककुन्मूर्ध्नकं त्विति ॥ ६९ ॥
मृद्गन्धतिलकैरंक्या भस्मपुंड्रैः षडर्णतः।
मृताशौचे न गन्धान्न मांगल्ये भस्म धारयेत् ॥ ७० ॥
गयाश्राद्धाधानपट्टप्रेतकृत्योत्तरीयकं।
पादुका रौप्यमुद्रा न क्षौरं जीवत्पिता भजेत् ॥ ७१ ॥
रौप्यहैमीखड्गमुद्रावत्तर्जन्यल्पकांगुलिः।
साग्रागर्भचतुर्दर्भपवित्रानामिकोपि वा ॥ ७२ ॥

स्नात्वा मृत्तिका धार्या होमं कृत्वा भस्म धार्यं देवमभ्यर्च्य सम्पूज्य चंदनं धार्यं धारणमंत्रानाह शुक्ले केशवादिद्वादशनामभिरसिते कृष्णे संकर्षणादिद्वादशनामभिः ललाटादिस्थानानि मृदाद्यंकितानि कार्याणि ॥ ६८ ॥ ललाटोदरे प्रसिद्धे हृद्वक्षःस्थलं कण्ठो गलः दक्षिणकुक्षिर्दक्षिणभुजो दक्षिणकर्णश्च वामकुक्षिर्वामभुजो वामकर्णः पृष्ठांगं पृष्ठदेशः ककुत्तदुपरिभागः कं मूर्धा एतेवयवाः ॐ नमो नारायणायेत्यनेन इतिशब्दः स्थानसमाप्त्यर्थः ॥ ६९ ॥ मृत्तिलकैर्गंधतिलकैरंक्याश्चिह्निताः कार्याः मृदोर्ध्वतिलका भस्मना तिर्यक्पुण्ड्रा इति विवेकः ॐनमः शिवायेति भस्मपुण्ड्रैरंक्याः ॥ ७० ॥ जीवत्पिता गयाश्राद्धादि न भजेन्न कुर्यादित्यर्थः आन्ध्यादिदोषदूषिते पितरि तदाज्ञयाऽऽधाने न दोषः क्षुरेण वपनं कर्तनेन कृत्तकेशादिर्भवेत् ॥ ७१ ॥ तर्जन्यां रौप्या मुद्रा हैम्यनामिक्यां खड्गमुद्रा कनिष्ठिक्यां धार्या रौप्यहैमीखड्गमुद्रावन्त्यस्तर्जन्यल्पांगुल्यो यस्येति समास. अथवा गर्भरहितसाग्रचतुर्दर्भपवित्रेनामिकयोर्यस्य सः ॥ ७२ ॥

मुक्तांगुष्ठाल्पगोकर्णाकृतिहस्तेन कं त्रिभिः ।
केशवाद्यैः प्राश्य हस्तौ द्वाभ्यां प्रक्षाल्य चाधरौ ॥७३॥

द्वाभ्यां प्रोक्ष्यास्यमेकैकात्करं पादौ शिरोपरैः ।
आस्यं नासेक्षिणी कर्णौ नाभिं हृत्कं भुजौ स्पृशेत् ॥७४॥

नासां सांगुष्ठतर्जन्यांगुष्ठेनास्यं च दृक्श्रुती ।
सानामिकेन साल्पेन नाभिं करतलाग्रतः ॥ ७५ ॥

हृद्बाहून्कं च सर्वाभिः स्पृशेदाचमनं त्विदं ।
त्रिभिः पीत्वा शुद्धपाणिः स्पृशेत्कर्णमसम्भवे ॥ ७६ ॥

मुक्तोऽगुष्ठोल्पा कनिष्ठिका च यस्मात्स चासौ गोकर्णस्याकृतिरिवाकृतिर्यस्य तादृशेन हस्तेन कं उदकं केशवाद्यैस्त्रिभिर्नामभिः प्राश्य देवतीर्थेनेति परिभाषोक्तमनुसंधेयमेवं सर्वत्र द्वाभ्यां गोविंदविष्णुनामभ्यां करौ वामपूर्वाविति परिभाषोक्तमनुसन्धेयं द्वाभ्यां मधुसूदनत्रिविक्रमनामभ्यां अधरावोष्ठौ च प्रक्षाल्य ॥ ७३ ॥ वामननाम्नास्यं मुखं प्रोक्ष्य एकेन श्रीधर इत्यनेन दक्षिणकरं प्रक्षाल्य अपरैस्त्रिभिः पादौ शिरश्च हृषीकेशपद्मनाभाभ्यां पादौ दामोदरेण शिरश्च आस्यं मुखं संकर्षणनाम्ना वासुदेवप्रद्युम्नाभ्यां नासापुटे अनिरुद्धपुरुषोत्तमाभ्यां अक्षिणी अधोक्षजनारसिंहाभ्यां कर्णौ अच्युत इत्यनेन नाभिं जनार्दननाम्ना हृदयं उपेन्द्रेण कं मस्तकं हरिश्रीकृष्णाभ्यां भुजौ च स्पृशेत् ॥ ७४ ॥ सांगुष्ठतर्जन्या नासां स्पृशेत् अंगुष्ठेनास्यं मुखं सानामिकांगुष्ठेन दृशौ सकनिष्ठांगुष्ठेन कर्णौ करतलेन नाभिं अग्रेण हृद्बाहून् सर्वाभिः कं स्पृशेत् एतदसम्भवे त्रिभिः पीत्वा द्वाभ्यां शुद्धपाणिः कर्णं स्पृशेत् ॥ ७५ ॥ ७६ ॥ पाने आचमने द्विरुप-

मापमज्जनमात्राम्बुपानेऽथ हिक्कपस्पृशेत्।
मूत्राद्युत्सर्गशुध्यूर्ध्वं स्नाने दाने सुरार्चने॥ ७७॥
प्राक्पश्चात्कर्मसंध्यासु सुप्ते वासोधृतौ क्षुते।
कासश्वासागमादानाध्ययनाशुद्धभाषणे॥ ७८॥
श्मशानचत्वारगतौ पच्छौचे स्वाऽन्ययोः कृते।
आचामेद्द्विराचमनं मार्गे स्त्रीशूद्रोच्छिष्टभाषणे॥ ७९॥
रक्ताश्रुदर्शनेऽप्याधे जलोत्तारेऽभिवादने।
उच्छिष्टस्पर्शेऽपाने च याते कर्णं स्पृशेत्तु वा॥ ८०॥
विप्रदक्षश्रुतौ देवसवाशानिद्रान्यवाङ्मुखाः।
संध्याज्ञानाद्भवेच्छूद्रः संध्याहीनोऽशुचिर्द्विजः॥ ८१॥
विना संध्यावंदनेन नाधिकारोऽन्यकर्मसु।
सम्यग्ब्रह्मात्र ध्यायंति विप्राः संध्या ततः स्मृता॥८२॥

स्पृशेदाचांतः पुनराचामेत् शुध्यूर्ध्वं शुध्यनन्तरं न प्राक् स्नानादौ पूर्वमंते च सुप्तादौ पश्चाद्द्विराचमनं आदानं प्रतिग्रहः स्वान्ययोः स्वपादक्षालने परपादक्षालने च॥ ७७॥ ७८॥ ७९॥ अपाने वहिर्याते चैकवारमाचामेत् द्विराचमनं नाम केशवादिचतुर्विंशतिनामभिः सम्बुद्ध्यंतैश्चतुर्थ्यंतैर्वोक्तस्थानस्पर्शरूपं द्विरावर्तनं जलाभावे कर्णं स्पृशेत् विप्रदक्षकर्णे देवा वसन्त्यतस्तत्स्पर्शादाचमनं कैश्चिन्मांत्राचमनमुक्तं आचमने न्यूनाधिकजलपानं सुरासमं॥ ८०॥ सन्ध्याया अज्ञानाच्छूद्रकल्पो भवेत्॥ ८१॥ अत्र वेलायां विप्राः सम्यग्ब्रह्म ध्यायन्ति ततो हेतोः संध्या स्मृता॥ ८२॥ प्रातःसन्ध्या भाढ्या सनक्षत्रोत्तमा लुप्तनक्षत्रा मध्यमार्क-

आढ्या भर्हीनार्कयुक्ता तूत्तमा मध्यमाधमा ।
प्रातःसंध्यापरा तद्वत्सार्कार्कोना च भान्विता ॥ ८३ ॥
त्रिनाड्यधस्तामकृत्वा चतुर्थार्घ्यं प्रदापयेत् ।
अध्यर्धयामादासायं संध्या मध्यान्हिका स्मृता ॥ ८४ ॥
धृत्वाल्पानामिकांगुष्ठैर्यतिर्वर्णी च पंचभिः ।
अन्यो नासां शनैर्वायुं सव्ययापूर्य शक्तितः ॥ ८५ ॥
प्रणवव्याहृतीः सप्त गायत्रीं शिरसा सह ।
त्रिर्जपन्कुम्भितं मन्दं दक्षनाड्या विरेचयेत् ॥ ८६ ॥
कार्योन्यथासुयामान्यो मूलबंधोत्र सत्तमः ।

युक्ताधमा अपरा सायंसन्ध्या सार्कोत्तमा लुप्तार्का मध्यमा भान्विताऽधमा ॥ ८३ ॥ त्रिघटीकालातिक्रमे प्रायश्चित्तार्थं चतुर्थार्घ्यं दद्यात् अधिकार्धयामात्सार्धप्रहरोत्तरादासायं मध्याह्नसन्ध्या स्मृता पंचधा विभक्तदिनमानभागाः क्रमेण प्रातःसंगवमध्याह्नापराह्णसायाह्नसंज्ञकाः ॥ ८४ ॥ वर्णी ब्रह्मचारी अल्पा कनिष्ठिका अन्यो गृहस्थो वनस्थश्च पंचभिरंगुलिभिः अंगुष्ठेन दक्षिणनासां धृत्वा सव्यया नासापुटया शनैः शक्तितो वायुमापूर्यांगुलीभिर्दक्षिणनासापुटं निरुध्य हनुं हृदि कृत्वा ॥ ८५ ॥ प्रणवयुक्ताः सप्तव्याहृतीः शिरसा सह गायत्रीं च त्रिवारं जपन् कुम्भकं कुर्यात् जपोत्र मानसिकः कृते च वाचिके कुम्भकासम्भवात् एवं कुम्भितं वायुं मंदं दक्षनाड्या विरेचयेत् उड्याणबन्धपूर्वकं मन्दं त्यजेत् हठात्कृते रेचके बलहानिप्रसंगात् ॥ ८६ ॥ अन्यो द्वितीयः प्राणायामो यदा क्रियते तदान्यया पूर्वगृहीताया इतरया नाड्या पूरकस्तदन्यया रेचकः यदुक्तं 'प्राणं चेदिडया पिबेन्नियमितं बध्वा त्यजेद्वामया पीत्वा पिंगलया समीरणमथो बध्वा त्यजेद्वामया ॥ सूर्याचन्द्रमसोरनेन विधिना' इति अत्र प्राणायामे पूरकरेचक-

जालंधरोड्डियाणाख्यौ कुम्भके रेचके हितौ ॥ ८७ ॥
प्राणायामोयनिघ्नोयं कार्यः सर्वेषु कर्मसु ।
ग्रामाद्वहिः स्याद्द्विगुणं नद्यां शतगुणं फलं ॥ ८८ ॥
तीर्थे सहस्रं संध्यायामनंतं सांध्यकर्मजं ।
वहिःसंध्या सुरापानानृतोक्त्याद्यघहारिणी ॥ ८९ ॥
संध्यामुपासिष्य इति संकल्प्यादाय मार्जयेत् ।
गोकर्णाकृतिताम्रादिपात्रे वामकरेप्यपः ॥ ९० ॥
व्रान्तैर्नान्तैः सथान्तैः क्रमात्के पादयोर्हृदि ।
आपोहिष्ठेति पच्छोपः प्रातर्मध्यंदिने निशि ॥ ९१ ॥

कुम्भकेषु त्रिष्वपि मूलवन्धः सत्तमोतिशोभनः जालंधरः कुम्भके हितः शिराजालवन्धनात् 'वध्नाति हि शिराजालमधोगामि नभोजलं ॥ तेन जालंधराख्योयं वन्धोसौ योगसिद्धिद' इति उड्डियाणो रेचके हितः तथा च भगवत्पूज्यपादाः 'जालंधरोड्याणनमूलवंधान् जल्पंति कण्ठोदरपायुमूले ॥ बन्धत्रयेस्मिन्परिचीयमाने वन्धः कुतो दारुणकालपाशैः ? उड्याणजालन्धरमूलवन्धैरुन्निद्रितायामुरगांगनायां ॥ प्रत्यङ्मुखत्वात्प्रविशन्सुषुम्णां गमागमौ मुंचति गन्धवाह' इति २ एवं निरुद्धे प्राणे भूः सर्वपदार्थोपेतो भूलोकः ॐनाम ब्रह्मैवं सर्वत्र अत्र भूरादिष्वोंकारवाच्यब्रह्मदृष्टिः कर्तव्या 'ब्रह्मदृष्टिरुत्कर्षात्' इति न्यायात् ब्रह्मण उत्कृष्टत्वात्तद्दृष्टिर्निकृष्टेषु भूरादिषु युक्ततरा अवनिघ्नः पापहरः सर्वेषु कर्मस्वित्यनेन श्रौतस्मार्तकर्मारम्भे प्राणायामोवश्यं कार्यः तदंत आचमनं श्रोत्रस्पर्शो वा ॥ ८७ ॥ ग्रामापेक्षया वहिर्जलाशयादौ द्विगुणं सन्ध्याकर्मफलं नद्यादावेवमेवोह्यम् ॥ ८८ ॥ वहिः सन्ध्यावंदनं कृतं चेत् ॥ ८९ ॥ गोकर्णाकृतिताम्रादिपात्रे वामकरे वाऽप आदाय मार्जयेदित्यन्वयः ॥ ९० ॥ व्रांतैः पादैर्मूर्ध्नि नांतैः पादयोः सथांतैर्हृदि आपोहीति तृचस्य पच्छ इति पूर्वेणान्वयः ॥ ९१ ॥ सूर्यश्चेति

सूर्यश्चापः पुनंत्वग्निश्चेति प्राश्य ह्युपस्पृशेत् ।
सोंकारव्याहृत्योंकारयुग्देव्यप्सूक्ततो द्विजः ॥ ९२ ॥

मार्जयेत्प्रतिमंत्रं के ऋतं चेति तृचांतरे ।
निःश्वास्यावनरं स्मृत्वा दक्षनासापुटेन तं ॥ ९३ ॥

बहिर्निःसार्य हस्तेप्सु पतितं नावलोकितं ।
क्षिप्त्वा क्षितौ वामभाग आचम्याप्पूरितांजलिः ॥९४॥

गोशृंगमात्रमुद्धृत्यांजलिं व्यंगुष्ठतर्जनीं ।
तिष्ठन्ध्यायन्संमुखोर्कं देव्यार्घ्यं त्रिर्निवेदयेत् ॥ ९५ ॥

असावादित्यो ब्रह्मेति ध्यात्वासिच्य प्रदक्षिणं ।
परीत्याचामेन्मध्याह्ने नतोर्ध्ये हंस इत्यृचा ॥ ९६ ॥

प्रातः आपः पुनंत्विति मध्यंदिनेग्निश्चेति निशि अपः प्राश्योपस्पृशेत् सोंकारव्याहृतिगायत्र्या आपोहिष्ठेति नवर्गिभश्च ॥ ९२ ॥ प्रतिमन्त्रं मूर्ध्नि मार्जयेत् ऋतं चेति तृचा स्वांतरे चित्ते निःश्वास्य पापपुरुषं स्मृत्वा दाक्षिणनासापुटेन तं बहिर्निःसार्य हस्तस्थोदके पतितं भावयित्वा ॥ ९३ ॥ नावलोकितं तं क्षितौ वामभागे प्रसह्य क्षिप्त्वाचम्याद्भिः पूरितांजलिः ॥ ९४ ॥ मुक्तांगुष्टतर्जनीकमंजलिं स्वहृदयप्रदेशाद्गोशृंगमात्रं द्वादशांगुलमात्रं यथोर्ध्वं जलमुद्गच्छेत्तथोद्धृत्योत्क्षिप्य तिष्ठन्संमुखोर्कं ध्यायन्देव्या गायत्र्या सव्याहृतिकया त्रिरर्घ्यं त्रिवारं निवेदयेत् ॥ ९५ ॥ असावादित्यो ब्रह्मेति प्रदक्षिणं परीत्यासिच्य जलमिति शेषः मंत्रार्थं ध्यात्वा 'स यश्चायं पुरुषे यश्चासावादित्ये स एक' इति श्रुत्युक्तं मन्त्रहार्दं विचिंत्याचामेत् मध्यान्हेऽर्ध्यदाने नतः प्रह्वः हंसः शुचिषदित्यृचार्घ्यं दद्यादिति शेषः फलं

जपेद्गृहाद्बहिर्दिक्षं त्रिंशं नद्यां शतं फलम् ।
गोष्ठे वनेऽग्निहोत्रे च हरहर्यग्रतोऽमितम् ॥ ९७ ॥

काष्ठासनेऽकीर्त्यृकर्णं दौर्गन्ध्यं पल्लवेंशुके ।
दैन्यं मृगव्याघ्रण्यथारोग्यं भसिते कंबले सुखं ॥ ९८ ॥

विद्यैणेयेऽजिने द्वैपे मोक्षः प्रज्ञावृषी कुशे ।
व्याहृत्यास्मिन्सिद्धपद्मस्वस्तिकाद्यासनात्सुखं ॥ ९९ ॥

उपविश्य क्षमां प्रार्थ्य भूतान्युत्सार्य भावयेत् ।
यथांगमात्मन्यात्मानं देव्या तद्रूपमेकधीः ॥ १०० ॥

पूर्ववत् ॥ ९६ ॥ अग्निहोत्रादिस्थाने हरिहरमूर्तिसमीपे चापरिमितफलं ॥ ९७ ॥ जपादौ काष्ठासने आस्यतेऽस्मिन्नित्यासनं तस्मिन्काष्ठासनेऽपकीर्तिर्ऋणं दुःखं च पल्लवेंशुके वस्त्रे च दुःस्वभावना ॥ ९८ ॥ ऐणेये चर्मणि ज्ञानं द्वैपे व्याघ्रचर्मणि मोक्षः कुशासने प्रज्ञायुर्वृद्धिः अस्मिन्नधिकरणे आसने सिद्धाद्यन्यतमासनेन आस्यतेऽनेनेत्यासनं तेन सुखं यथातथोपविश्येत्यग्रिमेणान्वेति तत्रोपवेशनं व्याहृत्या कार्यं समस्तव्याहृतिभिरिति भावः उपलक्षणमिदं आसनविधेः आसनानि तु 'जानूर्वोरंतरे सम्यक् कृत्वा पादतले उभे। समकायशिरोग्रीवः स्वस्तिकं तत्प्रचक्षते १ पादांगुष्ठौ निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण तु। ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतले उभे। पद्मासनं भवेदेतत्सर्वेषामपि पूजितं २ मेंढ्रादुपरि विन्यस्य सव्यं गुल्फं तथोपरि। गुल्फांतरं च निक्षिप्य सिद्धासनमिदं भवेत्' इति ॥९९॥ पृथ्वि त्वयेति भूमिं प्रार्थ्यापसर्पंत्वपक्रामंत्वित्याभ्यां भूतान्युत्सार्य यथांगं हृदयादि देव्या द्योतनरूपया गायत्र्यात्मन्यात्मानं तद्रूपं भावयेत् एका ध्यानमुख्या धीर्यस्य ॥ १०० ॥ अत्र देवीपदेनात्मयाथात्म्यप्रकाशकत्वाद्गायत्र्या एव ब्रह्मज्ञानो-

आर्षदैवतछंदांसि स्मरन्नक्षरपूर्वकान् ।
न्यासान्कृत्वाखिला मुद्राः प्रदर्श्य मनुदेवताः ॥१०१॥

तां बालां बालादित्येति त्रिभिर्ध्यानैस्त्रिकालतः ।
ध्यात्वा चागच्छ वरद इति तिष्ठन्समाहितः ॥ २ ॥

प्रागास्यो मन्त्रार्थमनुसंदधानो जपेच्छनैः ।

पादानतयोपादानं किमर्थमिति चेच्छन्दसां प्राधान्यात्सोमाहरणादितरच्छन्दोक्षराहरणेनेतरछंदोव्याप्त्या च सर्वसवनव्यापकत्वाज्जपे गायत्र्या एव प्राधान्यं गायत्रीसारत्वाच्च ब्राह्मणस्य गुरुतरां गायत्रीं हित्वा ततोन्यद्गुरुतरं न विद्यतेऽतएव परिव्राड्भ्यतिरिक्तैर्द्विजैर्गायत्र्येव त्रिषु कालेषु जप्या अक्षरपूर्वकान् चतुर्विंशत्यक्षरन्यासानखिलाश्चतुर्विंशतिमुद्राः देवेभ्यो मुदं रांतीति मुद्राः मनुदेवतां मन्त्रदेवतां ॥ १०१ ॥ बालां बालादित्यमण्डलमध्यस्थामिति त्रिभिर्ध्यानैस्त्रिषु कालेषु सार्वविभक्तिकस्तसिः आगच्छ वरदे देवीति ध्यात्वा सावधानस्तिष्ठन् ॥ २ ॥ प्राङ्मुखो गायत्रीमन्त्रार्थमनुसंदधानः शनैर्जपेद्गायत्रीमिति शेषः स च गायत्र्यर्थः संक्षेपतः प्रदर्श्यते तदिति परं ब्रह्मोच्यते 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति स्मृतेः प्रसवतीति सविता तस्य सर्गस्थितिप्रलयोपलक्षकसर्वप्रपंचोत्पादकत्वलक्षणाशेषद्वैतभ्रमाधिष्ठानज्ञापकस्य वरेण्यं सूक्ष्मबुद्धिग्राह्यं निरतिशयात्मकं स्वरूपं भर्गोऽविद्याकामकर्मादिदोषभर्जकं त्यक्ताशेषानर्थं देवस्य द्योतनात्मकस्य स्वयंप्रकाशस्याखिलभासकस्य 'न तत्र सूर्यो भाति' इति श्रुतेः धीमहि चिंतयामः यः प्रत्यगभिन्नः परमात्मा नः प्रत्यक्स्वरूपान् जापकान् धियः धिय एकत्वेपि वृत्तिभेदाद्बहुवचनं प्रचोदयात्प्रेरयेदिति दशपदार्थः एवं च सर्वसाक्षिकं सर्वद्वैतभ्रमाधिष्ठानं परमानंदरूपं निरस्तसमस्तानर्थं

सोंकारव्याहृतिं देवीं छिन्नपादां स्रजांशुके ॥ ३ ॥
मत्रकारो मननत्राणो तद्योगान्मंत्र उच्यते ।
जन्मविच्छेदपापघ्नो जपकारो तु तद्युजा ॥ ४ ॥
प्रोक्तो जपो हि यज्ञोयं सर्वयज्ञेषु सूत्तमः ।
वाचिकोसन्मानसः सन्रहस्यो मध्यमो जपः ॥ ५ ॥
शाखारेखाशङ्खमणिप्रवालस्फटिकैर्जपे ।
मुक्तापद्माक्षास्वर्णाक्षैर्दशोत्तरगुणं फलम् ॥ ६ ॥
प्रोक्षिता स्रक् सती मेरुलंघने स्रक्च्युतौ जपे ।
तंद्यादौ च जपाच्छुद्धिर्देवीं नामाग्रहग्जपेत् ॥ ७ ॥

स्वप्रकाशचिद्रूपं ब्रह्म चिंत्यमिति समुच्चयार्थः । एवं च सति ब्रह्मणः स्वविवर्तजडप्रपंचस्य रज्जुसर्पन्यायेनाध्यारोपापवादाभ्यां सामानाधिकरण्यरूपमेकत्वमुक्तं भवति एवं मंत्रार्थमनुसंदधानो जपेत् 'आवृत्तिरसकृदुपदेशात्' इति न्यायाद्यावत्साक्षात्कारं पुनःपुनरावर्तयेत् स्रजा माल्यांशुके वस्त्रे धृतया च्छिन्नपादामित्यनेन प्रतिपादमवसानं कार्यं ओंकारव्याहृत्या सह गायत्र्या जपः ॥३॥ मकारो मननत्रकारस्त्राणस्तद्योगान्मंत्रः जकारो जन्मविच्छेदः पकारः पापघ्नस्तद्योगाज्जपः ॥ ४ ॥ जपयज्ञः सर्वयज्ञेषूत्तमो भगवद्विभूतित्वात् 'यज्ञानां जपयज्ञोस्मि' इति स्मृतेस्तदकरणेल्पसुखोपि नृलोकोऽलभ्यः किंपुनरन्ये 'नायं लोकोस्त्ययज्ञस्य कुतोन्य' इति स्मृतेः वाचिकोधमः मानस उत्तमः रहस्योन्यैरश्रुतो मध्यमः ॥ ५ ॥ शाखाः करांगुल्यः रेखास्तत्पर्वाणि शाखादिभिरक्षांतैस्तन्मालाभिरिति यावत् जपे यथोत्तरगुणं फलं शाखाभिः संख्याने एकफलं रेखाभिर्दशगुणमेवमुत्तरोत्तरं ॥ ६ ॥ स्रङ्माला प्रोक्षिता संस्कृता चेत्सती जपे स्रक्च्युतौ मालापाते निद्रादौ प्राणायामं गायत्रीजपाच्छुद्धिः देवीं गायत्रीं ॥ ७ ॥ यतिः कुटी-

यतिर्जपेत्पडोंकारां सहस्रं चाष्टयुक्शतं ।
अन्योष्टाविंशतिं पंक्तिं नार्थार्थं तां जपेद्द्विजः ॥ ८ ॥
मैत्रैः सौरैरुपस्थाय वारुणैश्च क्रमात्सदा ।
जातवेदसे तच्छंयोस्त्रिर्नमो ब्रह्मणे इति ॥ ९ ॥
प्रणम्य दिक्कृत्यदेवविप्रान्सन्ध्यां विसृज्य च ।
गुरुं निषण्णं प्रागास्यं संमुखोत्राभिवादयेत् ॥ ११० ॥
कराभ्यां यथावामान्यकर्णौ स्पृष्ट्वा पदौ गुरोः ।
व्यस्ताभ्यां स्पृष्ट्वा शिरोंघ्र्योर्न्यसेत्तदभिवादनं ॥११॥
हृद्दृग्वाक्पत्कोरुवक्षःकरैर्देवान्नमेद्वरान् ।
ज्ञानल्पानपि सद्विप्रान्पाणिभ्यान्नाशुर्चान्नमेत् ॥ १२ ॥

चको वहूदश्च अन्यो ब्रह्मचारी गृही वनी चाष्टयुक्शतं जपेत् । अष्टाविंशातिवारं वाऽत्यशक्तश्चेत्पंक्तिं दशवारं द्विजो नार्थार्थं जपेत् ॥८॥ मैत्रैर्मित्रदेवताकैर्मित्रस्य चर्षणीधृत इत्येतैः प्रातः दिनस्य मित्रदैवत्यत्वात् सौरैरुदुत्यमित्यादिभिः सुर्यदेवत्यैः मध्याह्ने रात्रौ तु तत्वायामीति वरुणदेवताकैः रात्रेर्वरुणदैवत्यत्वात् सदा त्रिष्वपि कालेषु पुनर्जातवेदसे तच्छंयोरित्याभ्यामुपस्थाय नमो ब्रह्मण इति त्रिः परिदध्यात् ॥९॥ दिशः प्रागाद्यास्तत्पा इन्द्रादयः विप्रा ब्राह्मणाश्च तान्प्रणम्य उत्तमे शिखर इति संध्यां विसृज्य प्राङ्मुखमुपविष्टं गुरुं संमुख उपविश्यात्र संध्यायामन्यदा वाभिवादयेत् ॥११०॥ तद्यथा स्ववामदक्षिणकराभ्यां स्ववामदक्षिणकर्णौ स्पृष्ट्वा व्यस्ताभ्यां कराभ्यां गुरोर्वामदक्षिणपादौ वामदक्षिणकराभ्यां स्पृष्ट्वांघ्र्योः पादयोः शिरो न्यसेत्तदभिवादनं वदन्ति ॥११॥ हृन्मनः दृग्दृष्टिः वाक् वचनं पदौ पादौ कं शिरः उरो वक्षः करौ हस्तौ तैर्देवान्नमेत् वरान् श्रेष्ठान् वयसाऽल्पानपि ज्ञानतः साधून् विप्रांश्च पाणिभ्यां नमेत् अशुचीनशुद्धान् ॥ १२ ॥ कर्म-

कर्मस्थाग्न्यादिहस्तान्नमेत्स्वयं चाल्पकान्करात् ।
उद्वाहोर्ध्वं चरेत्सायं प्रातरौपासनं स्वयं ॥ १३ ॥
पत्नी वान्यतराग्रेन्यश्चेद्गत्वा प्रबोध्य तं ।
प्रादुष्कृताग्निं ध्यात्वालंकृत्य संस्कृत्य हौम्यकं ॥ १४ ॥
ज्वालायां समिधं हुत्वा प्रातः सूर्याय चाग्नये ।
सायं तूष्णीं तूभयत्र द्वितीयां जुहुयात्ततः ॥ १५ ॥
उपतिष्ठेत्स्वर्चिताग्निः सूर्याग्निमनुभिः क्रमात् ।
कायाभ्यां तूभयत्रात्र षष्ठिधान्यमिताहुतिः ॥ १६ ॥

स्थान् अग्निसमिदादिहस्तान्न नमेत् नत्वान्स्वयं चाशुचिः कर्मस्थोऽग्न्यादिहस्तश्च न नमेत् अल्पकान्क्षुद्रादीन्करादेकेन करेण 'मूर्खाणां त्वेकपाणिना' इति स्मरणात्तथाचारदर्शनाच्च विवाहानंतरं स्वयं सायंप्रातरौपासनं चरेत् ॥१३॥ अथवान्यश्चेदन्यतराग्रे दम्पत्योरेकतरस्याग्रतोन्यः पुत्रादिः 'पत्न्यपि वा पुत्राः कुमार्यन्तेवासी वा नित्यानुगृहीत' इति गृह्योक्तेः वेणुधमन्या न मुखेनान्यथा प्रादुष्कृताग्निं ध्यात्वा प्रादुष्करणं नामाग्नेः प्रज्वलनं तच्च सूर्योदयात्प्रागस्तात्प्राक् च कार्यं कालात्यये व्याहृतिहोमः 'यद्वा तदाहुर्यस्याग्निमनुद्धृतमादित्योभ्युदियाद्वाभ्यस्तमियाद्वा का प्रायश्चित्तिः' इति प्रश्नपूर्वकं 'हिरण्यं पुरस्कृत्य सायमुद्धरेज्ज्योतिर्वै हिरण्यमिति रजतमंतर्धाय प्रातरुद्धरेदेतद्रात्रिरूपम्' इति श्रुत्युक्तं प्रायश्चित्तं योज्यं परिसमूहनपरिस्तरणपर्युक्षणैरलंकृत्य होमद्रव्यं संस्कृत्य ॥ १४ ॥ ज्वालायां समिधं हुत्वा प्रातः सूर्योदयादासंगवं सूर्यास्तादशघटीपर्यंतं प्रातर्दिवा सूर्याय रात्रावग्नये चोभयत्र तूष्णीं प्रजापतय इति द्वितीयां जुहुयात् प्रातरित्युक्तेपि होमस्य सायमारम्भः ॥१५॥ परिस्तरणविसर्जनपूर्वकं परिसमूहनादिना स्वर्चितः अग्निर्येन सः सूर्यमंत्रैर्दिवा रात्रौ तु अग्निमंत्रैः उभयत्र कायाभ्यां हिरण्यगर्भः प्रजापत इत्याभ्यां चोपतिष्ठेत् अत्र षष्टिसंख्यामितसतुषधान्याहुतिः तण्डुलानां तु शत-

पयोदध्याज्यर्नीवारयवत्रीह्यादिहौम्यकं ।
गृह्यं परिचरेच्छ्रौताग्नीन्वापि ज्ञाततद्वृषः ॥ १७ ॥
नातीयाद्ब्राह्मणो यज्ञान्नित्यमासिकवार्षिकान् ।
नाहोतायाद्विना दानं शक्त्या दद्यात्किमप्युत ॥ १८ ॥
भगवंतं हरिं विष्णुं संस्मरेत्सर्वदासकृत् ।
संस्कृते सारे च्छन्ने स्वे गृहे निवसेद्गृही ॥ १९ ॥
भूः पूताप्युपलिप्ता चेत्पुनर्लेपेन शुद्ध्यति ।
तन्नित्यं वास्तूपलिपेत्प्रेताद्योलिप्तकेस्ति हि ॥ २० ॥
कांस्यांशुकेत्र गर्ह्ये गोविशा नैर्ऋतितो गृहं ।
उपलिप्य स्वलंकार्यं रंगवल्ल्यादिनान्वहं ॥ २१ ॥

संख्याकप्रस्थस्य चतुःषष्ट्यंशमिता वा कालात्यये चतुर्गृहीताज्येन व्याहृति-होमः संकटे समस्य होमः पक्षत्रयांतं वा पक्षहोमः पयआदि होमद्रव्यं एवं गृह्यं परिचरेच्छ्रौताग्नींश्च ज्ञातस्तयोर्धर्मो येन स विद्यां चाविद्यां चेति श्रुतेर्ज्ञा-नाभावंधं तमः प्रविशंतीति श्रुत्यानिष्टप्रतिपादनात् ॥ १७ ॥ नित्यान्पंच-यज्ञान् 'महायज्ञाश्च नित्याः स्युः संध्यावच्चाग्निहोत्रवत्' इति स्मृतेः मासिका दर्शादयः वार्षिका आग्रयणादयः 'यस्याग्निहोत्रम्' इति श्रुतेः किमपि धान्यफलादि ॥ १८ ॥ संस्मरेत्कर्मवैगुण्यापहृत्यै 'प्रमादात्कुर्वतां० यस्यस्मृ०' स्मृतिभ्यः वास्तुशांत्यादिना संस्कृते सारे सकपाटे भित्त्यादिभिश्छन्ने स्वगृहे गृही वसेत् लक्ष्मीरपैति सततं परगेहवासादिति पूर्वमेवोक्तं 'अकपा-टमनाच्छन्नमदत्तबलिभोजनं । गृहं न प्रविशेद्धीमानापदामाकरा हि स' इति ॥ १९ ॥ पवित्रापि भूमिरेकवारमुपलिप्ता चेत्पुनर्लेपेन शुद्ध्यति तदुक्तं 'सर्वत्र वसुधा पूता यत्र लेपो न विद्यते । यत्र लेपो भवेत्तत्र पुनर्लेपेन शुद्ध्यति' इति । तत्तस्माद्वास्तु वेश्मभूमिः ॥ २० ॥ अत्रोपलेपने कांस्यपात्रं वस्त्रं च गर्ह्ये गोमयेन नैर्ऋतिमारभ्यान्वहमहन्यहनि ॥ २१ ॥ गव्यं घृतादि चर्म ऐणेयं

स्थाप्यं गव्यं शिलाश्चर्म मणिर्धेनुश्चण्डयेन्नवः ।
त्रिसंध्येर्च्योऽसौ प्रातर्विस्तराच्चंदनादिना ॥ २२ ॥
मध्यान्हे निशि दीपैर्वा गोवज्जन्मान्यथा द्विज ।
गुर्वर्काग्न्यंब्वष्टधार्चा गोविप्रान्यतमार्चनं ॥ २३ ॥
कुर्यात्तिष्येजसामीप्यं शालिग्रामे तमप्युत ।
गुर्वाज्ञया भक्तिमान्यं पूजयेन्न प्रमादतः ॥ २४ ॥
देवो भक्तितपोयोगादृच्छत्यर्चनगौरवात् ।
बिम्बाभिरूप्यात्सामीप्यं भक्तिरेवात्र कारणं ॥ २५ ॥
नाश्रद्दधानोऽधिकारी संशयात्मात्र नास्तिकः ।
येभ्यो मातेति पुंगंधं निवार्यादाय चाखिलान् ॥ २६ ॥

मणिः शालग्रामः धेनुर्नवसूतिका गौः त्रिकालं देवः पूज्यः यद्वा विस्तरात्प्रातः मध्यान्हे चंदनादिपंचोपचारैः ॥ २२ ॥ निशि दीपैरारार्तिकैः अन्यथा जन्म गोवत्पशुवत् गुरुराचार्योऽर्कः सूर्योऽग्निरावसथ्यः श्रौतश्च अम्बूदकं तीर्थादि अष्टविधा प्रतिमाभिनतदेवताप्रतिकृतिः गौः प्रसिद्धा विप्रो वेदज्ञः एषामन्यतमस्यार्चनं ॥ २३ ॥ तिष्ये कलौ अजसामीप्यं विष्णुसान्निध्यं तमपि पूजयेत्स देवः॥२४॥ देवो हेतुत्रयात्सान्निध्यमृच्छति ततोप्यत्र भक्तिरेव कारणं ॥ २५ ॥ अतोत्र देवपूजनेऽश्रद्दधानः संशयवान् नास्तीति मतिर्यस्य स नास्तिको नाधिकारी यदुक्तं 'शोकाक्रांतः कृपाविष्टः श्रद्धया रहितः पुमान् । गुरुदेवद्विजातीनां पूजनं न समाचरेत्' इति देवा मनुष्यगन्धेभ्योपयांत्यतो 'येभ्यो मातैवापित्र' इति द्वाभ्यां पुंगंधं मनुष्यगन्धं निवार्याभवाख्याने तं तेभ्यो वै देवा अपैवाबीभत्संत मनुष्यगन्धात्त एते धाप्ये

---

१ सूर्याग्न्यादिप्रतिकेष्टदृष्टिर्न कार्या 'न प्रतीके न हि स' इति न्यायात् ब्रह्मदृष्टिरुत्कर्षादितिन्यायः पूर्वमेव प्रतिपादितः.

सम्भारानुपविश्याग्रे देवस्याप्पूरितं घटं ।
दक्षभागे निधायाब्जं प्रपूज्य प्रोक्ष्य तत्स्थलं ॥ २७ ॥
स्वं सम्भारांश्च भूभूतशुद्धिं कृत्वा यथायथं ।
प्राणान्प्रतिष्ठाप्य चांतर्बहिर्मातृकया न्यसेत् ॥ २८ ॥
तनौ देवेपि पुंसूक्तमन्त्रैश्चापि यथाक्रमं ।
करांघ्र्यूरुकटीनाभिहृद्ग्रीवादोर्मुखाक्षिके ॥ २९ ॥
एवं भूत्वा सुरोघ्यादिपात्राण्यप्पूरितानि च ।
संस्थाप्येशकलां हृत्स्थामापादतलमस्तकं ॥ १३० ॥
ध्यात्वांजलौ सुमगतां विभाव्यार्चागतां ततः ।
प्रकल्प्यार्चां देवरूपां साक्षान्मत्वा ततोर्चयेत् ॥ ३१ ॥

अन्तरदधत येभ्यो मातेवापित्व इति श्रूयमाणत्वात् ॥ २६ ॥ अब्जं शंखं ॥ २७ ॥ स्वमात्मानं भूशुद्धिं भूतशुद्धिं च तंत्रोक्तां अन्तर्मातृकाभिर्बहिर्मातृकाभिश्च न्यासं कुर्यात् जातावेकवचनं ॥ २८ ॥ पुरुषसूक्तमंत्रैः तनौ स्वशरीरे देवमूर्त्यां च सहस्रशी० पुरुष० आभ्यां करौ एतावा० त्रिपादू० आभ्यां पादौ तस्माद्वि० यत्पुरुषे० आभ्यामूरु तं यज्ञं० तस्माद्य० आभ्यां कट्यौ तस्माद्य० नाभिं तस्मादश्वा० हृदयं यत्पुरुषं० कण्ठं ब्राह्मणो० चन्द्रमा० बाहू नाभ्या आ० मुखं सप्तास्या० नेत्रे यज्ञेन० कं शिरः प्राण्यंगत्वाद्द्वंद्वैकवद्भावः न्यसेन्न्यासं कुर्यात् ॥ २९ ॥ 'ज्ञेयोंगे वामतः क्रम' इत्युक्तमेव 'देवो भूत्वा यजेद्देवम्' इति स्मरणादेवं न्यासादिना सुरो भूत्वा उदकपूरितानि पाद्यार्घ्याचमनस्नानपात्राणि हृत्स्थां जीवसंज्ञितामीश्वरकलां गुरूपदिष्टमूर्तित्वेनापादतलमस्तकं ॥३०॥ ध्यात्वांजलिस्थपुष्पगतां विभाव्य श्वासमार्गेणागतां भावयित्वा तत्पुष्पसमर्पणेनार्चागतां प्रतिमाविष्टां प्रकल्प्य तामर्चां प्रतिमां साक्षाद्देवरूपां मत्वा ततो यजेत्पूजयेत्

सम्पूज्य पीठद्वाराणि मंत्रतंत्रविधानतः ।
पुंमंत्रैर्वाह्वानपीठपाद्यार्घ्याचमनाप्लवान् ॥ ३२ ॥
वस्त्रे सूत्रे गंधपुष्पे धूपदीपाशनादिकं ।
नतिप्रदक्षिणापुष्पांजलीन्भक्त्यार्पयेत्क्रमात् ॥ ३३ ॥
(क्षेपकः) यजेत्पौराणिकैर्मंत्रैः स्त्रीः शूद्रश्च द्विजोदितैः ।
सम्भवे भक्त्याह्वादौ दद्यात्पंचामृतानि च ।
भूषाः सुभोगा गंधार्घ्यमशनन्नं चतुर्विधं ॥ ३४ ॥
राजोपचारताम्बूलदक्षिणारार्तिकैः फलैः ।
स्तोत्रैर्गीतैर्नृत्यवाद्यैस्तोषयेद्द्विजभोजनैः ॥ ३५ ॥
घण्टानादं चरेदादौ स्नाने धूपप्रदीपयोः ।
दद्यादाचमनं स्नाने नैवेद्ये वस्त्रसूत्रयोः ॥ ३६ ॥
जलं प्रत्युपचारं च शङ्खाम्बीशं विनाप्लुतौ ।
स्वारामारण्यक्रयात्तं पुष्पं सन्मध्यमं त्वसत् ॥ ३७ ॥

॥३१॥मंत्रतंत्रविधानेन दक्षिणमार्गेण पीठं द्वाराणि दिशश्च सम्पूज्य पुरुषसूक्तमंत्रैर्वा सहस्र० आह्वानं १ पुरुष० पीठमासनं २ एतावा० पाद्यं ३ त्रिपाद्० अर्घ्यं ४ तस्माद्वि० आचमनं ५ यत्पुरु० स्नानं ६ ॥ ३२ ॥ तं यज्ञं० वस्त्रे ७ तस्मा० सूत्रे यज्ञोपवीते ८ तस्मा० गन्धं ९ तस्माद० पुष्पं १० यत्पु० धूपं ११ ब्राह्मणो० दीपं १२ चन्द्रमा० अशनादिनैवेद्यं १३ नाभ्या० नतीर्नमस्कारान् १४ सप्ता० प्रदक्षिणा १५ यज्ञेन० पुष्पांजलिं १६ एवं भक्त्या क्रमेणार्पयेत् ॥ ३३ ॥ (क्षे० ) स्त्रीः शूद्रश्च भक्तिमान् द्विजोक्तैः पौराणिकैर्मंत्रैः न वैदिकैः ॥३४॥ ३५ ॥ आदौ पूजारम्भे ॥३६॥ आप्लुतावभिषेके शिवं विनान्यत्र शंखाम्बु दद्यात् स्वोद्यानलब्धं पुष्पमुत्तमं आरण्यं मध्यमं क्रयात्तमधमं ॥ ३७ ॥ कीटादि-

तद्वच्छ्वेतारक्तकृष्णं वर्ज्यं पर्युषितं सुमं ।
सच्छिद्रं जन्तुयुक् शीर्णं कीटाद्यात्तं स्वयं च्युतं ॥३८॥
समलं वामहस्तांघ्रिस्पृष्टं क्षालितमम्बुनि ।
बकुलाब्जाशोकजातीदूर्वाबिल्वं शमी कुशः ॥ ३९ ॥
तुलसी करवीरं च मल्लिकाशोकमुत्तमं ।
कोविदारार्कधत्तूरशाल्मलीकुटजैर्हरिः ॥ १४० ॥
नार्च्यो गणेशस्तुलस्या दूर्वयार्येश्वरोऽसितैः ।
रक्तैः केतकनिम्बाद्यैर्बिल्वं श्वेतसुमं प्रियम् ॥ ४१ ॥
दूर्वा गणेशस्य विष्णोस्तुलसीत्यादि सर्वशः ।
ज्ञात्वा पुष्पाणि देयानि श्रद्धया देवतुष्टये ॥ ४२ ॥
हुत्वा पुंसूक्तेन दत्वा पुष्पाणि प्रार्थयेद्धरिं ।
मंत्रं जपेद्यथाशक्ति भक्त्या तद्गतहृद् द्विजः ॥ ४३ ॥
द्विजदेवांघ्र्यब्जतीर्थं पेयं धार्यं च मूर्धनि ।
चतुर्धाध्ययनं कुर्यात्स्ववृत्त्या पोष्यपोषणम् ॥ ४४ ॥

भक्षितं ॥ ३८ ॥ ३९ ॥ हरिर्न पूज्यः ॥ १४० ॥ तुलस्या गणेशो न पूज्यः आर्या देवी ईश्वरः शिवः असितैः कृष्णैः रक्तैः केतकनिम्बाद्यैश्च न पूज्यः शिवस्य बिल्वं श्वेतपुष्पं प्रियम् ॥ ४१ ॥ ४२ ॥ नैवेद्यान्ते पुरुषसूक्तेन प्रत्यृचं चरुणाज्येन वा हुत्वा तथैव प्रत्यृचं पुष्पाणि दत्वा हरिं सूक्तैः स्तोत्रैर्वा प्रार्थयेत् तद्गतहृत्तदेकचित्तः भक्त्या यथाशक्ति गुरूपदिष्टं मंत्रं जपेत् द्विज इत्यनेनायं त्रैवर्णिकविषयः शूद्रेण तु ब्राह्मणोदितैः पूजनमेव कार्यं नामसंकीर्तनस्मरणश्रवणेषु तस्याप्यधिकारः ॥ ४३ ॥ पूर्वं ब्राह्मणचरणतीर्थोदकं पश्चाद्देवचरणतीर्थं च पेयं मूर्धनि मूर्ध्ना धार्यं अध्ययनाध्यापनतदर्थविचारप्रवचनरूपं चतुर्धाध्ययनं ॥ ४४ ॥ स्ववर्णभेदोक्तया

स्ववृत्त्या जीवनाभावाद्गुर्वापद्यन्यवार्तया ।
जीवेतानिंद्यया नैव हीनवृत्त्या कुटुम्ब्यपि ॥ ४५ ॥
कृतसन्ध्यः कृतोपस्थो जानुस्थसकुशांजलिः ।
सोंकारव्याहृतिं देवीं रोदसीदृक्तदृग्जपेत् ॥ ४६ ॥
तां पच्छोर्धर्चशः सर्वां वेदान्सांगान्स्वशक्तितः ।
तिष्ठन्नासीनो व्रजन्वानध्यायेऽल्पं जपन्ततः ॥ ४७ ॥
त्रिर्नमो ब्रह्मण इति तर्पयेत्साक्षतांजलिः ।
देवानृषीन् तिलैः पितॄन्स्वगृह्योक्तविधानतः ॥ ४८ ॥

वृत्त्या पोष्याणामग्निदेवातिथिपितृभृत्यभार्याणां पोषणं महापद्यनिंद्यया वृत्त्या जीवेत कुटुम्ब्यपि हीनवृत्त्या न जीवेत ब्राह्मणस्य प्रतिग्रहस्तदसंभवेऽध्यापनयाजनेऽथवायाचितयायावरशिलोंछनानि 'कुसूलकुंभिधान्यो वा त्र्याहिकः श्वस्तनोपि वा । कलौ द्विजो न हि भवेद्श्ववृत्तिः कथंचन' इति । यायावरं प्रत्यहं धान्ययाञ्चा द्वादशाहपर्याप्तान्नं कुसूलं षड्दिनपर्याप्तं कुम्भिधान्यं एभिर्निर्वाहो न भवेच्चेत् क्षात्रवृत्त्या वैश्यवृत्त्या वा कुटुम्बभरणं उक्तं च 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इति अन्यवृत्त्यादिविचारः स्मृत्यादाववगंतव्यः ॥४५॥ कृतमध्याह्नसन्ध्यावंदनः कृतोपस्थः वामोरूपरि स्थापितदक्षिणपादः तज्जानुस्थितः सकुशांजलिर्यस्य कैश्चित्सरसब्रह्मकरणार्थं सोदकांजलिरुक्तः आश्वलायनस्तु 'दक्षिणोत्तरौ पाणी सन्धाय पवित्रवन्तौ विज्ञाय तेषां वा एष औषधीनां रसो यद्दर्भाः सरसमेव तद्ब्रह्म करोति' इत्याह उत्सर्जनोपाकर्मणोस्तु 'उदपात्रे दर्भान्कृत्वा ब्रह्मांजलिकृतो जपेत्' इति विशेषमाह देवीं गायत्रीं ॥ ४६ ॥ पच्छोर्धर्चशः सर्वां वेदादींश्च रोदसीदृक्तदृक् द्यावापृथिव्योः संधिमीक्षमाणो जपेत् ॥ ४७ ॥ ४८ ॥ कर्म सन्ध्यावंदनं यमा-

यज्ञादिवर्ज्यमाशौचे कर्म मानसिकं चरेत् ।
यमाग्निपितृभे नंदाशुक्रार्काहे जनुर्दिने ॥ ४९ ॥
मांगल्येऽब्दलदर्धार्धं विवाहव्रतचौलतः ।
तिलैर्नैमित्तिकमृते तर्पयेन्न गृहे तु न ॥ ५० ॥
भीष्मं मावसिताष्टम्यां दीपाल्यां तर्पयेद्यमं ।
नित्यैर्नैमित्तिकैः श्राद्धैः सत्पुत्रः पुत्रतां व्रजेत् ॥ ५१ ॥
त्रियज्ञाढ्यं वैश्वदेवं कुर्यात्सूनाघनुत्तये ।
ध्याते कुण्डस्थापितेऽग्नौ दीप्तेन्नाद्याहुतीर्हुनेत् ॥ ५२ ॥

ग्निपितृभे भरणीकृत्तिकामघासु नन्दा प्रतिपत्षष्ठ्यैकादश्यः अर्को रविवारः जन्मतिथ्यादिश्च ॥ ४९ ॥ विवाहेऽब्दं व्रते उपनयने षण्मासं चौले त्रिमासं तिलैर्न तर्पयेत् अयं नियमस्त्रिपुरुषसपिण्डानामेव नैमित्तिकं विना गृहे तिलतर्पणं वर्ज्यं ॥५०॥ 'वैय्याघ्रपादगोत्राय सांकृत्यप्रवराय च । अपुत्राय ददाम्येतज्जलं भीष्माय तर्पणे' इति. भीष्मं यमधर्मराजमृत्य्वंतकवैवस्वत-कालसर्वभूतक्षयोदुम्बरदध्ननीलपरमेष्ठिवृकोदराचित्रचित्रगुप्तेति नामभिर्यमं 'जीवत्पितापि कुर्वीत तर्पणं यमभीष्मयोः' इति नित्यैः अमायुगमनुक्रांति-धृतिपातमहालयाष्टकान्वष्टकापूर्वेद्युरिति षण्णवतिश्राद्धैः नैमित्तिकैः गया-तीर्थाद्यागमनिमित्तैः यदुक्तं 'जीवतो वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता' इति ॥ ५१ ॥ देवयज्ञ-भूतयज्ञपितृयज्ञाढ्यं एषां लक्षणानि 'यदग्नौ जुहोति स देवयज्ञो यद्बलिं करोति स भूतयज्ञो यत्पितृभ्यो ददाति स पितृयज्ञो यत्स्वाध्यायमधीते स ब्रह्मयज्ञो यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञ' इति 'कण्डणी पेषणी चुल्ली उदकुम्भी च मार्जनी । पंचसूना गृहस्थस्य ताभिः स्वर्गं न विंदति' इति तद्दोषपरिहारार्थमात्मसंस्कारार्थं च ॥५२॥ अस्य प्रातरादिक्रमः अतिथि-

प्रातः सायं बलीन्दद्यात्पितृभ्योपि बहिर्बलिं ।
भूलाद्युद्देशतः क्षिप्त्वा कांक्षेदतिथिमागतं ॥ ५३ ॥
क्रमप्यभ्यर्च्य शक्त्यान्नं देयमीश्वरतुष्टये ।
नाद्यान्तांस्त्वन्नं यतौ तत्स्वल्पमप्याद्रिमिन्धुवत् ॥ ५४ ॥
बलावनुद्धृते नाद्यान्नोद्धरेच्च स्वयं बलिम् ।
नित्यं श्राद्धं चरेद्दान्नं दद्याद्द्याच्च पोष्ययुक् ॥ ५५ ॥
मन्त्रवत्परिषिच्यार्द्रहस्तांघ्र्यास्योविदिङ्मुखः ।
दक्षभागे बलीन्दत्त्वाहं वैश्वानर इत्यमुम् ॥ ५६ ॥
स्मृत्वापो मंत्रवत्प्राश्य हुतप्राणाहुतीर्ग्रसेत् ।
धृतपात्रः प्रागमंत्रैरजावद्भोजनं चरेत् ॥ ५७ ॥

नाकांक्षेत् ॥ ५३ ॥ आगतमतिथिं कमप्यज्ञातनामगोत्रमपि प्रथमं उदकं ततोन्नं पुनरुदकमिति यतौ यतये दत्तं फलश्रवणं त्ववश्यं दानार्थं अदत्ते प्रत्यवायः स्मर्यते 'यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ॥ ५४ ॥ पोष्ययुक् अद्यात् ॥ ५५ ॥ रात्रौ 'ऋतं त्वा सत्येन परिषिंचामि' दिवा 'सत्यं त्वर्तेन परिषिंचामि' इति मन्त्रवत्परिषिच्यार्द्रहस्तपादमुखः विदिश्याग्नेयादिकोणे मुखं यस्य तथा न भवतीति सः चित्रादिभ्यो यथोपदेशं बलीन्दत्वाऽहं वैश्वानर इति मंत्रार्थं 'वैश्वानरः साधारणशब्दविशेषात्' इति न्यायसिद्धार्थभूतमात्मानममुं प्रत्यग्रूपम् ॥ ५६ ॥ स्मृत्वाऽमृतोपस्तरणमसीत्यपः प्राश्य 'यद्वै प्राणिति स प्राणो यदपानिति सोपानोथ यः प्राणापानयोः सन्धिः स व्यान' इत्यादितत्स्वरूपविचारपूर्वकं 'श्रद्धायां प्राणे निविष्टोमृतं जुहोमि शिवोमाविशाप्रदाहय' इत्यादिपंचप्राणमन्त्रैर्हुतप्राणाहुतीरदंतलग्ना ग्रसेत् वामहस्तेन धृतं पात्रं येन सोऽजावच्छीघ्रं भोजनं चतुर्विधान्नं चरेद्भक्षेत् ॥ ५७ ॥ पात्रधारण-

पात्रभाग्यमौने तु प्राणाहुत्यूर्ध्वमैच्छिके ।
तैजसे राजते हैमे ताम्रे जंब्वाम्रचम्पके ॥ ५८ ॥

रम्भामधूककुडजपनसोदुम्बरच्छदे ।
भोक्तव्यं मण्डलोर्ध्वस्थे विधवाव्रतिभिक्षुभिः ॥ ५९ ॥

न तैजसेखिलैर्वल्लीपलाशार्कवटादिषु ।
पीठस्थोप्यासनारूढः प्रसृतप्रोष्टपान्न तु ॥ ६० ॥

नार्भैर्वध्वोद्वाहमृते नाद्याद्दुष्टैकपंक्तिगः ॥
द्वार्भस्माग्न्यप्स्तंभमार्गैर्भिद्यात्पंक्तिं तु संशये ॥ ६१ ॥

नाद्यात्पाकाग्निदेवासद्गृहे सन्ध्यातिरात्रिषु ।
पीतशेषं ग्रासशेषं रात्रिपर्युषितं विना ॥ ६२ ॥

तैलाज्यपक्वं शूद्रान्नमुदक्यादिविलोकितं ।
केशकीटादियुक्पक्वं व्याद्युच्छिष्टं सदा त्यजेत् ॥ ६३ ॥

कुसुम्भालाबुवृंताककोविदारवटादिकं ।
कुस्थानोत्थान्नशाकादिपलाण्डुलशुनाद्यसत् ॥ ६४ ॥

मौनयोः प्राणाहुत्यूर्ध्वं विकल्पः ॥ ५८ ॥ मण्डलोर्ध्वस्थे चतुष्कोणमण्डलोपरि स्थापिते विधवाव्रतियतिभिः ॥५९॥ कांस्ये न भोक्तव्यं अखिलैः सर्वैरपि वल्लीपलाशार्कवटादिपत्रेषु न भोक्तव्यं पीठस्थ आसनारूढपादो न प्रसृतपादो न प्रोष्ठपादो न ॥ ६० ॥ न बालैः सहैकपात्रे विवाहं विना न भार्यया च दुष्टसंशये पंक्तिं द्वारादिभिर्भिद्यात् ॥ ६१ ॥ ६२ ॥ तैलाज्यपक्वं विना रात्रिपर्युषितं वर्ज्यं उदक्या रजस्वला व्याद्युच्छिष्टं पक्ष्याद्युच्छिष्टम् ॥ ६३ ॥ ६४ ॥ सती सवत्सा चतुस्तनी गौर्दुलायी महिषी च

सद्गोलुलायींदुग्धादि सदन्यासां तु गर्हितं ॥
कांस्येसन्नारिकेलेक्षुरसो गव्यं च ताम्रके ॥ ६५ ॥

गुडः सद्ध्यार्द्रकोसन्केवलं लवणं त्वसत् ।
श्वोदक्यापतिताद्यारश्रवणे तद्विलोकने ॥ ६६ ॥

भुक्तौ परस्परस्पर्शे नाद्यात्पंक्तिस्थ उत्थिते ।
गुरून्विनोलूखलादेर्नाद्यावद्ध्वनि द्विज ॥ ६७ ॥

नष्टे दीपे न भोक्तव्यं न मूत्राद्युत्सृतौ भुजिः ।
लेह्याद्यसद्धस्तदत्तं नोच्छिष्टं भाजने न्यसेत् ॥ ६८ ॥

ग्रसेदास्याविकारेण ग्रासानष्टौ यतिर्वनी ।
षोडश द्वात्रिंशदन्यो वर्णीष्टं मधुरं द्रवम् ॥ ६९ ॥

प्राङ्मध्येम्लादिकठिणं तिक्ताद्यन्ते द्रवं ह्यपि ।
सर्वं सशेषमश्नीयात्पायसाज्याब्धिजैर्विना ॥ ७० ॥

अन्यासां खरोष्ट्राविकादीनां कांस्यपात्रे नारिकेलेक्षुरसोऽसत् ताम्रपात्रे गव्यं दुग्धादि असत् ॥ ६५ ॥ दधियुक्त आर्द्रकयुक्तश्च गुडोऽसन् श्वा प्रसिद्धः उदक्या ऋतुमती पतितो जातिभ्रष्ट आदिशब्दात्सप्तांत्यजा म्लेच्छ-यवनोडुंबाः एषां शब्दश्रवणे तद्विलोकने जाते वा ॥ ६६ ॥ गुरून्विना पंक्तिस्थ एकस्मिन्नप्युत्थिते नाद्यात् उलूखलकलहवरट्टादेर्यावद्ध्वनि तावन्नाद्यात् ॥ ६७ ॥ भोजनसमये मूत्राद्युत्सर्गे जाते न भुजिर्भोजनं न कार्यं ॥ ६८ ॥ वनी षोडशान्यो गृहस्थो द्वात्रिंशत् वर्णी ब्रह्मचारी यथेष्टं मधुरं द्रवं च ॥ ६९ ॥ प्राक्प्रथमं भोक्तव्यं मध्येऽम्लादिकठिणं च अन्त्ये तिक्तादिद्रवं च अब्धिजं लवणं ॥ ७० ॥ करतलेन भुक्तं प्रसृतांगुलिभि-

नाद्याद्व्रताहेर्कपर्वनक्तं भूताष्टमी दिवा ।
तलप्रसूतशाखाभिर्भुक्तं फूत्कारतोप्यसत् ॥ ७१ ॥
त्यक्त्वोच्छिष्टं क्षितौ मन्त्रात्पीतापोशनशेषकं ।
कौ सिक्त्वा रौरव इति मंत्राच्छुद्धकरास्यपात् ॥ ७२ ॥
हस्तोद्धृष्टाम्बु सिक्त्वाक्ष्णोर्जपेच्छर्यातिमित्यपि ॥
आतापिं चेति ताम्बूलं सत्पंचत्र्यैकपूगयुक् ॥ ७३ ॥
सांगं प्राग्ब्रह्मणे दद्यादद्यान्नादोधवा यतिः ।
चूर्णाञ्यग्रशिरोनं सत्पर्णं चाहोवशेषकम् ॥ ७४ ॥
नयेत्पुराणमननात्ततो नक्तं कृतक्रियः ।
स्वपेद्यामोर्ध्वं द्वियामं विष्णवर्पितसमक्रियः ॥ ७५ ॥

भुक्तं फूत्कारशब्देन भुक्तं चासत् ॥७१॥ यजमानकुल इति मन्त्रेणोच्छिष्टं क्षितौ त्यक्त्वामृतापिधानमसीत्यनेन पीतस्यापोशनस्य किंचिच्छेषं कौ पृथ्व्यां रौरवे पूयनिलय इति सिक्त्वा प्रक्षालितहस्तमुखपादः षोडशगण्डूषैर्मुखशुद्धिः ॥ ७२ ॥ 'शर्यातिं च सुकन्यां च च्यवनं शक्रमश्विनौ । भोजनान्ते स्मराम्येतान्यतश्चक्षुर्न हीयते । आतापिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयत्वशेषं। सुखं ममैतत्परिणामसंभवं यच्छंत्वरोगं मम चास्तु देह' इति । पंचभिस्त्रिरेकेन वा पूगेन युक्ताम्बलं सच्छोभनं न समपूगयुक्तं दद्याद्द्याच्चेत्यर्थः ॥ ७३ ॥ सांगं त्रयोदशपदार्थोपेतं पूर्वं ब्राह्मणाय दद्यात् ततः स्वयं अद्यात् अदस्ताम्बूलं विधवा यतिश्च नाद्यात् नागवल्लीपर्णं चूर्णमूलाग्रशिराराहितं सत् दिनशेषं नयेदित्यग्रिमेण सम्बंधः ॥ ७४ ॥ कृता सन्ध्यावंदनोपासनादिक्रिया येन मध्यमयामद्वयं स्वपेत् विष्णवेर्पिताः समाः क्रिया येन सः 'यत्करोषि यदश्नासि० तत्कुरुष्व मदर्पणम्' इति स्मृतेः

सुमुहूर्तकृते तल्पे स्तुवन्निट्सुखशाय्यहीन् ।
त्रिसन्ध्ये न स्वपेद्भूत्यां धान्येन्ध्यमरगोगृहे ॥ ७६ ॥
न श्मशानाध्ववल्मीकवोग्देश उदक्शिराः ।
नग्नो नोर्ध्वं देवगुर्वोः प्रवासे प्राक्पदः स्वपेत् ॥ ७७ ॥
कार्या निशाद्ययामांतं संकटांतरिता क्रिया ।
नैशा निशीथपर्यंतं प्रायश्चित्तं ततः परं ॥ ७८ ॥
कर्मवैगुण्यादिदोषे लोपादावपि सर्वशः ।
प्रायश्चित्तं चरेद्विद्वान्यथावन्नान्यथा शुचिः ॥ ७९ ॥
स्वर्क्षे स्वजायामृतूर्ध्वं शुद्धामुपगमेद्रहः ।
प्राक्चतुर्निट्श्राद्धतत्प्राग्दिनाहोव्रतपर्वसु ॥ ८० ॥
जन्माहाद्यष्टमीभूतमूलांत्यपितृभेषु नो ।
केश्चिदुक्तं दशाब्दोर्ध्वं वर्णी स्यादृतुगः सदा ॥ ८१ ॥

॥ ७५ ॥ निट् रात्रिः 'अगस्तिर्माधवश्चैव मुचकुंदो महामुनिः । कपिलो मुनिरास्तीकः पंचैते सुखशायिन' इति अहयः सर्पास्तांस्तन्मंत्रैः स्तुवन् भूत्यां भस्मनि अह्नि दिवसे देवालये गोष्टे च ॥ ७६ ॥ देवगुर्वोरूर्ध्वमुच्चप्रदेशे ॥ ७७ ॥ निशाद्ययामपर्यंतं क्रिया दिवा विहिता कार्या नैशा रात्रिविहिता तु निशीथपर्यंतं कार्या सौरजपो ब्रह्मयज्ञश्च रात्रौ वर्ज्यः ततः संकटादिना कर्मलोपे प्रायश्चित्तं ॥ ७८ ॥ कर्मवैगुण्यमंगवैकल्ये यथावद्यथोक्तं ॥ ७९ ॥ स्वर्क्षे शोभने नक्षत्रे ऋतूर्ध्वं ऋतुदर्शनादिनचतुष्टयोर्ध्वं स्वजायामित्यादिना परिसंख्या विधीयते पूर्वाश्चतस्रो निशाः श्राद्धतत्पूर्वदिने अहो दिवा व्रतमेकादश्यादिपर्व दर्शादि ॥ ८० ॥ जन्मतिथ्यादौ भूते चतुर्दश्यां मूलरेवतीमघासु न दशाब्दोर्ध्वं रजस्वलात्वमुक्तं अतस्तत्पूर्वं कन्योद्वाहः कार्यः ऋतुगामी सदा ब्रह्मचारी ॥ ८१ ॥ नोपगच्छेत् पत्नी-

द्वेषादिनोपगच्छेद्यो नर्तौ स भ्रूणहाप्यृतौ ।
यो विदेशं व्रजेद्वंध्यां कन्यापुत्रान्विताम‍ृते ॥ ८२ ॥

षोडशाहमृतुः कन्याऽसमेत्राह्नि समे सुतः ।
भवेन्निषेकसमये यादृक्चित्तविकल्पना ॥ ८३ ॥

भ्रूणस्तद्वदतस्ताभ्यां सत्वं धार्यं हिताप्तये ।
पितृत्राता हि सत्पुत्रः प्रायोपुत्राः पतंत्यधः ॥ ८४ ॥

पितृतारक एकोपि सत्पुत्रोत्र ध्रुवादिवत् ।
किं कार्यं बहुभिर्दुष्टैर्धार्तराष्ट्रशतोपमैः ॥ ८५ ॥

तारकोत्रैवमाचारः प्रोक्तः शाक्त्यादिसंमतः ।
विचाराचारमादाय कर्म कुर्वन्सुखी भव ॥ ८६ ॥

उभयीसिद्धिभाजस्ते य आचारं चरंत्यमुं ।
स्वाचारहीना दण्ड्याः स्युर्ब्राह्मणास्तु विशेषतः ॥८७॥

मिति शेषः ऋतौ विदेशं व्रजेत्सोपि भ्रूणहा नियमपक्षेपि रागिणस्तदतिक्रमे प्रत्यवाय एव न तु विरागिणः ॥ ८२ ॥ स्त्रीणां षोडशाहमृतुरत्नतौं असमे दिने कन्या समदिने पुत्रः निषेकसमये मैथुनकाले तद्वत्कल्पनानुरूपः भ्रूणोर्भको भवेत् ॥ ८३ ॥ अतो हेतोस्ताभ्यां दम्पतीभ्यां हितातये सत्पुत्रोत्पत्तये सत्वगुणविशिष्टं चित्तं धार्यं अपुत्राः पुत्रशून्या अधो व्रजन्त्यज्ञा न तु ज्ञानिन इति ज्ञापनाय प्राय इत्युक्तं ॥ ८४ ॥ धार्तराष्ट्रा दुर्योधनादयः ॥ ८५ ॥ 'अनाचारस्तु मालिन्यमत्याचारस्तु मूर्खता । विचाराचारमादाय कर्म कुर्वन्सुखी भवेत्' इति स्मृतेर्विचार एव सुखदः ॥ ८६ ॥ उभयीमैहिकीमामुष्मिकीं च सिद्धिं भजंति त उभयीसिद्धिभाजः ॥ ८७ ॥

इति गुरुमुखलब्धं धर्ममेनं चरन्स द्विज इह सुखमिष्टं साधु भुक्त्वाऽप मोक्षं। तत उदित इहासौ निष्प्रपंचोपि धर्मो विभुरपि लघुसिध्यै भक्तियोगं ततान ॥ १८८ ॥

इति श्रीगुरुचरिते कर्मयोगे कर्मकाण्डकथनं नाम पंचमोऽध्यायः५

आदितोष्टादशाऽध्यायः ॥ १८ ॥

इष्टमभीष्टं साधु धर्म्यं सुखं भुक्त्वा चित्तशुद्धिद्वारा मोक्षं प्राप तस्मिन् कलौ कालवशात्कुतोपि लघुसिद्ध्यै क्षिप्रं विज्ञानप्राप्तये भक्तिरूपमुपायं ततान एवं क्रियाकारकफलादिरूपः प्रपंचो निष्प्रपंचात्मन्यध्यस्तस्तस्यात्मनो याथात्म्यप्रदर्शनार्थमधिकारिभेदेन चित्तशुद्ध्यर्थमिदं कर्मकाण्डमुपन्यस्तमिति ॥ ८८ ॥

इति श्रीगुरुचरिते टीकायामष्टादशाऽध्यायः ॥ १८ ॥

॥ श्रीगुरुदेवदत्त ॥

---

# अथैकोनविंशोऽध्यायः

॥ नामधारक उवाच ॥

कर्मयोगं ज्ञानयोगसहायं चित्तशोधनं ।
उक्त्वापि भगवान्कस्मात् भक्तियोगं जगौ वद ॥ १ ॥

॥ सिद्ध उवाच ॥

भक्तिरेवानुत्तमात्र सर्वसाधनकारिणी ।

श्रीगणेशाय नमः ॥ अथैकोनविंशोऽध्यायः ॥ एवं पंचभिरध्यायैः प्रोक्ता नित्यक्रिया यथा ॥ पवित्रत्वं योग्यता च नान्यथेह द्विजन्मनः ॥ १ ॥ श्रद्धाभक्तिध्यानयोगादवेहीति श्रुतेरियं ॥ शुद्धांतःकरणानां च ध्यानार्थं भक्तिरुच्यते ॥ २ ॥ ऊनविंशेन्नपूर्तिश्च वंध्यायाः पुत्रसम्भवः ॥ कथ्यते शुष्ककाष्ठस्य विस्तारश्च द्विजोद्धृतिः ॥ ३ ॥ पूर्वकाण्डे सारं सद्गतिदं वक्ष्ये सुखदस्तूभयत्र सः। उभयीसिद्धिभाजस्ते य आचारं चरंत्यमुमित्यादिभिर्मोक्षमुक्त्वापि किमर्थं भक्तियोगं ततानेति पृच्छति कर्मयोगमिति ॥ १ ॥ उत्तरमाह भक्तिरिति प्रथममसंगतया भगवदुद्देशेन स्वाश्रमोचितकर्मानुष्ठानं ततो महत्सेवा ततस्तत्कृपा ततस्तद्धर्मश्रद्धा ततो भगवत्कथाश्रवणं ततो भगवति रतिस्तया च देहद्वयविवेकज्ञानं ततो दृढा भक्तिस्ततो भगवत्तत्त्वज्ञानं ततस्तत्कृपया सर्वज्ञत्वादिभगवद्गुणाविर्भावः इति क्रमोस्त्यतो भक्तिरेवानुत्तमा प्रधानेति पाठः सर्वसाधनकारिणी च कर्मापि तथाविधमिति चेन्न तस्य प्राथम्यात् तदपि तत्त्वज्ञेनाप्यभक्तेनानुष्ठितं चेन्मोघं निरर्थकमेवेति 'अंधं तमः प्रविशंति' इति श्रुतेः तर्हि 'कर्मणा पितृलोक' इति श्रुतेरभक्तेनानुष्ठितं कर्म तत्त्वज्ञेन वानुष्ठितं कथं मोघं कर्मेति चेन्मोघशब्देन

कर्मज्ञस्याप्यभक्तस्य मोघं कर्मेत्यथाब्रवीत् ॥ २ ॥

त्रिभिर्योगपथैरेव परस्परसहायकैः ।
ब्रह्माद्वैतं समं शान्तं गम्यते नैकयोगतः ॥ ३ ॥

श्रद्धालुः सात्विको भक्तो नितरां भगवत्प्रियः ।
सकार्ममपि तद्भिन्नं शश्वत्क्षिपति दुर्भवे ॥ ४ ॥

परमपुरुषार्थालाभरूपनिरर्थकता प्रतिपादिता पितृलोकादिफलस्य नश्वरत्वात् 'तद्यथेह कर्मचितो लोकः क्षीयते' इत्यादिन्यायोपबृंहितश्रुत्याऽनित्यत्वप्रतिपादनाद्भगवत्प्रसादलब्धस्य ज्ञानफलस्य नित्यत्वप्रतिपादनाच्च 'नान्यः पंथा विद्यतेऽयनाय'। 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया'। 'भजतां प्रीतिपूर्वकं ददामि बुद्धियोगं तं' 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्वत' इत्यादिप्रामाण्याद्भक्त्यैकगम्यो मोक्ष इति हेतोरथ चित्तशुद्धिप्रधानभूतकर्मकाण्डकथनानन्तरं ज्ञानप्रदभक्तियोगं श्रीगुरुरब्रवीत् ॥ २॥ अतः परस्परसहायकैस्त्रिभिर्योगपथैरात्मप्राप्त्युपायभूतमार्गैर्ब्रह्म गम्यते नैकयोगतः समीचीनेन कर्मयोगेन तु चित्तशुद्धिरेव तथैवागमवदाचार्यप्रसादादपरोक्षं यद्यप्यात्मनो ज्ञानमुत्पद्यते तथाप्यसंभावनाविपरीतभावनातिरस्कृतत्वान्मलिनचित्तेषु परोक्षमिव भवतीति नापरोक्षसंस्कारभ्रमनिवृत्तिसमर्थं भगवत्परिचर्यया तु सम्यगमलचित्तानां तत्प्रसादलब्धापरोक्षज्ञानानां अयत्नत एव करकलितो मोक्षः 'यमेवैष वृणुते तेन लभ्य' इति 'यस्य देवे परा भक्तिः' इत्यादिश्रुतिभ्यः ॥ ३ ॥ अन्यच्च श्रद्धालुरिति 'मय्यावेश्य मनो ये माम्' इत्यादिस्मृतेर्भगवतो भक्तो नितरां प्रियः सकार्मं कर्मशूरं भक्तिविधुरं पुनः पुनर्दुःखात्मके जन्ममरणलक्षणे भवे क्षिपति 'अविद्यायामंतरे०' 'तानहं द्विषत' इति वचनात् ॥ ४ ॥ कर्मण्यनापन्नविकारतयाऽयस्कांतवत्स्वसा-

कर्मण्यकर्म यः पश्येदकर्मण्यपि कर्म यः ।
स लोके भक्तिमान्धीमान्मुच्यते कर्मबन्धनात् ॥ ५ ॥
भक्तियोगमयं तस्य भक्तिगम्यस्य चेष्टितं ।
शृणु तस्मिन्दृढा भक्तिः पूता यच्छ्रवणाद्भवेत् ॥ ६ ॥
भिक्षां सशिष्यगुरव एकैकः प्रत्यहं ददौ ॥
भास्कराख्यो द्विजो दीन आययौ तत्र भक्तिमान् ॥७॥
आदाय गुरवे भिक्षां दातुकामो गुरुप्रियः ।
स त्रिपुंभुक्तिपर्याप्तं तण्डुलादिकमाप तं ॥ ८ ॥
तद्दिने केनचिद्दत्ता भिक्षा श्रीगुरवे वरा ।
शिष्यभक्तयुजे तत्र सोपि भोक्तुं ययौ द्विजः ॥ ९ ॥

मीप्यादबुद्धीद्रियचालक आत्मन्यकर्म इन्द्रियजन्यक्रियाऽसम्बधं पश्येत् अकर्मणि जडे धीन्द्रियादौ कर्म बोद्धव्यश्रोतव्यादि यः पश्येत्स भक्तिमानस्मिन्लोके धीमानुच्यते स एव कर्मबन्धान्मुच्यते ॥ ५ ॥ तस्य श्रीगुरोर्भक्तियोगप्रचुरं यस्य चेष्टितस्य श्रवणात्पूतातएव तस्मिन्भगवति विषये दृढा भक्तिर्भवेत् भक्तिर्नामेश्वरानुरक्तिः भज्यते जीवेश्वरावस्यां भजेर्भावे क्तिनि भजनं भक्तिः भजेर्वाधिकारे क्तिनि भजनाय विभज्येते जीवेश्वरावस्यां भजेः करणे क्तिनि वा भज्यन्ते कामकर्मादिदोषा यया सेति ॥ ६॥ शिष्यैः सहिताय गुरवे गन्धर्वग्रामस्थ एकैको विप्रः प्रत्यहं क्रमेण भिक्षां ददौ एकदा तत्र भास्कराख्यो भक्त आययौ ॥ ७ ॥ गुरवे भिक्षां दातुं कामो यस्य स पुरुषत्रयभोजनपर्याप्तं तण्डुलादिकमादाय तं गुरुं प्राप ॥ ८॥ वरा षड्रसान्ना शिष्याश्च भक्ताश्च तैर्युज्यत इति तत्सहितायेत्यर्थः सोपि भास्करोपि तत्र भोक्तुं ययौ ॥ ९ ॥ भुक्त्वा च सायमागत्य स द्विज आनीतं

सायमेत्य मठे भिक्षाद्रव्यमादाय स द्विजः ।
सुष्वापैवं त्रिमासं स तत्र तस्थौ सुभाविकः ॥ १० ॥

तं तत्रोपहसन्ति स्म प्राप्य स्वल्पान्नतो गुरुं ।
भिक्षां दातुं प्राज्यशिष्यं पुष्णाति स्वमितीतरे ॥ ११ ॥

तज्ज्ञात्वा तं प्रभुः प्राह भक्तियोगविधिस्त्वया ।
द्राङ्मे सशिष्यभक्ताय भिक्षां देह्यद्य भाविक ॥ १२ ॥

तच्छ्रुत्वा हर्षितः शाकसितादुग्धघृतादिकं ।
स आनीय स्वयं पाकं कर्तुमारेभ उत्तमं ॥ १३ ॥

दातुं तदान्यमप्युक्तं भिक्षां देहि श्व इत्यजः ।

भिक्षाद्रव्यमादाय मठे सुष्वाप एवमनुना प्रकारेण प्रत्यहं गुरुपंक्त्यां भुक्त्वा मासत्रयपर्यंतं तत्र तस्थौ सुतरां भाविकः एतेन तस्य स्थितिर्गुरुभक्तिवशादेव न केवलं भोजनार्थं ॥ १० ॥ तं तादृशं दृष्ट्वेतरे उपहसंति स्म उपहासमाह स्वल्पान्नतः प्राज्याः प्रभूताः शिष्या यस्य तं गुरुं भिक्षां दातुं प्राप्य स्वमात्मानं पुष्णातीत्यहो भक्तिरस्येति ॥ ११ ॥ तल्लोपहासवचनं ज्ञात्वा प्रभुर्भक्तियोगविधिस्त्वया तं भास्करं प्राह शिष्यभक्तसहिताय मह्यं द्राक् शीघ्रमद्य भिक्षां देहि ॥ १२ ॥ सिता शर्करा उत्तमं सुस्वादु ॥१३॥ तदा भिक्षां दातुमुक्तमन्यं विप्रं कंचन तत्रत्यं श्वो व्यवहितैष्यद्दिवसे त्वं भिक्षां देहीति तं निवार्य भास्करमाहूयाद्य शेषान्छिष्यान् भक्तानन्यानपि ग्रामस्थान्भोक्तुमाव्हयेति भास्करं प्रत्याह । ननु प्राग्भिक्षानिमंत्रणमागतं चेत्तर्ह्यपरनिमंत्रणप्रत्याख्यानं युक्तं श्वो भिक्षां देहीति कथं भाषितं नेदं यतः प्रशस्यतरमित्यत आह श्वो देहीत्यज आह अत्राजशब्देन जन्मादित्रि-

तं निवार्याह्वयाशेषान्भोक्तुमित्याह भास्करं ॥ १४ ॥
तच्छ्रुत्वाप्याह्वयत्तान्स त ऊचुर्लज्जसे न किं ।
पक्वान्नकणतुल्यान्नः किमाहूय करिष्यसि ॥ १५ ॥

क्रियाशून्यस्य धर्मरक्षार्थं स्वेच्छया परिगृहीतस्वाधीनसंभवविग्रहस्य भक्तवात्सल्यार्थं तन्मतानुवर्तिनो भगवतः क्वचिद्विध्यतिक्रमोप्यकिंचित्करः पूर्णकामत्वात् ज्ञानिनोपि विधिनिषेधातिक्रमे न ज्ञानभंगः 'एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्'इति श्रुतेः तर्हि शिष्या अपि तथा वर्तेयुरिति चेन्न तेषामादेशातिक्रमदोषः प्रभवेत् आदेशस्तु 'यान्यस्माकꣳ सुचरितानि तानि त्वयोपास्यानि नो इतराणि'इति। ननु यत्पूर्वैः कृतं तत्करणीयं यथा च जामदग्न्यरामः स्वजननीं जघान शुनःशेपो जनकं तत्याज याज्ञवल्क्यस्त्वाचार्यं गौतम इंद्रमतिथिं ब्रह्मा स्वसुतां जगाम इन्द्रस्त्रिशीर्षाणं ब्राह्मणं जघान क्षत्रियो बलदेवः सुरां पपौ पौराणिकं वा जघान सोमो गुरुभार्यां जहारेत्यादि महतामाचारानुसारादहमप्यनुतिष्ठामीत्यत आह श्रुतिः यानि प्रसिद्धान्यनवद्यान्यदुष्टानि महात्माचरितानि शास्त्रे लोके वा निंदारहितानि कर्माणि लौकिकानि वैदिकानि कर्तव्यानि तान्युक्तान्यनिन्दितानि महतामपि यथा जामदग्न्यरामः पितृवचनं दुष्करमपि चकार शुनःशेपो विश्वामित्रस्योपकारं न विसस्मार याज्ञवल्क्यस्तपसादित्यमवाप्य शुक्लानि यजूꣳषि प्रतिपेदे गौतमः स्वभार्याजारायापींद्राय प्राणनाशपर्यंतं कोपं न चकार ब्रह्मा पुत्रोत्पत्त्यर्थं महांतमुद्यमं चकार बलदेवश्च शेषोपि देवब्राह्मणकार्यार्थं शुक्रशोणितमयशरीरमपि स्वीचकार सोमो गुरोर्गरीयसीं कीर्तिं चकार इन्द्रस्त्रिलोकीस्वास्थ्यार्थं निंदितामपि ब्रह्महत्यां स्वीचकारेति सेवितव्यानि नो इतराणीति श्रुत्यभिप्रायः एतेन राजपरिष्कारधारणशिबिकारोहणादीन्यपि भगवता सेवितानि तेजीयस्त्वान्न निंदितानि इतरैरनुष्ठितानि चेत्पातायैवेति दिक् ॥१४॥ स भास्करस्तान्छिष्यादीन् आह्वयत्ते तमूचुः पक्वान्नकणसंख्या-

तच्छ्रुत्वैत्य गुरुं तन्स शशंस भगवांस्तदा ।
आनयित्वात्र भोक्तव्यं सर्वैरित्याह तान्गुरुः ॥ १६ ॥
शङ्किता अपि तद्वाक्यात्तूष्णीं स्थित्वा बहूनि ते ।
निर्माय भुक्तिपात्राणि सर्वे स्नात्वाययुः पुनः ॥ १७ ॥
शाटचेशस्याज्ञयाच्छाद्य सिद्धान्नं तीर्थमन्त्रितं ।
सहान्यैः षड्विधं सोदाद्गुरवे ब्राह्मणैः सह ॥ १८ ॥
भक्तान्छिष्यान्स तत्रत्यांस्त्र्यपत्येष्टयुजो द्विजान् ।
गुरुं चेष्टं सुखं भोक्तुं प्रार्थयामास सादरं ॥ १९ ॥
परमान्नान्नपोल्याज्यसूपशाकादिषड्रसैः ।
षोढान्नममितं नीतं त्रिपुंपर्याप्तपाकतः ॥ २० ॥
नीत्वा नीत्वापि भोक्तृभ्यो दत्तं तत्र तु पूर्ववत् ।
नाप्यल्पं दातृभिस्तष्टं चेष्टा भगवतस्त्वियं ॥ २१ ॥

मितानस्मानाहूय किं करिष्यसि लज्जसे न किं ॥१५॥ स नास्करस्तद्वचनं श्रुत्वा गुरुमागत्य तस्मै तदुक्तं शशंस भगवांस्तु तदा तानानयित्वा सर्वैरत्यात्र भोक्तव्यमिति तान्प्रत्याह ॥ १६ ॥ तद्वाक्याद्विश्वासभूताद्गुरुवाक्यात्तूष्णीं स्थित्वा आययुरिति पदच्छेदः ॥ १७ ॥ ईशस्य गुरोराज्ञया तच्छाट्या तन्माछाद्य तत्तीर्थमंत्रितं षड्विधं सिद्धान्नं अन्यैः सह स भास्करः ब्राह्मणैः सह गुरवेऽदात् ॥१८॥ स्त्रियोऽपत्यानीष्टाश्च तत्सहितान् द्विजान् इष्टमन्नं सुखं यथा तथा भोक्तुं ॥१९॥ परमान्नं पायसः षोढान्नं षड्विधान्नं नवमाध्याये चतुर्विधं प्रोक्तं 'चर्व्यं चिपिटधान्यादि पीयते पानकं पय' इति द्विविधं तत्सहितं षोढान्नं त्रिपुरुपभोग्यपाकतः ॥ २० ॥ न तष्टं न तनूकृतं तनूकरणे तक्षः भगवच्छब्देनाष्टविधैश्वर्यवत्त्वं सूचितं ॥२१॥ सशेषं पात्रे त्यक्तं

भुक्तं सशेषमाकण्ठं तृप्ताः स्मोलमिति द्विजाः ।
उक्त्वोत्तस्थौ(?) महाजेन ततो गुर्वाज्ञयांघ्रिजान् ॥२२॥

हीनांश्चाहूय तेभ्योदात्कामं नान्नं व्यहीयत ।
पशुपक्षिमृगादिभ्यः प्रकामं स उपानयत् ॥ २३ ॥

न शिष्टास्तत्र केपीति श्रुत्वा भुक्त्वा तदाज्ञया ।
यादोभ्योदात्स शेषान्नं तदा निःशेषतां ययौ ॥ २४ ॥

माधुर्यं सुरसान्नस्य दुर्लभं ह्यमृतांधसां ।
स्वप्नेपि न श्रुतं रुच्यं तृप्तिरेषाप्यलौकिकी ॥ २५ ॥

प्राक्पार्थसंकटेरण्ये निशीथेदात्स्वमायया ।

अंघ्रिजान्च्छूद्रान् ॥ २२॥ हीनान्नजकादीन् कामं यथेप्सितं व्यहीयत हीनं न बभूव हीनं न्यूनं उपानयत्समर्पयत् ॥ २३ ॥ स भास्करः तदाज्ञया गुर्वाज्ञया ॥ २४ ॥ अमृतांधसां देवानां रुच्यं स्वादु ॥ २५ ॥ प्राग्द्वापारे पाण्डवानां संकटे आगते द्वैतवने निशीथे स्वमायया ऋषिभ्योन्नं कृष्णोदादिति श्रुतं अत्र तु अदः प्रत्यक्षं दृष्टं एवं हि भारते कथा कदाचिद्दुर्वाससो दुर्योधनेनातिथ्यं कृतं तेन च परितुष्टेन वरं वृणीष्वेत्युक्ते कपटद्यूतापहृतराज्या वनस्थाः सपत्नाः पाण्डवा दुर्वाससः शापान्नश्येयुरिति मनसि निधाय दुर्योधनेनोक्तं युधिष्ठिरोस्मत्कुले मुख्योतस्तस्यापि भवतैवमेव शिष्यायुतसहितेनातिथिना भवितव्यं किंतु द्रौपदी यथा क्षुधा न सीदेत्तथा तस्यां भुक्तवत्यां तद्गृहं गंतव्यमिति। ततश्च तथैव दुर्वाससि प्राप्ते परमादरेण युधिष्ठिरेणाह्निकं कृत्वागम्यतामिति विज्ञापिते मुनिसंघोघमर्षणाय जले निममज्ज तत्र चिंतातुरया द्रौपद्या स्मृतमात्रः श्रीकृ-

ऋषिभ्योन्नं हरिर्गिरति श्रुतं दृष्टं त्वदोत्र तु ॥ २६ ॥

नृणां चतुःसहस्राणि भुक्तानि स्वल्पपाकतः ।
जीवा अगणिता भुक्ता मायातर्क्यैर्यमीशितुः ॥ २७ ॥

भास्करोयं प्रियो भक्तो यत्प्रसादोस्य नान्यके ।
त्रिमासं सर्वदा तेन पादसंवाहनादिभिः ॥ २८ ॥

श्रद्धाभक्त्यैव भगवान्सेवितस्तत्फलं त्विदं ।
इत्युक्त्वान्ये नराः प्रेम्णा तुष्टुवुः श्रीगुरुं परं ॥ २९ ॥

थास्तत्क्षणमेव भक्तवात्सल्यतया चागतस्तया चावेदिते वृत्तांते भगवतोक्तं द्रौपदि अहं बुभुक्षितोस्मि प्रथमं मां भोजयेति तया चातिलज्जयोक्तं स्वामिन्मद्भोजनपर्यंतमक्षय्यमस्यन्नं सूर्यदत्तस्थाल्यां मया च सर्वान्सम्भोज्य भुक्तं अतो नास्त्यन्नमिति तथाप्यतिनिर्बंधेन स्थालीमानाय्य तत्कण्ठलग्नं किंचिच्छाकान्नं प्राश्योक्तमनेन विश्वात्मा भगवान्प्रीयतामिति अथ भोक्तुं मुनिसंघमाह्वयेति स च तावतातितुप्त इति ॥ २६ ॥ नृणां चतुःसहस्रमिति पाठः सुस्वल्पपाकतः जीवा अगणिता भुक्ताः अतर्क्या तर्कागोचरा 'अणीयान्ह्यतर्क्यमणुप्रमाणात्' इति श्रुतेः ॥ २७ ॥ यदस्मादस्य भगवतः श्रीगुरोरीदृशः प्रसादोन्यके पामरे न तेन भास्करेण सर्वदा पादसंवाहनादिभिः एतेन दास्यभक्तिरुक्ता ॥ २८ ॥ श्रद्धाभक्त्यैवेत्यवधारणेन सेवासाफल्याय तदेव मुख्यसाधनमुक्तं तुशब्देनान्यदगोचरमपि मोक्षरूपं फलं सूचितं ॥ २९ ॥ प्रस्थापयामास गमयामास स सकलार्थयुक् भुक्तैहिकभोगः अंते देहांते यद्वा भगवत्प्रसादात्तज्ज्ञानतः सदद्वैतानृतद्वैतयोर-

दत्वा प्रभुर्भास्करमीप्सितं वरं प्रस्थापयामास गृहाय स द्विजः ।
ईशप्रसादात्सकलार्थभुग्ययौ सायुज्यमंते दृढभक्तियोगतः ॥३०॥

शृण्वन्यदप्यद्भुतमीशचेष्टितं गंगाव्हया तत्र तु षष्टिवत्सरा ।
सार्च्या वशानर्च परेशमन्वहं भक्त्यैकदोचे स तु तां किमिच्छसि
॥ ३१ ॥

॥ गंगोवाच ॥

लोकोऽपुत्रस्य न स्वःस्था लुप्तपिण्डोदकक्रियाः ।
पितरोधः पतंतीति श्रुत्वा स्वामिन्बिभेम्यहं ॥ ३२ ॥

न्योन्यैक्यवीक्षणलक्षणसंसारभ्रमांते दृढभक्तियोगतः सायुज्यं ययौ तस्येति शेषः आत्यंतिकमोक्षं गतः । ननु यदीश्वरोयमवतीर्णस्तथापि सविशेष एव साकारत्वात् कथमस्य दृढभक्त्यात्यंतिकमोक्ष इति चेत् 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मंदास्तेनुकंप्यंते सविशेषनिरूपणैः १ वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्' इति २ बृहि बृह वृद्धावित्यस्माद्धातोर्निष्पन्नो ब्रह्मशब्दो वृद्धं वस्त्वभिधत्ते वृद्धिश्चात्र निरतिशया विवक्षिता संकोचकयोः प्रकरणोपपदयोरभावात् यदा त्वापेक्षिकं वस्तु प्रकृतं भवेदुपपदं वा किंचिद्वाचकं प्रयुज्येत तदा संकोचो भवेत् न त्वेतदुभयमप्यत्रास्ति निरतिशयवृद्धिर्नित्यशुद्धादिरूपा तथा च पूर्वाचार्याः 'नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्ति ब्रह्म ब्रह्मशब्दस्य व्युत्पाद्यमानस्य नित्यशुद्धत्वादयोर्थाः प्रतीयंते बृहतेर्धातोरर्थानुगमात्' इति तदेव ब्रह्मामुना स्वेच्छारूपेणावतीर्णमित्यष्टमाध्याये स्फुटतरमुक्तमत उक्तं सायुज्यं सायुज्यं नामात्यंतिको मोक्ष इति स च भगवत्प्रसादलभ्य एवेति पुनः पुनरुक्तम् ॥ ३० ॥ अद्भुतमीशचेष्टितं शृण्वित्यनेनास्य श्रवणमपि दुर्लभं 'आश्चर्यो वक्ता' इति श्रुतेः ॥३१ ॥ स्वःस्थाः स्वर्गता अपि

भवेऽग्रे मे सुपुत्राख्या गतिर्भूयादितीच्छया ।
सर्वेश तेऽर्चनं कुर्वे पाहि मां करुणानिधे ।। ३३ ।।

।। श्रीगुरुरुवाच ।।

कर्मावर्तेन मायाब्धौ क भ्रमिष्यसि वेत्सि किं ।
केयं तत्र स्मृतिस्तत्र पुत्रौ गंगे भविष्यतः ।। ३४ ।।
तच्छ्रुत्वा पल्लवे ग्रंथिं बध्वोचे पुत्रवत्यहो ।
निष्कला जातिवन्ध्यापि भवेयं त्वत्प्रसादतः ।। ३५ ।।
व्रततीर्थार्चनैर्यातं वयो मे पुत्रकामया ।
विशेषात्सेवितोऽश्वत्थो मौरूर्याद्दास्यति किं न मे ।।३६।।

।। श्रीगुरुरुवाच ।।

ब्रह्मनारदसंवादं शृण्वात्थ यदसत्तु तत् ।
नारदाश्वत्थमूलेऽहं मध्येऽजोऽग्रे शिवः पुनः ।। ३७ ।।

'नापुत्रस्य लोकोस्ति' इति श्रुतेः ।। ३२ ।। ३३ ।। जन्मांतरे मद्वरफल-मिदमिति वेत्सि किं ।। ३४ ।। पल्लवे वस्त्रांचले निष्कला विगतान्विता ।।३५।। पुत्रं कामयत इति कर्मण्यण् पुत्रकामया मया विशेषतो मौरूर्याद-श्वत्थः सेवितः सोऽश्वत्थो मंदभाग्यायै मह्यं पुत्रमिति शेषः दास्यति किं अपि तु न ।। ३६ ।। हे साध्वि मौरूर्यादश्वत्थः सेवित इति यदात्थ ब्रवीषि ब्रुवः पंचानामित्यादिनाहादेशः तदसत् 'अश्वत्थः सर्ववृक्षाणाम्' इति स्मृत्या भगवद्विभूतित्वेनोक्तत्वात् अश्वत्थमाहात्म्यज्ञानाय ब्रह्मणो नारदस्य च संवादं शृणु कदाचिन्नारदेन पृष्टो ब्रह्मा नारदं प्रत्याह हे नारदेत्यादि मूलेऽहं ब्रह्मा वसामि अजो विष्णुः ।। ३७ ।। पुनः क्रमेण त्रयाणां दक्षिणप-

अथाश्वत्थगुदक्शाखात्रयाणां प्राक्समाः सुराः ।
तीर्थाब्धयश्वांकुरेषु गोयज्ञर्षिश्रुतिद्विजाः ॥ ३८ ॥

ओंकारोंध्यंतशीर्षस्थ इत्यश्वत्थोस्त्यसंस्कृतः ।
नार्च्यः संस्कृत्य मौंज्युक्तकालेस्मिन्सत्क्षणेर्चयेत् ॥३९॥

नार्कारशुक्रनिट्संध्याकुयुक्पर्वादिषु स्पृशेत् ।
वर्णित्वमौनसत्त्वाढ्यो भजेन्नामुं वधूरपि ॥ ४० ॥

तत्तले गोविशा लिप्ते रंजिते स्वस्ति वाचयेत् ।
संस्नाप्य सप्तकलशैः पूजयेत्स्वाधिकारतः ॥ ४१ ॥

ध्यात्वाष्टबाहुं श्रीविष्णुरूपमावेष्ट्य वाससा ।
नाममन्त्रैर्मंदगत्या शक्त्या कार्याः प्रदक्षिणाः ॥४२॥

श्चिमोत्तरदिग्गतशाखाः प्राक् पूर्वशाखायां समाः सर्वे सुरा देवाः तथिन्य-ब्धयो गावो यज्ञा ऋषयः श्रुतयो द्विजा विप्रा अंकुरेष्वंकुरोपलक्षितपर्णेषु ॥ ३८ ॥ अकारोकारमकारात्मक ॐकारो मात्राभेदेनांध्यंतशीर्षस्थः मूल-मध्याग्रेषु स्थितः तदुपलक्षितास्त्रयो वेदास्त्रयो लोका अपि स्थिताः इतिशब्द उपास्यरूपप्रतिपादनसमाप्त्यर्थः फलातिशयार्थं विशेषमाह असंस्कृत उपन-यनादिसंस्काररहितः नार्च्यः न पूज्यः मौंजीबन्धनोक्तकालेश्वत्थोद्यापनविधिना संस्कृत्य ततः सत्क्षणे ग्रहानुकूल्ये शोभने कालेर्चेत् ॥ ३९ ॥ अर्कः सूर्यं आरो भौमः निट् निशा कुयुग्व्यतीपातादि वर्णित्वं ब्रह्मचारित्वं सत्त्वं सत्यत्वं मौनं प्रसिद्धं तैराढ्यो युक्तो ना पुमान् अमुं अश्वत्थं ॥ ४० ॥ अश्वत्थाधोभागे गोमयेन लिप्ते रंगवल्ल्यादिरंजिते वर्णभेदेन स्त्रीपुरुषभेदेन स्वाधिकारो योज्यः ॥ ४१ ॥ चतुर्थ्यंतैर्विष्णुसहस्रनाममन्त्रैः ॥ ४२ ॥

नमेत्प्रदक्षिणायास्तु भक्त्याद्यंतसमाप्तिषु ।
पदे पदे मेधफलं दैन्यर्णार्त्यघतापहृत् ॥ ४३ ॥

ग्रहार्तिघ्नं सौरिवारे तन्नामोच्चारणं तरोः ।
सदेशे पैति नुः कालमृत्यू रौद्रमनोर्जपात् ॥ ४४ ॥

तत्रातिफलदा ब्रह्मभुज्याप्लुतिजपाध्वराः ।
पुत्रादिकामसिध्द्यै नो विलंबोक्षय्यपुण्यदात् ॥ ४५ ॥

येनेह स्थापितोश्वत्थस्तेन स्वः स्थापितं कुलं ।
येन च्छिन्नोपि वंशः स्वस्तेन च्छिन्नो न संशयः ॥४६॥

प्रदक्षिणादशांशेन हवनं तद्दशांशतः ।
कृत्वा ब्रह्मभुजि दद्याद्धैमाश्वत्थार्थगोतिलान् ॥ ४७ ॥

आदिः प्रथमं अंतो मध्यनं मेधस्याश्वमेधस्य फलं दैन्यं दारिद्र्यं ऋणं देयं आर्तिः पीडाघं पापं तापश्चाधिभौतिकादिस्तान्हरतीति तथा मेधफलविशेषणमिदं नामोच्चारणविशेषणं वा ॥ ४३ ॥ शनिवारे तन्नाम्नां 'कोणस्थः पिंगलो बभ्रुः कृष्णो रौद्रोंतको यमः ॥ सौरिः शनैश्चरो मंदः पिप्पलादेन संस्तुत' इत्युच्चारणं ग्रहपीडाघ्नं तरोः सदेशेऽश्वत्थसमीपे त्र्यंबकमिति मन्त्रजपात्कालमृत्युर्नश्यति पुनः का कथामृत्योः ॥ ४४ ॥ अक्षय्यपुण्यदादश्वत्थात्सेवितात् चातुर्मास्यफलादिवदिदं प्राशस्त्यं बोद्धव्यं अन्यथा भेदप्रसंगात् ॥४५॥ इह भूतले स्वः स्वर्गे येनाश्वत्थश्छिन्नः स्वः स्वकीयो वंशः ॥ ४६ ॥ व्रतसम्पूर्तये उद्यापनमाह प्रदक्षिणेति ब्रह्मभुजिर्ब्राह्मणभोजनं हैमः स्वर्णनिर्मितोश्वत्थः अर्थो दक्षिणार्थं धनं गौस्तिलाश्च प्रसिद्धाः ॥ ४७ ॥ सद्ब्रह्मभ्यो विद्वद्ब्राह्मणेभ्यः एतेन सात्विकदानं सूचितं इति-

सद्ब्रह्मभ्यो लभेदिष्टमित्यूचे नारदं विधिः ।
तस्मात्त्वं विधिना साध्वि भज द्राक्सिद्धिदोस्ति सः ४८

त्वं भीमामरजायोगे स्नात्वा षट्कूल उत्तमं ।
संगमस्थं भजाश्वत्थं सत्यं पुत्रौ भविष्यतः ॥ ४९ ॥

तथा कुर्वेंपि षष्टचब्दा मत्वोक्तिं तव वेदवत् ।
इत्युक्त्वा सेश्वराश्वत्थं पत्या भेजे यथाविधि ॥ ५० ॥

चतुर्थेन्ह्याह तत्स्वप्ने कृत्वाश्वत्थप्रदक्षिणाः ।
यद्दास्यति गुरुर्भुंक्ष्व भवेत्पुत्र इति द्विजः ॥ ५१ ॥

साप्युत्थाय ततः स्नात्वा सङ्गमं प्राप्य सद्गुरुं ।
भक्त्या प्रदक्षिणीकृत्य साश्वत्थं प्रणनाम ह ॥ ५२ ॥

शब्दो ब्रह्मनारदसंवादानुवादसमाप्त्यर्थः । यद्यपि सकामभजनं मोक्षानुचितं तथापि कामकलुषितचित्तानां अंतर्मुखतासम्पादनार्थं तद्द्वारानायासेन रुच्युत्पादकं कामवशादपीश्वरभजनं जातं चेद्वस्तुशक्तिप्रभावात्कामबीजभर्जनपूर्वकमधिकारित्वं प्रसादं च दास्यत्येव न क्षुद्रदेवताराधनलभ्यफलवन्नश्वरं भविष्यति इह देवतामयाश्वत्थभजनोपदेशव्याजेन संसारवृक्षे ब्रह्मदृष्टिः कर्तव्येति ज्ञापितं ॐकाररूपत्वप्रतिपादनात् ॥ ४८ ॥ पुत्री च पुत्रश्चेति पुत्रौ इदमात्मदृष्ट्यान्नमयकोशोपासकानां सर्वान्नप्राप्तिफलवत्फलमुक्तं ॥ ४९ ॥ षष्ट्यब्दा वृद्धाप्यहं तथा देवतात्मदृष्ट्याश्वत्थार्चनं कुर्वे ईश्वरः श्रीगुरुस्तत्सहितं स्त्रीणामस्वातंत्र्यात्पत्या सह भेजे ॥ ५० ॥ भजनदिनाच्चतुर्थेह्नि तत्स्वप्ने कश्चिद्द्विजः ॥ ५१ ॥ अश्वत्थसहितं श्रीगुरुं ननाम ॥ ५२ ॥

दत्वा फले स तां प्राह दानं देहि समाप्य सत् ।
व्रतं प्रदक्षिणारूपं फले मुंक्ष्वेष्टकामदे ॥ ५३ ॥
प्राग्युगेनेकपुत्राः स्युरौरसो दत्तकस्त्विह ।
औरसस्तत्समोप्यस्य दर्शनं पितृमुक्तिदं ॥ ५४ ॥
तस्माद्द्वावौरसौ पुत्रौ तारकौ ते भविष्यतः ।
मदर्चनफलं त्वेतन्न संदेहोत्र शोभने ॥ ५५ ॥
तथेत्युक्त्वापि सा गेहं गत्वा चक्रे यथोदितं ।
निष्कलाप्यृतुमत्यासीन्निःसीममहिमा प्रभोः ॥ ५६ ॥
शुद्धयूर्ध्वं सह पत्यैत्य सा प्रपूज्य गुरुं मुदा ।
गृहं गत्वा दधौ गर्भं तन्निसर्गप्रसादतः ॥ ५७ ॥
स्वतंत्रसंविद्भगवल्लीलां को वेत्ति वस्तुतः ।
द्विसहस्ररसज्ञोपि कुण्ठितश्चकिता श्रुतिः ॥ ५८ ॥
वलीपलितवेपाढ्यदेहो विद्धो जगद्गुरुः ।
साधत्त गर्भमित्यब्दे प्रशशंसुः परस्परं ॥ ५९ ॥

इष्टान्कामान्ददातीति इष्टकामदे ॥ ५३ ॥ गारुडे 'पुत्राः कतिविधा ज्ञेयाः' इति गरुडेन पृष्टो भगवान् चतुर्दशपुत्रानाह 'औरसो दत्तकश्चैव कलौ द्वावेव सम्मतौ । औरसो धर्मपत्नीज' इत्यादि चोक्तं औरसस्य मुखदर्शनं पितृमुक्तिदं 'ऋणमस्मिन्सन्नयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखं' इत्यादिश्रुतिभ्यः ॥ ५४ ॥ ५५ ॥ निष्कला विगतार्तवा ॥ ५६ ॥ चतुर्थेहनि शुध्यतीति वचनात्पंचमेहनीत्यर्थः ॥ ५७ ॥ स्वतंत्रसंविदपराधीनबुद्धिः द्विसहस्ररसज्ञः शेषः ॥५८॥ वली चर्मसंकोचः पलितं केशादौ शौक्ल्यं वेपः कम्पस्तैः सा गर्भमाधत्त ॥ ५९ ॥ क्रिया

तद्भर्ता सोमनाथस्तु प्रीत्या पुंसवनादिकाः ।
क्रिया व्यधात्क्रमात्पुत्रीं कालेसौषीत्ततः सती ॥ ६० ॥

तदेयं कन्यका साध्वी सच्छीलगुणशालिनी ।
भविष्यति कुलोद्धर्त्री पुत्राढ्येत्याह दैववित् ॥ ६१ ॥

तच्छ्रुत्वा स द्विजेभ्योदादर्थवस्त्रादिकं द्विजः ।
प्रापतुर्द्वादशेह्नीशं कन्यामादाय जम्पती ॥ ६२ ॥

तत्पादाब्जांतिकं कन्यां संस्थाप्योचे प्रणम्य सा ।
संसृतिस्थजरद्वंध्यद्रुमस्ते फलितो दृशा ॥ ६३ ॥

सेव्यते फलितोपि द्रुः पांथैश्चेत्सुफलो वरं ।

गर्भसंस्कारान्शास्त्रोपदिष्टान्व्यधाद्व्यकृणोत्सती सा ब्राह्मणी काले दशमे मासि समराशिगतचंद्रविलग्नयुक्ते वा कुयोगवर्जिते शोभनसमये पुत्रीं असौषीत् षूङ् प्राणिप्रसव इति धातोः प्रसवो नाम गर्भमोचनं स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचन इति कोशात् ॥ ६० ॥ साध्वी पतिव्रता सता शीलेन स्वभावेन गुणैश्च शालते शोभत इति तथा दैवविद्गणकः ॥ ६१ ॥ स सोमनाथः जम्पती जाया पतिश्च ॥ ६२ ॥ आंतिकं समीपं सा जातापत्या ऊचे श्रीगुरुमिति शेषः ते तव दृशा फलितः प्रसूतिकोभूत् ॥ ६३ ॥ ईदृशः फलितोपि द्रुर्वृक्षः सुफलश्चेत्पांथैः पथिकैः सेव्यते नेतरः अत्र पांथैः स्वर्लोकाभिलाषिभिः पूर्वजैः फलितोपि जातापत्योपि सुफलश्चेत्पुत्रयुक्तश्चेत्सेव्यो दयनीयत्वेन 'कृपणं ह दुहिता ज्योतिर्ह पुत्रः परमे व्योमन्' इति श्रुतेः मोघफलतो वन्ध्योपि वरं मनाक्प्रिय इति मे भाति हे ईश तदेव त्वं वेत्सि इति गौणात्मपक्षे व्याख्येयं मुख्यात्मपक्षे तु श्रीगुरू-

वन्ध्योपि मोघफलत इति भातीव वेत्मि तत् ॥ ६४ ॥

पासनया विशुद्धबुद्धेर्ब्राह्मण्याः कन्याजननेनैव गर्भेनरगप्रसवकष्टादिना वैराग्यं जातं किं कर्तव्यं नश्वरया प्रजया तया जन्येन सुखेनानित्येन लोकेन च अस्माकमयमेव नित्य आत्मा लोक इति निश्चित्य वदति संसृतिन्यः ममाहमिति बुद्ध्या संसारस्थः जरद्वृद्धः पुत्रवत्कन्यानिवृत्तत्वाद्वंध्यः द्रुमोयं देहः संघातरूपस्ते दृशा फलितः संजातविवेकफलः पांथैर्मुमुक्षुभिः सुफलश्चेन्मोक्षपर्यवसायिफलश्चेत्सेव्यतेन्यथा विक्रियते स्वर्गादिलक्षणं मोघफलं उपभोगेनोपक्षिप्यते तस्माद्वंध्यत्वं वा पुण्यराहित्यं वरं अत्र वृक्षरूपकत्वमाचार्योक्तमुपन्यस्यते 'जन्मजरामरणशोकाद्यनेकानर्थात्मकः प्रतिक्षणमन्यथास्वभावो मायामरीच्युदकगंधर्वनगरादिवद्दृष्टनष्टस्वरूपत्वादवसाने च वृक्षवदभावात्मकः कदलीस्तम्भवन्निःसारोनेकशतसहस्रबुद्धिविकल्पास्पदस्तत्वजिज्ञासुभिरनिर्धारितेदंतत्त्वो वेदांतनिर्धारितपरब्रह्ममूलसारोऽविद्याकामकर्माव्यक्तबीजप्रभवोऽपरब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भांकुरः सर्वप्राणिलिंगभेदस्कंधः तृष्णाजलासेकोद्भूतदर्पो बुद्धींद्रियविषयप्रवालांकुरः श्रुतिस्मृतिन्यायविद्योपदेशपलाशो यज्ञदानतपआद्यनेकक्रियासुपुष्पः सुखदुःखवेदनानेकरसः प्राण्युपजीव्यानंतफलस्तत्तृष्णासलिलावसेकप्ररूढजटिलीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताक्रुष्टरुदितहाहामुंचमुंचेत्याद्यनेकशब्दकृततुमूलीभूतमहारवो वेदांतविहितब्रह्मात्मदर्शनासंगशस्त्रकृतोच्छेद एष समष्टिरूपो व्यष्टिरूपोपि देहाख्यो वृक्षस्तत्कल्प 'ऊर्ध्वमूलोवाक्' इति श्रुतेः ॥६४॥ गुरुः तत्तस्या वचः श्रुत्वा सस्मितं यथा तथा

तच्छ्रुत्वा सस्मितं कन्यामादायेशो जगाद तौ ।
शीलधीगुणपुत्राढ्या भवेत्साध्व्यखिलार्चिता ॥ ६५ ॥

कन्या लब्धोत्तमेयं वां पुत्रेच्छा चेद्भवेत्सुतः ।
मूर्खः शतायुर्वाल्पायुर्विद्वान्वां कतरः प्रियः ॥ ६६ ॥

सार्भो विद्वान् प्रियोल्पायुरपीत्यूचतुरप्युभौ ।
तथेत्युक्त्वा स सापत्यौ गमयामास तौ प्रभुः ॥ ६७ ॥

गर्भं साप्यल्पकालेन धृत्वासूत सुतं शुभं ।
श्रद्धया निष्कलाप्येवं पुत्रौ लेभेथ किं वद ॥ ६८ ॥

विद्याविनयवान् भूत्वा पितृशुश्रूषणोद्यतः ।
धार्मिकः पंच पुत्रांस्तत्पुत्रो लब्ध्वामृतं ययौ ॥ ६९ ॥

कन्यापीशप्रसादात्सा दीक्षितस्य सती शुभा ।
भूत्वा गुरूक्तवद्ब्रह्मवादिनी प्राप सद्गतिं ॥ ७० ॥

कन्यां गृहीत्वा तौ जगादोवाच बुद्धिस्वभावादियुक्ता सर्वमान्या साध्वीयं कन्या भवेत् अत्र सस्मितेत्यनेन संजातविवेकाया अपि ब्राह्मण्या दत्तवरानुभवार्थं मायावरणं प्रसारितवान् सुतमसूत दम्पती मुक्तिमापतुरित्यग्रे वक्ष्यमाणत्वात् ॥ ६५ ॥ शतायुर्मूर्खः वाथवा विद्वानल्पायुरनयोर्मध्ये वां कतरः प्रियस्तद् ब्रूत ॥ ६६ ॥ सार्भः सापत्योल्पायुरपि विद्वान् प्रियः ॥ ६७ ॥ सापि गंगा ॥ ६८॥ ६९ ॥ ब्रह्मवादिनी गुरूक्तवद्भूत्वा सद्गतिं प्राप। ननु मन्त्रपाठश्रवणयोः स्त्रियो दोषश्रवणात् कथं ब्रह्मवादिनी जाता नायं दोषः अधिकारं विना मंत्रपाठश्रवणयोर्दोषापत्तेर्दीक्षितस्य पत्न्यास्तु मंत्रपाठश्रवणयोरधिकार एव न तु सांगशाखाध्ययनेऽनुपनीतत्वात् ॥ ७० ॥ गुरुशा-

एवं गुरुप्रभावोयं श्रद्धादृष्टचैव दृश्यते ।
सद्भक्तैर्न त्वभक्तैः स जन्मान्धैरिव भास्करः ॥ ७१ ॥
दण्डकुण्डीकरं शान्तं काषायाच्छादनं सदा ।
ध्यायंतौ यतिरूपं तं दम्पती मुक्तिमापतुः ॥ ७२ ॥
श्रद्धाभक्त्यैव सुलभा गुरुवाक्यानुवर्तिनां ।
उभयी सिद्धिरप्यन्यच्चित्रं तच्चेष्टितं शृणु ॥ ७३ ॥
तत्रैत्य नरहर्याख्यो विप्रः कुष्ठी जगद्गुरुं ।
प्रणतः शरणं प्राप्य प्राहोच्चद्गद्गदाक्षरः ॥ ७४ ॥
हरे शम्भो परानंदमूर्ते जय जयाच्युत ।
भक्तवत्सल ते कीर्तिं श्रुत्वात्रासोस्मि सद्गुरो ॥ ७५ ॥
यजुर्विदोपि मे तुण्डं केपि नेक्षंति कुष्ठिनः ।
तीर्थार्चनजपैः कुष्ठं तन्मे नापैत्यघात्मनः ॥ ७६ ॥
कृपया तेपयायात्तदिति मत्वागतोस्म्यहं ।
नास्ति चेत्तत्प्रतीकारः शंसाग्रेसूंस्त्यजामि ते ॥७७॥

त्वाभ्यामभिहिते तत्त्वे तदवबोधोपाययोश्च परमो विश्वासः श्रद्धा सैव दृष्टिस्तया ॥ ७१ ॥ कुण्डी कमण्डलुः कषायेण रक्तं काषायं तेन रक्तं रागादित्यण् तदाच्छादनं यस्य तं ॥७२॥ श्रद्धायुक्तया भक्त्यैव उभयी ऐहिकी आमुष्मिकी च ॥ ७३ ॥ ७४ ॥ हरे इत्यनेन पापहर्तृत्वं शम्भो इत्यारोग्यदातृत्वं परानंदमूर्ते इति मोक्षदत्वं सूचितं भक्तवत्सलेति स्पष्टमेव भक्तवात्सल्यमभिहितं अत्र देशे आसोस्म्यागतोस्मि त्वामिति शेषः ॥ ७५ ॥ यजुर्वेदज्ञस्यापि तुण्डं मुखं ॥७६॥ अपयायादपगच्छेत् तत्प्रतीकारस्तन्नाशोपायः शंस कथय ते तवाग्रेसून्प्राणान्त्यजामि प्रायोपवेशनेनेत्यर्थः

तच्छ्रुत्वा प्राक्तनाघोत्थ कुष्ठं नश्येदिति प्रभुः ।
प्रोक्त्वा शुष्कौदुम्बरैधो दृष्ट्वावोचत्स कुष्ठिनं ॥७८॥
मद्वाक्ये भक्तिमांश्चेत्तत्काष्ठमारोप्य संगमे ।
भज पल्लविते तस्मिञ्छुद्धोकुष्ठो भविष्यसि ॥ ७९ ॥
ॐमित्युक्त्वा तदारोप्य श्रद्धाभक्त्या स संगमे ।
भेजे दत्वाधारबन्धं परितोंबुनिषेचनैः ॥ ८० ॥
कृपास्य सद्यस्तव शुध्यभावादुक्तं फलं कथमिदं कुतोस्मिन्
शङ्कांकुरस्यात इदं त्यजेति जनैर्निषिद्धोप्यभजत्सदेध्मं८१
तदैत्य ते गुरुं प्राहुर्भवद्वाक्याद्द्विजो जरत् ।
भजतीध्मं बोधय तं मरिष्यत्युपवासतः ॥ ८२ ॥

॥ श्रीगुरुरुवाच ॥

करोति साधु तद्विप्रो दृढभक्त्या तरिष्यति ।
भक्तिर्हि तारकात्रैव भवसिन्धुनिमज्जतः ॥ ८३ ॥

॥ ७७ ॥ प्राक्तनाघोत्थं पूर्वजन्मपापजन्यं शुष्कौदुम्बरकाष्ठं दृष्ट्वा कुष्ठिनमवोचत् ॥ ७८ ॥ मद्वाक्ये भक्तिमानसि चेत्तर्हि तत् औदुम्बरकाष्ठं भज जलसेकादिना तस्मिन् पल्लविते सति त्वं शुद्धः कुष्ठरहितश्च भविष्यसि ॥ ७९ ॥ ॐ मित्यंगीकारे काष्ठस्य परित आधारबन्धमालवालमिति यावत् दत्वा कृत्वांबुनिषेचनैः काष्ठं भेजे ॥ ८० ॥ तं तादृशं दृष्ट्वा दयया जना ऊचुः अस्य श्रीगुरोः सद्योदर्शनादेव कृपा तव पापनिष्कृत्यभावात्कष्टरूपमिदं फलं पापनाशकमुक्तं कुतोस्मिन् काष्ठेंकुरशंका अत इदं कष्टं त्यजेति जनैर्निवारितोपि द्विजः सदा इध्मं काष्ठमभजत् ॥ ८१ ॥ ते जनाः जरज्जीर्णं ॥ ८२ ॥ साधु सम्यक् हि यतः भवसिन्धौ निमज्जनः पुंसः दृढभक्तिरित्यादौ भावसाधनत्वात्पुंवद्भावसिद्धिः पूर्वपदस्येति केचित् दृढं

मंत्रे तीर्थे द्विजे देवे दैवज्ञे भि(भे)षजे गुरौ ।
यादृशी भावना यस्य तस्य सिद्धिस्तु तादृशी ॥८४॥
वच्मि सूतर्षिसंवादं प्राग्वृत्तं दृढभक्तिदं ।
ऋषीन्सूतो जगादेदं सिंहकेतुनृपात्मजः ॥ ८५ ॥
धनंजयाख्यः पांचाल एकदा वनमभ्यगात् ।
दृष्ट्वा स मृगयाश्रांतस्तत्र जीर्णं शिवालयं ॥ ८६ ॥
तस्थौ तत्र क्षणं साकं शबरेणानुयायिना ।
दृष्ट्वा लिंगानि रम्याणि दूतः प्राह नृपं गृहे ॥ ८७ ॥
लिङ्गं नीत्वा पूजयितुं कांक्षेऽज्ञोस्म्यनुशाधि मां ।
यदाज्ञापयसे देव दृढभक्त्या करोमि तत् ॥ ८८ ॥

॥ राजपुत्र उवाच ॥

संस्थाप्य सत्स्थले लिङ्गं शुचिर्भूत्वा स्त्रियान्वितः ।
भक्त्या पूजय सत्वेशमुपचारैर्यथाविधि ॥ ८९ ॥
चिताभस्मान्वहं देयं दत्तान्नं भुंक्ष्व भार्यया ।
प्रसादबुध्येत्युक्त्वा स पूजाविधिमुपादिशत् ॥ ९० ॥
सोपि तुष्टो गृहीत्वैकं लिङ्गं गत्वा गृहं स्त्रिया ।
भेजे यथोपदेशं तद्भस्मादात्प्रत्यहं मुदा ॥ ९१ ॥

भक्तिरिति ॥ ८३ ॥ प्रमाणयति मन्त्र इति ॥ ८४ ॥ दार्ढ्यार्थमितिहास-मवतारयति सूतस्य ऋषीणां च संवादं वच्मि इदं वक्ष्यमाणं ॥८५॥८६॥ अनुयायिनानुचरेण शबरेण दूतः शबरः ॥ ८७ ॥ अज्ञः पूजाविधानान-भिज्ञोस्मि अनुशाधि शिक्षय हे देव राजपुत्र ॥ ८८ ॥ शोभनस्थले ॥ ८९ ॥ अन्वहं प्रत्यहं दत्तान्नं नैवेद्यशेषं प्रसादबुद्ध्या भार्यया सह भुंक्ष्व

भस्मैकस्मिन्दिने क्वापि न लेभेभूत्स दुर्मनाः ।
तद्भार्या प्राह मां दग्ध्वा शम्भवेऽर्पय भस्म तत् ॥९२॥
शरीरं कृमिविड्भस्मरूपांतं क्षणभंगुरं ।
तत्साफल्यं कुरु हरे भस्मार्पणनिमित्ततः ॥ ९३ ॥

॥ शवर उवाच ॥

तिष्ठत्स्विनक्ष्माग्निषु साक्षिषु प्रिये भर्तृत्वमाश्रुत्य वृतास्यदोन्यथा। कुर्यां कथं तन्वि किशोरि बालिके भो माध्यलब्धैहिकसौख्य उत्तमे ॥ ९४ ॥

सा प्राह मोहो वितथोयमध्रुवे येन ध्रुवं साहजिकं प्रसाध्यते । तत्साधयास्मिन्परकीयकल्पना नास्त्येव तेर्धांगविभाग्यदो वपुः॥

प्रोक्ते सुयुक्ते प्रियया तथेत्यसौ प्रोक्त्वा गृहे तामवरुध्य सालयां । दग्ध्वार्पयद्भस्म शिवाय नित्यवद्भ्रांत्या प्रसादक्षण आह्वयत्प्रियां ॥ ९६ ॥

॥ ९० ॥ तल्लिंगं स्त्रिया सह भेजे ॥ ९१ ॥ ९२ ॥ ईदृशस्य हरे शम्भौ भस्मार्पणनिमित्तेन साफल्यं कुरु अन्यथा क्रमिविड्भस्मपरिणामं निष्फलमेव ॥ ९३ ॥ इनः सूर्यः क्ष्मा भूमिः अग्निः पूर्वपतिः यतोहं त्वां लब्धवान् एतेषु साक्षिषु तिष्ठत्सु सत्सु त्वं तु भार्या भर्तुं योग्या अहं तु भर्ता एव तव भर्तृत्वमंगीकृत्य मया वृतासि अदो भर्तृत्वं अलब्धं ऐहिकसौख्यं पुत्रादि यया तत्सम्बुद्धौ ॥ ९४ ॥ सा शबरी अध्रुवे नश्वरे देहे वितथो मिथ्याभूतो मोहोयं येनाध्रुवेण देहेन साहजिकं स्वरूपभूतं ध्रुवं मोक्षाख्यं पदं अस्मिन्देहे परकीयोयमिति कल्पना नास्त्येव यतस्ते तवार्धांगविभागि अदः घटवद्दृश्यं वपुः पांचभौतिकम् ॥९५॥प्रियया सुतरां युक्तियुक्ते प्रोक्ते सति तथेत्यसौ शबरः सालयां गृहसहितां भ्रांत्या भ्रमेण प्रसादसमये नित्यव-

दृग्धापि साह्वानत आप पूर्ववत्तां सद्म चालोक्य स शंकितोऽब्रवीत् । दृग्धापि गेहेन सहागता कथं सुमोत्थितास्मीति शवर्युवाच तम् ॥ ९७ ॥

शम्भुप्रभावोस्त्विति तेन भाषिते द्राक्प्रादुरासीन्निजरूपधृक् शिवः । दौष्कुल्यदोषं परिहृत्य दर्शनात्ताभ्यां शिवोदादुभयत्र कांक्षितं ॥ ९८ ॥

भक्तेः प्रभावोयमियान्न किंचित्फलन्त्यृते भक्तिमतोस्य सिध्येत् । भक्त्येष्टमित्याह स तान्कदाचिद्दच्छन्प्रभुः स्नातुममुं ददर्श ॥ ९९ ॥

तं तादृशं प्रेक्ष्य कमण्डलुस्थक्षीरेण तत्प्रोक्ष्य स शुष्ककाष्ठं ।
ददर्श सद्दिव्यदृशा तदंभसे सद्योंकुरा भूरिश आविरासन् ॥१००
दिव्यं स्वधामांकुरितं च काष्ठसद्दृष्टकुष्ठाग्रत आस्थितं तम् ।
दृष्ट्वा स काष्ठार्पितदृष्टिमीशं तुष्टाव सत्प्रेमभरानतांगः॥१०१॥
कोट्यर्कभं कोटिसुचंद्रशांतं विश्वाश्रयं देवगणार्चितांघ्रिं ।
भक्तप्रियं त्वात्रिसुतं वरेण्यं वंदे नृसिंहेश्वर पाहि मां त्वम्॥१०२

प्रियामाह्वयत् ॥९६॥ आप प्राप दृग्धामभ्यागतां तां सद्म गृहं च ॥९७॥ अयं शम्भुप्रभावोस्तु भवतु ॥ ९८ ॥ भक्तिमृते भक्तिं विना अतोस्य भक्त्येष्टं सिद्धयेत् स श्रीगुरुः तान्जनान् अमुमुदुम्बरसेवकं ब्राह्मणम् ॥९९॥ क्षीरेण जलेन ॥ १०० ॥ काष्ठेर्पिता दृष्टिर्येन तमीशं प्रशस्तप्रेमभरेणानतानि शीर्षाद्यंगानि यस्य ॥ १ ॥ अथाष्टकमिदम् ॥ कोटिसूर्यकांतिमपि कोटिचन्द्रशान्तं अधिष्ठानत्वेन विश्वाश्रयं त्वा त्वां वरेण्यं निरतिशयानन्दरूपं पाहि अविद्याकामकर्मभ्यो रक्ष ॥ २ ॥ 'माया चेयं तमोरूपा तापनीये

मायातमोर्कं त्रिगुणं गुणाढ्यं श्रीब्रह्मभं स्वीकृतभिक्षुवेषम् ।
सद्भक्तसेव्यं वरदं वरिष्ठं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥१०३॥
कामादिषण्मत्तगजांकुशं त्वामानंदकंदं परतत्त्वरूपम् ।
सद्धर्मगुप्त्यै विधृतावतारं वंदे नृसिंहेश्वर पाहि मां त्वम्॥१०४॥
सूर्येंदुगुं सज्जनकामधेनुं मृषोद्यपंचात्मकविश्वमस्मात् ।
उदेति यस्मिन्नमतेस्तमेति वंदे नृसिंहेश्वर पाहि मां त्वम् ॥१०५॥
रक्ताब्जपत्रायतकांतनेत्रं सद्दंडकुंडीपरिहापिताघम् ।
श्रितस्मितज्योत्स्नमुखेंदुशोभं वंदे नृसिंहेश्वर पाहि मां त्वम् १०६
नित्यं त्रयीमृग्यपदाब्जधूलिं निनादसद्बिंदुकलास्वरूपम् ।
त्रितापतप्ताश्रितकल्पवृक्षं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥१०७॥

तदीरणात्' इति वचनान्मायैव तमस्तन्निवर्तनेर्क इव तं स्वीकृतसंन्यासिवेषं सद्भिर्भक्तैः सेव्यम् ॥ ३ ॥ कामादय एव षण्मत्तगजास्तान्निवर्तकमंकुशमिव त्वां मानुषानन्दादिप्राजापत्यानन्दांता उत्तरोत्तरं शतगुणितास्ते यदंतर्गता अत आनन्दकंदं 'यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसत' इति श्रुतेः ॥ परतत्त्वं निरुपाधिकं ब्रह्म रूप्यतेनेनेति परतत्त्वरूपं सतां धर्मस्य च गुप्त्यै रक्षणाय कृतावतारं विशेषेण धृतोवतारो येन वा ॥ ४ ॥ सूर्यचन्द्रौ गावौ नेत्रे यस्य तं मृषोद्यं मिथ्यावाच्यं पंचात्मकं पांचभौतिकं विश्वं मनुष्यादिकं अस्मादभिन्ननिमित्तोपादानात् रज्जुसर्पवदुदेति यस्मिन्नमते प्रलयं याति च जले बुद्बुदा इव तं ॥ ५ ॥ रक्तकमलपत्र इवायते कर्णांतविश्रांते नेत्रे यस्य सन् लक्षणयुक्तो दण्डः कुण्डी कमण्डलुश्च ताभ्यां परिहापितं भक्तानामघं येन तं श्रिता स्मितमेव ज्योत्स्ना यस्येदृशास्य मुखचन्द्रस्य शोभा येन तं नित्यं सहासप्रसन्नवदनं ॥ ६ ॥ त्रय्या मृग्या न तु लब्धा पदकमलधूलिर्यस्य तं नादबिंदुकला एव स्वरूपं योगिध्येयं यस्य तं ताप-

दैन्याधिर्भीकष्टदवाग्निर्मोक्ष्यं योगाष्टकज्ञानसमर्पणोत्कम् ।
कृष्णानदीतीरचसद्द्युतिस्थं वंदे नृसिंहेश्वर पाहि मां त्वम् ॥ १०८ ॥

अनादिमध्यांतमनंतशक्तिमतर्क्यभावं परमात्मसंज्ञम् ।
व्यतीतवाग्हृत्पथमद्वितीयं वंदे नृसिंहेश्वर पाहि मां त्वम् १०९

स्तोत्रे क्व ते मेस्त्युरुगाय शक्तिश्चतुर्मुखो वै विमुखोत्र जातः ।
स्तुवन्द्विजिह्वोभवदीश्वर त्वां सहस्रवक्त्रश्चकितोपि वेदः ११०

स्तुत्वैवं प्रणतीश्चक्रे तमाश्वास्यान्नवीद्विभुः ।
मत्प्रसादान्महत्वश्रीकीर्तिमत्पुत्रवान् भव ॥ १११ ॥
शिष्योत्तम त्वं योगज्ञो भविष्यसि कुलं च ते ।
त्वद्वद्भविष्यत्यानीय वधूं तिष्ठ ध्रुवं त्विह ॥ ११२ ॥
तथेत्युक्त्वा द्विजो भार्यामानीय स तया सह ।
तत्र तस्थौ ततो लेभे पुत्रान्पुत्रीं च सत्तमान् ॥ ११३ ॥
विद्यासरस्वतीमंत्रं गुरुदत्तं जपन्वरम् ।
भेजे गुरुं भवासक्तो जीवन्मुक्तोभवद्द्विजः ॥ ११४ ॥

त्रयतमानां स्वाश्रितानां कल्पवृक्षम् ॥ ७ ॥ दैन्यं दीनता आधिर्मनःपीडा भीर्भयं कष्टं क्लेशास्त एव दवो वनं तस्याग्निर्दाहकस्तं उत्कं उत्कण्ठं ॥८॥ अतर्क्यभावमतर्क्याभिप्रायं वाङ्मनसमार्गागोचरं दृक्पथमिति पाठः ॥९ ॥ भो उरुगाय ते स्तोत्रे मे क्व शक्तिः यतः ब्रह्मापि गुणानन्त्याद्विमुखो जातः सहस्रमुखोपि द्विजिह्वः सर्पविशेषः शेषः सोपि विमुखः वेदोपि चकितः एतावानयमीदृश इति विधिवाक्येन वक्तुं शङ्कितः ॥ ११० ॥ ११ ॥ त्वद्वत्त्वादृशं ॥ १२ ॥ सत्तमानतिशोभनान् ॥ १३ ॥ गुरुभजनप्रभावादेव भवासक्तः संसारानासक्तः तत्प्रसादलब्धज्ञानेन जीवन्मुक्तोभवत् ॥ १४ ॥

तत्कुलं चापि तत्तुल्यं तद्भक्तिमहिमा त्वियान् ।
त्वत्पूर्वजोपि तत्तुल्यस्तस्मात्ते मतिरीदृशी ॥ ११५ ॥

सद्गुरोस्तु प्रसादोयं भविष्यत्यपि ते कुले ।
वर्धमानः सदैवेति संविन्मे ब्राह्मण ध्रुवा ॥ ११६ ॥

इति श्रीगुरुचरिते भक्तियोगे भक्तिमाहिमवर्णनं नाम प्रथमोध्यायः
आदित एकोनत्रिंशोऽध्यायः ॥ १९ ॥

तत्कुलमपि तत्तुल्यमभवत् 'नास्याब्रह्मवित्कुले भवति' इति श्रुतेः इयान्तस्य श्रीगुरोर्भक्तेर्महिमा त्वत्पूर्वजोपि तेन नरहरिणा तुल्यः ॥ १५ ॥ हे ब्राह्मण इत्येवंप्रकारा मे संविद्बुद्धिर्ध्रुवा ॥ ११६ ॥

इति टीकायामेकोनत्रिंशोऽध्यायः ॥ श्रीगुरुदेवदत्त ॥

---

# अथ विंशोऽध्यायः

॥ नामधारक उवाच ॥

को मत्पूर्वः कथं तेन सेवितो भगवान्प्रभुः ।
यत्प्रभावान्ममेदर्थास्तच्छ्रोतुं सादरोस्म्यहं ॥ १ ॥

॥ सिद्ध उवाच ॥

प्रागुक्तं यवनात् त्रातः सायंदेव इति प्रिय ।
पूर्वः स एव तेश्रौषीद्गुरुं गंधर्वपूःस्थितं ॥ २ ॥
तत्रैत्य प्रणतो विप्रो मठे दृष्ट्वा परात्परं ।
नत्वा दंडवदस्तौषीदुपसंगृह्य पद्द्वयं ॥ ३ ॥
परमात्मन्परंज्योतिः श्रीनृसिंहसरस्वति ।
भक्तेश श्रुतिचिंत्यं ते सर्वतीर्थाश्रयं पदं ॥ ४ ॥
न मर्त्यस्त्वं महेशोसि त्र्यध्यात्मा मानवाकृतिः ।
प्राणदानक्षमांब्वाढ्यकमंडलुकरोसि कः ॥ ५ ॥

श्रीगणेशाय नमः॥ अथ विंशोऽध्यायः॥ गुरुप्रसादो विंशे च सायंदेव-परीक्षणं ॥ काशीयात्रोदितानंतव्रतमाहात्म्यमुत्तमं ॥ १ ॥ त्वत्पूर्वेन इत्युक्तमेव पृच्छति क इति ॥ १ ॥ प्राङ्नवमाध्याये ते तव पूर्वजः अश्रौषी-च्छ्रुतवान् ॥ २ ॥ तत्र गंधर्वपुरे श्रीगुरुमागत्य पादद्वंद्वं उपसंगृह्याभिवाद्य ॥ ३ ॥ हे परंज्योतिः सूर्यादीनामपि चिद्रूपत्वात् प्रकाशक 'अनुकृतेस्तस्य च' इति न्यायात् ॥ ४ ॥ मानवाकृतिरपि त्वं न मर्त्यः किंतु महेशोसि मृतानामपि प्राणदानक्षमेणांबुनाढ्यो युक्तः पूर्णः कमंडलुः करे यस्य कः प्रजापतिस्त्वं ॥ ५ ॥ दुष्टनिग्रहसाधुरक्षणसमर्थो दंडः करे यस्येदृशोऽजः

दुष्टनिग्रहसद्रक्षाक्षमदंडकरोस्यजः ।
शिवोसि मुक्तिदः पापतापनाशक्षमोग्रदृक् ॥ ६ ॥
मृतो जीवितो येन दुग्धा ललायी वशा शुष्ककाष्ठं तरुत्वं प्रणीतं।
क्षणादंत्यजोप्युद्धृतस्तेनुभावं क्षितौ कोर्हति ज्ञातुमन्यत्तवापि॥७

॥ श्रीगुरुरुवाच ॥

स्तुत्यानयास्मि ते विप्र भृशं तोषमुपागतः ।
भूयात्ते वंशमात्रस्य श्रद्धाभक्तिर्मयि ध्रुवा ॥ ८ ॥
कच्चित्क्षेमं युवत्यादेस्तव ब्रूहि क तिष्ठसि ।
कालेन बहुना विप्र संगतोस्यद्य मत्प्रिय ॥ ९ ॥

॥ सायंदेव उवाच ॥

देव देव जगन्नाथ भगवन्त्वत्प्रसादतः ।
सर्वेषां क्षेममस्तीश कांच्यां तिष्ठाम्यहं स्वकैः ॥ १० ॥
योगक्षेमेक्षका भ्रातृपुत्रा मे तेनुकंपया ।
त्वत्पादाब्जरसं पातुमलिप्रायोस्मि संप्रति ॥ ११ ॥

॥ श्रीगुरुरुवाच ॥

कष्टं मे सेवनं नाज्ञ कोपि ज्ञातुं न शक्यते ।
ग्रामे नदीतटेरण्ये दुर्गमेपि वसाम्यहम् ॥ १२ ॥

विष्णुः भक्तानां पापतापनाशसमर्था उग्रा दृग्यस्य स त्वं मुक्तिदः शिवः ॥ ६ ॥ अनुभावं सामर्थ्यं अन्यदैश्वर्यादि ॥ ७ ॥ ८ ॥ तव युवत्यादेः क्षेममस्ति किं कच्चित्कामप्रवेदने मत्प्रिय प्रेष्ठभक्त ॥९॥ स्वकैः स्वजनैः सह ॥१०॥ योगक्षेमद्रष्टारः अलिप्रायो भ्रमरप्रायोस्मि भवामि ॥११॥ कोप्य-वाङ्मनसगोचरोपि मदात्मेति शेषः ॥१२॥ स सायंदेवः यत्र क्वापि त्वाम-

तच्छ्रुत्वा सोऽनुयास्यामि यत्र क्वापीत्यमाददे ।
तथेत्युक्त्वैकदा शंभुस्तेनागात्सह संगमम् ॥ १३ ॥
निवार्यान्यान्समं तेन स्थित्वाश्वत्थतले निशि ।
वृष्टयै तदादिदेशाब्दमकालेऽपि परीक्षितुं ॥ १४ ॥
गर्जिताब्दो ववर्षारं झंझावातमवस्तदा ।
क्षणप्रभापि मुष्णंती दृष्टिमासीदनुक्षणम् ॥ १५ ॥
उपर्युपरि वस्त्रैस्तं समंतात्स प्रकंपितम् ।
सहिष्णुः श्रीगुरुं भेज आमागांतिरणद्द्विजः ॥ १६ ॥
यामाभ्यां खंडितं वर्षं दृष्ट्वोचे तं गुरुः पुरम् ।
गत्वाग्निमानयात्यंतं क्लिन्नांगे शीतमुत्थितम् ॥ १७ ॥
कुत्रापीतस्ततोपश्यन्याहि मामनुचिंतयन् ।
तच्छ्रुत्वागात्स करकचूर्णितांगोऽपि शीकरैः ॥ १८ ॥
क्लेदितात्माप्यनुध्यायन् चंचलातेजसायनम् ।
प्रविश्य गोपुराद्द्वाःस्थदत्तमार्गः पुरं स तु ॥ १९ ॥

नुयास्यामीत्यमाददे स्वीकृतवान् ॥ १३ ॥ तेन सायंदेवेन सह अन्याना-गतान्निवार्य वृष्टयर्थं मेघमादिदेशाज्ञापितवान् ॥ १४ ॥ क्षणप्रभा विद्युत् दृष्टिं मुष्णंती ॥ १५ ॥ धारासंपातपीडया रणंतो द्विजा दंता यस्य स स्वयं सर्वं सहिष्णुः प्रकंपितं गुरुं उपर्युपरि वस्त्रैः कृत्वा भेजे ॥ १६ ॥ प्रहरद्वयेन खंडितां वृष्टिं दृष्ट्वा क्लिन्नांगे शीतमुत्थितं अतः पुरं गत्वाऽग्निमानय ॥ १७ ॥ वर्षोपलचूर्णितगात्रः शीकरैरंबुकणैः ॥ १८ ॥ क्लेदितदेहोऽपि चंचलातेजसो विद्युत्प्रकाशादयनं मार्गं चिंतयन् गोपुरात् पुरद्वारात् पुरं प्रविश्य द्वार-पालदत्तमार्गः ॥ १९ ॥ गृहीतः भाजनस्थवन्हिर्येन कुत्रापीतस्ततोपश्य-

गृहीतभाजनं न्यस्तवह्निः शीघ्रं न्यवर्तत ।
ज्ञातुं गुरूक्तिहेतुं स व्यधाद्दृष्टिमितस्ततः ॥ २० ॥
पार्श्वद्वयतलस्थोग्रसर्पौ दृष्ट्वागमज्जवात् ।
दृष्ट्वानुयातावपि तौ भीतो दध्यौ हरेः पदं ॥ २१ ॥
तदोच्चैः सङ्गमे वेदध्वनिं श्रुत्वा विलोक्य च ।
द्योतं भ्रांतो द्रुतं प्राप्य दृष्ट्वैकं स्वगतं द्विजः ॥ २२ ॥
कैः कृतोयं ध्वनिर्द्योतः क्वेत्यभूच्छंकितः स तं ।
भीतं प्राह गुरुर्माभीस्त्वद्गुप्त्यै तौ प्रचोदितौ ॥ २३ ॥
तदाप्यही गुरुं नत्वा जग्मतुस्तं प्रभुर्द्विजम् ।
प्राहेदृशी गुरोः सेवा मरुतामपि दुष्करा ॥ २४ ॥

॥ सायंदेव उवाच ॥

भगवन्ननुकंपाब्धे शरणागतवत्सल ।
सेवातत्त्वमुपाख्याहि श्रीगुरोस्तारकं परम् ॥ २५ ॥

॥ श्रीगुरुरुवाच ॥

छायौपम्येन संसेव्यो गुरुस्तत्त्वमिदं परं ।
प्रार्पयेन्नियतं देहं सार्थं तस्मै परात्मदृक् ॥ २६ ॥

न्नित्यस्य कारणं ज्ञातुं इतस्ततो दृष्टिमकरोत् ॥ २० ॥ जवाद्वेगादगमत् तथाप्यनुयातौ तौ दृष्ट्वा ॥ २१ ॥ द्योतं प्रकाशं च द्विजः स्वगतमचिंतयत् कैः कृत इति ॥ २२ ॥ त्वद्गुप्त्यै रक्षणाय तौ सर्पौ प्रेरितौ ॥ २३ ॥ हे द्विज ईदृशी कष्टरूपा गुरोः सेवा देवानां दुःखेनापि कर्तुमशक्या त्वं तु नरः सन्कथं करिष्यसि ॥ २४ ॥ २५ ॥ छायौपम्येन पुरुषस्य छायासनोत्थानगमनादौ पुरुषं न व्यभिचरति तद्वत् सार्थं द्रव्यसहितं देहं नियतं तस्मै गुरवे प्रकर्षेणार्पयेत् परार्थे दृग्दर्शनं यस्येदृशः शिष्यः ॥ २६ ॥

सर्वभावेन बुद्ध्वेशं तं भजेत्तत्प्रसादभुक् ।
तद्ध्यानजीवनस्तत्पत्तीर्थपस्तत्कथारतिः ॥ २७ ॥

दुःसाध्येऽपि यदादिष्टः कार्ये भक्त्या तदारभेत् ।
आरब्धं स नयेत्सिद्धिं भीतः कालोऽप्यपैत्यतः ॥ २८ ॥

शृणु गौरीशसंवादं ब्राह्मस्त्वष्टाभजद्गुरुं ।
विद्यार्थी सर्वभावात्तदाढ्यं ज्ञातुं गुरुर्जगौ ॥ २९ ॥

वर्षास्वापः पतंत्यत्र प्रत्यब्दमुटजे त्वतः ।
रचयैकं गृहं रम्यं सुखदं तुल्यवत्सदा ॥ ३० ॥

शिष्यं तदाश्रुत्य यांतं गुरुस्त्री प्राह कंचुकं ।
देहि मेंगमितं चित्रं मनोहरमकृत्रिमम् ॥ ३१ ॥

पुत्रोऽप्याहांघ्रियोग्ये मे पादुके देहि यैर्मसि ।
गतेऽपि यातुः सुखदे चिंतितस्थलदायके ॥ ३२ ॥

कन्याह कुंडले दन्तिदन्तभृतं प्रदेहि मे ।
लसत्क्रीडागृहं चैकस्तंभं पुत्तलिका अपि ॥ ३३ ॥

तस्य गुरोर्ध्यानं जीवनं तत्पादतीर्थपानः तत्कथायां रतिः प्रीतिर्यस्य ॥ २७ ॥ दुःसाध्ये कार्ये आदिष्ट आज्ञप्तस्तदारभेत् ननु तादृशं कथं सिध्येदत आह आरब्धमिति आरब्धकार्यं तत्सिद्धिपर्यंतं मरणशंकापि नेत्याह भीत इति अतोस्माद्गुरुभक्ताद्भीतः कर्तरि क्तः भीत्रेत्यादिनापादाने पंचमी ॥ २८ ॥ ब्राह्मो ब्रह्मपुत्रः ॥ २९ ॥ उटजे पर्णशालायां ॥ ३० ॥ तदाश्रुत्यांगीकृत्य कंचुकं चोळीं ॥ ३१ ॥ चिंतितस्थलप्रापके ॥ ३२ ॥ कन्या प्राह हस्तिदन्तनिर्मितमेकस्तम्भं गृहं सचेतनाः पुत्तलिकाः ॥ ३३ ॥ येषु पाकः शीततां न यास्यतीदृशानि

सचेतनाः सदा येषु पाकः शैत्यं न यास्यति ।
अनंजनस्पृग्भांडानीत्याकर्ण्य स ययौ वनम् ॥ ३४ ॥

अज्ञोस्म्यप्यत्र गुर्वर्थं मर्तव्यमिति तं वने ।
निर्विण्णमाययौ कश्चिदवधूतो दयार्द्रधीः ॥ ३५ ॥

व्यपेतभीः प्रहृष्टात्मा गुरुभावनया स तम् ।
उपसंगृह्य तत्तस्मै शशंस गुरुभाषितम् ॥ ३६ ॥

तमाश्वास्याब्रवीत्साधुः काशीक्षेत्रे त्वभीष्टदे ।
सति जाग्रति विश्वेशे किं केषां दुर्लभं वद ॥ ३७ ॥

तत्रत्यपुण्यं को वेत्ति तद्वास्युद्वीक्षणादपि ।
अपैत्यघौघः किं वाच्यं सुखमानन्दकानने ॥ ३८ ॥

पुमर्थदोपि विश्वेशः प्राणिमात्रं मृतं क्षणात् ।
स तारकोपदेशेन दत्ते मुक्तिमनुक्षणं ॥ ३९ ॥

॥ शिष्य उवाच ॥

क्वास्ते काशी क्व विश्वेशो जाने स्वर्भुवि वा न तत् ।
प्रार्थये तारकं त्वां मे दर्शयाज्ञोस्मि केवलं ॥ ४० ॥

भाण्डानि कज्जलस्पर्शरहितानि इति श्रुत्वा स शिष्यो वनं ययौ ॥ ३४ ॥ गुरुकार्यार्थं मर्तव्यमिति निर्विण्णं तं अवधूत आययौ ॥ ३५ ॥ निर्भयः प्रसन्नचित्तः अयं गुरुरिति बुद्ध्या तमुपसंगृह्याभिवाद्य शशंस कथयामास ॥ ३६ ॥ ३७ ॥ ३८ ॥ 'देहांते देवस्तारकं ब्रह्म व्याचष्टे' इति श्रुतेः तारकं रामनाम प्रणवो वा ॥ ३९ ॥ ४० ॥ यद्यस्माद्यदीक्षणात्काशीक्षेत्र-

स प्राह त्वां नयाम्यद्य त्वद्योगान्क्षेत्रदर्शनं ।
स्यान्मेप्ययत्नतो जन्मनाफल्यं यदर्शनात् ॥ ४१ ॥

तमादाय ततो योगगत्या शीघ्रं महामुनिः ।
काशीं गत्वा क्षेत्रयात्रां यथाक्रममुपादिशत् ॥ ४२ ॥

विश्वेशदर्शनं चांतर्गृहयात्रां यथाक्रमं ।
दक्षिणोदङ्मानसाख्यां पंचक्रोशीं च विस्तरात् ॥ ४३ ॥

स्नानदानार्चनश्राद्धयुक्तां यात्रां च पाक्षिकीं ।
भवानीशो हरिर्धुंडिर्दंडपाणिश्च भैरवः ॥ ४४ ॥

गुहः काशी च गङ्गाद्या देवा लिंगानि सर्वशः ।
इत्यादीनां पूजनं च निवेद्य स्थापनं तथा ॥ ४५ ॥

स्वनामांकितलिंगस्य कथयित्वा यथोक्तवत् ।
कुरु प्रसीदेद्विश्वेश इत्युक्त्वांतर्दधे स्वयं ॥ ४६ ॥

मद्भावस्य परीक्षार्थं गुरू रूपांतरादयं ।
प्राप्तः किलेति मत्वा स यथानिर्दिष्टमाचरत् ॥ ४७ ॥

दर्शनात् ॥ ४१ ॥ ४२ ॥ मुख्यत्वेन यात्रां निर्दिशति दक्षिणमानसाख्यां उत्तरमानसाख्यां ॥ ४३ ॥ पाक्षिकीं शुक्ले कृष्णे च क्रियमाणां यात्रां भवस्य पत्नी भवानी इंद्रवरुणभवेत्यानुगादेशो ङीन् च ईशो विश्वेश्वरः ॥ ४४ ॥ ४५ ॥ स्वनामान्वितलिंगस्य स्थापनं कथयित्वा हे शिष्य यथोक्तवत्कुरु विश्वेशः प्रसीदेदित्युक्त्वांतर्दधे स्वयं साधुः ॥ ४६ ॥ मदीय-भक्तेः परीक्षां कर्तुं रूपांतरेणायं गुरुः प्राप्तः किल ॥ ४७ ॥ अब्रवीत्तं

चरित्वा क्षेत्रयात्रां स लिंगं संस्थापयत्तदा ।
विश्वेशो दर्शयित्वा स्वं रूपं प्रीतोब्रवीदिदम् ॥ ४८ ॥
वत्स वत्स पवित्रोसि गुरुभक्त्या विशुद्धया ।
धन्योस्यनुगृहीतोसि वृणीष्वाभीप्सितं वरं ॥ ४९ ॥
शिष्योपि गुरुतत्पत्नीपुत्रोक्तीस्तं तदाब्रवीत् ।
कलाविद्यापटुर्भूत्वा ज्ञानविज्ञानवानिह ॥ ५० ॥
प्रसार्य क्वापि चातुर्यं लोकख्यातो भविष्यसि ।
इत्युक्त्वान्तर्दधे विश्वेट् ततः सोप्यायया गुरुं ॥ ५१ ॥
याचिताखिलवस्तूनि श्रीविश्वेशप्रसादतः ।
निर्मायादात्कृती तेन गुरुस्तुष्टस्तमब्रवीत् ॥ ५२ ॥
भूत्वा ज्योतींषि यावत्त्वं चिरजीवी प्रसार्य सत् ।
चातुर्यं सर्वलोकेषु त्वं स्रष्टेवापरो भव ॥ ५३ ॥
तव सर्वर्धिनिधयो वशाश्चिंताव्यथादिकाः ।
न स्पृशन्ति कदापि त्वां प्रसादोयं मम ध्रुवः ॥ ५४ ॥
ततः प्रस्थापयामास तं स्वस्थानमुपेत्य सः ।
भूत्वा गुरूक्तवध्यास्ते श्रीमंस्त्वष्टाखिलश्रुतः ॥ ५५ ॥

प्रतीति शेषः ॥ ४८ ॥ ४९ ॥ कलाविद्येति विश्वेश्वरवाक्यं कलाश्चतुःषष्टिः विद्याश्चतुर्दश ज्ञानं व्यावहारिकं विज्ञानं पारलौकिकं क्वापि स्वर्गे भुवि पातालेपि ॥ ५० ॥ ५१ ॥ कृती कृतकृत्यः इष्टादिभ्यश्चेतीनिः ॥ ५२ ॥ यावज्ज्योतींषि चंद्रसूर्यनक्षत्राणि तावत्त्वं चिरंजीवी सन् अपरः स्रष्टा ब्रह्मेव भव ॥ ५३ ॥ ऋद्धयोणिमादयः निधयो महापद्मादयः चिंता मानसी व्यथा दैहिकी आदिशब्देनाधिदैविकादयः ॥ ५४ ॥ इति वरं

इति गौर्यै शिवेनोक्तं सेवातत्वं त्विदं गुरोः ।
तदुक्ताचरणं भक्त्या सर्वभावात्तदर्चनम् ॥ ५६ ॥
एतावदुक्त्वा विरते गुरौ द्विजो नत्वाब्रवीदद्य विचित्रमीक्षितं ।
काशीपुरं वै भवता सहाखिलं यद्यत्समाख्यातमवेक्षितं मम॥५७॥
क्वाहं क्व काशी क्व भवांस्तथापि वा अदृष्टपूर्वं सकलं प्रदर्शितं ।
न त्वं नरो नासि सुरो न चेतरो नूनं परात्मैव परावरोस्यजः५८
प्राग्ब्रह्म त्वमजोक्रियोपि बहुलं स्यामित्यभूद्धीस्तया ।
सृष्ट्वैवांडभुवं ततो जगदिदं सृष्टं सधर्मं गुणैः ॥
स्वैः स्वं भो रमयन्विहंसि सदरीनत्रावतीर्यानिशं ।
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ५९ ॥

दत्वा प्रस्थापयामास गमयामास ॥ ५५ ॥ आख्यानमुपसंहरति इतीति सर्वभावात्सर्वाभिप्रायेण ॥५६॥ विरते मकीभूते सति सम सर्वं मयावेक्षितं ॥ ५७ ॥ अतएव त्वं नरः किं देवोहं नेत्याह नासि सुरः अघटितघटनापटीयस्त्वान्नूनं निश्चितं परे ब्रह्मादयोवरे यस्मादीदृशोजः परश्चासावात्मा च प्रत्यगभिन्नपरब्रह्मरूपोसि ॥५८॥स्तौति शार्दूलविक्रीडितैः प्रागिति प्राक्सृष्टेः पूर्वं त्वं ब्रह्म नित्यशुद्धबुद्धादिलक्षणं तादृशरूपोजोक्रियोपि बहुलं अहं स्यां भवेयमिति या धीरभूत् यथाकाशस्याल्पत्वं बहुत्वं च वस्त्वंतरकृतमेव तथैव तवात्मनो बहुभवनं न ह्यात्मनोन्यदनात्मभूतं तत्प्रविविक्तं देशकालं सूक्ष्मं व्यवहितं विप्रकृष्टं भूतं भवद्भविष्यद्वा वस्तु न(?) विद्यतेतो नामरूपे सर्वावस्थे ब्रह्मणैवात्मवती न ब्रह्म तदात्मकं तया धिया प्रकृतिभूतयांडभुवं ब्रह्माणं सृष्ट्वा तं निमित्तीकृत्येति यावत् ततः सधर्ममिदं जगत्सृष्टं भो गुरो स्वैः स्वरूपकल्पितैर्गुणैर्भूतैर्मायामयैः स्वं जीवरूपं रमयन्नत्रावतीर्यानिशं साधुद्वेष्टॄन् विहंसि यस्त्वं तस्य ते वरं श्रेष्ठं श्रीमत्पादाब्जद्वयं वंदे ॥ ५९ ॥

कल्याकृष्टहृदुज्झितक्रतुनरत्रस्ताध्वराशीर्मुदे ।
प्रातः सूर्य इवोदितोस्यज महामोहांधकारं ग्रसन् ॥
सद्धर्माश्रमसेतुमत्र शिथिलप्रायं सुदार्ढ्यं नयन् ।
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ६० ॥

सर्वानन्दनिधानरूपममलं स त्वं सुखं मूर्तिमत् ।
प्रादुष्कृत्य जनत्रयांतरमृगक्रीडावनं पावनं ॥
संसारावटमग्नमुद्धरसि भो स्वीकृत्य तुर्याश्रमं ।
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ६१ ॥

मूके गां दृशमंधके सुतनयं वंध्यासु चासून्मृते ।
सौभाग्यं विधवासु पल्लवमहो दत्तं सुशुष्केंधने ॥

बहु स्यामिति संकल्प्य स आद्योभूज्जगत्स्वयं ॥ श्रीदत्तः शिक्षयन्दुष्टान्रमते स्वात्मना स्वयं ॥ १ ॥ कलिनाऽधर्ममित्रेणाकृष्टानि हृदयानि येषां उज्झितास्त्यक्ता यज्ञा यैस्ते च ते नराश्च तेभ्यस्त्रस्ता येऽध्वराशिषो देवास्तेषां मुदे मूलाज्ञानं परिहरन् प्रातः सूर्य इवोदितोसि प्रशस्तो धर्मो येषु ते च ते आश्रमास्तेषां सेतुं शिथिलप्रायमपि तं सुदार्ढ्यं नयन्वर्तसे ॥६०॥ नरैस्त्यक्तेषु यागेषु कलिदोषहतैरिह ॥ देवानन्दप्रदो दत्तोवतीर्णो धर्मभावनः ॥ २ ॥ भो सर्वानन्दनिधान मूर्तिमद्धनं सुखं त्रिविधजनानामंतरं मन एव मृगश्चपलत्वात्तस्य क्रीडावनमिव पावनं रूपं प्रादुष्कृत्य चातुर्थाश्रमं स्वीकृत्य च संसारगर्ते मग्नं लोकमुद्धरसि अथवा यः पूर्वोक्तः स त्वं मूर्तिमत्सर्वानन्दनिधानरूपं प्रकटीकृत्यान्यत्समानं ॥ ६१ ॥ सर्वानन्दनिधिर्भूत्वा यतिर्दत्तो जगत्त्रयं ॥ पावयन्नमलो भक्तानुद्धरत्यतिकष्टतः ॥ ३ ॥ मूके गां व्यवहारार्हवाणीं दृशं दृष्टिं वंध्यासु पुत्रं मृते शवे प्राणान् सुतरां

एवंभूत इयान्तवैष महिमा त्रैलोक्यसंस्थाक्षमो ।
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥६२॥

मुक्तावास मुमुक्षुकल्पविटपिन्भो कामिनां कामधुग् ।
दारिद्र्यानलमेघ दुष्कृतदवाग्ने तापितारास ते ॥
श्रुत्यन्विष्टरजःपदं श्रुतविवादातीततत्त्वं महत् ।
वंदे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ॥ ६३ ॥

भो योगीश्वरभावितं तव पदं तीर्थाश्रयं मज्जना-
जीवं कामिसुदैवतं च कमलालीलास्थलं निर्मलं ॥

शुष्के अनार्द्रे शुषः कः काष्ठे पल्लवं त्रैलोक्यसंस्थायामक्षमस्ततोप्याधिकः ॥ ६२ ॥ मूकाय वाचं दशमंधकाय ददौ वशायै तनयं मृताय ॥ प्राणान्सुभागं च गताधवायै शुष्कद्रुमं पल्लवयन्हि दत्तः ॥४॥ नन्वेकोहं त्रिविधजनक्रीडावनरूपं कथमित्यत आह मुक्तानामावासः निर्दोषत्वात्समत्वाद्ब्रह्मत्वाच्च 'निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिता' इति स्मृतेस्तत्संबुद्धौ मुमुक्षुकल्पविटपिन् मुमुक्षूणां सद्गुरुप्राप्तिसाधनलाभभावनादिनिरासकल्पनापूरक बहिर्मुखानामपि भक्तानां कामान्दोग्धीति कामधुक् तत्संबुद्धौ विषय्यवांतरभेदानामपि दरिद्रादीनां मनोरथपूरकस्त्वमेवेत्याह भो दारिद्र्याग्निशामकमेघ पातकारण्यदाहक तापाः संजाता यस्य तस्यारामरूप ते तव पदं पद्यते योगिभिर्गम्यत इति पदं स्वरूपं सिद्धांतातिरिक्तशास्त्रविवादातीततत्वरूपं महद्व्यापकं श्रुतैः श्रुतिभिरन्विष्टं सारभूतं रजो यस्य ॥६३॥ चिंतामणिरिवाभाति भक्तानां भक्तियोगतः ॥ शास्त्रवादव्यतीतात्मा श्रीदत्तो भगवान्स्वयं ॥ १ ॥ इदं पदमनेकबुद्धिविषयमित्याह भो श्रीगुरो तव पदं याज्ञवल्क्यादियोगीश्वरैर्भावितं तीर्थाश्रयं यतोस्माद्गंगा निःसृता श्रुतिश्च 'चरणं पवित्रं

विद्वद्वादकरंडकं सुकृतसंस्थानं महत्पावनं ।
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ।। ६४ ।।

वेदागोचर ते चरित्रममलं शक्तोत्र कः कृत्स्नशो ।
वक्तुं वन्ह्यविनेंदुभूखपवनात्मेतीह मूर्त्यष्टकम् ।।
एतद्विश्वमयं न चान्यदिह वा ॐकाररूपेशित-
र्वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ।। ६५ ।।

कुण्डीदण्डकरं प्रशांतममलं संन्यासिरूपं तव ।
श्रीभीमामरजायुतिस्थितमज ध्येयं शरण्यं मयि ।।
ज्ञातं तारकमीश सत्यमनिशं ब्रह्मन्स्थिरीकुर्वदो ।
वन्दे श्रीनृहरे सरस्वति वरं ते श्रीपदाब्जद्वयम् ।। ६६ ।।

विततं पुराणं येन पूतस्तरति दुष्कृतानि ।। तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम्' इति सज्जनजीविकाभूतं कामिनामुत्तमं दैवतं लक्ष्मीविलासस्थानं निर्मलं पापहरं रत्नानां करंडकमिव विदुषां वादानामपि करंडकं पूज्यं पावनं चास्ति ।। ६४ ।। योगीशार्चिचितं लोकपावनं यत्पदं महत् ।। कामदं श्रीनिवासं च स दत्तः पुण्यशास्त्रभूः ।। ६ ।। भो उपनिषदतिरिक्तवेदाविषयं मलानिवर्तनं ते चरितं सर्वशो वक्तुं कोपि न समर्थः ईश्वरेणापि स्वयं कार्त्स्न्येनाज्ञातत्वात् श्रुतिश्च 'यो अस्याध्यक्षः परमे व्योमन् त्सो अंग वेद यदि वा न वेद' इति अग्निजलसूर्यचंद्रभूम्याकाशवायुपुरुषा इत्यदो मूर्त्यष्टकं तव हे ॐकाररूप ईशितः मूर्त्यष्टकमयमेव जगन्नान्यत् वै निश्चयेन ।। ६५ ।। आत्माप्युपनिषद्वेद्यो यल्लीलां कोपि वेद नो ।। जगन्मयाष्टमूर्त्यात्मा स दत्तः प्रभवात्मकः ।। ७ ।। दण्डकमण्डलुकरं ज्ञानं ज्ञप्तिरूपं मयि भक्ते स्थिरीकुरु ।। ६६ ।। संन्यासिरूपी श्रीदत्तो धृतदंडकम-

एवं स्तुवंतं प्रभुराह तोषिता तुष्टेन भक्तिर्मयि खल्वहैतुकी।
भो पुत्रपौत्रादिसमस्तवंशजा भक्ता भविष्यन्ति ममैव निश्चितम्
॥ ६७ ॥

इतःपरं म्लेच्छनिषेवणं जहि स्त्रिया सुतैश्चात्र सदैव तिष्ठ भोः।
द्विजोपि गत्वा गृहमानयत्स्त्रियं सुतांश्च तुष्टाव जगद्गुरुं पुनः
॥ ६८ ॥

त्वं वाच्यवाचकतयेश जगन्मयो वा ॐकारवाच्य भगवन्
त्रिगुणात्मकोसि। आद्यंतवर्जित पुराकृतभागधेयाद्दृष्टं त्विदन्तव
परात्परसत्त्वरूपं ॥ ६९ ॥

पापोपि पूतोस्मि तवांघ्रिसंश्रयात्स्पर्शाश्रयाल्लोहमपीव कांचनं।
तप्तोपि शांतोस्मि मुखेंदुदर्शनाद्दीनोपि धन्योस्मि तव प्रसादतः
॥ ७० ॥

ण्डलुः ॥ गंधर्वस्थः सच्चिदात्मा सदा तिष्ठतु मे हृदि ॥ ८ ॥ अहैतुकी निःश्रेयसफला तव पुत्राद्या मम भक्ता भविष्यन्ति ॥६७॥जहि त्यज द्विजः सायन्देवः ॥ ६८ ॥ वाच्यं रूपं वाचकं नाम तद्भावस्तत्तया वाच्यवाचकभेदेन त्वं जगन्मयोसि हे ॐकारवाच्य 'तस्य वाचकः प्रणव' इति पातंजलात् ॐकारस्य परापरब्रह्मण आलंबनत्वाद्भगवत ॐकारवाच्यत्वं 'एतद्ध्येवाक्षरं ब्रह्म०' 'एतदालंबनंश्रेष्ठ०' 'परं चापरं च यदोंकार' इत्यादिश्रुतिभ्यः अतएव त्वं जगन्मयोसि लोके नामनामिनोर्भेदस्याप्रसिद्धत्वाद्वस्तुतश्चोंकारस्य ब्रह्मविवर्तत्वाद्विवर्तानां च विवर्ताधिष्ठानेन भेदशून्यत्वात् ॥ ६९ ॥ पापोप्यहं त्वत्पादसंश्रयाच्छुद्धोस्मि तापत्रयतप्तोप्यहं तव मुखेन्दुदर्शनाच्छांतोस्मि दीनोऽधर्माज्ञानानैश्वर्यादियुक्तोप्यहं तव प्रसादाद्धन्योस्मि ॥ ७० ॥ अव-

स्तुत्वैवं श्रीगुरुं हृष्टः कारनाटकभाषया ।
आवतारकथोद्धातं जगौ तस्य यथाक्रमं ॥ ७१ ॥
भगवान्तेन तुष्टः सन्दत्त्वेष्टं वरमाह तं ।
अयं ज्येष्ठसुतो मान्यो धन्यस्ते मेतिवल्लभः ॥ ७२ ॥
इत्युक्त्वा नागनाथस्य मूर्ध्न्यधाच्छंकरं करं ।
तदैव गीष्पतिसमो वक्ता ज्ञाता बभूव सः ॥ ७३ ॥
सद्गुरुः प्राह विप्रं ते भार्येयं सुभगा सती ।
चतुरश्चतुरान्पुत्रान्लभेस्त्वमपि भाग्यभाक् ॥ ७४ ॥
इतः परं म्लेच्छलब्धवृत्तिं हित्वा कुटुंबयुक् ।
तिष्ठात्रैव तव श्रेयो भवेन्मे सुप्रसादतः ॥ ७५ ॥
स्नात्वा स्वकैः सह तिथौ भाद्रशुद्धचतुर्दशे ।
अनन्तव्रतमस्त्यद्य तारकं तत्त्वमाचर ॥ ७६ ॥
धर्मः कृष्णोपदेशेन चरित्वा यद्व्रतं महत् ।
दिव्यं सौख्यं सार्वभौमं भुक्त्वागात्सतनुर्दिवं ॥ ७७ ॥

तारः प्रादुर्भावस्तमारभ्येत्यावतारं यः कथाया उद्धातो गानं तं यथाक्रमं कारनाटकभाषया जगौ ननु वैदिकसूक्तेषु विद्यमानेषु पौराणिकस्तोत्रेषु च स्वयं ब्राह्मणोपि स कुतः कारनाटकभाषयास्तौत् देवो वा कथं तेन तुष्ट इति चेद् वैधे वेदापेक्षा ईश्वरस्तवनं तु स्वाधिकारानुरूपं कार्यं न तेन प्रत्यवायः प्रत्युत ईशतुष्टिरेव सा त्वनुरक्तिसापेक्षा ॥७१॥ ज्येष्ठसुतो नागनाथः ॥ ७२ ॥ ७३ ॥ विप्रं सायंदेवं चतुरश्चतुःसंख्याकान् त्वमपि भाग्यभागैश्वर्यवान् ॥ ७४ ॥ ७५ ॥ अत्र चतुर्दशे भाद्रपदशुद्धतिथौ तिथयो द्वयोरिति तिथिशब्दस्य पुंस्त्वमपि ॥ ७६ ॥ धर्मः पांडवः सतनु-

॥ सायंदेव उवाच ॥

भवान्देवोस्ति नोनंतो भवत्सेवाव्रतं परम् ।
तथापि श्रोतुमिच्छामि को धर्मः कीदृशं व्रतम् ॥ ७८॥

॥ श्रीगुरुरुवाच ॥

धर्मोभूत्पांडवो राजा तत्सदस्यां सुयोधनः ।
मायाभ्रांत्यापतन्मानी व्रीडितो जनहास्यतः ॥ ७९॥
जित्वा द्यूतमिषाद्धर्मं हृततच्छ्रीः स सानुजम् ।
वनाय प्रेरयत्सोपि तत्र गत्वा सुदुःखितः ॥ ८० ॥
स एकदागतं कृष्णं नत्वा सस्त्र्यनुजोब्रवीत् ।
त्वन्नस्त्रातेति बिरुदं वहन्नोऽकं न वेत्सि किं ॥ ८१ ॥

देहसहितः ॥ ७७ ॥ येन व्रतं कृतं स को धर्मः कीदृशं व्रतं चक्र इति ॥७८॥ सदस्यां सभायां मयनिर्मितमायाभ्रांत्या सुयोधनोपतत् जनहास्यतो व्रीडितोभूत् अत्र ह वाव किल स्मर्यते खांडवदाहे रक्षितेन मयासुरेण धर्मराजकृतराजसूययज्ञसभायां जले स्थलभानं स्थले जलभानं द्वारे भित्तिभानं भित्तौ द्वारभानं चेत्येवंलक्षणा या रचिता माया तया संजातया भ्रांत्या स्थलबुद्ध्या जले गच्छन्नपतत्तदांधसुतोयं सत्यमिति स्त्रियो हास्यं चक्रुस्तेन लज्जितोभूदिति ॥७९॥ ततः कपटद्यूतमिषेण दुर्योधनो धर्मं जित्वानुजसहितं तं द्वादशाब्दं वनाय प्रेरयत् किंभूतो दुर्योधनः हृता तस्य धर्मस्य श्रीः संपत्सहिता राज्यलक्ष्मीर्येन सः धर्मः सपत्नीकः सानुजस्तत्र तस्मिन्नवसरे सुतरां दुःखितो गत्वा द्वैतवनमिति शेषः ॥ ८० ॥ अनुजैः स्त्रिया च सहितः नोस्माकं वनवासदुःखं न वेत्सि किं ॥ ८१ ॥ सदा मां निर्विकल्पस्थित्या भजतां

॥ श्रीकृष्ण उवाच ॥

बलवद्दैवमपि मां भजतां नेक्षते सदा ।
त्वं मद्भक्तोपि मद्वाक्यात्कुर्वनन्तव्रतं महत् ॥ ८२ ॥

कोनंतस्तद्व्रतं कीदृक्पुरा केन कृतं वद ।
इति धर्मानुयोगं स श्रुत्वा वक्तुं प्रचक्रमे ॥ ८३ ॥

चराचरजगत्कालभूताद्यात्माप्यहं विभुः ।
कर्मप्रयोजनगुणैर्भूपानन्तोस्म्यहं पृथक् ॥ ८४ ॥

भाद्रशुक्लचतुर्दश्यामनंतव्रतमुत्तमं ।
व्रतिनोनंतफलदं तत्कुर्विष्टमवाप्स्यसि ॥ ८५ ॥

ऋषिः सुमंतुः प्रागासीद्वासिष्ठो गौतमीपतिः ।
तत्स्त्रीः कन्यां प्रसूयैकां मृतान्योद्वाहितामुना ॥ ८६ ॥

नेक्षते देहतादात्म्यवत एव दैवभोगप्रतीतेः अतएव समाधिना दैवनाशोप्युक्तः 'अमुना वासनाजाले निःशेषं प्रविलापिते । समूलोन्मूलिते पापपुण्याख्ये कर्मसंचय'इत्यादि ईदृक्त्वं तव नास्ति तथापि त्वं मद्भक्त एवातो मद्वाक्याद्दैवहरं महदनन्तव्रतं कुरु ॥ ८२ ॥ कोनन्त इत्यादिधर्मस्यानुयोगं प्रश्नं श्रुत्वा स कृष्ण उत्तरं वक्तुमुपचक्रमे ॥ ८३ ॥ विभुर्व्यापकत्वाच्चराचरादिरूपोपि कर्मप्रयोजनगुणैः कृत्वाहं चराचरादिविकारजातात्पृथक्स्थितस्ततोप्यधिक 'अतो ज्यायांश्च पूरुषः पादोस्य विश्वा'इति श्रुतेः विष्टभ्याहमिति स्मृतेः अतो हेतोर्हे भूप त्रिविधपरिच्छेदशून्यत्वादहमनन्तः ब्रह्मेत्यर्थः 'सत्यं ज्ञानमनन्तंब्रह्म' इति श्रुतेः ॥ ८४ ॥ ८५ ॥ प्राक्पूर्वं तत्स्त्री गौतमी अमुना सुमन्तुना गार्हस्थ्याभीप्सयान्या यथावदुद्वाहिता ॥ ८६ ॥ चण्डी अत्यंतकोपवती

सा दुःशीला कलिद्वेषप्रिया चण्डी पतिं सुताम् ।
क्रूरा तौ त्रासयामास कन्यापि ववृधे शुभा ॥ ८७ ॥
चित्रक्रियापटुं सोदात्सच्छीलगुणलक्षणां ।
कौंडिण्याय स्वगृह्योक्तब्राम्होद्वाहविधानतः॥ ८८ ॥
तत्र श्वशुरवात्सल्यात्स्थित्वा मासद्वयं मुनिः ।
श्वश्रूत्रस्तो ययौ वध्वा कौंडिण्यः श्वशुराज्ञया ॥ ८९ ॥
चण्ड्यररं दृढं बध्वा पाथेयं नार्पितं स तु ।
प्रादाद्बहिस्थगोधूमपुलाकं तौ ततो गतौ ॥ ९० ॥
मध्याह्ने तस्थतुर्नद्यां चिरंटीः प्रेक्ष्य तत्र सा ।
गत्वार्चयन्तीः प्राहेदं युष्माभिः क्रियते किमु ॥ ९१ ॥

॥ स्त्रिय ऊचुः ॥

भाद्रशुद्धचतुर्दश्यामद्यानंतव्रतं शृणु ।

रूढिता(?) च तौ कन्याभर्तारौ ॥८७॥ चित्रकर्मकुशलां 'अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाह' इत्युक्तलक्षणविधानेन ॥८८॥ वध्वा सह ॥ ८९ ॥ अररं गृहद्वारकपाटं पुलाकं तुच्छधान्यं ॥ ९० ॥ तत्र नद्यां पूजयन्तीश्चिरंटीः सुवासिनीः प्रेक्ष्य गत्वा च युष्माभिरिदं किमु क्रियत इति प्राह ताः पप्रच्छेति भावः ॥ ९१ ॥ ता ऊचुर्भाद्रेति नन्विदमनंतव्रतमनन्तफलं चातुर्मास्यादिफलवत्प्राशस्त्यबोधकोर्थ इति चेद्गुणवादोनुवादोर्थवाद इति च त्रेधार्थवादः ॥ 'विरोधे गुणवादः स्यादनुवादोवधारिते ॥ भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥ आदित्यो यूप इत्यादौ गुणवादो विरोधतः ॥ अग्निर्हिमौषधं मानांतरसिध्यानुवादकः ॥ भूतार्थवादः प्रामाण्याद्वाक्यैक्यादंगिदेववत् ॥' अत्र चराचरजगद्विकारावर्तित्वेनावर्तात्पृथक्त्वेन चोपास्यस्यानंतस्य च प्रतिपादनात्तत्प्राप्तिरूपानंतफलस्य नार्थवादत्वं अनन्तफलं

स्नात्वा रक्तांबरं धृत्वा रक्तसूत्रे चतुर्दश ॥ ९२ ॥
ग्रंथीन्बध्वा सप्तफणदर्भशेषे निधाय तं ।
कुंभोपरि चतुर्बाहुं ध्यात्वानन्तं प्रपूज्य च ॥ ९३ ॥
दत्वा चतुर्दशापूपान् ब्रह्मणे जीर्णदोरकं ।
विसृज्य दत्वा नूत्नं स्वे बध्वा हस्ते च दंपती ॥ ९४ ॥
संतर्प्याब्दे घटान्दद्याच्चतुर्दश चतुर्दशे ।
प्रत्यब्दं पूजयेद्भक्त्या वरं नातः परं व्रतं ॥ ९५ ॥
कुर्वदोभीष्टदमपि प्रोक्त्वास्यै दोरकं ददुः ।
सापि तत्र व्रतं कृत्वा पतिं प्राप सदोरका ॥ ९६ ॥
ततो यांतौ धनी कश्चिद्ग्रामं नीत्वा श्रियं ददौ ।
तत्रानंतप्रसादात्तौ श्रीमानाढ्यौ बभूवतुः ॥ ९७ ॥
दोरं दृष्ट्वैकदाग्नौ स जहौ मत्वा वशीकृतिं ।
श्रीदानंतं न त्यजेति वारितोपि तया ऋषिः ॥ ९८ ॥

नामैकसमयावच्छेदेन सर्वकामानुभवोयं चात्मज्ञानादेव 'यो वेद निहितं गुहायां परमे व्योमन् सोश्नुते सर्वान्कामान्सह ब्रह्मणा विपाश्चिता'इति श्रुतेः अज्ञानी पुरुषः क्रमेण विविधानि कर्मफलभूतानि शरीराणि गृहीत्वा चक्षुरादिकरणापेक्ष उपाधिकृतेन जलसूर्यकादिवत्प्रतिबिंबभूतेन जीवरूपेण तं तं भोगमनुभवति ज्ञानी तु सर्वान् भोगान्युगपदेवानुभवति ईदृशं फलमस्माद्व्रताल्लभ्यते न तु चातुर्मास्यादिवदक्षय्यं प्राशस्त्यबोधकमतोनन्तव्रतमिदं ॥ ९२ ॥ दर्भनिर्मितसप्तफणरूपे शेषे ॥ ९३ ॥ ब्रह्मणे ब्राह्मणाय ॥९४॥ संतर्प्य भोजयित्वा चतुर्दशे वर्षे ॥ ९५॥ इतरव्रते स्त्रियोऽस्वातंत्र्येपि परमार्थे स्वातंत्र्यं द्योतितमनेनान्यथा कथमीशप्रसादः ॥ ९६॥ यांतौ गच्छंतौ श्रीः संपत् मानः सत्कारस्तद्युक्तौ ॥ ९७ ॥ वशीकृतिं वशीकरणं तया

तदाहृतान्यरिभ्यः श्रीमत्तोनंतं स्मरन्नटन् ।
वनेनंतः केति स गोवृगाः पृष्ट्वाप कश्मलं ॥ ९९ ॥
तस्मै नीत्वा वृद्धविप्ररूपेण पुरस्कृतं ।
स्वं रूपं दर्शयामास तुष्टावानंतमप्यसौ ॥ १०० ॥
जय सर्वेश्वरानंत विश्वव्यापिन्जनार्दन ॥
त्वन्मायामोहितधिया कृतान्मंतून्क्षमस्व मे ॥१०१॥

॥ श्रीमदनंत उवाच ॥

न दैन्यं दुष्कृतं नेत्र श्रियं भुक्त्वा पुनर्वसुः ।
नक्षत्रेषु प्रसादान्मे भविष्यसि महामुने ॥ १०२ ॥

॥ ऋषिरुवाच ॥

कोपि सत्फलिताम्रस्य फलं नाश्नंति गोमुखे ।
तृणं नैति पशोश्चापि स्वाद्वप्पूर्णे सरोवरं ॥ १०३ ॥
जीवास्पृष्टेग्रतो दीनौ खरेभौ च द्विजो जरन् ।
एते दृष्टा मयैतेषां कुताभूदीदृशी स्थितिः ॥ १०४ ॥

पत्न्या वारितोप्यग्नौ जहौ तत्याज ॥ ९८ ॥ अग्निशत्रुभ्यो निमित्तेभ्योनंतेनेति शेषः श्रीर्हृता वैराग्यार्थमयमनुग्रह एव अटन्पर्यटन् गौर्वृषो द्रुराम्रवृक्षः गौर्धेनुः ताः क्वानंत इति पृष्ट्वा कश्मलं मूर्छां प्राप ॥ ९९ ॥ विप्ररूपेणानंतेन असौ ऋषिः ॥ १०० ॥ मंतूनपराधान् ॥ १०१ ॥ अत्रास्मिन्जन्मन्यात्मदर्शनप्रभावान्नक्षत्रेषु पुनर्वसुर्भविष्यसि । पुण्यातिशयादाकल्पं ततः सायुज्यं गमिष्यसीति भावः भोगेनैव पुण्यविलयात् ॥ १०२ ॥ गोर्मुखे पशोश्च मुखे ॥ १०३ ॥ खरश्च इभो हस्ती च जरन्वृद्ध ईदृशी स्थितिः कष्टा ॥ १०४ ॥ विद्वान्सन्मत्तः निष्फलभूमिदानात् धनी सन् अदाता

॥ श्रीमदनंत उवाच ॥

शिष्यान्नापाठयन्मत्तो विद्वांस्तेनाम्र ईदृशः ।
गौर्जाता मोघभूदानाद्नृपोऽदाताभवद्धुनी ॥ १०५ ॥
अन्योन्यदानग्रहणादीदृश्यौ स्तः सरस्युभे ।
खरः क्रोधीभो मदी च द्विजोहं तेपि मोचिताः ॥१०६॥
इति लब्धवरोनंतं नत्वैत्य स तथाभवत् ।
तस्माद्व्रतोत्तमं धर्म व्रतं चर हितं भवेत् ॥ १०७ ॥
इति कृष्णोब्रवीत्सोपि व्रतं कृत्वा हताहितः ।
अकण्टकं चिरं राज्यमृद्धं भुक्त्वामृतं ययौ ॥ १०८ ॥
त्वमप्याचर विप्रेदमत्रामुत्रापि सौख्यदं ।
इत्युक्तः प्रभुणानंतव्रतं चक्रे द्विजोत्तमः ॥ १०९ ॥
तत्र स्थित्वा स्वकैः सार्धं प्रेत्य सायुज्यमाप्तवान् ।
तद्वंशजा अपि गुरोः प्रसादात्तादृशोभवन् ॥११०॥
त्वमपीदृक्तत्प्रसादाद्भक्तिमानसि सद्गुरौ ।
मा भीस्तरिष्यसि भवं मृगतृष्णोपमं द्रुतं ॥ १११ ॥

इति० भक्तिवर्णनं नाम द्वितीयोध्यायः ॥
आ० विंशोध्यायः ॥ २० ॥

॥ १०५ ॥ सरसी द्वे सरोवरे मदी हस्ती ये त्वया दृष्टास्तेपि मोचिताः पापबंधनात् ॥ १०६ ॥ एत्यागत्य हे धर्म ॥ १०७॥ सोपि धर्मः हतशत्रुः अकण्टकं निर्वैरं ऋद्धं समृद्धं ॥ १०८ ॥ १०९ ॥ ११० ॥ मा भीः संसाराद्भयं मास्तु ते तत्कुलजत्वात् मृगतृष्णाप्रायं भवं द्रुतं तरिष्यसि एतेन भगवद्भक्तानां संसारसागरो मृगतृष्णोपम इति मोक्षसौकर्यं सूचितं ॥१११॥

॥ इति टीकायां विंशोध्यायः ॥ २० ॥

---

# अथैकविंशोऽध्यायः

॥ नामधारक उवाच ॥

साधूदितं चरित्रं मो प्रभोर्धन्यं दिनं न्विदं ।
क्षणमात्रोपि कालोद्य नार्तातिम्नत्कथामृते ॥ १ ॥

॥ सिद्ध उवाच ॥

तन्तुको नाम भक्तोभूत् त्रियामं भगवन्प्रियः ।
संसारयात्रां निस्तीर्य याममात्रं तमाभजत् ॥ २ ॥
तद्बंधुता कदाचित्तं श्रीशैलं गन्तुमाह्वयत् ।
स प्राह मे मठः शैलः श्रीगुरुर्मल्लिकार्जुनः ॥ ३ ॥
सा तं निषिध्य मूर्खोयमिति मत्वा ययौ नगम् ।
कुतो नेतोसीत्यजेन पृष्टोपि प्राह पूर्ववत् ॥ ४ ॥
ततो मावेल्पकालेन शिवरात्रिरुपस्थिता ।
मध्याह्ने तद्दिनेजस्तं प्राह शैलोत्सवोद्य सन् ॥ ५ ॥

॥ तन्तुक उवाच ॥

त्वत्पादाब्जोत्सवान्मन्ये क्वापि नास्त्यधिकोत्सवः ।
इदं प्रत्यक्षमज्ञाय मुधा मुग्धा भ्रमंति कौ ॥ ६ ॥

श्रीगणेशाय नमः ॥ अथैकविंशोध्यायः ॥ श्रीशैलयात्रैकविंशे सद्भक्तिस्तंतुकस्य च ॥ नंद्युद्धारः कविद्वंद्वसमुत्कर्षः प्रकीर्तितः ॥१॥१ ॥ त्रियामं संसारयात्रां निस्तीर्य तं श्रीगुरुं ॥२॥ बंधुसमूहः ग्रामजनेत्यादिना तद् ॥३॥ सा बंधुता नगं श्रीशैलं तं स्थितं दृष्ट्वा कुतः नेतोसि गतोसीति श्रीगुरुणा पृष्टः पूर्ववत् मठः श्रीशैलः भगवान् श्रीगुरुर्मल्लिकार्जुन इति प्राह ॥ ४ ॥ तद्दिने व्रतदिने सन् शोभनः ॥५॥ मुधा व्यर्थं मुग्धा मूर्खाः ॥६॥ हे अंग

तच्छ्रुत्वा प्राह भगवान्मा ब्रूहीदं जगत्प्रभुः ।
सर्वत्रावस्थितोप्येष सत्क्षेत्रमहिमा वरः ॥ ७ ॥
महातपस्विभिः क्षेत्रं पवित्रीकृतमस्ति तत् ।
परमात्मा तत्प्रभावात्तत्र जागर्त्यनारतं ॥ ८ ॥
अतस्तत्रैव भजतां कार्यसिद्धिर्भवत्यरं ।
महातपस्विनो धन्याः स्वयं मुक्ता अपीतरान् ॥ ९ ॥
मोचयंति स्वतपसा जन्मसंसारबंधनात् ।
लोकोद्धृत्यै प्रजायंते सत्तपस्विविभूतयः ॥ १० ॥
तत्संचारस्थलरजःसंस्पर्शोप्यत्र मुक्तये ।
अतस्तत्सेवितक्षेत्रे लोको यास्यति सादरम् ॥ ११ ॥
एह्यद्य योगगत्याद्रिं गत्वा ते दर्शयामि तत् ।
इत्युक्त्वा पादुके दिव्ये धारयित्वा दृढं दृशौ ॥१२॥
निमीलयित्वा श्रीशैलं सह तेन ययौ क्षणात् ।
प्राहोन्मील्य दृशौ पश्य श्रीशैलममुमित्यजः ॥ १३ ॥
सोप्युन्मीलितदृग्दृष्ट्वा श्रीगिरिं तदनुज्ञया ।
क्षौरस्नानादि कृत्वागाद्द्रष्टुं श्रीमल्लिकार्जुनं ॥ १४ ॥

तन्तुक ॥ ७ ॥ तत्प्रभावात्साधुतपःप्रभावात् अनारतं नित्यं ॥ ८ ॥ इतरान्मंदमतीन् ॥ ९ ॥ लोकोद्धाराय ॥ १० ॥ साधुसंचारस्थानसंबंधिधूलयः ॥ ११ ॥ तत्क्षेत्रं श्रीशैलाख्यं ॥ १२ ॥ अमुं श्रीशैलं पश्येत्यजः श्रीगुरुः प्राह ॥ १३ ॥ श्रीमल्लिकार्जुनं द्रष्टुमगाद्देवालयं ॥ १४ ॥ स्वकः स्वजनः

यांतं स्वकः प्रेक्ष्य तमाह नोनुयातोसि कस्मान्न युतिं करोषि ।
अद्य क्षणाच्छ्रीगुरुणाहृतोस्मीत्युक्तोपि तेनोक्तममंस्त मिथ्या १५
तस्मै यथास्वं स निवेद्य भक्तो गुर्वंघ्रिपद्मद्वय सक्तमानः ।
प्रासादमंत्यांतरनेकलोकव्याप्तं विवेशेश्वरदर्शनाय ॥ १६ ॥
तत्रोपविष्टं गुरुमर्चयन्ति सर्वेपि कश्चिन्न हि तत्र देवः ।
इत्थं विलोक्यापि गुरुं प्रपूज्य पुनर्गुरुं प्राप्य तदुक्तवान्सः॥१७
अत्र त्वमेवासि कुतोऽत्र लोका आयांति हित्वा निकटस्थितं त्वां ।
व्याप्याखिलं त्वं परिपूर्णविश्वं दशांगुलं तिष्ठसि वक्ति वेदः॥१८

॥ श्रीगुरुरुवाच ॥

एकः परात्मा भजतां तथापि स्थानप्रभावः प्रिय भिन्न एव ।
स्थानं त्विदं सर्वजनाश्रयं सन्मुक्तिप्रदं शृण्विह पूर्ववृत्तं ॥१९॥
विमर्षणो नाम नृपः किरातदेशे कृती क्षात्रनृपप्रवीणः ।
द्विजातिभक्तोपि च भूतमात्रहिते रतः साधुजनानुयायी ॥२०॥

यांतं देवदर्शनार्थं गच्छंतं तं तंतुकं युतिं संगतिं अद्य क्षणाच्छ्रीगुरुणा आनीतोस्मीति तंतुकेनोक्तोपि तदुक्तं मिथ्याऽसत्यं मन्यते स्म ॥ १५ ॥ यथास्वं यथायोग्यं स तंतुकः विज्ञाप्य एकतानोनन्यवृत्तिः प्रासादं देवगृहं मल्लिकार्जुनदर्शनार्थं अनेकलोकव्याप्तमंतरंतर्गृहं प्रविवेश ॥ १६ ॥ उपविष्टमासीनं गुरुं तत्र गुरोरन्यः कोपि देवो नेति दृष्ट्वा ॥ १७ ॥ निकटस्थितं समीपवर्तिनं साक्षित्वेन बुद्धिस्थितं वा हे परिपूर्ण विवर्तादप्यधिकोसीति वेदोक्तिः ॥ १८ ॥ इह पूर्ववृत्तं कथयामि सावधानेन शृणु ॥१९॥ कृती कुशलः पुण्यवान् क्षात्रधर्मनिपुणः साधुजनसेवकः ॥ २० ॥ महिषी

स्त्रीलंपटः प्राग्गुणतो निषिद्धभुक्शैवोत्तमः शङ्कररूपचिंतकः ।
तं प्राह साध्वी महिषी कथं शिवे भक्तिर्दृढा धर्मविरुद्धचेष्ट ते २१

॥ राजोवाच ॥

पंपापुरे श्वाभवमाद्यजन्याम्रुच्छिष्टमत्तुं शिवसद्म यातं ।
हन्युर्जना द्वारि मृतिक्षणेजो दृष्टोर्चितः प्रोज्वलिताश्च दीपाः२२

प्रदक्षिणं तं हि परीत्य शैवे दिने मृतस्तेन नृपोत्र शैवः ।
ये दुर्गुणास्ते श्वनिसर्गजोत्थाः स्युः पूर्वसंस्कृत्यनुगो हि जीवः॥

प्राङ्मे जनिः क्वेति तयाह पृष्टः प्राक्त्वां कपोतीं सति चंचुमांसां।
चिल्लोहनच्छ्रीमदगे शिवाग्रे प्राणार्पणान्मे महिषीह जाता ॥२४॥

क्वेतो भवान्यास्यसि चाप्यहं क्व शंसेति पृष्टः स तु सिंधु-
देशे। राजा भविष्याम्यपि सृंजयोत्था मत्स्त्री त्वमग्रेपि
कलिंगजा त्वं ॥ २५ ॥

अभिषिक्तपत्नी ॥ २१ ॥ मृतिक्षणे मरणकालेऽजः शंकरः पूजितो दृष्टः तं शिवं प्रदक्षिणं परिक्रम्य शैवे दिने शिवरात्र्यां माघकृष्णचतुर्दश्यामिति यावत् तेन कारणेनात्र जन्मनि शिवभक्तो राजाभवम् ॥ २२ ॥ शुनोपि निसर्गजा स्वभावजन्या प्रकृतिस्तदुत्पन्नाः हि यतः जीवः पूर्वसंस्कृतिमनुगच्छतीति तथा 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यत' इति स्मृतेः। अतएव विदुषोपि प्रकृत्यधीनचेष्टा 'सदृशं चेष्टते स्वस्या' इति वचनात् ॥ २३ ॥ पूर्वं मम जन्म कुत्र जातमिति तया पृष्टो राजाऽऽह श्रीमदगे श्रीशैले ॥ २४ ॥ शंस कथयेति तया पृष्टो राजा प्राह अग्रे तृतीयजन्मनि

साराष्ट्रकेहं खलु मागधी त्वं गान्धारजावन्तिदशार्णजौ च।
नृपोप्यनन्तोपि ययातिजा त्वं पांड्योऽहमग्रेपि विदर्भजा त्वं २६

स्मरोपमो धीगुणशीलशाल्यहं वृत्त्वा तदा त्वां रतिमां स्वयं-
वरे। त्वया सहेष्ट्वा पुरुदक्षिणान्मखान्सम्राट्तया प्राप्य सुता-
न्सुभोगभुक् ॥ २७ ॥

लब्ध्वात्मतत्त्वं घटजाच्च जीवन्मुक्तो भविष्यामि सह त्वयैवं।
राड्दंपती वै प्रतिजन्म भूत्वा मुक्तौ भविष्याव इति ह्यवोचत्॥
शंभोः पुरः साहजिकासुदानादेवं तिरश्चोपि गतिस्तु लोकाः।
वुध्वेदमायांत्यपि देवता तु स्थलानुमानात्खलु जागरूका॥ २९॥

इत्युक्त्वा धारयित्वेशः पादुके मङ्गमे क्षणात्।
तमानीयेरयद्ग्रामं प्रहृष्टः प्रययौ स तु ॥ ३० ॥
तत्रत्याः संगमेऽदृष्ट्वा गुरुं खिन्ना अवेक्ष्य तं।
आयांतमब्रुवन्यांतः कस्मात्क्षौरं कृतं त्वया ॥ ३१ ॥
स प्राह मां क्षणान्नीत्वा श्रीशैलं भो यथाविधि।
क्षेत्राचारं कारयित्वा संप्रत्यत्रानयत्प्रभुः ॥ ३२ ॥

॥ २५ ॥ पंचमजन्मनि आवां अवंतिदशार्णजौ अग्रे सप्तमजन्मनि पांड्य-
देशजोहं त्वं विदर्भजा ॥ २६ ॥ मखान्यज्ञानिष्ट्वा 'येनेष्टं राजसूयेन मंडल-
स्येश्वरश्च यः ॥ शास्ति यश्चाज्ञया राज्ञः स सम्राट्' तस्य भावस्तत्ता तया
॥ २७ ॥ घटजादगस्त्यात् एवं त्वया सह प्रतिजन्म राजदंपती भूत्वांते
मुक्तौ भविष्याव इति सोब्रवीत् ॥ २८ ॥ साहजिकप्राणदानान्न तु योगा-
दिना प्रायोपवेशनेन वा तिरश्चोप्येवं गतिश्चेद्विदुषः किमु वक्तव्यं जागरूका
शीघ्रमिष्टदा ॥ २९ ॥ ईरयत्प्रेरयत् स तंतुकः ॥ ३० ॥ खिन्ना ग्रामं
यांतः संतः त्वरया पश्चादायांतं तंतुकं ॥ ३१ ॥ स तंतुकः ॥ ३२ ॥

तच्छ्रुत्वात्रैष मध्यान्हे दृष्टो ब्रूते मृषेति ते ।
मत्वैत्य संगमे तत्र निशि सर्वे उपोषिताः ॥ ३३ ॥
चक्रुर्जागरणं शैवनामोच्चारणपूर्वकं ।
ततः शैलाज्जनः प्राप्तः पश्चात्स प्राह विस्मितः ॥ ३४॥
श्रीशैलेयं शिवद्वारि तंतुकः सकृद्दीक्षितः ।
तदा सप्रत्ययाः सर्वे ननंदुर्विस्मिता भृशम् ॥ ३५ ॥
सद्गुरोः सेवया बाढं कर्मबंधं निहत्य सः ।
सिषेवे परमानंदं यत्र नो द्वंद्वसाध्वसं ॥ ३६ ॥
एकैकयापि भक्त्यैवं मुक्ताः कति न वेद तान् ।
कवी शिष्यावभूतां तौ मुक्तौ श्रीगुरुकीर्तनात् ॥ ३७ ॥
गुरुलीलामयास्ताभ्यां प्रभूता ग्रथिताः कथाः ।
तल्लीला वक्ति कः कात्स्न्र्याद्यत्र वेदोपि शङ्कितः॥३८॥

॥ नामधारक उवाच ॥

कौ शिष्यौ सद्गुरोर्जातौ तन्मे कथय सादरं ।
वक्ता हि श्रोतृपृच्छाशीः स्मृतिमेति यतः कथा ॥३९॥

एष मध्यान्हेत्र दृष्टः इदं मृषा ब्रूते इति मत्वा सर्वे कृतोपवासाः श्रीगुरुसमीपं कृतनिवासा वा ॥ ३३ ॥ ३४ ॥ सकृद्दीक्षित एकवारं दृष्टः ॥ ३५ ॥ द्वंद्वसाध्वसं द्वैतभयं न ॥ ३६ ॥ एकैकया श्रवणादिलक्षणया ॥ ३७ ॥ गुरुलीलाप्रचुराः कथाः ॥ ३८ ॥ हि यतः वक्ता श्रोतुः प्रश्नेच्छुः यतः प्रश्नाद्भगवतः कथा स्मृतिपथमागच्छत्येतद्भवत एव श्रुतं प्रश्नमृतेपि ता

॥ सिद्ध उवाच ॥

नंदिग्रामे द्विजः कश्चित्कुष्ठार्तस्तुल्जापुरि ।
त्यब्दं तेपे तपः स्वप्ने देव्योक्तं गच्छ चेश्वरीं ॥ ४० ॥
स चंदलेश्वरीं प्राप्य मासमासं तपोतपत् ।
तयाप्युक्तं यतिं गच्छ स्थितं भीमामरान्तौ ॥ ४१ ॥
स प्राह तां गच्छ मर्त्यमिति वक्तुं न लज्जसे ।
परीक्षितं न ऐश्वर्यमियत्कष्टं कुतोर्पितं ॥ ४२ ॥
इत्युक्त्वा स तपस्तेपे भक्तैर्देव्या स हापितः ।
यद्भाव्यं तद्भवत्वेव कष्टमेतावदर्जितं ॥ ४३ ॥
देव्याज्ञया तथैवाल्पं सह भोग्यमिति द्विजः ।
मत्वा स्वगतमानस्य देवीं भुक्तो ययौ यतिं ॥ ४४ ॥
गंधर्वपुरमासाद्य स यतिः क्वेत्यपृच्छत ।
पापं मत्वार्जुनाभं तं कुष्ठिनं नोत्तरं ददुः ॥ ४५ ॥
तं कश्चिदाह स्नात्वारं शिवरात्रिव्रतस्य च ।
पारणार्थे मठे देव आयास्यत्यत्र तिष्ठ भोः ॥ ४६ ॥

इत्यादि ॥ ३९ ॥ ईश्वरीं चंदलाख्यां गच्छेति स्वप्ने देव्या कथितं ॥ ४० ॥ तया देव्याप्युक्तं स्वप्न इति शेषः भीमामरजासंगमे स्थितं ॥ ४१ ॥ ते तव देव्याः ॥ ४२ ॥ हापितो देवालयाद्बहिर्निष्काशितः ॥ ४३ ॥ सह एकवारं भीमामरजासंगमगमनरूपं कष्टं स्वगतं स्वचित्ते भुक्तमस्यास्तीति भुक्तः पीता गावो भुक्ता ब्राह्मणा इति महाभाष्ये दर्शनात् ॥ ४४ ॥ अर्जुनाभं श्वेतांगं ॥ ४५ ॥ अरं शीघ्रं देवः श्रीगुरुः

अत्रांतरे प्रभुः प्राप मठं भक्तास्तमब्रुवन् ।
द्विजोर्जुनश्वेतदेह इदानीं कश्चिदागतः ॥ ४७ ॥
विश्वसाक्षी तमाहूय प्राह हित्वामरान्नरं ।
आयातोसि कुतोर्हः किं दोषोत्थस्थास्नुरुग्हृतौ ॥४८॥
तच्छ्रुत्वा मत्कृतं ज्ञातमनेनैष न मानुषः ।
प्रत्यक्षः परमात्मेति मत्वोचे तं क्षमाप्य सः॥ ४९ ॥
मूढोहं कुत्सितमतिः पापात्मा पापसंभवः ।
शरण्यं त्वां प्रपन्नोस्मि दयाब्धिं भक्तवत्सलं ॥ ५० ॥
मयि कुष्ठं समुत्पन्नं विवाहोर्ध्वं तदैव तु ।
पितृदारैरपि परित्यक्तं मां कोपि नेक्षते ॥ ५१ ॥
नांगीकुर्वंत्यपि सुरा भात्यतोपि मृतिर्वरं ।
परात्मना त्वया नोचेत्स्वीकृतोत्र जहाम्यसून् ॥ ५२ ॥

॥ श्रीगुरुरुवाच ॥

मा भीः पापोत्थरोगोयमियत्कालमनेन तु ।
भुक्तं पापमतो भक्तिर्मयि जाताचलामला ॥ ५३ ॥

भो विप्र ॥ ४६ ॥ अर्जुनवृक्ष इव श्वेतो देहो यस्य ॥ ४७ ॥ विश्वसाक्षी श्रीगुरुः पूर्वजन्मदोषोत्पन्नास्थिरतरकुष्टरोगपरिहारविषये नरोर्हो योग्यो भवेत्किं ॥ ४८ ॥ तद्गुरोर्वाक्यं श्रुत्वा तं श्रीगुरुं क्षमाप्य स नंदी ऊचे ॥ ४९ ॥ शरणे साधुं त्वां ॥ ५० ॥ ५१ ॥ सुरा देवा अपि नांगीकुर्वंति अतः कष्टान्मृतिर्मरणं वरं मनाक्प्रियं असून्प्राणान् ॥ ५२ ॥ मा भीर्भयं मास्तु यतः पापं भुक्तमतो मयि विषये भक्तिर्जाता इयं अचला भविष्यति

अत्रास्ते संगमे तीर्थराजोघौघविनाशनः ।
तत्र स्नाहीति संभाष्य सोमनाथमथाब्रवीत् ॥ ५४ ॥
विधिवत्कारयित्वा यद्कूलनीर्थे सचैलकं ।
अश्वत्थमर्चयित्वा त्राक्सोमनाथासुमानय ॥ ५५ ॥
सोप्युक्तवत्कारयित्वा तमानीय गुरोः पदे ।
उपानयत्तमाहेशः पश्योनिष्टाखिलं वपुः ॥ ५६ ॥
स्वर्णीभूतं स तु स्वांगमुत्थायोद्वीक्ष्य विस्मितः ।
किंचित्कुष्ठांकिताष्ठीवद्गुरुं प्रांजलिरब्रवीत् ॥ ५७ ॥
भगवन् किं कृतं त्वेनत्कुष्ठं शिष्टं कुतोल्पकं ।
तच्छ्रुत्वा सस्मितं प्राह त्वत्संशयफलं त्विदं ॥ ५८ ॥
इत्याश्राव्य गुरोर्वाक्यं प्रणिपत्याब्रवीद्वचः ।
सुधाप्यंबुधिया पीता मृतिं नयति किं दवः ॥ ५९ ॥
स्प्रष्टाऽवित्वाद्दहत्यल्पं स्वभावं परिहृत्य किं ।
हरे स्वभावः पूर्णत्वं तवानेनेति किं वद ॥ ६० ॥

स्वानुभवेन देवोयमिति बुद्ध्या जनितत्वात् ॥ ५३ ॥ ५४ ॥ विधिवद्यथा-शास्त्रं तदर्हमिति वतिः सचैलकं वस्त्रसहितं असुं नंदिनं ॥ ५५ ॥ सोपि सोमनाथोपि यथोक्तवत्कारयित्वा पदे पदयोरानयत्समर्पयत् ईशः श्रीगुरुः ॥ ५६ ॥ स्वर्णीभूतं अभूततद्भावे च्विः किंचिदवशिष्टेन कुष्ठेनांकिताष्ठीवद्द्वयं यस्येदृशं स्वांगं ॥ ५७ ॥ सस्मितं सहास्यं प्राह श्रीगुरुरिति शेषः ॥ ५८ ॥ नंदी इत्थं गुरुवाक्यं श्रुत्वा सुधामृतं जलबुद्ध्या पीतं चेन्मरणं नयति किं दवोग्निः ॥ ५९ ॥ स्प्रष्टुरज्ञानादल्पं दहति किं 'नाम्नोस्ति यावती शक्तिः पापनिर्हरणे हरेः । तावत्कर्तुं समर्थो न पातकं पातकी नर' इति यन्नामशक्तिः स त्वं हरिः हरति पापानीति हरिः तत्संबुद्धौ हे हरे अनेन दोषावशेषदर्शनेन तव स्वभावः पूर्णत्वमेति किं वद ॥ ६० ॥

॥ श्रीगुरुरुवाच ॥

यद्भावो यादृशः क्वापि नान्यथा स्यात्स्वदोषतः ।
ग्रहीतुर्भात्यन्यथार्के जन्मांधस्येव शून्यता ॥ ६१ ॥
मर्त्येन मम किं भूयादिति शंकोदिता त्वयि ।
तत्फलं त्विदमस्त्येकः प्रतीकारोत्र तं कुरु ॥ ६२ ॥
श्रुतिबृंहितया सिद्ध्येत्पुरुष्टुत्या त्वमर्त्यता ।
भविष्यत्यनया शुद्धिस्त्वं कृतार्थो भविष्यसि ॥ ६३ ॥
तच्छ्रुत्वा दीनवाग्लोलत्सर्वापघन[1] आह तं ।
स्वामिन्सर्वांतरस्थस्त्वं किं वाच्यं तेग्रतः प्रभो ॥ ६४ ॥
लिपिमप्यक्षमो ज्ञातुं कथं स्तौमि पुरुष्टुत ।
अन्यत्किमपि कर्तुं मां यथास्वं विनियोजय ॥ ६५ ॥
प्रभुः प्राह सकृद्वक्त्रान्निर्गतं न पुनर्वचः ।
ममांतः प्रविशत्येव दंतावलरदोपमं ॥ ६६ ॥

यादृशो यस्य स्वभावः स कदापि नान्यथा व्यभिचारापत्तेः किंतु ग्रहीतुः स्वदोषतोन्यथा भाति यथा प्रकाशमानेर्केपि जन्मांधस्य शून्यता प्रकाशराहित्यं स्वदोषवशादेव तद्वदत्रापि ॥ ६१ ॥ या त्वयि शंकोदिता तत्फलमिदं प्रतीकारोत्रशिष्टनाशोपायः तमुच्यमानं ॥ ६२ ॥ उपनिषद्बृंहितया प्रगल्भस्तुत्या यद्वा पुरोर्विस्तीर्णस्य व्यापकस्य ममाभेदप्रतिपादकस्तुत्याऽमर्त्यता ब्रह्मत्वं त्वयि मयि च सिध्येत् अनया तेऽविद्यादेः शुद्धिस्त्वं च कृतार्थो भविष्यसि ॥ ६३ ॥ लोलत्सर्वांगः ॥ ६४ ॥ अक्षमोसमर्थः

१ अपघनः—शरीरावयवः.

उक्तमेव त्वया कार्यमित्युक्त्वा भस्म मंत्रितं ।
प्रक्षिप्य तन्मुखे प्राह स्तुहि नानाविधोक्तिभिः ॥ ६७ ॥

सोपि गीष्पतिवद्भूत्वा तं स्तोतुमुपचक्रमे ।
प्रेमगौरवनम्रांगो हर्षगद्गदया गिरा ॥ ६८ ॥

साक्षात्तत्वमसीश त्वं कर्ता भर्ताव्ययो ध्रुवः ।
त्वं सर्वं खल्विदं ब्रह्मास्यात्मा साक्षी जगन्मयः ॥६९॥

यथास्वं यथायोग्यं ॥ ६५ ॥ गजदन्तसमं ॥ ६६ ॥ ६७ ॥ ६८ ॥ श्रुतिबृंहितयेत्येतदनुरूपां स्तुतिमाह । साक्षाच्चक्षुराद्यपेक्षवाद्यं सन्निकृष्टमव्यवहितं तत्त्वमसि हे ईशनशील यतस्त्वमीक्षिताऽतः कर्ता स्वतंत्रत्वात् कर्मानुसारेण जगतो भर्तापि त्वमेवाव्ययोऽविनाशी अतो ध्रुवो नित्यः यद्वा यस्त्वं तत्पदवाच्योव्ययो ध्रुवश्च स एव त्वंपदवाच्यः कर्ता भर्ता च । ननु बुद्धेः परिणामित्वेन क्रियावेशात्कर्तृत्वं न त्वसंगस्यात्मन इति सांख्योक्तेः कथमस्य कर्तृत्वमिति चेत्करणत्वेन क्लृप्तशक्तिकाया बुद्धेः कर्तृता कल्पयितुं न शक्या कुठारादावदर्शनात् बुद्धेः कर्तृत्वे करणांतरस्य कल्पनीयत्वाच्च लौकिकवैदिकव्यापाराणां कर्तृत्वसापेक्षत्वाज्जीवः कर्ता 'कर्ता शास्त्रार्थवत्त्वात्'इति न्यायात् उक्तमहावाक्यविचारार्थं शमो विधेय इत्याह ' सर्वं खल्विदं ब्रह्म तज्जलानिति शांत उपासीत ' इति शमवाक्यं तस्मात्सर्वमिदं ब्रह्म तज्जत्वात्तल्लत्वात्तदनत्वात्सर्वात्मके ब्रह्मणि रागद्वेषविषयासंभवादुपास्तिकालेपि शांतो भवेत् एवं शांतेन किं चिंतनीयं तदाह आत्मा व्यापकः साक्षी द्रष्टा न तु दृश्यः तर्हि दृश्यं किं तन्मयमित्याह जगन्मयः अधिष्ठानसत्तातिरिक्तान्यसत्ताभावात् ॥६९॥ हे विश्वात्मन् जगदुपादानभूतमायाशक्तियुक्तमहत्तत्वाख्यस-

धिया गुणैस्त्रिधाभूतात्स्वभेदात्सत्वलक्षणात् ।
भूतान्युद्भाव्य सर्वात्मन्विश्वं सृष्टं चराचरं ॥ ७० ॥
मायामयं ह्यस्वतंत्रं वित्पात्रं कल्पितोत्र ना ।
सोपि त्वन्मायया भ्रांतो भूत्वा संकल्पवान् सदा ॥७१॥
यात्यधो विस्मृतात्मा सत्कर्मायत्तो वियोनिषु ।
भ्रमते मुक्तनिरयः कल्पेपि वासनाहृदा ॥ ७२ ॥
स्थित्वोद्भवति कल्पादौ प्राग्वत्सत्कर्मवानपि ।
गत्वोर्ध्वं पतति क्षीणपुण्योधश्चंद्रमंडले ॥ ७३ ॥
ततोप्योषधिगो भूत्वा पुंसि रेतस्ततोप्यसौ ।
स्त्रीपुंयोगाच्छुक्ररक्तमयो गर्भत्वमेत्यहो ॥ ७४ ॥
कललं प्राक्पंचरात्राद्बुद्बुदः सप्तरात्रतः ।
पेशी पक्षादर्बुदोथ भवति स्वस्थितो घनः ॥ ७५ ॥
मासा क्रूरः शिरो द्वाभ्यां ग्रीवाद्यंगानि च त्रिभिः ।
चतुर्भिस्त्वग्रोमनखाः पंचभिः षड्भिरप्यथ ॥ ७६ ॥

मष्टिबुद्धेः सकाशात्सत्वं लक्ष्यतेनेनेति तस्मात्सत्वलक्षणात्स्वस्माद्भिन्नात् सत्वादिगुणैस्त्रिधाभूतादहंकाराद्भूतानि आकाशादीनि कल्पयित्वा विश्वं सृष्टं ॥७०॥वित्पात्रं ज्ञानपात्रं ना नरः पूर्वमुक्तः॥७१॥ जीवस्य लोकांतरगमनरूपः संसारः तृतीयाध्याये प्रथमपादे षड्भिरधिकरणैरुक्तोनुसंधेयः मुक्तः पापफलरूपो निरयो येन स नानायोनिषु भ्रमते कल्पेपि वासनांतःकरणेन ॥७२॥ प्राक्कल्पवत् सत्कर्मवानप्यूर्ध्वं स्वर्गं गत्वा पंचाग्निविद्याक्रमेणासौ ॥७३॥ पुंसि रेतो भूत्वा स्त्रीपुंसयोर्योगादृतुकालीनात् ॥७४॥ प्राक्प्रथमं षट्कोशात्मस्थितः घनः सांद्रः ॥७५॥ क्रूरः कठिणः द्वाभ्यां मासाभ्यां शिरः संपद्यते चतुर्भिर्मासैस्त्वक् पंचभी रोमनखाः ॥७६॥ षड्भिर्नासास्या

नामास्याक्ष्यादिरंध्राणि समभिश्चलनं च धीः ।
अष्टभिर्नवभिः पूर्णो देही भूत्वेश्वरं जगौ ॥ ७७ ॥

जातो मृतः शश्वदहं वियोनीर्मयोषिता भक्तिपराङ्मुखेन ।
अवाङ्मुखं देव जरायुवीतं मामुद्धर त्वनमितो भजे त्वां ॥७८॥

एवं स्तुत्वा मुनिर्वायुव्यक्तो विस्मृतलब्धधीः ।
रोदयति जनुर्लब्ध्वा मोहितो माययेश ते ॥ ७९ ॥

अनभिप्रेतमापन्न आसनोत्थानचेष्टने ।
पराधीनतया भुंक्ते स व्यथां वक्तुमक्षमः ॥ ८० ॥

ततोपि क्रीडनासक्तो वयस्यैरज्ञभावगः ।
तारुण्ये विषयासक्तो मत्तो दुर्जनसंगतः ॥ ८१ ॥

देवमायां स्त्रियं प्रेक्ष्य तद्भावैरजितेंद्रियः ।
भोगोत्सुकः खलोज्ञातकार्याकार्यो दुरध्वगः ॥ ८२ ॥

दिच्छिद्राणि सतभिश्चलनसामर्थ्यं अष्टभिरध्यवसायलक्षणा पूर्वसंस्कारानुगता बुद्धिः नवभिर्मासैः सर्वांगसंपूर्णो देही भूत्वेश्वरं जगौ नवभिरित्यत्र नवमे मासीत्यूह्यमेवमन्यत्रापि ॥ ७७ ॥ शश्वत्पुनःपुनः विविधा योनयो मयोषिताः कष्टेनेति शेषः हे देव जरायुपरिवेष्टितमधोमुखं पूतिगंधित्रस्तं मामितो गर्भवासादुद्धर इतःपरं त्वामीश्वरं मोक्षाय भजे ॥७८॥७९॥ अनभिप्रेतं स्वेष्टाद्विपरीतं प्राप्तोपि वक्तुमसमर्थोतः पराधीनतया व्यथां भुंक्ते ॥ ८० ॥ ततो बाल्येप्यज्ञानत्वं गतः द्रव्यादिना मत्तः प्रमत्तो वा ॥ ८१ ॥ स्त्रीरूपां देवनिर्मितां मायां प्रेक्ष्य तद्विलासैर्मोहितोऽवशेंद्रियः अज्ञातमैहिकामुष्मिकं कार्यं सदाचारादिरूपं पुण्यमकार्यं निषिद्धं पापं च येन स दुर्मार्गगः

वार्धक्ये स्वजनत्रस्तो रुग्णोस्वस्थो जराकृशः ।
श्वासकासकफाविष्टः संभवत्यजितेंद्रियः ॥ ८३ ॥
शतायुरपि रात्र्यार्धं हृतं शिष्टमपीदृशं ।
कथंकारं नृजन्मापि श्रेष्ठं भक्त्या विना त्वयि ॥ ८४ ॥
तत्साफल्यं नवविधत्वद्भक्त्यासक्तसंगतिः ।
त्वयि भक्तिः साधने द्वे त्वां याचे भक्तवत्सल ॥८५॥
भो जनात्रावतीर्णोयं सद्धर्मत्राणकारणः ।
परमात्मा परं ब्रह्म लीलाधाम्नैष नो नरः ॥ ८६ ॥
सेव्यताममृतत्वाय योगैर्वा श्रवणादिना ।

॥ ८२॥ प्रतिकूलवर्तिभ्यः स्वजनेभ्यस्त्रस्तः रोगग्रस्तः कफश्वासाद्युपद्रववशादस्वस्थः जरया वार्धक्ये मंदाग्नित्वात्कृशः अजितेंद्रियः पुरुष एवं संभवति ॥ ८३ ॥ एवं शतायुरपि रात्र्या निद्राव्यवायाभ्यामर्धमपहृतं अवशिष्टमर्धमपीदृशं बाल्यादिभिर्हृतं श्रेष्ठमपि नृजन्म त्वद्विषयकभक्त्या विना कथंकारं व्यर्थमेव ॥ ८४ ॥ तज्जन्मसाफल्यं श्रवणकीर्तनस्मरणसेवनार्चनवंदनदास्यसख्यात्मनिवेदनसंज्ञकनवविधत्वद्विषयकभक्तितत्पराणां भक्तानां संगतिस्त्वयि विषये भक्तिश्चेति द्वे साधने त्वां प्रति याचे भक्तवत्सलेति संबुद्धया भक्ताभीष्टमवश्यं पूरयसीति सूचितं ॥ ८५ ॥ एवं स्तुत्वान्यान्प्राह भो जनेति परमात्मा परप्रेमास्पदत्वात्स एव परं ब्रह्म तर्हि कुतोयं साकार इत्यत आह लीलाधाम्नावतीर्णः अवतारप्रयोजनं हेतुगर्भविशेषणेनाह सद्धर्मत्राणकारणः अतोयं न नरः ॥८६॥ यस्मादेवं तस्मादष्टांगैर्योगैर्निष्कामकर्मानुष्टानैर्वाथवा श्रवणादिनामृतत्वाय मोक्षार्थं भवद्भिः सेव्यतां यतोसौ भक्तिभावनः अतो भगवान्भजतो भक्ताननुगृण्हाति भजनं नाम निरंतरस्मरणं ध्यायति प्रोषितनाथा पतिमित्यत्र या निरंतरस्मरणा

भजतोनुभजत्येष भगवान्भक्तिभावनः ॥ ८७ ॥

यथा तृणौघोग्निस्पर्शाद्भस्मसाज्जायते तथा ।
निःशेषाघं कृपांशेन निर्दग्धं मेमुना तथा ॥ ८८ ॥

भगवन्कति ते वाच्या वाङ्मनोऽविषया गुणाः ।
श्रुत्या नेतीति सिद्धेपि श्रद्धावद्योगिगोचर ॥ ८९ ॥

इत्यादिना बहु स्तुत्वा पदोः प्रणिपपात सः ।
शिष्टं कुष्ठं तदा नष्टं विशिष्टेष्टसुतुष्टितः ॥ ९० ॥

तत्रैव स्थापयामास तं दत्त्वेष्टं वरं प्रभुः ।
सोप्यानीय वधूं स्थित्वा व्यरचद्विविधाः कथाः ॥९१॥

कवितां प्रसृतां लोके तस्य ज्ञात्वा नृकेसरी ।
कश्चित्कविरसंस्तेयं गद्योदारापि नृस्तुतिः ॥ ९२ ॥

पतिं प्रति सोत्कंठा सेवनमिवीयते एवमेवोपासकः भक्तिशास्त्रार्पितविद्योपेत्य तादात्म्याभिमानतश्चिरासनं भवेद्यत्र तदुपासनमुच्यत इति वार्तिकोक्तेः इदमेवानंदजनकं 'समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्। न शक्यते वर्णयितुं गिरा तदा स्वयं तदंतःकरणेन गृह्यत'इति वचनात् ॥ ८७ ॥ अघं पापं अमुना दग्धं ॥ ८८ ॥ भो श्रद्धावद्योगिगोचर श्रुत्या नेति नेत्यस्थूलमनण्वित्यादिना सिद्धेपि तव रूपे वाङ्मनोगोचरा वाङ्मनसयोरविषया नित्यतृप्तत्वाद्या गुणाः कति वाच्याः अनंतत्वादवाच्या एव अत्र वाङ्मन इति द्वंद्वैक्यं ॥ ८९ ॥ पदोः पादयोः 'धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः ॥ ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतव ' इति मनूक्तानां विशेषेण शिष्टानामिष्टस्य श्रीगुरोः संतोषतः तदाज्ञापालनमेव संतोषः ॥ ९० ॥ ९१ ॥ उदारा प्रगल्भापि नृस्तुतिर्निंद्येति मन्यते स्म

तद्ग्रामे केनचिन्नीतो गुरुस्तस्मै व्यदर्शयत् ।
उपास्यकल्लेशलिंगस्थं स्वं रूपं हृदर्चने ॥ ९३ ॥
पंचभिस्तं नवैः श्लोकैर्नित्यवन्मानसार्चने ।
स्तुवंतं श्रीगुरुः प्राह क्वास्ते कल्लेश्वरो वद ॥ ९४ ॥
तच्छ्रुत्वा स तदा ध्यानं विसृज्य भगवान्स्वयं ।
नृरूपेणावतीर्णोयमिति मत्वान्वगाद्गुरुं ॥ ९५ ॥
नृकेसरिर्गुरुं प्राप्य रचितैः पंचभिः शुभैः ।
श्लोकैस्तुष्टाव तं प्राह हित्वेशं स्तौषि किंनरं ॥ ९६ ॥

॥ नरकेसर्युवाच ॥

भवान्मयाज्ञभावेन मानुषो लौकिको मतः ।
कृपयापास्य मेऽज्ञानं सत्वं रूपं प्रदर्शितं ॥ ९७ ॥
तेन नष्टोद्य मे मोहस्त्वत्प्रसादाज्जनार्दन ।
प्राक्पुण्यं फलितं मेदः शिष्यालौ मां नियोजय ॥९८॥
भगवानपि सुप्रीतस्तस्मै दत्वांशुकं वरं ।
प्राह कल्लेश्वरं विप्र भज तत्रापि मत्स्थितिः ॥ ९९ ॥

॥ ९२ ॥ तस्मै नृकेसरये हृदर्चने मानसपूजायां ॥ ९३ ॥ ९४ ॥ ९५ ॥ ईशं हित्वा नरं स्तौषि किं कुत्सितो नरः किंनरः देवापेक्षया दुर्गंधादिना नराः कुत्सिताः तं कुत्सिता नरा यस्मात्तं वा ॥९६॥ मया मायया योज्ञभावस्तेन त्वं लौकिको मतः ॥ ममेति शेष इति योज्यं मतिबुद्धिपूजार्थेभ्यश्चेति षष्ठीसापेक्षात् ॥ ९७ ॥ भवतो दर्शनं अदः मे प्राक्पुण्यं फलितं शिष्यपंक्तौ ॥ ९८ ॥ अंशुकं वस्त्रं तत्रापि कल्लेश्वरेपि ॥ ९९ ॥ हित्वा

स प्राह भगवन्नेदः प्रत्यक्षं रूपमुत्तमं ।
हित्वोत्सहे न गंतुं मां स्वपादाब्जे स्थिरीकुरु ॥ १०० ॥

मद्धाम्न्यासीत्स्यनायासाद्भगवन्भक्तकामधुक् ।
दयाब्धे मा कुरूपेक्षां दयनीयतमस्य मे ॥ १०१ ॥

इत्युक्त्वा स पपाताग्रे तमाश्वास्य दयानिधिः ।
शिष्यत्वेनोररीकृत्य स्वात्मसौख्यमुपादिशत् ॥ १०२ ॥

एवं भूत्वा कवी द्वौ तौ संग्रथ्य हरिभक्तकथाः ।
तत्कीर्तनाच्छ्रद्धयात्र कृतकृत्यौ बभूवतुः ॥ १०३ ॥

इति श्रीगुरुचरिते भक्तियोगे भक्तिवर्णनं नाम तृतीयोऽध्यायः ॥
आदितः एकविंशोऽध्याय ॥ २१ ॥

गंतुं नोत्सहे ॥ १०० ॥ ध्यानतो मद्धाम्नि चित्ते ॥ १०१ ॥ उररीकृत्यांगीकृत्य स्वस्य प्रतीचः आत्मनो ब्रह्मणो यदभेदज्ञानानुभवसौख्यं तदुपदिदेश ॥ १०२ ॥ १०३ ॥

इति श्रीगुरुचरिते टीकायां एकविंशोऽध्यायः ॥ २१ ॥

---

•

# अथ द्वाविंशोऽध्यायः

॥ नामधारक उवाच ॥

श्रुतो गुणानुवादोपि हरेस्तृप्तिर्न मे गुरोः ।
अतीव वर्धते तृष्णा शश्वच्छ्रवणपानतः ॥ १ ॥
भवाननलसो नूनमुदारतम एव मे ।
पूर्वश्रेयःप्रभावेन संगतोस्ति कृपाकरः ॥ २ ॥

॥ सिद्ध उवाच ॥

गुणानुवादक्षीराब्धेः कति पासि कथामृतं ।
सच्चित्सुखस्य लीलानुरनन्तस्य परात्मनः ॥ ३ ॥
गुणान्कात्स्न्र्येन वक्तुं न क्षमः कोपीशितुस्त्वहं ।
उच्चावचखगोड्डानन्यायाद्वक्ष्ये यथामति ॥ ४ ॥
स भीमामरजातीरविहारी भक्तवत्सलः ।
भक्ताधीनत्वमाश्रित्य सदाभूत्तन्मतानुगः ॥ ५ ॥

श्रीगणेशाय नमः ॥ अथ द्वाविंशोध्यायः ॥ द्वाविंशेष्टतनुर्भूत्वा दीपावल्युत्सवं व्यधात् ॥ ददौ शूद्राय धान्यर्धिं क्षेत्रमाहात्म्यमाह च ॥१॥ एतावान्गुणानुवादः श्रुतस्तथापि मे अलंबुद्धिर्न हरेर्गुरोर्गुणामृतस्येति शेषः शश्वत्पुनःपुनः श्रवणरूपपानेन मेऽतीव तृष्णा वर्धते ॥ १ ॥ उदारतमो महत्तमो दातृतमो वा पूर्वपुण्यसामर्थ्यात् कृपाकरः कृपासागरः भवान् ॥ २ ॥ हरेर्गुणानुवाद एव क्षीरसागरस्तस्मात्कथारूपममृतं कति पासि अशेषपाने तव शक्तिर्नास्तीति भावः कथंभूतस्य सच्चित्सुखस्य चिदानंदैकरसस्य लीलयाविष्कृतनरदेहस्य परात्मनोनंतस्य एतैर्विशेषणैः परब्रह्मरूपत्वं साधितं ॥ ३ ॥ कात्स्न्र्येन समग्रत्वेन वक्तुं कोपि न समर्थः अहं तत्कथनपुण्येनात्मशुद्धये यथामति वक्ष्ये ॥ ४ ॥ आश्रुत्यांगीकृत्य ॥ ५ ॥

निराकारो निरीहोपि शुद्धसत्त्वस्वरूप्यजः ।
बुद्ध्या संगत्य लीलार्थं स्वयं विश्वात्मकोभवत् ॥ ६ ॥
सर्वत्र स्थितिमांस्त्वेष पश्येयुर्मुनयो हि मां ।
इति मत्वा त्रिधा भूत्वा त्रिषु लोकेषु संस्थितः ॥ ७ ॥

तत्रापि भुवि मे भक्ता भूयांसो मन्मयास्त्वहं ।
तेषामगोचरोस्म्यस्मात्स्थेयं तत्रेत्यमंस्त सः ॥ ८ ॥

ततोत्र भगवान्भूमौ लीलाधाम्ना युगे युगे ।
भजतोनुभजत्येष श्रद्धाभक्तिप्रियः प्रभुः ॥ ९ ॥

किं वर्ण्यते भगवतो भक्तवात्सल्यमद्भुतं ।
परिपूर्णोपि संतृप्तो भोक्तुं भ्रमति तद्गृहे ॥ १० ॥

अन्या अपि तु तल्लीलास्तादृश्यः संत्यनंतशः ।
स्वकृते तु न ता विद्धि भक्तानुग्रहलक्षणाः ॥ ११ ॥

यर्हि भक्तानुगश्चेत्तर्हि साकारो वा निराकारो वेति विचार्यमाणे 'न स्थानतोपि परस्योभयलिंगं सर्वत्र' इति न्यायात्साकारनिराकारयोर्विरुद्धत्वान्निरूपमेव तत्वतो ब्रह्म रूपं तूपासनायामनूद्यते न तु तात्पर्येणेत्याह निराकार इति आकाररहितोपि निरिच्छोपि बुद्ध्या महत्तत्वेन संगम्य स्वयं लीलार्थं विश्वरूपोभूत् ॥ ६ ॥ मुनयः सनकादयः ब्रह्मविष्णुशिवरूपैस्त्रिधा भूत्वा त्रिषु सत्यादिलोकेषु स्थितः ॥ ७ ॥ भूयांसः प्रचुरा एतैः रूपैस्तेषामविषयोस्म्यतस्तत्र भूलोके मया स्थेयमित्यमंस्त ॥ ८ ॥ युगे युगे तत्तदवसरे अनुभजत्यनुगृण्हाति ॥ ९ ॥ तद्गृहे स्वभक्तगृहे ॥ १० ॥ भक्तानुग्रह एव लक्षणं यासां ता लीलाः ॥ ११ ॥ अन्यत्र तपसापीशो दुर्लभः अत्र तु

कलौ श्रीरत्र नो भाग्यमुदितं हि युगे युगे ।
दुर्लभस्तपसापीशः स्मृत्यैव सुलभोत्र नुः ॥ १२ ॥
स एष भगवांस्तत्र भक्ताधीनतयान्वहं ।
निमंत्रितो भक्तगेहे भिक्षान्नं बुभुजे प्रभुः ॥ १३ ॥
दीपावल्युत्सवे सप्त प्रिया भक्ता जगद्गुरुं ।
स्वे स्वे गृहे नेतुकामा भिन्नवासाः समाययुः ॥ १४ ॥
भवंतं नेतुकामोद्य दीपाल्यां पंचवासरं ।
प्राप्तोस्म्यद्यैव गंतव्यमित्येकैकोब्रवीद्गुरुं ॥ १५ ॥

॥ श्रीगुरुरुवाच ॥

यूयं सप्तैक एवाहमेककालीन उत्सवे ।
सप्तग्रामेष्वेकदैव कथं मे गमनं भवेत् ॥ १६ ॥
एकत्रैकैकघस्रे वा गतिरेकैकसद्मनि ।
संभवेच्चेत्कृतं तद्भवद्भिर्मे वरं द्विजाः ॥ १७ ॥
भक्ताधीनोस्मि मां यो यो नयेद्यास्यामि तत्र च ।
तच्छ्रुत्वान्योन्यं कलहं चक्रुर्नेष्याम्यहं त्विति ॥१८॥

कलौ पुरुषस्य भक्त्यैव सुलभः अयमिति शेषः ॥ १२ ॥ १३ ॥ भिन्नवासाः नैकग्रामस्थाः ॥ १४ ॥ दीपाल्यां दीपोत्सवे ॥ १५ ॥ एककालीन उत्सवे एकदैव सप्तग्रामेषु कथं गमनं भवेत् ॥ १६ ॥ सर्वैर्मिलित्वैकत्रोत्सवः कर्तव्य एवं कृते एकत्र गतिः संभवेदथवैकैकस्मिन् दिने एकैकगृहे गतिः संभवेत् भो द्विजाः भवद्भिरेवं कृतं चेन्मे वरं मनाक्प्रियं ॥ १७ ॥ यस्माद्भक्ताधीनोस्मि तस्माद्यो यो भक्तो मां यद्यद्गृहं नयेत्तत्र तत्र यास्यामि अहं नेष्याम्यहं नेष्यामीत्यन्योन्यं कलहं चक्रुः ॥ १८ ॥ द्विजा ऊचुः भो भगवन्

निःस्वो धनीति द्वैतान्मां मा पाहि ह्यसि भो समः ।
भूतमात्रेत एहीति प्रोक्त्वा ते पतिताः पुरः ॥ १९ ॥

निवार्य तान्सर्वगृहानेष्यामीत्युदितेपि ते ।
कैश्चिद्विश्वस्तव्यमित्यूचुर्भ्रांताः श्रीगुरुमीश्वरं ॥ २० ॥

भगवानपि तद्भावं ज्ञात्वैकैकं रहो द्विजं ।
सस्मितास्यः समाहूय प्राहोदारगिरा मुदा ॥ २१ ॥

न वाच्यं क्वापि तेद्यैव गृहमेष्ये चरेत्यथ ।
तेपि सर्वेवमन्योन्यमशंसंतो ययुर्गृहान् ॥ २२ ॥

तत्रत्यैः क्व भवान्याति नो हित्वेत्युदितेत्र तु ।
तिष्ठामीति प्रभुः प्रोक्त्वाष्टौ ग्रामानेकदाभ्यगात्॥२३॥

सर्वैश्वर्यसंपन्नोसि अतोयं निःस्वो दरिद्रस्तद्वेश्म न गंतव्यं अयं धनी तद्वेश्म गंतव्यमिति द्वैतदृष्ट्या मां मा प्रेक्षेति शेषः किं तर्हि पाहि समदृष्ट्या रक्ष मां पालय यद्यपि सर्वेषां त्वमेव पालकस्तथापि द्वैतदृष्टिं मा कृथाः यतो भूतमात्रे समोसि अत एहीति प्रोक्त्वा ते पुरतः पतिता अब्रुवन् ॥ १९ ॥ तथा तान्पतितान्प्रति सर्वेषां गृहान्प्रत्येष्यामीति भगवतोदितेपि कैश्चिद्विश्वस्त-व्यमित्यूचुः अत्र हेतुः भ्रांताः भगवत्तत्वानभिज्ञाः ॥ २० ॥ भावं भक्तिं रह एकांते उदारगिरा प्रगल्भवचनेन ॥ २१ ॥ ते तव गृहमद्यैव एष्ये त्वया क्वापीदं न वाच्यं निःशंकं चर गच्छ अशंसंतः परस्परमकथयंतः ॥ २२ ॥ श्रीगुरुर्ग्रामांतरं गच्छतीति श्रुत्वाच नोस्मान्हित्वा भवान्क्व यातीति तत्रत्यैस्तद्ग्रामभवैरुदिते सति अहं तु अत्र तिष्ठामीति तान्प्रोक्त्वा एकदैक-स्मिन्नेव कालेष्टौ ग्रामानभ्यगात् ॥ २३ ॥ लौकिकं लोकप्रसिद्धं एकं मुख्यं

स्थलेषूवास पंचाहमष्टस्वपि जगन्मयः ।
लौकिकैकस्वरूपेण ततोस्थात्संगमे प्रभुः ॥ २४ ॥
स्वाद्वन्नशाटीकंत्राणपादुकार्पणसेवनैः ।
संतोषितः स भगवान्भक्तैराप मुहुर्मठं ॥ २५ ॥
पुनः सर्वेपि ते प्राप्ताः कार्तिक्यां तु परस्परं ।
ऊचुर्मे धाम्नि पंचाहं दीपाल्यां संस्थितो गुरुः ॥ २६ ॥
तत्रत्या अपि तं प्राहुः पंचाहं क्वापि नो गतः ।
अत्रैव प्रभुरस्माभिर्दीपावल्युत्सवं व्यधात् ॥ २७ ॥
मृषा मृषेति चान्योन्यं तदा प्रलपतो विभुः ।
तान्प्राह तूष्णीं स्थेयं भोः सर्वत्राहं गतः खलु ॥ २८ ॥
तदा ते चकिताः सर्वे तुष्टुवुर्नतकंधराः ।
भगवंस्ते परं पारं महिम्नोऽजानतां हि नः ॥ २९ ॥

यत्स्वरूपं तेन अष्टस्वपि स्थलेषु भक्तगेहेषु पंचाहमुवास नात्र चित्रं यतो जगन्मयः ईश्वरः ततो दीपोत्सवानंतरं पूर्ववत्संगमेऽस्थात् ॥ २४ ॥ स्वादु मिष्टं शाटी परिधानीयवस्त्रं कंत्राणं शिरस्त्राणं काष्ठमये पादुके एषां समर्पणं पादसंवाहनादिसेवादि च तैः कृत्वा भक्तैः संतोषितो मठं प्राप ॥ २५ ॥ कार्तिक्यां कृत्तिकायुक्तायां पौर्णमास्यां नक्षत्रेणेत्यण् टिड्ढाणञिति ङीप् मे धाम्नि गृहे दीपावल्यां पंचदिनपर्यंतं प्रभुः स्थितः ॥ २६ ॥ इतो ग्रामात् क्वापि ग्रामांतरं नो गतः व्यधाद्व्यकृणोत् ॥ २७ ॥ त्वं मृषा भाषसे त्वं मृषेति कलहं कुर्वतस्तान्प्राह भो विप्रा भवद्भिस्तूष्णीं स्थेयं न कस्यापि मृषा यतोहं सर्वत्र सर्वान्प्रति गतः ॥ २८ ॥ नता नम्रा कंधरा ग्रीवा येषां ते महिम्नः परं पारमजानतां अस्माकं ॥२९ ॥ लौकिकवाचः स्तोत्र-

कथं लौकिकवाचस्त्वं स्तोत्रपात्रो भविष्यसि ।
श्रुतवाचामपि ब्रह्मन्गुहाशयसंस्थित ॥ ३० ॥

विश्वव्यापक तेनंत दिव्यं जन्म क्रियाप्यज ।
नान्यार्थं नोमृतत्वार्थमवतारप्रयोजनं ॥ ३१ ॥

श्रूयते दृश्यतेद्धा यत्त्वन्मायेयं दुरत्यया ।
मा वृणोत्त्विति भो श्रीमन्देहि नो दक्षिणां वरां ॥३२॥

इत्युक्त्वा प्रणतिं चक्रुस्तान्संतोष्य जगत्प्रभुः ।
सर्वान्प्रस्थापयामास स्वं स्वं धामापि ते ययुः ॥ ३३ ॥

पात्रं कथं भविष्यसि यतः श्रुतवाचामपि स्तोत्रपात्रं न भवसि अतः किमु वक्तव्यमन्यत् ननु 'यो वेद निहितं गुहायाम्' इति श्रुतेः कथं शास्त्रवाचोप्यपात्रत्वमत आह गुहाशयो बुद्धिस्तस्यां ज्ञातृज्ञानज्ञेयत्रिपुटीव्यवहारस्य भ्रांतिविवेकाभ्यां संपादितयोर्भोगमोक्षयोश्च निरूढत्वात्तया बुद्ध्योपलभ्यत्वेन तत्र ब्रह्म संस्थितमिति श्रुतिर्ज्ञापयति 'एष सर्वेषु भूतेषु' इति 'यद्वाचानभ्यु०' इति वाक्कर्तव्यस्तोत्राविषयत्वं प्रतिपादयति अत उक्तं गुहाशयसंस्थितेति यद्वा गुहायां शेत इत्यसौ गुहाशयः अधिकरणे शेतेरित्यच् सम्यक् स्थितः संस्थितः कूटस्थः स चासौ ॥ ३० ॥ ते जन्मावतारोऽलौकिकः क्रिया कर्माप्यलौकिकं नान्यार्थं त्वत्क्रीडाद्यर्थं न आप्तकामत्वात् किं तु तवावतारप्रयोजनं नोस्माकं मोक्षार्थमेव ॥ ३१ ॥ तर्हि मदंशानां भवतां बंधोस्ति किं न वास्तवबंधाभावेपि मायावरणरूप एव बंधः नान्यः यदुक्तं 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता' इति अतो मायावरणमोक्षरूपां वरां दक्षिणां देहि यतो वयं ब्राह्मणाः ॥३२॥३३॥ दुर्विभाव्या दुर्ज्ञेयाः व्यथा-

एवं स भगवान्नूनं पूर्णः सच्चित्सुखात्मकः ।
भक्ताधीनतया चेष्टा दुर्विभाव्या व्यधादिह ॥ ३४ ॥

जात्याचारवयोरूपविद्यार्थगुणपौरुषं ।
नापेक्षते हि भगवान् श्रद्धाभक्तिप्रियः प्रभुः ॥ ३५ ॥

शृणु चित्रं प्रवक्ष्यामि कश्चिच्छूद्रो गुरुप्रियः ।
दास्येनैवैहिकान्भोगान्भुक्त्वांते मुक्तिभागभूत् ॥ ३६ ॥

कृषीवलः स तु सदा स्वकर्मासक्त एव तं ।
स्वक्षेत्रादामठं यांतं ननाम प्रत्यहं गुरुं ॥ ३७ ॥

तद्गमागमसौख्यार्थं प्रत्यहं संगमायनं ।
अपास्य कंटकाश्मादीन्सुगमं विशदं व्यधात् ॥ ३८ ॥

नत्वा पूर्ववदायांतं मुदा तद्गतमानसः ।
कृषिं चकार तं दासं पृच्छति स्मैकदा गुरुः ॥ ३९ ॥

दून्यकृणोत् ॥ ३४॥ ब्राह्मणादिजातिः श्रुतिस्मृत्युदिताचारः बाल्यादि वयः रूपं चक्षुःप्रियो गुणः परापरविद्या अर्थो धनं गुणाः क्षांत्यादयः प्राणेंद्रियशरीरबलं हि यस्मान्नापेक्षते अनुकंपावसर इति शेषः ॥ किं तु भक्तिमेवापेक्षत इति वक्तुं श्रद्धाभक्तिप्रिय इति विशेषणं प्रभुरित्यनेन दानसमयेप्य न्यैरनिवारणीय इत्युक्तं भवति 'न हित्वा शूरदेवानमर्तासोदित्संतं भीमं नगां वास्यंते' इति श्रुतेः ॥ ३५ ॥ मुक्तिभाक् मुक्तियोग्यः ॥ ३६ ॥ कृषिरस्यास्तीति कृषीवलः रजःकृष्येति वलच् स्वकर्मानासक्त एव प्रवाहपतितं कर्म कुर्वन्मुक्त इव मठादारभ्यामठं मठपर्यंतं वायांतं गच्छंतं ॥ ३७ ॥ संगममार्गं विशदं व्यधात् ॥ ३८ ॥ ३९ ॥ उद्घाटय स्फुटं कुरु

सदा मेत्रे कुतः शूद्र पतस्येतेन किं वद ।
साध्यं किं तेस्ति मनसि तदद्योद्घाटयाखिलं ॥ ४० ॥

॥ शूद्र उवाच ॥

भजामि सुखकामस्त्वां क्षेत्रं ते कृपयाखिलं ।
मनोज्ञं भाति तत्प्रेक्ष्य नोपेक्ष्यः पादजोप्यहं ॥ ४१ ॥

तदा सस्मितमर्माशोपि सर्वं क्षेत्रं विलोक्य तत् ।
आप्रादुर्भूतसस्यं तं प्राह द्राक्छिंध्यदोखिलं ॥ ४२ ॥

विश्वासो मेस्ति वाक्ये चेच्छिंधि मे यावदागमः ।
इत्युक्त्वा संगमं गत्वा प्रभुः कर्माह्निकं व्यधात् ॥४३॥
गत्वा शूद्रोपि पत्ये तु प्राह निश्चित्य ते करं ।
क्षेत्रं देहीति स प्राह नेदं साध्वद्य कर्षक ॥ ४४ ॥

शश्वत्प्राप्यं परुद्दत्ताद्द्विगुणं भागमंघ्रिजः ।
दातुं निश्चित्य जग्राह प्रमापत्रमतोपि सः ॥ ४५ ॥

आहूयाथार्थलुब्धान्स लोकान्यावच्छिनत्ति तत् ।
सापत्या क्षेत्रमेत्य द्राग्वारयामास तं वधूः ॥ ४६ ॥

॥ ४० ॥ सुखं कामयत इति सुखकामः कर्मण्यण् पादजः शूद्रः ॥ ४१ ॥ ईषत्प्रादुर्भूतं सस्यं यस्मिन्तत्क्षेत्रं दृष्ट्वा तं शूद्रं प्राह अखिलं सस्यं शीघ्रं छिंधीति ॥ ४२ ॥ अन्हि भवमाह्निकं कालाट्ठञ् पत्ये क्षेत्राधिपाय हे कर्षक शूद्र साधु शोभनं न ॥ ४३ ॥ ४४ ॥ शश्वत्पुनःपुनः गतवर्षदत्त-भागाद्द्विगुणं भागं दातुं निश्चित्य प्रमाणपत्रं जग्राह सोपि पतिरपि ततः शूद्रात्प्रमाणपत्रं जग्राह ॥ ४५ ॥ ४६ ॥ स्तोत्राणि छेदनशस्त्राणि निधा

निधाः स्तोत्राणि मा छिंधीति वदंत्याः स कैशिके ।
चूर्णप्रतिनिधीकृत्य पद्धूलिं पुनराच्छिनत् ॥ ४७ ॥
स नोन्मत्तस्तु भरतप्रल्हादकबिभीषणैः ।
मातापित्रग्रजास्त्यक्ता गुर्वर्थे का कथान्यतः ॥ ४८ ॥
सा गत्वेशं रुदत्यूचे मुंडिवाक्यानुवर्त्यहो ।
क्षेत्रं छिनत्ति तेऽपक्वं प्रमत्तस्तं निवारय ॥ ४९ ॥
निवारणाय सोप्येकं दूतं प्रेरयदेत्य सः ।
तस्मै गंभीरया वाचा स्वामिवाक्यं शशंस ह ॥ ५० ॥
तं प्राह शूद्रोपि पत्ये शंसारब्धोद्यमस्य तु ।
पारं यास्ये नो बिभेमि तत्प्रमालिपिरस्त्यसौ ॥ ५१ ॥
दूतोप्यागत्य पत्ये तु तत्स्माचष्टेब्रवीत्स तां ।
शूद्र्यन्यथा कथं वाक्यं कार्यं सोप्यर्थधान्यवान् ॥५२॥

निधेहि सस्यं मा छिंधीति वदंत्यास्तस्याः केशसमूहे पादधूलिं चूर्णप्रतिनिधीकृत्य अभूततद्भावे च्विः एतेन ताडनभिया स्त्रियाः पलायनं शूद्रस्य च पश्चाद्धावनं ध्वन्यते एवं कृत्वा पुनराच्छिनत् ॥ ४७ ॥ स्त्रिया बिभीषकोपि स न चोन्मत्त इति किमुन्मत्तेनेति कैमुतिकन्यायेनाह भरतेन माता प्रल्हादेन पिता बिभीषणेनाग्रजः गुर्वर्थे त्यक्तः गुरुशब्देनेश्वर उपलक्ष्यते तस्य सर्वेषामपि गुरुत्वात् अन्यतः सार्वविभक्तिकस्तसिः अन्येषां दारादीनां तु गुर्वर्थे त्यागे का कथा किमुतेति भावः ॥ ४८ ॥ ईशं प्रभुं मुंडी संन्यासी अपक्वमिति छेदः पचो वः ॥ ४९ ॥ सोपि प्रभुरपि तस्मै शूद्राय ॥५०॥ तं दूतं शंस कथय मे मयारब्धस्योद्यमस्य पारं यास्ये असौ इयं तत्प्रमालिपिरस्ति अतस्तस्मान्न बिभेमि ॥ ५१ ॥ तच्छूद्रवाक्यमाचष्टे स्म कथयामास स प्रभुः तां शूद्रीं अन्यथा वाक्यं कथं कार्यं तर्हि तव करः कथं

तच्छ्रुत्वा सा रुदन्त्याप क्षेत्रसीमां सुतान्विता ।
तच्छद्रोप्यखिलं छित्वा गुर्वागमसचिंतयन् ॥ ५३ ॥
कृत्वाप्याह्निकमागच्छन्द्दष्ट्वा तं सर्वमवेक्ष्य तं ।
प्रणतं प्राह किमिदं कृतं नाहजिकोक्तितः ॥ ५४ ॥
यदन्येन हृदापीदक्कर्तुं शक्यं न मुत्प्रदः ।
कर्माद्य दुष्करं निंद्यं त्वया कृतमतःपरं ॥ ५५ ॥
कुतस्ते भविता वृत्तिर्दास्यसीशाय किं वद ।
अपक्वं हरितं सर्वं सस्यमेतद्वृथा गतं ॥ ५६ ॥
स प्राहोक्तं कथमपि श्रुतवन्सद्गुरोर्वचः ।
तन्मेपि फलदं जन्म दत्तं येन स वृत्तिदः ॥ ५७ ॥
भक्तिश्चेदुक्तवद्भूयात्त इत्युक्त्वा ययौ गुरुः ।
सोप्याप स्वगृहं धीरो ध्यायन्हरिपदांबुजं ॥ ५८ ॥
कालेनाल्पीयसा सूर्ये इते मूलर्क्षमंबुदः ।
ववर्ष च्छिन्नमपि तद्यावनालाद्यवर्धत ॥ ५९ ॥

छेदत आह सोप्यर्थवान्यवानिति ॥ ५२ ॥ आप प्राप ॥ ५३ ॥ कृतं कृत्तं उपलक्षणात्सस्यं स्वाभाविकवचनादपि किमिदं कृतं ॥ ५४ ॥ यत्कर्म त्वदन्येन मनसापि ईदृक्करिष्यामीति मंतुमप्यशक्यं निंद्यमपक्वछेदनात् ॥ ५५ ॥ वृत्तिर्जीविका ईशाय क्षेत्रपाय वैश्वानररूपाय वा 'अहं वैश्वानर' इति स्मृतेः ॥ ५६ ॥ कथमप्युपहासादिनाप्युक्तं श्रुतवच्छ्राव्यवत् तुच्छात्सांसारिकनिर्वाहफलादप्यधिकं फलं मोक्षादि कुतो वृत्तिरित्यस्योत्तरमाह जन्मेति तथा चोक्तं 'यो मे गर्भगतस्यादौ वृत्तिः कल्पितवान्स्वयं । शेषवृत्तिविधानार्थं स किं सुप्तोथवा मृत' इति ॥ ५७ ॥ एवं भक्तिश्चेत्ते तवोक्तवद्भूयात् ॥ ५८ ॥ मूलनक्षत्रं सूर्ये प्राप्ते सति तद्यावनालादि छिन्नमपि

प्रादुर्भूतानसंभाव्यानंकुरानभितोमितान् ।
दृष्ट्वा जल्हादिरे सर्वे शूद्रप्यत्यंतहर्षिता ॥ ६० ॥
पत्युः पादौ सकारुण्यं गृहीत्वा गद्गदाक्षरा ।
बभाषे गुरुभक्तोसि मम मंतून्क्षमस्व भोः ॥ ६१ ॥
तथेत्युक्त्वा तया शूद्रः प्रपूज्य क्षेत्रपं गुरुं ।
यांतं क्षेत्रं दर्शयित्वा प्रणतो वाक्यमब्रवीत् ॥ ६२ ॥
अंघ्री चिंतामणिर्वाक्यं सुधास्पर्धि दयानिधे ।
ज्योतिर्मयं न वेत्त्यंधो घूकोर्कमिव धाम ते ॥ ६३ ॥
दृष्टं समूढपुण्येन धाम ते दिव्यमद्भुतं ।
कृतकृत्योस्म्यतो देव मां माधोक्षज विस्मर ॥ ६४ ॥
तमाह श्रीगुरुः शूद्र धन्योस्यवरवर्ण ते ॥
परितुष्टोस्मि दास्येन नूनं सद्गतिभाग्भव ॥ ६५ ॥

॥ ५९ ॥ असंभाव्याननेकानभित आसमंतात्प्रादुर्भूतानंकुरान् जल्हादिरे आनंदं प्रापुः ॥ ६० ॥ भो पते मम मंतूनपराधान् क्षमस्व ॥ ६१ ॥ शूद्रोपि तथेत्युक्त्वा तया पत्न्या सहितः क्षेत्रपं क्षेत्राभिमानिनं देवं प्रपूज्य यद्वा यदज्ञानोत्थादविश्वासात्पतिनिंदागुरुधिःक्कारादिदुश्चेष्टाः पूर्वं प्रवृत्ताः अधुना तु तस्यैव प्रसादेन लौकिकलाभदर्शनेन च तमोगुणाविष्टाया हीनजात्युद्भवाया अस्याः स्त्रिय ईदृशी शांतिरुपलब्धा नूनमयं क्षेत्रज्ञस्यात्मन एव प्रसादस्तेन विना कः शांतो भवेदिति तं क्षेत्रज्ञं प्रपूज्य सत्कृत्य तदैव संगमं प्रति यांतं गच्छंतं गुरुं अंकुरितं क्षेत्रं दर्शयित्वा प्रणतो भक्त्या लीनो वक्ष्यमाणं प्राह ॥६२॥ ते अंघ्री चिंतामणिस्ते वाक्यं सुधातोधिकं ते धाम रूपं ज्योतिर्मयं घूको दिवांधः ॥ ६३ ॥ समूढपुण्येन पूर्वसंचित-पुण्येन ॥ ६४ ॥ ६५ ॥ स्वाचारः स्वजात्याचारस्तेन संपन्नः 'अपि

दुराचारोपि यदि चेन्मेवते मामनन्यधीः ॥
स तु साधुर्हि तस्मात्त्वं स्वाचारो भक्तिमान्मयि ॥६६॥

अतस्ते दत्तमेतत्तु निवसेत्त्वत्कुलेमले ।
अचला कमला दास्यं मदीयं चाप्यसंशयं ॥ ६७ ॥

इत्युक्त्वागाद्गुरुः सोपि गत्वेशं प्राह निश्चितात् ।
अधिभागं प्रदास्ये ते यतो धान्यर्धिरद्भुता ॥ ६८ ॥

चेत्सुदुराचार' इति स्मृतेः ॥६६॥ अमले तच्छूद्रसंज्ञके अचला लक्ष्मीः तया प्रमादः स्यादित्यत आह मदीयं दास्यं दत्तमित्युक्तं ननु 'तदुपर्यपि बादरायणः संभवात्' इति न्याये भाष्येऽत्रैवर्णिकदेवदृष्टांतेन शूद्रस्याप्यत्रैवर्णिकस्याधिकार इति चेदस्ति देवशूद्रयोर्वैषम्यं उपनयनाध्ययनाभावेपि स्वयंप्रतिभातवेदा देवास्तादृशस्य सुकृतस्य पूर्वजन्मार्जितत्वात् शूद्रस्तु तादृशसुकृतराहित्यान्न स्वयंप्रतिभातवेदः नापि तस्य वेदाध्ययनं उपनयनाभावाच्छ्रौतविद्यायां शूद्रो नाधिकारी यस्य वेदोच्चारणेन वेदश्रवणेन च जिव्हाछेदनं त्रपुजतुभ्यां श्रवणाच्छादनं च श्रूयते स कथं विद्याधिकारी भवेत् तथा च बादरायणः 'शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि' छांदोग्ये रैक्वेन जानश्रुतय उक्तं 'आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा' इत्यत्र जानश्रुतिविषयः शूद्रशब्दो यौगिको न रूढः विद्याराहित्यजनितया शुचा गुरुं दुद्रावेति शूद्रपदार्थः न च रूढ्या योगस्यापहारो रूढेरत्रासंभवात् ननु तस्य कथं मुक्तिरिति चेत् 'श्रावयेच्चतुरो वेदान्कृत्वा ब्राह्मणमग्रत' इत्युक्तेः पुराणश्रवणेधिकारसद्भावाच्छ्रवणादिनाधिकारित्वसंपादने जन्मांतरमोक्षः धर्मव्याधादीनां तु केनचित्कर्मणा हीनयोनित्वेपि पूर्वानुष्ठितज्ञानोदयान्न विरोधः अतो दास्यदानं निरवद्यं ॥ ६७ ॥ ६८ ॥

स आह नान्यथोक्तिर्मे प्रसादात्सद्गुरोस्त्वियं ।
लब्धा धान्यर्द्धिरनयं न स्पृशाम्यर्पयोक्तवत् ॥ ६९ ॥
परिपक्वं ततो दृष्ट्वा सस्यं छित्वानयद्गृहम् ।
कामं शेषं जनेभ्योदादमितं धान्यमुत्तमम् ॥ ७० ॥
बहवो लेभिरे धान्यं प्रकामं सोपि सद्गुरोः ।
कृपया परया भूत्वा श्रीमान्सेवेतिनीचवत् ॥ ७१ ॥
तत्रेदृश्यः प्रभोर्लीलाः कति वृत्तास्तु कृत्स्नशः ।
न ज्ञाताः कैरपि पुरं मन्ये धन्यतमं तु तत् ॥ ७२ ॥

॥ नामधारक उवाच ॥

सत्तमाश्रितकाश्यादिक्षेत्रेषु भुवि सत्स्वपि ।
प्रीत्योवास कुतस्तत्र भगवान्मे वदस्व तत् ॥ ७३ ॥

॥ सिद्ध उवाच ॥

तत्र तीर्थान्यनेकानि देवा अप्यखिलाः खलु ।
जगन्निवास उद्वीक्ष्य तस्थौ ध्रुवमधोक्षजः ॥ ७४ ॥
मंदधीभिस्तु तीर्थानि तिष्येऽज्ञातानि तान्यतः ।
गुरुः प्राहैकदा लोकं पावनानि प्रदर्शयन् ॥ ७५ ॥

अनयं अन्यायं ॥ ६९ ॥ कामं यथेष्टं ॥ ७० ॥ सोपि शूद्रः श्रीमान्भूत्वा तिनीचवत्सेवे श्रीगुरुमिति शेषः इयमेव परा कृपा यच्छ्रीमतोप्यनौद्धत्यं ॥ ७१ ॥ अतएव तत्पुरं गंधर्वनगरं धन्यतमं मन्ये ॥ ७२ ॥ तत् अखिलं निवासकारणं ॥ ७३ ॥ जगन्निवासस्यापि स्थितिः क्षेत्रप्रकाशनेन भक्तानुग्रहार्थमेव ॥ ७४ ॥ तिष्ये कलौ अज्ञातानि तानि पावनानि तीर्थानि प्रदर्शयन्नेकदा गुरुर्लोकं प्राहेत्यन्वयः प्रकाशयन्निति पाठः ॥ ७५ ॥ हे

काशीं जिगमिषो लोके सर्वतीर्थानि चात्र तु ।
दर्शयामीति तान्प्रोक्त्वा तीर्थान्याह स दर्शयन् ॥ ७६ ॥

संगमोयं प्रयागोष्टौ तीर्थान्यत्र तु पद्कुले ।
त्रिवेणीसंगमोयं तु पापघ्न्यमरजेष्टदा ॥ ७७ ॥

जीवनायेशदत्तेंद्रनीयमानसुधाघटात् ।
युद्धे जालंधरहतदेवानाममृतं च्युतं ॥ ७८ ॥

किंचिच्च्युतादपि महाप्रवाहात्रामरत्वदः ।
कालमृत्युभयाघघ्नी जातैषामरजा ततः ॥ ७९ ॥

मनोरथाख्यं तीर्थं तु कल्पद्रुवश्वत्थसन्निधौ ।
संतोषतीर्थमग्रेत्र रुद्रो विश्वेश्वरः स्वयं ॥ ८० ॥

वामहस्तेन नंद्यंडं धृत्वांगुष्ठं च तर्जनीं ।
संस्थाप्य शृंगयोर्मध्यात्कृतशैवीप्रदक्षिणः ॥ ८१ ॥

काशीं जिगमिषो गंतुमिच्छो अत्र गंधर्वनगरे स श्रीगुरुः ॥ ७६ ॥ अयं संगमः प्रयागः कुल इति छंदोनुरोधेन ह्रस्वत्वं पद्कूले अयं संगमस्त्रिवेणी इयं भक्ताभीष्टदामरजा पापघ्नी ॥ ७७ ॥ तस्या उद्भवमाह युद्धे जालंधरहतानां देवानां जीवनाय ईशेन शंकरेण दत्तः इंद्रेण नीयमानो यः सुधाघटस्तस्मादमृतं किंचिच्च्युतं ॥ ७८ ॥ अमरत्वदः देवत्वदः ॥ ७९ ॥ कल्पवृक्षसंज्ञकाश्वत्थसंनिधौ ततोग्रे संतोषतीर्थे यो रुद्रः स स्वयं विश्वेश्वरः ॥ ८० ॥ तद्दर्शनविधिमाह वामहस्तेन नंदिनोंडं धृत्वा दक्षिणहस्तांगुष्ठतर्जन्यौ शृंगयोः संस्थाप्य मध्यत ईशं पश्येत् । कृता शैवी प्रदक्षिणा येन

पश्येद्यदीशं मर्त्योपि देववच्छ्रीष्टयुग्भवेत् ।
साक्षात्काशीयमीशेन विहिता भक्ततुष्टये ॥ ८२ ॥

जीवन्मुक्तोत्र शैवः प्राग्लोके जड इतीरितः ।
येनाहिवज्जनो भोगा विषं स्त्रीः शववन्मताः ॥ ८३ ॥

कदाचित्स सदा युक्तः प्रमाथींद्रियसंयमी ।
बंधूनाहात्र काशीयं त ऊचुर्दर्शयाद्य नः ॥ ८४ ॥

स दध्यावीशमीशोपि तदैत्याहेप्सितं वद ।
स प्राहाद्य त्वया सार्धं काशीं संस्थापय ध्रुवां ॥८५॥

तथेत्युक्त्वेश्वरोगात्तज्जलांतः कुण्डमुत्तमं ।
उद्भूतं तत्र विश्वेशमूर्तिराविरभूत्क्षणात् ॥ ८६ ॥

सः ॥ ८१ ॥ श्रिया इष्टैः स्त्र्यन्नपानादिभिर्युग्देववद्भवेत् ॥ ८२ ॥ शिवस्य निरतिशयानंदरूपस्य भक्तः शैवः ज्ञानी अतएव जीवन्नेव मुक्तः येनाहिवत्सर्पवज्जनो दृष्टः अत्राहिना दुर्वासनाशिषा दष्टः साधुर्विषयविषार्तः सन्कामादिवेदनया प्रमादमृत्युं प्राप्नोति भोगा विषं भोगविषयाः सामानाधिकरण्येन शरीरे विसर्पणेन प्रायः मरणमेव तथैव विषयतादात्म्येनावश्यमेव प्रमादमृत्युरिति निश्चीयते स्त्रीः शवतुल्या यथा शवे दिवा काकादयः शश्वदुड्डीयोड्डीय पतंति तथा कामादय उद्यंत्यस्तं यांति च रात्रावपि शवे एकांते जंबुकादयो रमंते तथा स्त्रीरूपे शवेन्येकांते पुरुषा रमंतेऽतः शवतुल्यता यथा शवदर्शनमात्रेणापि स्नानं कार्यं तथैव स्त्रीदर्शनेनेति यस्य मतं ॥ ८३ ॥ सदा युक्तोऽप्रमत्तः कुतः प्रमथनशीलानामिंद्रियाणां संयमोस्यास्तीति तथा ते बंधवः नोस्मभ्यमद्य काशीं दर्शयेत्यूचुः ॥८४॥ ईशं विश्वेश्वरं दध्यौ ध्यायति स्म ॥८५॥ तज्जलमध्ये कुंडमुद्भूतं तत्र कुंडे ॥८६॥ चिन्हानि

काश्यां चिह्नानि यान्यत्र ज्ञानान्यालोक्य तानि सः ।
स्वजनान् दर्शयित्वोचे काशीयं क्वापि यान नो ॥८७॥

प्रत्यब्दं पूजयित्वा नो विट्ठलं कुलदैवतं ।
काशीयात्रात्र कर्तव्या सर्वाघघ्नीप्सितार्थदा ॥ ८८ ॥

तस्मात्काशीयमित्यस्मिन्गुरौ ब्रुवति तत्क्षणं ।
पूर्वाश्रमस्वसा रत्नानाम्नी प्राप्य ननाम तं ॥ ८९ ॥

तामाह श्रीगुरुः प्राक्स्मृतिस्तेस्ति न वा वद ।
सापि स्मृत्वा तदा स्वांगं कुष्ठाभूतं ददर्श ह ॥ ९० ॥

तां खिन्नां प्रणतां प्राह प्रभुः पापं भवांतरे ।
चेद्भोक्ष्यसेत्र कुष्ठं द्रागपैत्यंहः प्रयत्नतः ॥ ९१ ॥

सा प्राह मातृकुक्षौ मे यथेतो न भवेत्स्थितिः ।
तथैव भवता कार्यं नान्यज्जाने परात्पर ॥ ९२ ॥

गुरुः प्राहाघहृत्तीर्थे त्र्यहं स्नानाच्छिवांतिके ।
सप्तजन्मार्जितांहोपि नश्येत्कुष्ठस्य का कथा ॥ ९३ ॥

लक्षणानि यानि तानि दर्शयित्वा स्वजनान् ऊचे काशीयमित्यादि ॥८७॥ ॥८८॥ स्वसा भगिनी तं गुरुं ॥८९॥ तां रत्नां अतः पत्युर्यतित्वं ते कुष्ठं चांग इति प्रोक्तस्य स्मरणं अकस्मात्कुष्ठेन व्यापितं स्वांगं ॥९०॥ भवांतरे जन्मांतरे भोक्ष्यसि चेच्छीघ्रं कुष्ठमपगच्छेत् पापं तु प्रयत्नतोतः किं विधेयं ब्रूहि॥९१॥सा रत्ना इतःपरं मातृकुक्षौ स्थितिर्यथा न भवेत्तथा भवद्भिः कार्यं नान्यज्जाने ॥ ९२॥ अघहृत्तीर्थे पापविनाशतीर्थे शिवसन्निधौ अंहः पापम्

सापि तत्र त्र्यहस्नानाद्भूत्वा कुष्ठोनितामला ।
मठं निर्माय तत्रैव स्थिता मुक्ता बभूव ह ॥ ९४ ॥
गुरुस्त्वग्रेघहृज्जंबुद्वीपस्थाखिलतीर्थवत् ।
कोटितीर्थं दर्शयित्वा प्राहेदं सकलाघहृत् ॥ ९५ ॥
क्रांतिपर्वग्रहेष्वत्र स्नानदानजपादयः ।
अक्षय्यानंतफलदा अकुत्सितहृदां नृणां ॥ ९६ ॥
गयावद्रुद्रपादाख्यं तीर्थं त्वग्रे गयोक्तवत् ।
कुर्ध्वं कर्मात्र कृष्णाग्रे चक्राख्यं द्वार्वतीसमं ॥ ९७ ॥
द्वारकोक्तवदाचीर्णात्फलं तस्याश्चतुर्गुणं ।
स्नानाज्ज्ञानी भवत्यत्र पतितोप्यस्थि चक्रवत् ॥ ९८ ॥
गोकर्णवद्ग्रामपूर्वभागः कल्लेश्वरोत्र तु ।
महाबलेशवत्तीर्थं मन्मथाख्यं सुसिद्धिदं ॥ ९९ ॥

॥ ९३ ॥ कुष्ठेनोनितातएवामला ॥ ९४ ॥ अघहृत्पापहरं सप्तद्वीपानां मध्ये जंबुद्वीपं मुख्यं तस्य नव वर्षाणि तन्मध्ये भारतं वर्षं अत्रैवेदं गंधर्वपुरं तन्मध्य इदं कोटितीर्थं तत्तु जंबुद्वीपगताशेषतीर्थतुल्यं ॥ ९५ ॥ क्रांतयो मेषाद्याः पर्वाणि पूर्णिमा अमा व्यतीपाताः ग्रहः सूर्यचंद्रोपरागः अक्षय्याणि क्षेतुमशक्यानि क्षय्यजय्यौ शक्यार्थ इति निपातः अनंतकर्मणां तपोदानादीनां फलानि ददतीति तथा स्नानादयः नन्वेवं कथं भवेदत आह अकुत्सितहृदां ईदृशं स्थानमाहात्म्यमिति श्रद्दधानानां ॥ ९६ ॥ गयोक्तवत्पिंडदानादि कृष्णस्याग्रतः द्वार्वती द्वारवती ॥ ९७ ॥ द्वारकोक्तवत्स्नानाद्याचरणात् तस्याः द्वारवत्याश्चतुर्गुणफलं पतितोपि ज्ञानी भवति अस्थि चक्रवद्भवति ॥ ९८ ॥ मन्मथं लिंगं महाबलेश्वरतुल्यं ॥ ९९ ॥ नभसि श्रावणे ऊर्जे

नभस्यखंडाभिषेकादूर्जे दीपात्मयात्म तु ।
अक्षय्यफलदो द्यात्सर्वसिद्धियुतामृतं ॥ १०० ॥

एवं शशंसाखिलतीर्थयात्रां नेपि प्रहृष्टाश्च तथैव चेरुः ।
एतादृशं क्षेत्रमिदं वरीयो विज्ञाय विज्ञानमयात्मकोऽस्थात्

कार्तिके ॥ १०० ॥ वरीयो वरिष्टं ज्ञात्वा समन्तज्ञानरूपोऽस्थात् ॥ १०१ ॥ अज्ञानतमोंधैरसौ न दृश्यते अंधैः सूर्यो यथा नयेति अथ रूपकेण क्षेत्रमुपलक्ष्यते अत्राक्षय्यफलदो दद्यात्सर्वसिद्धियुताऽमृतमित्यमृतमापेक्षिकं जन्यत्वाद्गृहादिवदध्रुवं 'आभूतसंप्लवं स्थानममृतत्वं च भाष्यते' इति वचनात् नेदमात्यंतिकममृतं आत्यंतिकामृतं नानात्मयाथात्म्यं तच्च पुरोडाशादिवन्नोत्पाद्यं सोमादिवन्न विकार्यं मंत्रादिवन्नाप्यं व्रीह्यादिवन्न संस्कार्यं आत्मा हि कर्तृत्वभोक्तृत्वादिरहित एक एव समोऽविनाशी 'एक एव हि भूतात्मा' इति श्रुतेः 'समं सर्वेषु भूतेषु' इति स्मृतेश्च ईदृशस्यार्थित्वादिमिथ्याज्ञाननिदानमविद्यामंतरेण न संभवति नभोवन्निष्क्रियस्य स्वत एव दुःखासंसर्गिणः परमानंदस्वभावस्य सुखं मे स्याद्दुःखं मे माभूदित्यार्थित्वं शरीरेंद्रियसामर्थ्येन च समर्थोऽहमित्यभिमानित्वं मिथ्याज्ञानं विना न संभवति मिथ्याज्ञानवत आत्मनो 'जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीय' इति कामयमानस्य सर्वथैवार्थो बाह्यो जायादिर्न संपद्यते यदा तदा मन एवास्यात्मा वाग् जायेत्यादिसंपत्तिं दर्शयति श्रुतिः एतच्चाज्ञत्वलिंगं मनआदिष्वात्मत्वाद्यभिमानस्याज्ञानकार्यत्वात् यथा बाह्यकामिन्यलाभे सुप्तो मनोविजृंभितां कामिनीमुपभुंजानोऽज्ञस्तद्वत्स्वर्गादिकामो यज्ञाद्यनुष्ठाय स्वप्नतुल्येऽपारमार्थिकेऽनित्ये सातिशये स्वर्गसुखे निमज्जति स पुनरावर्तते 'यत्कर्मिणो न प्रवेदयंति रागात्तेनातुराः क्षीणलोकाश्च्यवंते इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयंते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेनुभूत्वेमं लोकं हीनतरं

**म्लेच्छं समुद्धृत्य ततोखिलात्मा तत्र स्थितो भाविककामधेनुः।**

त्रा विशंति' इति श्रुतेः 'ते तं भुक्त्वा स्वर्ग०' इति स्मृतेश्च यदि मुमुक्षुमंदप्रज्ञश्चेत्तमुद्दिश्य स्वर्गसाधनभूतयज्ञसाम्येन तस्यैवं विदुषो यज्ञस्येत्यध्यात्मयज्ञानुष्ठानं श्रुतिर्निर्दिशति यथा तथा काशीं जिगमिषोरशक्तस्यात्मशुद्ध्यभिलाषुकस्य निकटवर्तिनीयं काशीति सर्वतीर्थदेवतान्वितत्वेन काश्यादेः साम्यं प्रदर्शितमिति बाह्यार्थः आभ्यंतरार्थस्तु कलौ मंदबुद्ध्या देहे विद्यमानानि तीर्थानि तरणोपायभूतानि ध्यानादितीर्थानि लोकैर्न ज्ञातानि तानि प्रकाशयन्नाह काशीशब्देन प्रकाशत्वाज्ज्ञानं अत्र गंधर्वनगरे तत्तुल्ये दृष्टनष्टस्वभावदेहे सर्वतीर्थानि आज्ञाचक्राख्योयं प्रयागः सात्विकाष्टभावा अष्टतीर्थानि षट्चक्राणि षट्कुलानि इडापिंगलासुषुम्णायोगस्त्रिवेणीसंगमः तदुक्तं पाद्मे 'इडा भगवती गंगा पिंगला यमुना नदी। तयोर्मध्यगता नाडी सुषुम्णाख्या सरस्वती'इति तिसृणां मध्ये क्रममुक्त्याख्येष्टफलदामरजासंज्ञा सुषुम्णा 'तयोर्ध्वमायन्नमृतत्वमेति ' इति श्रुतेः त्रिवेणीसंगमे तीर्थे तत्त्वमस्यादिलक्षण इति वा जालंधरासुरशब्देन स्वाभाविकमनोवृत्तिविशेषाः तद्विरुद्धाः प्रकाशरूपा देवाः अनयोर्युद्धे छांदोग्ये श्रुतं ईशशब्देनात्मा इंद्रशब्देन जीवः 'इंद्रायेंदो परिस्रव'इति श्रुतेः सुधाशब्देनामृतं योगशास्त्रोक्तं ज्ञेयं मनोरथाख्यं तीर्थं भक्तिः संतोष एव संतोषतीर्थं कालमृत्युः प्रमादः बिभेत्यस्मादिति भयं द्वैतं अघमात्महत्या यथा कस्यचिच्छुद्धस्य मिथ्याभिशापोशस्त्रवध एवोच्यते तद्वदात्मनि पापित्वाद्यध्यासोपि हिंसैव तदुक्तं भाष्यकारैः 'असुर्या नाम ते लोका' इत्यस्या ऋचो भाष्ये 'अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात् विद्यमानस्यात्मनो यत्कार्यं फलं अजरामरत्वादिसंवेदनलक्षणं तद्धतस्येव तिरोभवतीति प्राकृता अविद्वांसो जना आत्महन' इति। स्मृतावपि संघाताभिमानेनात्मापहरणरूपं महापातकमुक्तं 'किं तेन न कृतं पापं चोरेणात्मापहारिणा' इति। रुतं शोकं द्रावयतीति रुद्रः सात्विका-

प्रत्यक्ष ईशोपि न दृश्यतेसात्रवित्तमोंधैरुणो यथांधैः ॥१०२॥
इति श्रीगुरुचरिते भक्तियोगे क्षेत्रमाहात्म्यवर्णनं नाम
चतुर्थोऽध्यायः ॥ ४ ॥
आदितः द्वाविंशोऽध्यायः ॥ २२ ॥

हंकारः विवेको नंदी तत्सांनिध्यादानंदहेतुत्वात् ॥ शैवी प्रदक्षिणा श्रवणाद्यावृत्तिः ईशस्यात्मनो दर्शनं सोहमित्यपरोक्षानुभवः । तत इष्टप्राप्तिरनिष्टहानिः साप्युक्तप्राया इतिहासो विश्वासोत्पादनार्थः। मुक्तेति मुक्तिः सलोकता सरूपता समीपतेति त्रिधा तस्याः कुष्टत्वं पुनरावृत्तिलक्षणं त्र्यहस्नानं ज्ञानाभ्यासोपलक्षणं कोटितीर्थं विशुद्धं ज्ञानं 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यत' इति स्मृतेः इडापिंगलयोर्द्वयोः संक्रमणं संक्रांत्यादिशब्दवाच्यं सूतसंहितादौ द्रष्टव्यं गयोदरालंबनं द्वारका पंचछिद्रोपेतं हृत्कमलं तत्र श्रीकृष्णाख्यात्मन उपलभ्यमानत्वात् ब्रह्मरंध्रमेव मन्मथस्थानं सुसिद्धिदं इति विशेषणात् व्यत्ययेन वा द्वयोर्योजना आत्मपुराणे च 'स देवदेवजनकः कपालत्रयमध्यमां । सिमांतिनीनां सीमंते सीमांतां विदितां नृणां । आत्मसांनिधिमात्रेण विदार्यात्र समाविशत् । ततो मनुष्यमात्रस्य पुरी द्वारवती स्मृता । अस्यां यस्मादयं कृष्णः पुराणपुरुषोविशत् । ऊर्ध्वभागे ततो द्वारं विद्वद्भिः कीर्त्यते बुधैः' इति एवमन्यदप्यूह्यं तेपि लोकाः प्रहृष्टाः सौकर्यात् । मुक्तिफलदत्वात् गंधर्वाख्यदेहक्षेत्रे वरीयः विज्ञानं बुद्धिस्तदुपाधिकः ननु द्वा सुपर्णेति श्रुतौ द्वयोरवस्थानं श्रूयते तत्र कथमेक इत्यत आह प्रतिबिंबरूपेणाखिलात्मापि मलिनसत्वोपाधित्वान्म्लेच्छं अस्पष्टवक्तारं चिदाभासं सम्यगुद्धृत्य तत्र हार्दाकाशे स्थित इति दिक् अन्यद्यथायथमूह्यम् ॥ १०२ ॥

इति श्रीगुरुचरिते भक्तियोगे क्षेत्रमाहात्म्यवर्णनं नाम
टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥

---

# अथ त्रयोविंशोऽध्यायः

॥ नामधारक उवाच ॥

साधु साधूदितं क्षेत्रमाहात्म्यं लोकपावनं ।
जगन्निवासो भगवान्यत्रोवासैष लीलया ॥ १ ॥
तत्र तत्राखिला देवा ऋषियोगिमुनीश्वराः ।
निवसंति पुनस्तत्र ननु तीर्थानि सर्वशः ॥ २ ॥
कृष्णापंचनदीयोगो धन्योन्योप्येष तादृशः ।
स भीमामरजायोगः साक्षात्तु भगवानिह ॥ ३ ॥
पशुपक्षिमृगा मीनास्तत्रत्याः स्नानपानतः ।
धन्या एव पुनर्नृणां धन्यत्वं किमु वर्ण्यते ॥ ४ ॥
यन्माहात्म्यश्रवणतो लीयंते पापराशयः ।
किं पुनस्तन्निवसतां सतां वाच्या हि सद्गतिः ॥ ५ ॥
भगवद्भक्तियुक्ता ये मुक्तिस्तेषां करे स्थिता ।
मुक्तिं ते परिभाव्यातो भक्तिमेवाश्रयंत्यरं ॥ ६ ॥
मुक्त्यपेक्षा पुराभून्मे सा भवत्कृतबोधतः ।
व्यपेता दूरतो वृद्धाहैतुकीभक्तियोगतः ॥ ७ ॥

श्रीगणेशाय नमः ॥ अथ त्रयोविंशोऽध्यायः ॥ त्रयोविंशे च यवनराजाभीष्टकरो हरिः ॥ अदृश्योभूदभक्तानां नान्येषामिति वर्ण्यते ॥ १ ॥ विरतं ज्ञात्वा स्तुवन्पृच्छति दशभिः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ यस्य क्षेत्रस्य माहात्म्यश्रवणात् तन्निवसतां तत्क्षेत्रवासिनां सतां धर्मवर्तिनां॥५॥ ते भक्ता मुक्तिमनादृत्यारमलमत्यर्थं ॥ ६ ॥ भगवद्दर्शनात्पुरा पूर्वं मुक्त्यपेक्षा मुमुक्षा वृद्धो योऽहैतुकीभक्तियोगस्ततः तस्मात्सा मुमुक्षा दूरतो गता

अतः प्रियतमं विष्णोः कीर्तनश्रवणादिकं ।
तद्गुणश्रवणं श्राव्यं रोचते मे विशेषतः ॥ ८ ॥
तस्मात्स्वर्गायचरितपूरितात्मन्वदस्व मे ।
श्रीगुरोश्चरितं रम्यं मंगलं पावनं परं ॥ ९ ॥
को म्लेच्छः सोतिहीनोपि कृपापात्रं परात्मनः ।
कथं जातो हि भवता यत्तूक्तं म्लेच्छ उद्धृतः ॥ १० ॥

॥ सिद्ध उवाच ॥

धन्योसि तेत्र भगवत्प्रसादान्मतिरीदृशी ।
अतस्तच्चरितं वक्तुमानंदोतीव वर्धते ॥ ११ ॥
यदा स्थितः कुरुपुरे प्रत्यक्षं श्रीपदं स्तदा ।
रजकः प्रत्यहं भेजे तं स्तोत्रैर्नतिभिः सदा ॥ १२ ॥
कदाचिदाह तं तुष्टः श्रीपादो भाविकोसि रे ।
कुर्वकंटकसाम्राज्यं तच्छ्रुत्वा सोतिहर्षितः ॥ १३ ॥
सोलंकृतं नृपं नद्यां क्रीडंतं युवतीयुतं ।
चतुरंगबलोपेतं दृष्ट्वा स्वगतमब्रवीत् ॥ १४ ॥

॥ ७ ॥ अतः विष्णोर्व्यापनशीलस्य गुरोः श्रवणादिकं आदिशब्देनार्चनादि ग्राह्यं तत्रापि विशेषतः तद्गुणश्रवणं मे मम रोचते यतः श्राव्यं ॥ ८ ॥ स्वर्गे गीयत इत्यसौ स्वर्गायिः श्रीगुरुस्तस्य चरितैः पूरित आत्मा बुद्धिः यस्य तत्संबुद्धौ स्वर्गायेति पृथक्पदं वा कर्मिपक्षे स्वर्गप्राप्तये मुमुक्षुपक्षे सुष्ठुतत्त्वज्ञानार्जितायात्मने आत्मप्राप्त्यर्थमित्यर्थः ॥ ९ ॥ उक्तं पूर्वं भवता ॥ १० ॥ ते तव ॥ ११ ॥ कुरुपुरे सप्तमाध्यायोक्ते स्तोत्रैः स्वकल्पितैः नमस्कारैश्च ॥ १२ ॥ रे रजक अकंटकं शत्रुरहितं स रजकः ॥ १३ ॥ स कदाचित्कृष्णानद्यां नृपं यवनजातीयं स्वगतं स्वमनसि

गुरुः कोस्य कुतस्त्वीदृग्भाग्यं तज्जीवितं वरं ।
क्व वार्तास्य मयीत्येतज्ज्ञात्वा श्रीपाद आह तं ॥ १५ ॥
ज्ञातं ते हृद्गतं त्वत्र जरन्नार्होसि जन्मनि ।
राज्यं भोक्तुमतो भुंक्ष्व जन्मन्येष्येऽर्पितं ध्रुवं ॥ १६ ॥
संमतं भवदुक्तं हि यूनो राज्यरसज्ञता ।
राज्येप्यस्तु स्मृतिस्ते म इति तं स स्म याचते ॥१७॥
श्रीपादोपि तथेत्यूचे प्रेत्यापि रजकस्ततः ।
वैडूर्यनगरे म्लेच्छः सार्वभौमोभवन्नृपः ॥ १८ ॥
म्लेच्छधर्मरुचिः पूर्वसंस्काराद्देवविप्रभाक् ।
शुद्धात्मा दानधर्मज्ञः सर्वभूतसमोभवत् ॥ १९ ॥

॥ १४ ॥ अस्य राज्ञः को गुरुः कुत ईदृशं भाग्यं लब्धं यस्मादीदृग्भाग्यवानयं तत्तस्मादस्य जीवितं वरं अस्य भाग्यस्य मयि क्व वार्तेति ॥१५॥ अत्र जन्मनि जरन् वृद्धः राज्यं भोक्तुं न योग्योसि ध्रुवं निश्चयेन एष्ये जन्मन्यर्पितं भविष्यति तदा भुंक्ष्व ॥ १६ ॥ बाल्ये मौढ्यात् स्रक्चंदनादिरसज्ञानं न तदभिज्ञत्वेपि वार्धक्ये भोक्तुमसमर्थत्वाद्यूनो राज्यरसज्ञता ते तव मे मम ॥ १७ ॥ १८॥ सार्वभौमशब्देन मनुष्यलोकवर्तिसर्वविषयाणां लब्धत्वेनाशिष्टत्वेन यौवनेन च मनुष्यानंदविरोध्यभावान्निर्विघ्ना मनुष्यानंदसीमा चेत्ततो धर्मवीर्यप्रज्ञातेजोयशःप्रभृतीनां क्षय एव स्यात्तदानर्थायैव राज्यं भविष्यत्यतो राज्ये वर्तमानस्यापि मे ते स्मृतिरस्तु भवत्स्मृतौ सत्यां राज्यं नानर्थायेति यत्प्रार्थितं तदनुरूपमेव जन्म जातं तर्हि वेदबाह्ये म्लेच्छ ईदृक्त्वं कुत इत्यत आह पूर्वसंस्कारवशात् 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतेः म्लेच्छधर्मे अरुचिर्यस्य सः अतएव देवविप्रभक्तः शुद्धांतःकरणो दानधर्मज्ञश्चाभूत् न केवलमियदेव किंतु सर्वभूतसमः शत्रु-

तं तत्पुरोहिता ऊचुः स्वधर्मं भजयोत्तमं ।
नृपोऽद्य वर्णधर्मोऽयमग्राह्यो मनसाप्यसन् ॥ २० ॥

मुखाद्यावयवैर्देहसाम्ये वर्णक्रमः कथं ।
अचेतनोपलेध्मादौ देवतान्यत्र वा कथं ॥ २१ ॥

राजा तानाह धीमांद्यमिदं सृष्टं परात्मना ।
गुणकर्मभिदा चातुर्वर्ण्यं देवस्तु सर्वगः ॥ २२ ॥

स्थूलाक्षराल्लिपिज्ञानं शिशोरिव परात्मनः ।
गुरूक्तार्चाकल्पनया हृत्स्थैर्याद्भाव उद्भवेत् ॥ २३ ॥

मित्रभाववर्जितः ॥ १९ ॥ तादृशं तं दृष्ट्वा यवनजातीयास्तत्पुरोहिता ऊचुः उत्तमं स्वधर्मं यवनजात्युचितं भज नृप उच्यते वाच्यते इति नृपोद्यः स चासौ विप्रादिवर्णानां धर्मो मनसाप्यग्राह्यः यतोऽसन् मिथ्याभूतः ॥२०॥ असत्त्वं प्रतिपादयति वर्णानां मुखहस्ताद्यंगैः साम्येयं ब्राह्मणोयं क्षत्रिय इति वर्णक्रमः कथं घटते गवाश्ववदवयवतः शब्दतो मलवैलक्षण्यतो वा भेदलक्षणाभावात् यथा स्त्रीपुरुषयोर्योनिलिंगादिनेयं स्त्री अयं पुरुष इति ज्ञाप्यते तथायं ब्राह्मणोयं क्षत्रिय इत्यंगसंबंधिलिंगाभावान्न वर्णभेदः अचेतना ये उपलाः पाषाणा इध्मं काष्ठं तदादिशब्देन मृत्सुवर्णादि ग्राह्यं अत्र देवभावो देवता कथं अन्यत्र जलाग्न्यादिषु ॥ २१ ॥ इदं युष्माकं बुद्धिमांद्यं यतः परमेश्वरेण चातुर्वर्ण्यं स्वार्थे ष्यञ् सत्वादिगुणभेदेन शमादिकर्मभेदेन च सृष्टं 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागश' इति स्मृतेः यदुक्तमचेतनादौ कथं देवता तत्राह देवस्तु सर्वगः विवर्ताधिष्ठानत्वात् ॥ २२ ॥ तर्हि मूर्तिकल्पना किमर्थमत आह यथा स्थूलाक्षरपरिचयात्सूक्ष्मलिपिज्ञानं अर्चा प्रतिमा ॥ २३ ॥ स्वच्छेंब्वादे प्रतिबिंबरूपेण

सतोंऽब्वाद्येपि बिंबस्य प्रतीतिर्न मलान्विते ।
तथात्मनो न मलिने प्रतीतिः सा तु निर्मले ॥ २४ ॥
तत्स्वप्रमानादिवेदप्रोक्तधर्मपरान् द्विजान् ।
नमस्कुरुत भक्त्या ते देवानामपि देवताः ॥ २५ ॥
वेदानुसारिस्मृत्युक्तधर्मकर्मानुवर्तिनः ।
पूज्या अतो द्वेषशंकां त्यजतेत्याह तान्नृपः ॥ २६ ॥
ततः कालेन कियता स्फोटकोंके समुत्थितः ।
तेन राड् व्यथितोत्यंतं मोघाभूत्तत्प्रतिक्रिया ॥ २७ ॥
राजा यातनया त्यक्तभुक्तिसुप्तिरतिर्द्विजं ।
आहूय तत्प्रतीकारं पप्रच्छ विनयाऽन्वितः ॥ २८ ॥
स प्राह नात्र वक्तव्यं भवान्म्लेच्छो द्विजोस्म्यहं ।
जनश्रुतिभियैकांते वक्तव्यं भूपसत्तम ॥ २९ ॥
अथापतुरुभौ पापनाशतीर्थं द्विजोब्रवीत् ।
भो पूर्वार्जितदुष्कर्मयोगाद्रोगसमुद्भवः ॥ ३० ॥

सतो विद्यमानस्य बिंबभूतस्य मुखादेः प्रतीतिः सा मलान्विते आदर्शादौ न तथात्मनः प्रतीचः मलिने रागादियुक्ते चित्ते ॥ २४ ॥ इदं ज्ञानं वेदाधीनं ते स्वतः प्रमाणभूता अनादयः तदुक्तधर्मपरान्नमस्कुरुत यतस्ते देवानामपि देवाः ॥ २५ ॥ वेदानुसारिण्यः स्मृतयः अतो वैदिकवत्स्मार्तधर्मः अतो युष्माभिर्द्वेषो न कार्यः ॥ २६ ॥ अंके उत्संगे राट् राजा प्रतिक्रिया चिकित्सा ॥ २७ ॥ भुक्तिर्भोगः रतिः क्रीडा ॥ २८ ॥ स विप्रः भिया भयेन ॥ २९ ॥ उभौ विप्रो म्लेच्छश्च तत्र तं द्विजोब्रवीत्प्रश्नोत्तरं भो राजन् पूर्वार्जितदुष्टकर्मयोगाद्रोगोद्भवः नान्यथा

दानभेषजसत्तीर्थदेवसेवादिभिर्भवेत् ।
तच्छांतिः साधुदृष्ट्यापि सर्वाघहृतिदक्षया ॥ ३१ ॥
पुरावंतीपुरे धर्महीनोभूद्ब्राह्मणब्रुवः ।
त्यक्तकर्मा पिंगलाख्यवेश्यासक्तो मदोद्धतः ॥ ३२ ॥
तत्प्राक्पुण्यचयाद्योगी ऋषभः प्राप तत्र तौ ।
सेवयामासतुः प्रेम्णा पादसंवाहनादिभिः ॥ ३३ ॥

॥ ३० ॥ पूर्वं दुष्कर्मकर्तुर्मृतस्य कथं तेन कर्मणा जन्मांतरं रोगसंभवश्चेति न शंकनीयं स्वारंभकभूतानां वियोगेपि तत्स्थः पुरुषः शीर्यमाणेन शरीरेण सह न विशीर्यते किंतु यावत्तत्वज्ञानं न भवति तावत्पुनः पुनर्भूत्वा म्रियते मृङ् प्राणत्याग इति धातुस्मरणात् मरणं नाम देहान्निष्क्रमणं तत्तु जीवस्य नात्मनः वाङ्मनसि संपद्यत इति क्रमेण सजीवं लिंगशरीरं शक्त्यवशेषात्मनि यदा लीयते तदा पूर्वजन्मसमाप्तिर्भवति तदा मरणमित्युच्यते 'प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति 'अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकमिति प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति' इति 'योनिमन्ये प्रपद्यंते शरीरत्वाय देहिन' इत्यागमप्रामाण्यात्कर्मफलदस्येश्वरस्य प्रेरणया जन्मांतरकृतदुष्कर्मण एव रोगादिदुःखं अन्यथा कृतनाशाकृताभ्यागमप्रसंगः स्यात् तर्हि कथं तत्परिहार इत्याह दानं पात्रे श्रद्धया धनत्यागः भेषजमायुर्वेदोक्तौषधं संतः साधवः तीर्थं भागीरथ्यादि देवो विष्ण्वादिः एषां सेवा विधिना सेवनं आदिशब्दाज्जपहोमावपि गृह्यंते 'तच्छांतिरौषधैर्दानैर्जपहोमसुरार्चनैः' इति वचनात् सर्वपापहरणकुशलया साधुदृष्ट्यापि तच्छांतिः ॥३१॥ साधुदृष्टेरीदृक्त्वमाख्यायिकयाह अवंत्युज्जयिनी ब्राह्मणब्रुवः ब्राह्मणकुलोत्पन्नमात्रः द्रव्यमदेनोद्धतः॥३२॥ पूर्वपुण्यराशिपाकवशात्तौ वेश्याब्राह्मणौ ॥३३॥ पीतं तत्पादतीर्थं याभ्यां

स्तुतोर्चितो भोजितोनु पर्यंके शायितोमले ।
पीततत्पादतीर्थाभ्यां तुष्टः सुष्वाप वीजितः ॥ ३४ ॥
सुप्तोपि नमितः प्रातरुत्थायागात्स संस्तुतः ॥
इयत्पुण्येन तौ प्रेत्य जातौ ब्रह्मकुलेमले ॥ ३५ ॥
वज्रबाहोर्दशार्णेशो महिष्याः कुक्षिमाप सः ।
तत्सपत्नी तदा द्वेषाद्गर्भिण्यै गरलं ददौ ॥ ३६ ॥
तेन विद्धापि न मृता दैवात्सा सुषुवे सुतं ।
बालोपि विषविद्धोभूदुभौ जातौ व्रणांकितौ ॥ ३७ ॥
तदार्तिर्न शशामापि नानोपायैरुभौ सदा ।
क्रंदमानौ निराहारनिद्रौ क्षीणौ तु कृच्छ्रतः ॥ ३८ ॥
राजैकदा पूतिगंधित्रस्तस्तद्वीक्षणात्क्षणात् ।
सूतमाज्ञाप्य सार्भां तां गमयामास कानने ॥ ३९ ॥
घोरेरण्येपि तौ त्यक्त्वा राज्ञे सूतः शशंस तत् ।
ततो रेमेन्यभोगिन्या क्रूरो राजातिहृष्टया ॥ ४० ॥

ताभ्यां पूर्वं स्तुतोनु पश्चात्पूजितोनु पश्चादमले पर्यंके शायितश्चामरव्यजनाभ्यां वीजितोतस्तुष्टः सुष्वाप ॥ ३४ ॥ सुप्तोपि यावत्प्रबोधं स्थिताभ्यां ताभ्यां नमितः स प्रातरुत्थाय संस्तुतो यादृच्छिकोगात् एतावता पुण्येन तौ प्रेत्य शुद्धे राजकुले जातौ ॥ ३५॥ तयोर्मध्ये प्रस्तुतत्वाद्विप्रजन्माह वज्रेति दशार्णाधिपतेर्वज्रबाहोर्ज्येष्ठमहिष्या उदरं स विप्रः प्राप तत्सपत्नी समानपतिका नित्यं सपत्न्यादिष्विति ङीप् ॥ ३६ ॥ उभौ मातासुतौ ॥३७॥ तयोरार्तिर्नानोपायैरपि न शांता बभूव कृच्छ्रतः कष्टात् ॥ ३८ ॥ दुर्गंधत्रस्तः सूतं सारथिं सार्भां सपुत्रां प्रस्थापयामास ॥ ३९ ॥ भोगिन्याऽनभिषिक्तया क्रूरो निर्दयः ॥ ४० ॥ घोरसत्वे भयंकरप्राणिव्याप्तेऽज्ञाता चरणगतिर्यया

घोरसत्वे वने राज्ञी विजने व्रणकर्शिता ।
अज्ञातांघ्रिगतिस्तन्वी त्रस्ताभूत्कंटकोपलैः ॥ ४१ ॥
धृतार्भा प्राह हा दैव कष्टमीदृक्प्रदर्शितं ।
सार्भां खादय हिंस्रैर्मां दुःखबंधाद्विमोचय ॥ ४२ ॥
एवं सा विलपंती गाः प्रेक्ष्याग्रे मंदगामिनी ।
आगत्य प्राह गोपान्भो तृषोत्क्रामंति मेसवः ॥ ४३ ॥
तामूचुस्तेब्विहास्त्याराम्मंदं सृत्यानया व्रज ।
सापि गत्वांबु पीत्वोचे सरस्तीरस्थयोषितः ॥ ४४ ॥
कोत्र राजा प्रजा हृष्टा भांति मे ब्रूत योषितः ।
ता ऊचुस्त्वत्र राड् वैश्यः साधुः पद्माकरः कृती ॥४५॥
अत्रांतरेपि तद्दास्यः प्राप्तास्ताभिः सहाययौ ।
राज्ञी विट्पं पुरे दीना स तां पप्रच्छ विस्तरात् ॥४६॥

राज्ञीत्वात् ॥ ४१ ॥ गृहीतबाला दैवं प्राह हा इति खेदे ईदृग्वनवासरूपं अलं हिंस्रैर्व्याघ्रमुखैः सबालं मां खादय कुत एतदौदार्यं तदाह दुःखरूपाद्बंधान्मां मोचय व्याघ्रादिभिर्भक्षिताहं दुःखबंधान् मुच्येयं इदं शारीरकदुःखावेशादुक्तं यतः सर्वदाहं भूयासं कदाचिदपि ममासत्त्वं मा भूदित्येवमात्मन आनंदरूपत्वं सर्वैः प्राणिभिरनुभूयते तस्मादिदं दोषोपलंभनं कष्टनिमित्तमेव नात्मनः अन्यथा दुःखबंधान्मां विमोचयेति कथं वदेत् ॥४२॥ भो गोपाः तृषा पिपासयाऽसवः प्राणाः ॥ ४३ ॥ ते गोपास्तां राज्ञीं आरात्समीपं सृत्या मार्गेण ॥ ४४ ॥ प्रजायंत इति प्रजा जनाः उपसर्गे चेति डप्रत्ययः राट् राजा वैश्यजातीयः साधुः सद्धर्मवर्ती कृती पुण्यवान् पद्माकराख्यः ॥ ४५ ॥ तद्दास्यः राजदास्यः विट्पं वैश्यपतिं स राजा

सा शशंसादितः सर्वं दयालुस्तां ररक्ष सः ।
ततः सुतोल्पकालेन व्रणत्रस्तोभ्यगान्मृतिम् ॥ ४७ ॥
विलपंती तदा तन्वी प्रेतमज्ञानतोब्रवीत् ॥
त्यक्त्वा शोकार्णवे दीनां मातरं मां क्व गच्छसि ॥४८॥
त्वत्कृतेदो मया भुक्तं कष्टं तन्न स्मरस्यहो ।
त्वदर्थेंतरिता भर्तृपितृमातृहितस्वकाः ॥ ४९ ॥
त्वदर्थं विस्मृतं दुःखं मया राट्त्यक्तयापि मे ।
जीवोसि त्वयि यातेहं मरिष्ये नात्र संशयः ॥ ५० ॥
इति तद्रुदितं श्रुत्वागच्छन्हि ऋषभो मुनिः ।
विट्पतिं प्राप्य तं पृष्ट्वा तां प्राप करुणार्द्रधीः ॥ ५१ ॥
कुतो रोदिषि राज्ञीदं जगन्मायामयं ह्यसत् ।
भौतिके नश्वरे देहे कुतः पुत्रादिकल्पना ॥ ५२ ॥

॥ ४६ ॥ आदितो विषदानप्रभृति दयते तच्छीलः स्पृहिगृहीत्यालुच् मातृवद्ररक्ष ॥ ४७ ॥ स्त्रीस्वाभाव्यान्मोहाधिक्याच्चाज्ञानत इत्युक्तं तदेवाह शोकसागरे दुस्तरत्वात् तस्मिन्दीनामनाथां राज्ञा त्यक्तत्वात् ॥ ४८ ॥ त्वत्कृते त्वन्निमित्तत एव यतः सपत्न्या विषं दत्तं त्वदर्थें भर्त्रादयोंतरिता वियुक्ताः हितो मित्रं स्वकः स्वजनः ॥ ४९ ॥ राजत्यक्तयापि दुःखं वनवासादि त्वयि वियुक्तेहं मरिष्ये यतस्त्वं मे जीवोसि ॥५०॥ केयं शोचतीति पृष्ट्वा ज्ञात्वा चायं मम सेवक इति निरुपमकरुणो मुनिस्तां प्राप उवाच च ॥ तां प्राप्योचे कृपार्द्रधीरिति पाठः साधुः ॥ ५१ ॥ पुत्रादिरूपं जगत्सत्यं चेत्तर्हि शोकावसरः तत्त्वसत्यं विकारित्वाद्घटादिवन्नश्वरं हि यतः मायामयं मायाविकारमसत्स्वप्नकल्पं ननु प्रतीयमानस्य कुतोऽसत्वं तत्राह भौतिकं ॥ ५२ ॥ ननु भौतिकमपि देहमास्थाय जन्मत

कीटः कंटकवास्त्वेव यावदायुर्विचेष्टते ।
जीवः कर्मार्जितवास्त्रारब्धागतोवशः ॥ ५३ ॥
कालकर्मगुणोत्पन्नो नायं संबंधलिंगभाक् ।
चिदंशः सर्वगो नित्यो देहस्त्वाद्यंतवानचित् ॥ ५४ ॥
कोपि शुग्विषयो नातो धृतिमास्थाय सात्विकीं ।
भज प्रारब्धमश्नंती यावदायुः परेश्वरं ॥ ५५ ॥
एतावदृषभः प्रोक्त्वा विरराम तदा तु सा ।
अबोधविक्लवा प्राह प्रणताश्रुक्तलोचना ॥ ५६ ॥
भवताध्यात्मतत्त्वं मे प्रोक्तं कारुणिकेन सत् ।
सदा परिचितोऽबोधः स्थेयं नैतेन तन्मयि ॥ ५७ ॥

आत्मज्ञानांते व्यवह्रियमाणस्य कुतः पुत्रादिसंबंधो नेत्यत आह कीट इति स्वशरीरोपरि निर्मितकंटकदेहेन सह कीटो यावदायुर्विविधां चेष्टां करोति तद्वत् कंटकस्थानीयस्वोपार्जितकर्मजन्यदेहेन कीटकस्थानीयो जीवः स्वारब्धभोक्ता विचेष्टते स देहाद्भिन्न एवावशः कर्माधीनः ॥ ५३ ॥ कालः क्षोभकः कर्म निमित्तं गुणा उपादानं तेभ्य उत्पन्नः स न पुत्रादिसंबंधभाक् न च पुंस्त्वादिलिंगभाक् भजो ण्विरिति ण्विः यतः स चिदंशः अतः सर्वग ईदृशो न शोकार्हः देहनिमित्तः शोक इति चेत्तदपि न घटते तुशब्दो वैलक्षण्यार्थः देह आद्यंतवान् जडश्च ॥ ५४ ॥ तस्मात्कोपि शोकविषयो न तस्माद्धृत्या यया धारयत इत्युक्तलक्षणां सात्त्विकीं धृतिमास्थाय यावदायुरारब्धं भुंजाना परमेश्वरं भज ॥ ५५ ॥ विरराम तूष्णीं बभूव अबोधविक्लवाऽज्ञानोपहता अश्रुभिरुक्ते सार्द्रे लोचने यस्याः ॥५६॥ अध्यात्मतत्त्वं ज्ञानं सत् समीचीनं श्रोतुर्दुर्लभं तथापि सदाऽबोधोऽज्ञानं परिचितं तेन दैवहतकायां मयि स्थातुं योग्यो न भवति 'शृण्वंतोपि बहवो

सा शशंसादितः सर्वं दयालुस्तां ररक्ष सः ।
ततः सुतोल्पकालेन व्रणत्रस्तोभ्यगान्मृतिम् ॥ ४७ ॥
विलपंती तदा तन्वी प्रेतमज्ञानतोब्रवीत् ॥
त्यक्त्वा शोकार्णवे दीनां मातरं मां क्व गच्छसि ॥४८॥
त्वत्कृतेदो मया भुक्तं कष्टं तन्न स्मरस्यहो ।
त्वदर्थेंतरिता भर्तृपितृमातृहितस्वकाः ॥ ४९ ॥
त्वदर्थं विस्मृतं दुःखं मया राट्त्यक्तयापि मे ।
जीवोसि त्वयि यातेहं मरिष्ये नात्र संशयः ॥ ५० ॥
इति तद्रुदितं श्रुत्वागच्छन्हि ऋषभो मुनिः ।
विट्पतिं प्राप्य तं पृष्ट्वा तां प्राप करुणार्द्रधीः ॥ ५१ ॥
कुतो रोदिषि राज्ञीदं जगन्मायामयं ह्यसत् ।
भौतिके नश्वरे देहे कुतः पुत्रादिकल्पना ॥ ५२ ॥

॥ ४६ ॥ आदितो विषदानप्रभृति दयते तच्छीलः स्पृहिगृहीत्यालुच् मातृवद्ररक्ष ॥ ४७ ॥ स्त्रीस्वाभाव्यान्मोहाधिक्याच्चाज्ञानत इत्युक्तं तदेवाह शोकसागरे दुस्तरत्वात् तस्मिन्दीनामनाथां राज्ञा त्यक्तत्वात् ॥ ४८ ॥ त्वत्कृते त्वन्निमित्तत एव यतः सपत्न्या विषं दत्तं त्वदर्थे भर्त्रादयोंतरिता वियुक्ताः हितो मित्रं स्वकः स्वजनः ॥ ४९ ॥ राजत्यक्तयापि दुःखं वनवासादि त्वयि वियुक्तेहं मरिष्ये यतस्त्वं मे जीवोसि ॥५०॥ केयं शोचतीति पृष्ट्वा ज्ञात्वा चायं मम सेवक इति निरुपमकरुणो मुनिस्तां प्राप उवाच च ॥ तां प्राप्योचे कृपार्द्रधीरिति पाठः साधुः ॥ ५१ ॥ पुत्रादिरूपं जगत्सत्यं चेत्तर्हि शोकावसरः तत्त्वसत्यं विकारित्वाद्घटादिवन्नश्वरं हि यतः मायामयं मायाविकारमसत्स्वप्नकल्पं ननु प्रतीयमानस्य कुतोऽसत्वं तत्राह भौतिकं ॥ ५२ ॥ ननु भौतिकमपि देहमास्थाय जन्मत

कीटः कंटकधाम्नेव यावदायुर्विचेष्टते ।
जीवः कर्मोपरचितधाम्नारब्धागतोवशः ॥ ५३ ॥
कालकर्मगुणोत्पन्नो नायं संबंधलिंगभाक् ।
चिदंशः सर्वगो नित्यो देहस्त्वाद्यंतवानचित् ॥ ५४ ॥
कोपि शुग्विषयो नातो धृतिमास्थाय सात्त्विकीं ।
भज प्रारब्धमश्नंती यावदायुः परेश्वरं ॥ ५५ ॥
एतावदृषभः प्रोक्त्वा विरराम तदा तु सा ।
अबोधविक्लवा प्राह प्रणताश्रूक्तलोचना ॥ ५६ ॥
भवताध्यात्मतत्त्वं मे प्रोक्तं कारुणिकेन सत् ।
सदा परिचितोऽबोधः स्थेयं नैतेन तन्मयि ॥ ५७ ॥

आत्मज्ञानांते व्यवह्रियमाणस्य कुतः पुत्रादिसंबंधो नेत्यत आह कीट इति स्वशरीरोपरि निर्मितकंटकदेहेन सह कीटो यावदायुर्विविधां चेष्टां करोति तद्वत् कंटकस्थानीयस्वोपार्जितकर्मजन्मदेहेन कीटकस्थानीयो जीवः स्वारब्धभोक्ता विचेष्टते स देहाद्भिन्न एवावशः कर्माधीनः ॥ ५३ ॥ कालः क्षोभकः कर्म निमित्तं गुणा उपादानं तेभ्य उत्पन्नः स न पुत्रादि-संबंधभाक् न च पुंस्त्वादिलिंगभाक् भजो ण्विरिति ण्विः यतः स चिदंशः अतः सर्वग ईदृशो न शोकार्हः देहनिमित्तः शोक इति चेत्तदपि न घटते तुशब्दो वैलक्षण्यार्थः देह आद्यंतवान् जडश्च ॥ ५४ ॥ तस्मात्कोपि शोकविषयो न तस्माद्धृत्या यया धारयत इत्युक्तलक्षणां सात्त्विकीं धृतिमा-स्थाय यावदायुरारब्धं भुंजाना परमेश्वरं भज ॥ ५५ ॥ विरराम तूष्णीं बभूव अबोधविक्लवाऽज्ञानोपहता अश्रुभिरुक्ते सांद्रे लोचने यस्याः ॥५६॥ अध्यात्मतत्त्वं ज्ञानं सत् समीचीनं श्रोतुर्दुर्लभं तथापि सदाऽबोधोऽज्ञानं परिचितं तेन दैवहतकायां मयि स्थातुं योग्यो न भवति 'शृण्वंतोपि बहवो

येन मे सुप्रसन्नं स्यान्मनस्तद्धि विधीयतां ।
ईशेन प्रेरितो दुःखदशायामपि मे भवान् ॥ ५८ ॥

स तच्छ्रुत्वा सकारुण्यं वालं ज्ञात्वा स्वसेवकं ।
प्रसन्नोभूत्स नत्यैव फलंत्यत्र हि साधवः ॥ ५९ ॥

तपउज्वलितात्मा स साक्षाच्छंभुरिवापरः ।
चिक्षेप भस्म तद्गात्रे स सुप्तोत्थितवत्स्थितः ॥ ६० ॥

दत्वासिं शैवकवचं नागायुतबलं मुनिः ।
भूयादजेयो भद्रायु राजशास्तेत्युवाच सः ॥ ६१ ॥

तदा माता सुतोपि द्राग्दिव्यगात्रौ बभूवतुः ।
एतावान्साधुमहिमा तस्मात्त्वं शरणं व्रज ॥ ६२ ॥

यं न विदुः' इति श्रुतेः ॥ ५७ ॥ मनःप्रसादे सर्वदुःखनाशस्मरणात्तदेव प्रार्थयते येनेति येनोपायेन ॥ ५८ ॥ मृतं बालकं स्वसेवकं ज्ञात्वा अर्थांतरेण दृढयति नत्या नमस्कारेण न वै देवा नमस्कारमतीति सूत्रात्॥५९॥ तपसोज्वलित आत्मा वाह्य आभ्यंतरश्च यस्य स तद्गात्रे मृतशरीरे स बालः सुप्तोत्थितवत्तस्थौ ॥ ६० ॥ असिं खड्गं नागायुतबलं च दत्वा परैरजेयो राज्ञां शास्ता भद्रायुश्च भूयादित्युवाच ॥ 'पुनश्च भस्म संमंत्र्य तदंगं परितोस्पृशत् ॥ खड्गशंखाविमौ दिव्यौ परसैन्यविनाशिनौ ॥ आत्मसैन्यस्वपक्षाणां शौर्यतेजोविवर्धनौ ॥ एतयोश्च प्रसादेन शैवेन कवचेन च ॥ द्विषट्सहस्रनागानां बलेन महतापि च । भस्मधारणसामर्थ्याच्छत्रुसैन्यं विजेष्यति ॥ प्राप्य सिंहासनं पित्र्यं गोप्तास्ति पृथिवीमिमाम्' इत्यादि स्कांदे अत्रायुतशब्दो बहुलवाचक इति ज्ञेयः ॥ ६१ ॥ ६२ ॥ हे भूसुर विप्र

॥ राजोवाच ॥

साधु श्राव्यं त्वया प्रोक्तं सत्साहात्म्यं द्विजोत्तम ।
क्वास्त एतादृशः साधुस्तन्मे कथय भूसुर ॥ ६३ ॥
म्लेच्छोयं कथमस्मै तत्कथनीयमिति प्रिय ।
न मंतव्यं हि दासोहं ब्राह्मणानां विशुद्धधीः ॥ ६४ ॥

॥ विप्र उवाच ॥

मया तु भीमासरजासंगमे कथनास्ति सत् ।
साक्षात्परेश्वर इव श्रुतस्तं शरणं व्रज ॥ ६५ ॥
तच्छ्रुत्वा सत्वरं राज्यमेत्य राजा बलान्वितः ।
प्रतस्थे स्वासनारूढः साधुसंदर्शनाय सः ॥ ६६ ॥
गंधर्वपुरमासाद्य पौरान्पप्रछ कथन ।
आस्तेत्र तापसस्तं मे भवंतो दर्शयंत्वरं ॥ ६७ ॥
म्लेच्छान्दृष्ट्वापि ते भीता नोचुः क्रुद्धोब्रवीन्नृपः ।
तद्दर्शनायागतोस्मि कुत्रास्ते स तु कथ्यतां ॥ ६८ ॥
तदोचुः संगमेस्तीति तच्छ्रुत्वा सत्वरं नृपः ।
पादचारी नदीं गत्वा ददर्श श्रीगुरुं परं ॥ ६९ ॥

॥ ६३ ॥ विशुद्धा भूतानुकंपादिसद्गुणयुक्ता धीर्बुद्धिर्यस्य सः ॥ ६४ ॥ सन्साधुः स चालौकिककर्मकारी अतएव परमेश्वर इव स त्वया दृष्टः न श्रुतः ॥ ६५ ॥ बलं सैन्यं स्वासनं शिबिका ॥ ६६ ॥ आसाद्य प्राप्य स राजा पौरान् पप्रच्छ ॥ ६७ ॥ ६८ ॥ ऊचुर्लोका इति शेषः नदीं भीमां

तमपि प्रेक्ष्य भगवान्प्राह रे रजकानुग ।
कुत्र तिष्ठसि कच्चित्त्वं क्षेमी नेहागतः कुतः ॥ ७० ॥
तच्छ्रुत्वा श्रीपदं ज्ञात्वा लब्धप्राक्स्मृतिरब्रवीत् ।
त्वद्दत्तराज्यसक्तेन तवांघ्री विस्मृतौ मया ॥ ७१ ॥
योहं प्राग्रजकः सार्वभौमः सोभवमीदृशी ।
त्वत्कृपा सत्यसंकल्प मम मंतून्क्षमस्व भोः ॥ ७२ ॥
श्रीपाद रजकं कृष्णाविहारे पाहि मानुगं ।
लोलन्मस्तकबाव्हंघ्रिं गलद्धर्षाश्रुमानतं ॥ ७३ ॥
स्फोटकार्तिनिमित्तेन लब्धं ते दर्शनं हरे ।
अंतर्गतापि संविन्मे लब्धैतर्हि निमेषतः ॥ ७४ ॥
स्फोटकं दर्शय क्वास्त इत्युक्तो गुरुणा स तु ।
संतं स्फोटकमप्यंके न दृष्ट्वा चकितोब्रवीत् ॥ ७५ ॥

॥ ६९ ॥ तं राजानमपि क्षेमी क्षेमवान् किं कुतो नागतोसि तद्वद ॥७०॥ लब्ध्वा पूर्वजन्मस्मृतिर्येन अयं पूर्वदृष्टः श्रीपाद इति तं ज्ञात्वा ॥ ७१ ॥ एवं वदसि चेत्तर्हि कस्त्वं कोहमित्यत आह त्रिभिः सत्योऽवितथः संकल्पो यस्य तत्संबुद्धौ मंतूनपराधान् ॥ ७२ ॥ भो कृष्णातीरविहारे श्रीपाद मामनुगं दासं लोलन् मस्तकबाव्हंघ्रिर्यस्य गलंति हर्षाश्रूणि यस्य तं आनतं दासभावेन नम्रं ॥ ७३ ॥ स्फोटकपीडानिमित्तेन अंतर्गता जन्मांतरेण नष्टापि संविज्ज्ञानं एतर्ह्यधुना लब्धा ॥ ७४ ॥ इति श्रुत्वा श्रीपाद आह येन तवांगे आर्तिर्जाता स क्वास्ते तं स्फोटकं दर्शयेति गुरुणोक्तः स राजा पूर्वमंके विद्यमानमपि स्फोटकं तदा न दृष्ट्वा क्व गत इति शंकितः सन्तद्गमनकारणं स्वबुद्ध्या निश्चित्याह ॥ ७५ ॥

स्वामिन्मन्येनुगोयं ते स्फोटकोऽन्यायवर्तिनं ।
आनीय दंड्यमन्यत्र कृतकार्यो ययौ खलु ॥ ७६ ॥
तव जाग्रत्सु वाक्येषु दुःखदोषपरिप्लुते ।
असारे सति संसारे मग्नं मान्नं समुद्धर ॥ ७७ ॥

॥ श्रीगुरुरुवाच ॥

तृप्तं तेपि मनो भोगैर्भुक्तं राज्यमपीप्सितं ।
लब्धाः पुत्रादयो वापि का वापेक्षास्ति तं वद ॥ ७८ ॥
स प्राह परिपूर्णं मे सर्वं ते कृपयेश्वर ।
त्वद्दत्ताप्यखिला ते श्रीरर्पणीयेत्यपेक्षितं ॥ ७९ ॥

॥ श्रीगुरुरुवाच ॥

यतेर्मे गमनं म्लेच्छ गोघ्ने राज्ये कथं भवेत् ।
मां वर्णास्त्वामपि म्लेच्छा हसिष्यंति न संशयः ॥८०॥

स्वामिन्नयं स्फोटकस्तेनुगः दूतः अन्यायवर्तिनं दंडार्हं दंड्यं दंडादिन्य इति यप्रत्ययः मामत्र त्वां प्रत्यानीय कृतकार्यः सन्नन्यत्र ययौ खलु इति मन्ये ॥ ७६ ॥ ननु त्वं तु लोकपालः कस्तेन्यायो येन दंडार्होस्यत आह तवेति स्मृत्यादिरूपेषु जाग्रत्सु तव वाक्येषु पूर्वजन्मश्रुतेषु सत्सु दुःखदोषयुक्तेऽसति मिथ्याभूते निःसारे संसारे मग्नं अतोज्ञं मां ततः सम्यगुद्धर ॥ ७७ ॥ ते मनो भोगैस्तृप्तं किं एवमग्रेपि अधुना का वापेक्षावशिष्टा तां वद ॥ ७८ ॥ त्वया दत्ता श्रीस्तेर्पणीया दर्शनीया समर्पणीया वेति मयापेक्षितम् ॥ ७९ ॥ गावो हन्यंतेस्मिन्निति गोघ्नं यद्वा गावो विधिरूपा वेदोक्ता वाचः हन्यंतेऽवमन्यंते नास्तिक्येनेति गोघ्नं तस्मिन् यतेर्निषिद्धत्वात् रे म्लेच्छ ॥ ८० ॥ म्लेच्छजातीयोप्यहं पूर्वस्मरणानुभवेन रजको

येन मे सुप्रसन्नं स्यान्मनस्तद्धि विधीयतां ।
ईशेन प्रेरितो दुःखदशायामपि मे भवान् ॥ ५८ ॥

स तच्छ्रुत्वा सकारुण्यं बालं ज्ञात्वा स्वसेवकं ।
प्रसन्नोभूत्स नत्यैव फलंत्यत्र हि साधवः ॥ ५९ ॥

तपउज्वलितात्मा स साक्षाच्छंभुरिवापरः ।
चिक्षेप भस्म तद्गात्रे स सुप्तोत्थितवत्स्थितः ॥ ६० ॥

दत्वासिं शैवकवचं नागायुतबलं मुनिः ।
भूयादजेयो भद्रायु राजशास्तेत्युवाच सः ॥ ६१ ॥

तदा माता सुतोपि द्राग्दिव्यगात्रौ बभूवतुः ।
एतावान्साधुमहिमा तस्मात्त्वं शरणं व्रज ॥ ६२ ॥

यं न विदुः' इति श्रुतेः ॥ ५७ ॥ मनःप्रसादे सर्वदुःखनाशस्मरणात्तदेव प्रार्थ्यते येनेति येनोपायेन ॥ ५८ ॥ मृतं बालकं स्वसेवकं ज्ञात्वा अर्थांतरेण दृढयति नत्या नमस्कारेण न वै देवा नमस्कारमतीति सूत्रात्॥५९॥ तपसोज्वलित आत्मा बाह्य आभ्यंतरश्च यस्य स तद्गात्रे मृतशरीरे स बालः सुप्तोत्थितवत्तस्थौ ॥ ६० ॥ असिं खड्गं नागायुतबलं च दत्वा परैरजेयो राज्ञां शास्ता भद्रायुश्च भूयादित्युवाच ॥ 'पुनश्च भस्म संमंत्र्य तदंगं परितोस्पृशत् ॥ खड्गशंखाविमौ दिव्यौ परसैन्यविनाशिनौ ॥ आत्मसैन्यस्वपक्षाणां शौर्यतेजोविवर्धनौ ॥ एतयोश्च प्रसादेन शैवेन कवचेन च ॥ द्विषट्सहस्रनागानां बलेन महतापि च । भस्मधारणसामर्थ्याच्छत्रुसैन्यं विजेष्यति ॥ प्राप्य सिंहासनं पित्र्यं गोतास्ति पृथिवीमिमाम्' इत्यादि स्कांदे अत्रायुतशब्दो बहुलवाचक इति ज्ञेयः ॥ ६१ ॥ ६२ ॥ हे भूसुर विप्र

॥ राजोवाच ॥

साधु श्राव्यं त्वया प्रोक्तं मन्माहात्म्यं द्विजोत्तम ।
क्वास्त एतादृशः साधुस्तन्मे कथय भूसुर ॥ ६३ ॥
म्लेच्छोयं कथमस्मै तत्कथनीयमिति प्रिय ।
न मंतव्यं हि दासोहं ब्राह्मणानां विशुद्धधीः ॥ ६४ ॥

॥ विप्र उवाच ॥

मया तु भीमामरजासंगमे कश्चनास्ति सन् ।
साक्षात्परेश्वर इव श्रुतस्तं शरणं व्रज ॥ ६५ ॥
तच्छ्रुत्वा सत्वरं राज्यमेत्य राजा बलान्वितः ।
अतस्थे स्वासनारूढः साधुसंदर्शनाय सः ॥ ६६ ॥
गंधर्वपुरमासाद्य पौरान्पप्रछ कश्चन ।
आस्तेत्र तापसस्तं मे भवंतो दर्शयंत्वरं ॥ ६७ ॥
म्लेच्छान्दृष्ट्वापि ते भीता नोचुः क्रुद्धोब्रवीन्नृपः ।
तद्दर्शनायागतोस्मि कुत्रास्ते स तु कथ्यतां ॥ ६८ ॥
तदोचुः संगमेस्तीति तच्छ्रुत्वा सत्वरं नृपः ।
पादचारी नदीं गत्वा ददर्श श्रीगुरुं परं ॥ ६९ ॥

॥ ६३ ॥ विशुद्धा भूतानुकंपादिसद्गुणयुक्ता धीर्बुद्धिर्यस्य सः ॥ ६४ ॥ सन्साधुः स चालौकिककर्मकारी अतएव परमेश्वर इव स त्वया दृष्टः न श्रुतः ॥ ६५ ॥ बलं सैन्यं स्वासनं शिबिका ॥ ६६ ॥ आसाद्य प्राप्य स राजा पौरान् पप्रच्छ ॥ ६७ ॥ ६८ ॥ ऊचुर्लोका इति शेषः नदीं भीमां

तमपि प्रेक्ष्य भगवान्प्राह रे रजकानुग ।
कुत्र तिष्ठसि कच्चित्त्वं क्षेमी नेहागतः कुतः ।। ७० ।।
तच्छ्रुत्वा श्रीपदं ज्ञात्वा लब्धप्राक्स्मृतिरब्रवीत् ।
त्वद्दत्तराज्यसक्तेन तवांघ्री विस्मृतौ मया ।। ७१ ।।
योहं प्राग्रजकः सार्वभौमः सोभवमीदृशी ।
त्वत्कृपा सत्यसंकल्प मम मंतून्क्षमस्व भोः ।। ७२ ।।
श्रीपाद रजकं कृष्णाविहारे पाहि मानुगं ।
लोलन्मस्तकवाव्हंघ्रिं गलद्धर्षाश्रुमानतं ।। ७३ ।।
स्फोटकार्तिनिमित्तेन लब्धं ते दर्शनं हरे ।
अंतर्गतापि संविन्मे लब्धैतर्हि निमेषतः ।। ७४ ।।
स्फोटकं दर्शय क्वास्त इत्युक्तो गुरुणा स तु ।
संतं स्फोटकमप्यंके न दृष्ट्वा चकितोब्रवीत् ।। ७५ ।।

।। ६९ ।। तं राजानमपि क्षेमी क्षेमवान् किं कुतो नागतोसि तद्वद ।।७०।। लब्ध्वा पूर्वजन्मस्मृतिर्येन अयं पूर्वदृष्टः श्रीपाद इति तं ज्ञात्वा ।। ७१ ।। एवं वदसि चेत्तर्हि कस्त्वं कोहमित्यत आह त्रिभिः सत्योऽवितथः संकल्पो यस्य तत्संबुद्धौ मंतूनपराधान् ।। ७२ ।। भो कृष्णातीरविहारे श्रीपाद मामनुगं दासं लोलन् मस्तकवाव्हंघ्रिर्यस्य गलंति हर्षाश्रूणि यस्य तं आनतं दासभावेन नम्रं ।। ७३ ।। स्फोटकपीडानिमित्तेन अंतर्गता जन्मांतरेण नष्टापि संविज्ज्ञानं एतर्ह्यधुना लब्धा ।। ७४ ।। इति श्रुत्वा श्रीपाद आह येन तवांगे आर्तिर्जाता स क्वास्ते तं स्फोटकं दर्शयेति गुरुणोक्तः स राजा पूर्वमंके विद्यमानमपि स्फोटकं तदा न दृष्ट्वा क्व गत इति शंकितः सन्तद्गमनकारणं स्वबुद्ध्या निश्चित्याह ।। ७५ ।।

स्वामिन्मन्येनुगोयं ते स्फोटकोऽन्यायवर्तिनं ।
आनीय दंड्यमन्यत्र कृतकार्यो ययौ खलु ॥ ७६ ॥
तव जाग्रत्सु वाक्येषु दुःस्वदोषपरिप्लुते ।
असारे सति संसारे मग्नं माङ्गं समुद्धर ॥ ७७ ॥

॥ श्रीगुरुरुवाच ॥

तृप्तं तेपि मनो भोगैर्भुक्तं राज्यमपीप्सितं ।
लब्धाः पुत्रादयो वापि का वापेक्षास्ति ते वद ॥ ७८ ॥
स प्राह परिपूर्णं मे सर्वं ते कृपयेश्वर ।
त्वद्दत्ताप्यखिला ते श्रीरर्पणीयेत्यपेक्षितं ॥ ७९ ॥

॥ श्रीगुरुरुवाच ॥

यतेर्मे गमनं म्लेच्छ गोघ्ने राज्ये कथं भवेत् ।
मां वर्णास्त्वामपि म्लेच्छा हसिष्यंति न संशयः ॥८०॥

स्वामिन्नयं स्फोटकस्तेनुगः दूतः अन्यायवर्तिनं दंडार्हं दंड्यं दंडादिन्य इति यप्रत्ययः मामत्र त्वां प्रत्यानीय कृतकार्यः सन्नन्यत्र ययौ खलु इति मन्ये ॥ ७६ ॥ ननु त्वं तु लोकपालः कस्तेन्यायो येन दंडार्होन्यत आह तवेति स्मृत्यादिरूपेषु जाग्रत्सु तव वाक्येषु पूर्वजन्मश्रुतेषु सत्सु दुःस्वदोषयुक्तेऽसति मिथ्याभूते निःसारे संसारे मग्नं अतोज्ञं मां ततः सम्यगुद्धर ॥ ७७ ॥ ते मनो भोगैस्तृप्तं किं एवमग्रेपि अधुना का वापेक्षावशिष्टा तां वद ॥ ७८ ॥ त्वया दत्ता श्रीस्तेर्पणीया दर्शनीया समर्पणीया वेति मयापेक्षितम् ॥ ७९ ॥ गावो हन्यंतेस्मिन्निति गोघ्नं यद्वा गावो विधिरूपा वेदोक्ता वाचः हन्यंतेऽवमन्यंते नास्तिक्येनेति गोघ्नं तस्मिन् यतेर्निषिद्धत्वात् रे म्लेच्छ ॥ ८० ॥ म्लेच्छजातीयोप्यहं पूर्वस्मरणानुभवेन रजको

॥ राजोवाच ॥

रजकोहं भवाञ्छ्रीपान्न हिंसातःपरं पुरे ।
इत्युक्त्वा लोलदंगस्तं नेतुकामोऽस्तुवद्विभुं ॥ ८१ ॥
स प्राह तुष्ट आयास्ये भक्ताधीनोस्मि केवलं ।
हेतुनानेन नोपेक्ष्या मद्भक्ता मद्गतांतराः ॥ ८२ ॥
स तच्छ्रुत्वोपवेश्येशं प्रतीतः स्वासने नृपः ।
वाहान्दत्वापि शिष्येभ्यो धृततत्पादुकोन्वगात् ॥८३॥
प्राहांघ्रिचारिणं स्वामी तं तदारादितो नृप ।
गंतव्यमस्त्यपीदं तु न श्लाघ्यं सार्वभौम ते ॥ ८४ ॥
स प्राह सार्वभौमः को रजकस्तेऽनुगोऽस्म्यहं ।
त्वयैव न्यस्तभूर्धूस्त आज्ञयानुचराम्यहं ॥ ८५ ॥

॥ श्रीगुरुरुवाच ॥

दत्तं ते दिक्पमात्राभी राट्त्वं तेनासि विष्णुवत् ॥
राजन्ममाज्ञयैवाश्वमारुह्य व्रज मा वद ॥ ८६ ॥

भवांश्च श्रीपाद इतःपरं पुरे गोहिंसादि न भविष्यति प्रणाममिषेण लोलं-त्यंगानि यस्य स स्वराष्ट्रं प्रति गुरुं नेतुकामोस्तुवत् ॥ ८१ ॥ स गुरुः अनेन भक्ताधीनत्वेन ॥ ८२ ॥ शोभने आसने शिबिकायां ईशं श्रीगुरुं प्रतीतः हृष्टः धृते तस्य पादुके येन ॥ ८३ ॥ अंघ्रिचारिणं पादाभ्यां चरंतं तं म्लेच्छराजं इत आराद्दूरं इत इति पंचम्यर्थे तसिः अन्यारादिति पंचम्या अपेक्षितत्वात् भूमिपस्य तवेदं पादचारित्वं न श्लाघ्यं ॥ ८४ ॥ त्वयैव न्यस्ता उपन्यस्ता भुवो भूमेर्धूर्भारो यस्मै सोहं तवाज्ञयानुचरामि ॥ ८५ ॥ दिक्पालांशै राजत्वं ते तुभ्यं दत्तं तेन त्वं विष्णुवत्सत्कार्योसि अतोश्वमारुह्य व्रज इतःपरं मा ब्रूहि युगमानेन जातोपि हीनजातीयो राजा सत्कार्यस्तदनु-

ततः सांध्याकर्मोहार्थं तमाह भगवान्नृप ॥
गत्यानया क्रियालोपो भवेदग्रे व्रजाम्यतः ॥ ८७ ॥
एहि मंदं पापनाशतीर्थे तिष्ठामि भूपते ।
इत्युक्त्वार्धक्षणात्पंक्तियोजनायतमापतत् ॥ ८८ ॥
सशिष्यः स तु तत्तीर्थे सांध्यं कर्माकरोत्तदा ।
सायंदेवसुतो नागनाथो गच्छन्ददर्श तं ॥ ८९ ॥
चकोरश्चंद्रमिव तं दृष्ट्वा हृष्टः स्वदैवतं ।
संप्रार्थ्य स्वगृहं नीत्वा भोजयामास सादरं ॥ ९० ॥
सशिष्यस्तद्गृहे भुक्त्वा तमाहैत्याति गाढितः ।
स तु म्लेच्छो न साध्वेतत्तीर्थे स्थेयमतो द्विज ॥ ९१ ॥
इत्युक्त्वा स ययौ तीर्थे च तजाप्याययौ तदा ।
प्रतीतः पादचारी स निन्ये निजपुरं गुरुं ॥ ९२ ॥
अलंकृतं शुभं नानारत्नतोरणमण्डितं ।
पताकाध्वजसंकीर्णं पुरं भास्वत्सुशोभनं ॥ ९३ ॥
गीतवाद्यजयध्वानसंकुलं शिष्ययुग्गुरुः ।
नीराजितो रत्नदीपैः पालकस्थो विवेश सः ॥ ९४ ॥

शासनं च नातिक्रमणीयमिति सूचितं ॥ ८६ ॥ सोपि राजा अनया मंदगत्यास्मत्कर्मलोपो भवेदतोग्रतो व्रजामि ॥८७॥ चत्वारिंशत्क्रोशादूरं तत्तीर्थं ॥८८॥ सांध्यं संध्याकालीनं तं पापविनाशतीर्थस्थं गुरुं॥८९॥ गुरुदर्शनौत्सुक्ये चकोरदृष्टांतः ॥ ९० ॥ तं नागनाथं राट् राजा न साधु न शोभनं ॥ ९१ ॥ स श्रीगुरुः प्रतीतो मुहुर्गुरुदर्शनेन हृष्टः निजपुरं वेङ्गुरग्र्यं ॥ ९२ ॥ ९३ ॥ ९४ ॥ पट्टकूलाच्छादितमार्गेण भद्रासने सिंहासने

पट्टकूलच्छन्नसृत्या नीत्वांतःपुरमीश्वरं ।
भद्रासने तूपवेश्य पूजयामास तं नृपः ॥ ९५ ॥
शिष्यान्यथास्वपीठस्थान्प्रपूज्य महिषीः स्त्रियः ।
पुत्रान्पौत्रान्सखीन्स्वांश्च दर्शयामास शंभवे॥ ९६ ॥
गीतं सवाद्यं नृत्यं च छत्रचामरमालिने ।
तस्मै समर्प्य प्रकृतीर्दर्शयामास सर्वशः ॥ ९७ ॥
म्लेच्छा विरुद्धचेष्टं धिक्चक्रुर्भूपं द्विजार्चकं ।
प्रशशंसुर्द्विजा राजा पुण्यश्लोकोयमित्यपि ॥ ९८ ॥
गुरुस्तमाह हृष्टोस्मि दृष्ट्वा ते प्रकृतीः शुभाः ।
तुष्टोस्याभिर्न वा ब्रूहि निःशंकं निकटे मम ॥ ९९ ॥
स प्राहाभिर्न तुष्टोस्मि साम्राज्यं तेंघ्रिसंस्थितं ।
श्रुत्वा तत्परमं कांक्षे दुरापमपि देहि मे ॥ १०० ॥
अद्यैव भवते कुर्वे सर्वस्वात्मनिवेदनं ।
इत्युक्त्वा स तथा चक्रे राट् संकल्पपुरःसरं ॥१०१॥

पूजयामास राजोपचारैर्भूषयामास ॥ ९५ ॥ यथायोग्यासनस्थान् शिष्यांश्च महिषीः कृताभिषेकाः स्त्रियो भोगिनीः स्वान्स्वजनान् ॥ ९६ ॥ छत्रचामरैर्मालते शोभते तस्मै श्रीगुरवे 'स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ सेनांगानि प्रकृतयः पौराणां श्रेणयोपि च' इत्युक्ताः प्रकृतीः ॥ ९७ ॥ ॥ ९८ ॥ समाः सर्वाः ॥ ९९ ॥ स राजा आभिः प्रकृतिभिः ॥ १०० ॥ सर्वस्वात्मनिवेदनं विना तद्दुरापं चेत्तत्राहाद्येति सर्वस्वं चात्मा देहश्चैषां निवेदनं संकल्पपूर्वकमनेन विश्वात्मा तुष्यत्विति मनःपूर्वकं निवेदनं चक्रे ॥ १०१ ॥ अनेन सर्वस्वात्मदानेन मयि सर्वात्मकेनन्यवृत्तिकं मनो यस्य

॥ श्रीगुरुरुवाच ॥

कृतं साधु त्वया भूप तुष्टोऽनेन ददामि ते ।
मन्मनस्काय भक्ताय शुद्धभावाय कांक्षितं ॥ २ ॥
इत्युक्त्वा श्रीगुरुर्यूने भूधुरं पार्थिवार्पितां ।
ज्येष्ठायादाद्विर्नीताय तदोग्ममुनाय सः ॥ ३ ॥
भूपं प्राह गुरुः शीघ्रं प्रव्रजाहमितो द्रुतं ॥
गत्वा मठं समाश्वास्य शिष्यान्भक्तानपीनगान् ॥ ४ ॥
श्रीपर्वतं गमिष्यामि त्वमप्येहि नगोत्तमं ।
भवेन्मे दर्शनं तत्र जीवन्मुक्तो भविष्यसि ॥ ५ ॥
इत्युक्त्वा गौतमीं गत्वा स्नात्वा शिष्यान्वितः प्रभुः ।
संप्राप्तोमरजाभीमासंगमं योगिजीवनः ॥ ६ ॥
तत्रत्या अपि तं दृष्ट्वा सर्वे जल्हादिरे तदा ।
नीराज्य श्रीगुरुं चक्रुस्तदर्थं ब्रह्मभोजनं ॥ ७ ॥
सर्वत्र प्रसृता भक्तिर्म्लेच्छा अपि भजंन्यतः ।
कलौ घोरेत्र न स्थेयं साक्षाद्देवेन्यमंस्त सः ॥ ८ ॥

तस्मै कांक्षितं स्वचरणभजनं ननु नीचाय कथं देयमत आह शुद्धो रागादिरहितो भावो बुद्धिस्वभावो यस्य तस्मै 'मां हि पार्थ व्यपा०' इति स्मृत्यादौ भगवद्भजने न वर्णादिप्रयोजनं भक्त्युत्पत्तौ तु चित्तशुद्धिद्वारा स्वाश्रमाद्युचितकर्मापेक्षा यथाकथंचित्पूर्वसंस्कारेण जाताया भक्तेः को विघातकः ॥ २ ॥ 'विनीतमौरसं पुत्रं यौवराज्येभिषेचयेत्' इति स्मरणात् राजदत्तां भूधुरं तज्ज्येष्ठपुत्रायाऽदात् ॥ ३ ॥ इतो राष्ट्राद्बहिः प्रकर्षेणाहंताममतात्यागपूर्वकं गच्छ जीवन्मुक्तः विक्षेपरहितः ॥ ४ ॥ ५ ॥ ६ ॥ तदर्थं श्रीगुरुप्रीत्यै ब्राह्मणभोजनं ॥ ७ ॥ साक्षाद्दृश्यमानरूपेण ॥ ८ ॥

श्रीशैलमुक्त्वद्गत्वा म्लेच्छायापि स सद्गतिं ।
सर्वस्वात्मार्पणाद्दत्वा पुनः प्रापाव्ययो मठं ॥ ९ ॥
तस्थौ भजत्कामधेनुः प्रत्यक्षस्तत्र वै सतां ।
अगोचरस्त्वनार्याणां जन्मांधानामिवोष्णगुः ॥ ११० ॥
कृष्णापंचनदीयोगे प्रातः स्नात्वात्र संगमे ।
कर्म कृत्वान्हिकं भिक्षां मठे भुक्त्वैव तिष्ठति ॥ १११ ॥
दर्शिता विविधा लीला दर्शयत्यप्यनंतशः ॥
दर्शयिष्यति को वेत्ति प्रभावं तस्य दुर्ग्रहं ॥ १२ ॥
यो यो यस्य तु कामस्तद्भजनात्सिद्धिमेत्यरं ।
भजतोनुभजत्येष यतोसौ भक्तिभावनः ॥ १३ ॥
जागरूका कलौ प्रायः काचिन्न भगवत्कला ।
तत्साक्षाद्भगवंतं तं श्रद्धयाऽसंशयं भज ॥ १४ ॥
इति सिद्धोदितं श्रुत्वा श्रद्धयाऽसंशयं गुरुं ।
अभ्यर्च्याऽऽपामृतं द्राक्तच्छ्रवणान्नामधारकः ॥ १५ ॥
तत्संवादमयं ग्रंथं धर्म्यं गंगाधरात्मजः ।
सच्छ्रीगुरुचरित्राख्यं व्यरचत्तारकं सुधीः ॥ १६ ॥

अपिशब्दादन्येभ्यो दास्यत्येव मठं निर्गुणाख्यं ॥ ९ ॥ उष्णगुः सूर्यः ॥ ११० ॥ १११ ॥ अनंतानंत इत्य(तः) संख्यैकवचनाच्चेति शस् प्रभावं सामर्थ्यं ॥ १२ ॥ अरं शीघ्रं ॥ १३ ॥ ग्रंथमुपसंहरति जागरूकेति जागरूक इत्यकप्रत्ययः प्रायःशब्देन सर्वा अपि निद्रिता इति न तथापि साक्षाद्भगवत्वाज्जागरूकत्वादस्यैव भजनं मुख्यं ॥ १४ ॥ आप प्राप

यत्र क्वापि स्थापितः प्रेतभूतरक्षोमुख्यासद्ग्रहार्तिघ्न एषः।
सप्ताहं तत्पाठिने शृण्वतेपि दत्तात्रेयोऽभीष्टकामान्ददाति ॥१७॥

स एवात्रेयगोत्रोत्थगणेशब्रह्मपुत्रगां।
पुनानोऽर्थ्यो जयत्यत्र ग्रंथात्मा तारकोऽव्ययः ॥ १८ ॥

॥ १५ ॥ गुरुचरित्राख्यं महाराष्ट्रभाषया प्रसिद्धं ॥ १६ ॥ १७ ॥ स एव ग्रंथरूपो दत्तः गां वाणीं ॥ १८ ॥ अंते मंगलमाचरतिॐनिति सर्वे वेदा यत्पदमिति काठके मध्यप्रतिपत्तॄणां प्रतीकत्वेनालंबनत्वेन चोंकारस्य प्रतिपादनात् नामिनाम्नोश्च लोके भेदस्याप्रसिद्धत्वाद्वस्तुतश्चोंकारस्य ब्रह्मविवर्तत्वाद्विवर्तानां चाधिष्टानाभेदात् ॐकारं ब्रह्मनामधेयं ब्रह्मदृष्ट्योपास्यं 'ब्रह्मदृष्टिरुत्कर्षात्' इति न्यायात् उपासकानवति अविद्यादिभ्योनर्थबीजेभ्यो रक्षतीति ॐकारस्य परापरत्वश्रवणात्स्वोपासकरक्षणं संभाव्यते 'एतद्ध्येवाक्षरं ब्रह्म परं चापरं च यदोंकार' इति श्रुतिभ्य ॐकारं ब्रह्म 'ॐमिति ब्रह्म' इति श्रुतेः तत्संबुद्धौ हे ॐ भगवन् श्रौतादौ प्राथम्येन पठयमानत्वात् पूजावन् तद्यथा शंकुनेति श्रुतेर्जगत्पर्णशंकुस्थानीयत्वाद्ब्रह्मणा तादात्म्यं प्राप्तत्वाद्ब्रह्मणो विकारनामधेयत्वाच्च विश्वहेतुत्वं ब्रह्मणा वेदेन ॐमित्येतदक्षरमितीडित हे अज अकारस्य सर्ववाक्त्वप्रतिपादनात् पूर्वमाविर्भूतत्वादकारपूर्वं जायत इत्यजः 'अकारो वै सर्वा वाक्सैषोष्मभिः स्पर्शैर्व्यज्यमाना बव्ही नानारूपा भवति अकार उकारो मकार इति तानेकधा समभरत्' इति श्रुतेः योनिसंबंधं विना ब्रह्मणः कंठभेदेन जातत्वाद्वाऽजः ब्रह्मणः पुरा कंठं भित्वा विनिर्यातावित्युक्तेः ते नमः गायत्र्यादिब्रह्मप्राप्त्यालंबनानां मध्ये श्रेष्ठत्वेन मालतेसौ माली 'एतदालंबनं श्रेष्ठं' 'यश्छंदसामृषभो विश्वरूप' इति श्रुतेः मात्रात्रयरूपेण स्थूलादिदेहत्रयरूपं विश्वं बिभर्तीति विश्वभृत् लीलयानायासेन मात्रोपासकानां ऋगादिभिस्तत्तल्लोकं नयनक्रियया विह-

ॐनमो भगवन्विश्वहेतो ब्रह्मेडिताज ते ।

रतीति तथोक्तं शैब्यप्रश्ने आर्यान्मुमुक्षून्भावयति संवर्धयतीति तथा 'ॐकारः सर्ववेदानां सारः ०' इति वार्तिकात्त्वमेवंभूतोसि ॥ १ ॥ ईश्वरपक्षे यस्य कस्यचिन्निकटे स्वाभीष्टसंपादनार्थं प्रियनामोच्चार्यते तद्वत्प्रियतमवाचकेन प्रणवेनादौ नमस्यन्स्तौति प्रणवस्येश्वरवाचकत्वे 'तस्य वाचकः प्रणवः' इति योगे 'ॐतत्सदिति निर्देश' इति स्मृतौ च प्रमाणं उत्पत्त्यादिज्ञातृत्वाद्धे भगवन्नीश्वर ते नमः हे विश्वहेतो 'यतो वा इमानि भूतानि' इति श्रुतेः ब्रह्मणा विधिना सृष्ट्यादौ ईडित हे अज ते नमः ईक्षितृत्वेन वर्तमानत्वान्मा माया तस्यामलीनः असंगत्वात् अध्याससाक्षित्वेन विश्वं बिभर्तीति तथा पोषको वा प्राणिनां तत्तत्कर्मफलदातृत्वात् 'फलमत उपपत्तेः' इति न्यायात् जगदुत्पत्त्यादिलीलया विहरतीति तथा आर्यान्साधून्भावयतीति 'परित्राणाय साधूनां' इति स्मृतेः ॥२॥ अथ शिवपक्षे 'शरणद गृणात्योमिति पदम्' इति पुष्पदंतेनोक्तत्वात् ॐनम इत्युक्तं रुद्राध्याये नमः सोमायेति विभूत्यनुवाके नमस्तारायेत्युक्तत्वादौ नमः भगवन् विश्वोत्पत्त्यादिकारण भवमृडहरशिवरूपै रजःसत्वतमःशुद्धसत्वोपाधिभिरुत्पत्तिस्थितिलयमोक्षहेतुत्वात् श्रुतयश्च 'नमो भवाय च । तोकाय तनयाय मृडय । नमो हंत्रे च। प्रपंचोपशमं शांतं शिवमद्वैतं' इति भवत्यस्मादिति भवः रजउपाधिकः स्रष्टा मृडयति सुखयतीति मृडः सत्वोपाधिकः पालकः हरतीति हरः संहारकस्तमउपाधिकः विशुद्धसत्वोपाधिकः मोक्षानंददः शिव इति क्रमेण ज्ञातव्यं उक्तं च 'बहुलरजस' इत्यादि । ब्रह्मणा वेदेन 'विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् सर्वो ह्येष रुद्र' इतीडित नृकरोटिमाली इन ईश्वरः सर्ववंद्यत्वात् शिवया तन्वा विश्वं बिभर्तीति रुद्रस्येमे तनुवौ घोरान्या शिवान्या 'याते रुद्र शिवा तनूः' इति श्रुतेः लीलया महोक्षादितंत्रोपकरणैः श्मशाने भूतैः सह विहरतीति तथा आर्यान्पाशुपतान्भावय-

**मालीनो विश्वभृल्लीलाविहार्यस्यार्यभावनः ॥ ११९ ॥**

तीत्यार्यभावन ईदृशोसि ॥ ३ ॥ अथ नारायणपक्षे भगवन्नारायण विश्व-हेतो 'नारायणाद्रुद्रो जायते नारायणात्प्रजाः प्रजायंत' इत्याम्नातत्वात् ननु ब्रह्मोत्पादक इति चेत् 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुतेस्तद्द्वारोत्पादकः 'विष्णोर्नु कं वीर्याणि प्रवोचम्' इति वेदेनेडित अज अकारण ते नमः त्वं मा लक्ष्मीः तस्यां लीनः स्वोरसि धृतत्वात् कच्छपरूपेण विश्वं बिभर्तीति तथा लीलयावतारनटनरूपया भक्तानुग्रहलक्षणया विहरतीति तथा आर्या-न्वैष्णवान् भावयति सालोक्यादिदानेन संवर्धयतीति तथा ॥ ४ ॥ ॥ अथ ब्रह्मपक्षे ॥ अः वासुदेवस्तस्माज्जातोऽजः ब्रह्मा 'अकारो वासुदेवः स्यात्' 'अक्षराणामकारोस्मि' इति वचनात् 'अथाको वेद यत आबभूव' इति श्रुतेः हे अज हे भगवन् प्रजावन् प्रथमशरीरित्वात् 'हिरण्यगर्भः सम-वर्तताग्र' इति श्रुतेः हे विश्वहेतो 'धाता यथापूर्वमकल्पयत्' इति श्रुतेः लोके ब्रह्मेतीडित ते नमोस्तु त्वं मालंते तपआदिना शोभंते मरीच्याद्य-स्तेषामिनः स्वामी विश्वभृत् 'स दाधार पृथिवीं द्यामुतेमाम्' इति श्रुतेः लीलया जगदुत्पादनक्रियया विहरतीति तथा आर्यान्समुच्चयोपासकान् क्रममुक्त्या भावयतीति तथाभूतोसि ॥ ५ ॥ अग्निपक्षे ॥ 'स त्रेधात्मानं व्यकुरुत' इति श्रुतेरग्निवाय्वादित्यादिस्वरूपेणावस्थितः स्तूयते अः विराडात्मा ततो जातोजः 'अस्मात्त्वमधिजातोसि मुखादिंद्रश्चाग्निश्च' इति श्रुतेः हे अजाग्ने ते नमः तस्य विश्वहेतुत्वादि मंत्रतोवगम्यते 'त्वं भूत-कृज्जगन्नाथस्त्वं भूतपरिपालन' इति ब्रह्मणि वेदे 'अग्निः पूर्वेभिर्ऋषिभिरी-ड्य' इतीडित मालीनस्तेजस्वित्वात् जाठरवैश्वानररूपेण विश्वभृत् लीलया देवदौत्येन हविर्वहनक्रियया विहरतीति आर्यान्धर्मिष्ठान्द्वारदानेन संवर्ध-यति तथा अग्ने नयेति मंत्रलिंगात् ॥ ६ ॥ वायुपक्षे ॥ अतति व्याप्नोतीति अः आकाशस्ततो जातोजः वायुः 'आकाशाद्वायुः' इति श्रुतेः तत्संबुद्धौ ते नमः

## इति श्रीगुरुचरिते भक्तियोगे पंचमोध्यायः ॥

वायोः प्राणोपाधित्वेन विश्वहेतुत्वादि प्रश्ने श्रूयते 'प्राणो ब्रह्मेति व्यजानात्' इति तैत्तिरीये च माळते व्यापकत्वेन शोभत इति माली 'वायुर्वै गौतम तत्सूत्रम्' इति श्रुतेः इंद्रियप्रवर्तकत्वाद्बलदत्वाच्च इनः राजायं वृत्तिभिर्विश्वभृत् लीलया सदागत्या विहरतीति आर्यान्प्राणोपासकान् भावयतीति ॥ ७ ॥ सूर्यपक्षे ॥ अः वासुदेवस्ततो जातोजः 'चक्षोः सूर्यो अजायत'इति श्रुतेः त्रयीमयत्वादोंकाररूपः भगवत्त्वं त्रिकालं पूज्यत्वं विश्वहेतुत्वं स्मर्यते 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपजायते ( तिष्ठते ) आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति 'असावादित्यो ब्रह्म' इतीडित ते नमः सर्वात्मत्वादीडितत्वं 'सूर्य आत्मा जगतस्तस्थुषश्च' इति लिंगात् त्वं मा शोभा तयाऽलतीति व्याप्नोतीति तथा मित्रो दाधार पृथिवीमुत द्याम् इति विश्वभृत् लीलया ज्योतिश्चक्रे पौनःपुन्येन भ्रमणक्रियया विहरतीति आर्यान्गायत्रीजापकान्भावयतीति ॥ ८ ॥ रामपक्षे ॥ 'अजो हरे हरौ कामे विधौ छागे रघोः सुत' इति विश्वः ॥ अजस्य गोत्रापत्यं पुमान् आजः रामः ॥ 'अपत्यं पौत्रप्रभृति गोत्रं' राक्षसादिनिर्दलनेन विश्वहेतुः ब्रह्मणावतारार्थी रावणवधोत्तरं वेडितस्तत्संबुद्धौ मायां जानकीरूपायां लक्ष्म्यां लीनः स्त्रीसंगिनामियं गतिरिति लोके दर्शयितुं तस्यामासक्तस्तत्कृत एव यतो राक्षसा हताः धर्मस्थापनेन विश्वं बिभर्तीति तथा लीलया क्षात्रविग्रहेण विहरतीति तथा आर्यान् बिभीषणसुग्रीवहनुमन्मुखान् भावयतीति ॥ ९ ॥ कृष्णपक्षे ॥ 'कृष्णस्तु भगवान् स्वयम्' इत्युक्तेः हे भगवन् श्रीकृष्ण ते नमः हे अज 'अजोपि सन्नव्ययात्मा'इति स्मृतेः विश्वहेतुत्वं स्वयमेवोक्तं मया ततमिदं सर्वमिति स्वगर्वपरिहारोत्तरं ब्रह्मणोडितत्वं वनमाली इनः क्षात्रः दैत्यनिग्रहेण विश्वं बिभर्तीति तथा लीलया वृंदावने विलासेन द्वार्वत्यां च षोडशस्त्रीसहस्रैस्तदनुकूलविलासेन वा गोपैः सह क्रीडयार्जुनसारथ्यादिना

## आदितस्त्रयोविंशोऽध्यायः ॥ २३ ॥

वा विहरतीति तथा आर्यान्यादवान् भावयतीति ॥ १० ॥ गणपतिपक्षे ॥ अजस्य शिवस्य पुत्र आजः 'सर्वं जगदिदं त्वत्तो जायत' इत्यादिना विश्व-हेतुत्वं निर्विघ्नार्थं ब्रह्मणा ईडित त्वं प्रवालमाली विघ्नेनः लीलया नरवारण-वेषेण विहरतीति आर्यान् गाणपत्यान् भावयतीति ॥ ११ ॥ देवीपक्षे ॥ स्त्रीलिंगपरिणामेन योज्यं 'स्त्रियः सतीस्तां ऽउमे पुंस आहुः' इति श्रुतेः ॥१२॥ श्रीदत्तपक्षे ॥ अजस्य ब्रह्मणः पौत्र आजः योसौ भगवान्सर्वैश्वर्य-संपन्नो 'यश्च विश्वं सृजति विश्वं बिभर्ति' इति दत्तोपनिषदः अतः भगवत्त्वं विश्वभृत्त्वं हेतुत्वं च मालीनः योगीशो मायानासक्तो वा लीलयावधूतवेषेण गंगास्नानादौ विहरतीति तथा आर्यभावनः भक्तपालकः तापिन्यां विष्णुना ब्रह्मणे मामकं सात्त्विकं दत्तात्रेयाख्यं धामोपास्वेत्युक्तत्वात् शांडिल्यायाथर्व-णाय च शांतमात्मबुद्धिप्रकाशं दत्तं ध्यायमान इत्युक्तत्वाद्दत्तः परं ब्रह्म एवं श्रीगुरुप्रेरणया यथामतीदं व्याख्यातं ॥

संहितेयं द्विसाहस्री त्रिकांडाभीष्टदा सती ।
व्याख्याताजोनया प्रीयाच्छ्रीदत्तोयं त्र्यधीश्वरः ॥

इति श्रीगुरुचरिते भक्तियोगे टीकायां पंचमोध्यायः ॥५॥ आदितस्त्रयो-विंशोऽध्यायः ॥ २३ ॥

॥ इति टीका संपूर्णा ॥

---

# अथ योगरहस्यम्

श्रेष्ठपुंजन्मसाफल्यं कार्यं योगत्रयाश्रयात् ।
समाख्यातद्विसाहस्रीसंहितासंग्रहस्त्वयं ॥ १ ॥
भक्तिं विना न साफल्यं कर्मणः कर्मणा विना ।
न च ज्ञानं विना ज्ञानान्न मोक्षो यस्य कस्यचित् ॥२॥
न ज्ञानं जीवति प्राणे मनस्यपि लयं नयेत् ॥
यस्तौ गच्छति मोक्षं स योगी नान्यः कथंचन ॥ ३ ॥
चले प्राणे चलं चित्तं निश्चले निश्चलं तयोः ।
नष्ट एकतरे नाशो द्वयोरपि स योगतः ॥ ४ ॥
भक्तिक्रियाज्ञानयोगान्मुक्तिरुक्तापि तत् त्रयं ।
ज्ञेयं साष्टांगयोगांतर्गतं द्वैधमतोत्र नो ॥ ५ ॥
नात्यश्नतोनश्नतोतिसुप्तस्यैष न जाग्रतः ।
युक्तचेष्टाहारनिद्रागतेर्योगो भवेत्सुखः ॥ ६ ॥
तस्माद्वैराग्यतोभ्यासं गुरोरग्रे वितन्वतः ॥
योगस्य प्राप्य संसिद्धिं विद्वान्मुक्तो भवेद्द्रुतं ॥ ७ ॥

श्रीगणेशाय नमः ॥ अथ योगाख्यं प्रथमं रहस्यम् ॥ श्रेष्ठस्य पुंजन्मनः साफल्यं योगत्रयाश्रयादुक्तात्कार्यं अयं द्विसहस्रसंहितासंग्रहः ॥ १ ॥ २ ॥ इडापिंगलाभ्यां वहनं प्राणजीवनं संकल्पो मनोजीवनं तौ लयं नयेल्लीनं कर्तुं शक्नुयात् शकि लुङ् चेति शक्यर्थे लुङ् ॥३॥ चले इडापिंगलाभ्यां वहमाने द्वयोर्मध्ये एकस्मिन्नष्टे ॥ ४ ॥ त्रयं क्रिया भक्तिर्ज्ञानं च यमनियमांतर्गतं द्वैधं विरोधः ॥ ५ ॥ युक्ता चेष्टादयो यस्य ॥ ६ ॥ वितन्वतः कुर्वतः ॥ ७ ॥ क्षारो लवणादिः आम्लं चिंचादि तिक्तं कारवेल्यादि कटु

क्षाराम्लतिक्तकटुरुक्षकदन्नशाकस्त्र्यग्न्यध्वभाङ् न लभतेऽकुशलोस्य सिद्धिं । शुंठीसितासुमनशालिसदन्नमुद्गचक्षुष्यशाकघृतदुग्धसदंबुपथ्यं ॥ ८ ॥

सद्देशे मठिकामध्ये निश्चिंतो गुरुशिक्षितः ।
कुशाजिनांशुकेष्वेव हठयोगं समभ्यसेत् ॥ ९ ॥
गुदमेंढ्रोर्ध्वस्थगुल्फमासीनो यतगुः समः ।
भ्रूमध्यदृग्वान्यपीठैः सिद्धं तत्राप्यदोस्ति मत् ॥१० ॥
वायुं शक्त्येडयापूर्य हृदि स्थाप्य हनुं जपन् ।
हंसं शक्त्या कुंभयित्वा पश्चादाकर्षितोदरः ॥ ११ ॥
शनैर्विरेचयेदेष प्राणायामः सुसिद्धिदः ।
पंचघ्यान्ह्यन्ह्यशीत्यंतैः प्रतिसंध्यसुयामकैः ॥ १२ ॥
गंतव्यमार्गस्थशक्तिचालनाद्भस्त्रया भवेत् ॥
नाडीशुद्धिस्त्रिमासोर्ध्वं प्राणो याति लयं सहृत् ॥ १३ ॥

मरीच्यादि रुक्षमस्निग्धं कदन्नं यावनालभाषादि 'प्रायः सर्वाणि शाकानि विष्टंभीनि गुरूणि च । रूक्षाणि बहुवर्चस्कम्' इत्युक्तेः । अष्टांगमिथुनेन स्त्रियं सेवनेनाग्निं गत्याध्वानं च भजतीति भजो ण्विः अभ्यासेऽकुशलः सिता शर्करा सुमना गोधूमा सदन्नं श्यामाकादि चक्षुषे हितं चक्षुष्यं तस्मै हितमिति यत्'सर्वं शाकमचक्षुष्यं चक्षुष्यं शाकपंचकं । जीवंतिवास्तुमत्स्याक्षी मेघनादा पुनर्नवा' इति समाहारद्वंद्वः ॥ ८ ॥ अल्पो मठो मठिकाल्पीयसि कन् 'हकार उच्यते सूर्यष्टकारश्चंद्र उच्यत' इति तयोः प्राणापानयोर्योगो हठयोगः ॥ ९ ॥ गुदस्य मेंढ्रस्य चोर्ध्वस्थौ गुल्फौ यस्मिन्यतगुर्यतेंद्रियः अद इदं सिद्धमासनं ॥१०॥चतुरंगुलांतरेण हृदि हनुं हंसं गायत्रीं सोहमिति वा ॥११॥ अन्ह्यह्नि दिने दिने त्रिकालं पंचवृद्ध्याशीत्यंतैः प्राणायामैः ॥ १२ ॥ भस्त्रया वक्ष्यमाणाच्छक्तिचालनात् ॥१३॥

लीनः सपंचविपलद्विपलं सोऽसुयामकः ।
ब्रह्मरंध्रे वर्धमानः प्रत्याहारादयः स तु ॥ १४ ॥

स्वकालद्वादशगुणोत्तरकालावधिः स्मृतः ।
समाधिर्द्वादशदिनसाध्यः परमदुर्लभः ॥ १५ ॥

समासीनो यतास्योंतःप्राणं दक्षिणया त्यजेत् ।
सारं लगति हृत्कंठकपोलावध्यसौ यथा ॥ १६ ॥

लोहकारस्य भस्त्रावच्छवत्याश्वापूर्य रेचयेत् ।
वामां मध्यानामिकाभ्यां धृत्वा जाते श्रमे विधेः ॥१७॥

पीत्वा प्राणं कुंभयित्वा धृत्वांगुष्ठेन दक्षिणं ।
वामया रेचयेन्मंदं तथाथ प्राग्वदाचरेत् ॥ १८ ॥

द्विनाड्यभ्यासाद्यामार्धं शक्तिर्मार्गं ददात्यरं ।
भस्त्रेयं सर्वदोषघ्नी रुक्पापघ्न्यपि सिद्धिदा ॥ १९ ॥

पंचविपलाधिकद्विपलं ब्रह्मरंध्रे लीनः प्राणः स प्राणायामः स्वकालद्वादशगुण उत्तरांगकालः ॥ १४ ॥ १५ ॥ समासीन ईदास इतीकारादेशः पिहितमुखः सारं सशब्दं हृत्कंठकपोलावधि यथा लगति ॥ १६ ॥ तथा लोहकारभस्त्रावदाशु आपूर्य रेचयेन्नात्र कुंभः वामनासां मध्यमानामिकाभ्यां धृत्वापूर्य रेचयेच्छ्रमे जाते विधेर्विधिना ॥ १७ ॥ प्राणं पीत्वांगुष्ठेन दक्षिणां धृत्वा कुंभयित्वा वामया रेचयेत् अथ वामया पुनः पूर्ववत् ॥ १८ ॥ यामार्धं अर्धं नपुंसकं कालाध्वन इति द्वितीया भस्त्रया द्विनाड्यभ्यासात् अरं शीघ्रम् कफादिदोषाः रुग्रोगः ॥ १९ ॥ शिश्ननाभ्यंतरस्थं नवांगुलं कंदं सति वज्रासने पदौ धृत्वा गुल्फाभ्यां कंदं ताडयित्वा

शिश्ननाभ्यंतरस्थकंदं सति वज्रासने पदौ ॥
धृत्वा दृढं प्रपीड्यारं भस्त्रां सिद्धासनस्थितः ॥ २० ॥
समाकुंचितनाभिद्राक्कुर्याच्छक्तिश्चस्यनः ।
यामार्धान्यामतो धैर्यान्मध्यनाड्यां समुद्गता ॥ २१ ॥
ऊर्ध्वाकृष्टा सर्वत्किंचिच्छक्तिर्नाडीमुखं त्यजेत् ।
ततः स्वतो व्रजत्यूर्ध्वं प्राणास्तां विचालयेत् ॥२२॥
चालनात्सर्वसिद्ध्याप्तिर्मंडलाद्योगिनो न तु ।
रुग्भ्यो भयं यमाच्चापि नेतोन्यन्नाडिशोधनं ॥ २३ ॥
चालितायामपि प्राणो बद्धा चेद्रसना सुखं ।
व्रजत्यूर्ध्वं सिद्धिपूर्वं राजयोगपदप्रदः ॥ २४ ॥
जिव्हां मूलशिरां छित्वा रोममात्रं प्रघर्षयेत् ।
पथ्यासैंधवचूर्णेना प्राग्वत्सप्तदिनैर्मुहुः ॥ २५ ॥
षण्मासादिति जिव्हाधः शिराबंधो विनश्यति ॥
मुद्रा स्यात्खेचरी त्र्यध्वे योजितावाङ्मुखी कला ॥२६॥

पुनः सिद्धासनग्रहणमभ्यासार्थं ॥ २० ॥ परिधानयुक्तिर्देशिकाज्ज्ञेया तथा समाकुंचितनाभिः मध्यनाड्यां सुषुम्णायां ॥ २१ ॥ तां शक्तिं ॥ २२ ॥ मंडलाच्चत्वारिंशद्दिनैः इतः शक्तिचालनादन्यत् अन्यारादिति पंचमी ॥ २३ ॥ तस्यां चालितायामपि जिव्हा बद्धा चेत्प्राण ऊर्ध्वं व्रजति सोणिमादिसिद्धिपूर्वं राजयोगपदप्रदः ॥ २४ ॥ जिव्हाधः शिरां रोममात्रं छित्वा हरीतकीसैंधवचूर्णेन घर्षयेत् पूर्ववच्छेदनचालनदोहनादि सप्तदिनैः एवं मुहुः ॥ २५ ॥ षण्णां मासानां समाहारः तद्धितार्थे इति समासः तस्मात्षण्मासेनेति यावत् त्र्यध्वे इडापिंगलासुषुम्णामार्गे लंबिकोर्ध्वविवरे-वाङ्मुखी स्वांगाच्चेति ङीप् ऊर्ध्वाग्रायोजिता कला जिव्हा खे चरतीति

सहृज्जिव्हा चरत्यस्य खे कदापि स्पृशंति नो ।
विषार्तिरुग्जराक्षुत्तृण्निद्रातंद्रामृतिक्रियाः ॥ २७ ॥
स्त्र्याश्लेषितस्यापि बिंदुर्न क्षरत्यूर्ध्वमेति सः ।
चलितश्चेद्योनिमुद्राबद्धो मुक्तः स भोग्यपि ॥ २८ ॥
सुधांतःस्रवतींदोस्तां ग्रसत्यर्कस्ततो जरा ।
अधःशीर्षोर्ध्वपात्तिष्ठेद्बह्वाहारः शनैः शनैः ॥ २९ ॥
याममात्रं ततः सिद्धिर्व्यस्तेयं करणीष्टदा ।
वलीपलितवेपघ्नी मृत्युहर्त्री सुधाप्रदा ॥ ३० ॥
स्वास्येग्नौ दीप्तेंगसादे नाडीशुद्धावनामये ।
नादस्फुटत्वे सुदृष्ट्याः सिद्धिर्बिंदौ जिते सति ॥ ३१ ॥
विविधा उपसर्गाः प्राक्संभवंत्यत्र योगिनः ।
सद्गुरोर्दृढभक्त्या ते प्रणश्यंति न चान्यथा ॥ ३२ ॥
कारणं कर्मारुरुक्षोर्योगिनो योगमुत्तमं ।
शमः कारणमस्याग्रे योगारूढस्य योगिनः ॥ ३३ ॥
कामवेगसहोंतर्दृक् सुखारामोभितो यतिः ।
ब्रह्मनिर्वाणमेत्येव ब्रह्मभूतोमलः समः ॥ ३४ ॥

खेचरी मुद्रा ॥ २६ ॥ हृदा मनसा सहृजिह्वा ॥ २७ ॥ स्त्रियालिंगितस्यापि बिंदुर्न क्षरति चलितश्चेद्योनिमुद्रया वज्रोल्या बद्ध ऊर्ध्वं व्रजति इंदोस्तालुनः सुधामृतं अर्को जठराग्निः बह्वाहारः क्षुदपेक्षयाधिकाहारः ॥२९॥ व्यस्ता विपरीता करणी वली चर्मसंकोचः पलितं केशशौक्ल्यं वेपः कंपः ॥३०॥ शोभने आस्ये जाते अंगसादे देहकार्श्ये बिंदौ वीर्ये ॥३१॥ उपसर्गाः विघ्नाः ॥ ३२ ॥ योगमारुरुक्षोः कर्म कारणं ॥ ३३ ॥ अंतरात्मनि दृग्यस्य बुद्धिग्राह्यसुखे आरामो यस्य समः द्वंद्वातीतः ॥ ३४ ॥

कश्चिद्धारणयोपास्ते ध्यानात्कश्चित्समाधिना ।
आत्मानमेवमाप्त्वेमां सिद्धिं मुक्तो भवन्त्यसौ ॥ ३५ ॥

हृद्युपास्यो धारणया वराभयकरो हरिः ।
प्रादेशमात्रः सुसिद्धः खेचरीमुद्रया युतः ॥ ३६ ॥

अंगुष्ठमात्रं पुरुषं दत्तात्रेयं दिगंबरं ।
ध्यायेत्सिद्धासनासीनं मुनिशं कंठसंस्थितं ॥ ३७ ॥

सहस्रदलपद्मस्थं सुसूक्ष्मं शांतमुज्वलं ।
समाधिना द्वादशाहं तन्मयो भावयेत्परं ॥ ३८ ॥

अंतर्लीनसहृत्प्राणो पश्यन्नचलदृग्बहिः ।
मुद्रेयं शांभवी शून्याशून्यलक्ष्मपदप्रदा ॥ ३९ ॥

तद्वान् दृढासनो दक्षकर्णौ रुद्धविलो ध्वनिं ।
त्रिग्रंथिभेदं शृणुयात्सुसूक्ष्मं स समाधिभाक् ॥ ४० ॥

॥ ३५ ॥ हृद्यष्टदले ॥ ३६ ॥ ३७ ॥ ध्यातृध्यानभावरहितेन समाधिना ॥ ३८ ॥ अभ्यंतरे लीनः हृदा सह प्राणो यस्याचलदृग्बहिः पराग्विषया-नपश्यन्तिष्ठेत् इयं श्यति दुःखं तनूकरोतीति शं आनंदः स भवत्यस्मादिति शंभुरात्मा 'एष ह्येवानंदयाति' इति श्रुतेः तस्येयं शांभवी मुदं निर्विक-ल्पानंदं रातीति मुद्रा निषेधमुखेन देहादिशून्यं निषेधावधित्वेन चाशून्यं लक्ष्म यस्येदृशं पद्यते ज्ञानिभिर्गम्यत इति पदं वैष्णवाख्यं ददातीति तथा ॥ ३९ ॥ तद्वान् शांभवीमुद्रावान् अंगुष्ठाभ्यां कर्णौ तर्जनीभ्यामक्षिणी मध्याभ्यां नासामन्याभिर्मुखमेवं रुद्धानि विलानि येन स ध्वनिमनाहताख्यं हृत्कंठभ्रूमध्यस्थब्रह्मविष्णवीशग्रंथिभेदकं सुसूक्ष्मं वंशीनादसदृशं ॥ ४० ॥

यमेन दशधा नूनं दशधा नियमेन च ।
आसनाद्येन षट्केन योगोष्टांगोयमुच्यते ॥ ४१ ॥

एतेनाष्टांगयोगेन प्रबुद्धः स्वल्पसंविदा ।
शुभाशुभविनिर्मुक्तो देही ब्रह्ममयो भवेत् ॥ ४२ ॥

इदं रहस्यं परमं नाख्येयं यस्य कस्यचित् ।
इति योगाख्यं प्रथमं रहस्यम् ॥

॥ ४१ ॥ सुतरामल्पस्य सूक्ष्मवस्तुनः संविदा स एतमेव पुरुषं ब्रह्म प्रबुद्धः
॥ ४२ ॥ यस्येति षष्ठी शेषे यस्मै कस्मै अनधिकाराय रहस्यत्वात्
॥ ४३ ॥ इति टीकायां योगाख्यं प्रथमं रहस्यम् ॥ १ ॥

## अथ बोधरहस्यम्

संतप्त धन्य संन्यासिन्गुरुभक्त गतागतात् ।
मुक्त्या आत्माप्त्ये तत्त्वजडचैतन्यविद्भव ॥ १ ॥

स्वान्याज्ञं जडमन्या चिन्नामरूपात्मकं जडं ।
रोमत्वङ्मांसनाड्यस्थि भुवोद्भ्यो मूत्ररेतसी ॥ २ ॥

श्रीगणेशाय नमः ॥ अथ बोधाख्यं द्वितीयं रहस्यम् ॥ 'कश्चिद्धीरः प्रत्यगात्मानम्' इत्युक्तं प्रदर्श्य 'प्रोक्तान्येनैव सुज्ञानाय' इति श्रुतिहार्दं दर्शयितुं गुरुशिष्यसंवादरूपं बोधाख्यं रहस्यं कथयति कश्चित्संस्कृतो ब्राह्मणोधीतवेदः कृतविहितगार्हस्थ्यकर्मापास्तकिल्बिष उपास्तपरमेश्वरोपि दैवात्तापत्रयसंतप्तः सन् विरक्तया श्रीगुरुमुपससाद तं च तादृशं प्रणतं प्रेक्ष्य कृपालुर्भगवान्श्रीगुरुः पृच्छति संतप्तेति तापत्रयैः सम्यक् तप्त धन्य सुकृतिन् निर्विण्णत्वात्सद्गुरुलाभाच्च पूर्वमनुष्ठितनिष्कामकर्मफलोदयस्त-वाधुना जात इति धन्येति संबुद्धया ज्ञाप्यते तादृशस्यात्मविद्यायामधिकारि-त्वद्योतनाय पुनर्द्वे संबोधने संन्यासिन् श्रवणार्थं कृतश्रवणप्रतिबंधककर्म-संन्यास । गुरुभक्त हे शिष्य आत्मप्राप्तिरूपायै मुक्त्यै त्वं तत्वानि सांख्योक्तानि जडं अनात्मरूपं चैतन्यं स्वात्मरूपं चैतानि वेत्तीति तथा भव ॥ १ ॥ किं जडं किं चैतन्यमित्यत आह स्वं अन्यं च न जानातीति तथा तज्जडं ततोन्या स्वमात्मानं परं च जानाति सा चिच्चैतन्यं एवं सामान्यत उक्त्वा विशेषत आह नामरूपात्मकं जडं अर्थान्नामरूपातीतं चैतन्यं १ तर्हि अचेतनोयं देहः कुतो नामरूपात्मकभाक् जडत्वादिति कथयितुं तस्य पांचभौतिकत्वं दर्शयति भुवः सकाशात् रोमादिपंच ५ अद्भ्यः सकाशान्मूत्रादिपंच अस्त्रं रक्तं १० अग्नेः सकाशात्क्षुदादिपंच

स्वेदोस्रलालेग्नेः क्षुत्तृण्निद्रा तंद्रा रतिर्गतिः ।
लौल्यं निरोधः प्रसाराकुंचने मरुतोथ खात् ॥ ३ ॥
कामक्रुड्लोभमोहा भीस्तदाढ्येयं जडा तनुः ।
वर्णाश्रमादिद्वंद्वादिसंबंधादिपरो भवान् ॥ ४ ॥
यन्निर्विकल्पं स्फुरति तदंतःकरणं मनः ।
तत्संकल्पविकल्पाभ्यां तत्तु धीर्निश्चयात्मकं ॥ ५ ॥
अनुसंधानकं चित्तमहंकारस्त्वहंकृतिः ।
व्यानाधार्याद्यं श्रुतेस्तु शब्दभुग्वक्ति वाक्सखं ॥ ६ ॥

रतिर्मैथुनं मतांतरं कांतिः १९ मरुतो वायोः गत्यादि पंच २० अथ खादाकाशात् ॥ २ ॥ ३ ॥ कामादिपंच क्रुट् क्रोधः २५ तैरुक्तैर्भौतिकांशैराढ्या युक्ता पंचविंशत्या रचितेयं दृश्या स्थूलाख्या तनुर्जडा अस्यामेव वर्णाश्रमादयः सुखदुःखादिद्वंद्वानि पुत्रपितादयः संबंधाश्च भवांस्तु देहद्रष्टा त्वमेव वर्णाश्रमादिदेहधर्मेभ्यः परः ॥४॥ननु तर्हि सुखाद्यनुभवः कथं अंतःकरणतादात्म्यादंतःकरणस्य च स्थूलदेहतादात्म्यापन्नत्वात्परंपरया सुखादिभ्रांतिरेव साक्षिण इति वक्तुं सवृत्तिकमंतःकरणं निर्दिशति सार्धेन यत्तूष्णींभूतावस्थायां समाधौ च निर्विकल्पं यथातथा स्फुरति तदंतःकरणं तदेव जाग्रदादौ संकल्पविकल्पाभ्यामुपलक्षितं मनःसंज्ञकं भवति तदेव निश्चयात्मकं धीर्बुद्धिरुच्यते॥५॥ तदेवानुसंधानकं चित्तमुच्यते तदेवाहमिति यदा मनुते तदाहंकार इति इदं भूतसत्त्वकार्यं अन्यैः सात्विकैर्भूतकार्यैर्ज्ञानेंद्रियै राजसैः कर्मेन्द्रियैः प्राणैश्च सहितं सत् चेतनस्य तव सांनिध्यात्स्वयं जडमपि चेतनवत्प्रतीयते व्यवहरति च तद्यथा आद्यमंतःकरणं व्यानाधारोस्यास्तीति व्यानाधारि श्रुतेः श्रवणद्वारा नानावर्णस्वरभेदभिन्नान् शब्दान् भुनक्तीति तथा वाक्सखं वागिंद्रियप्रवर्तकं च ॥ ६ ॥ समानाधारि मन-

समानाधारि त्वचान्यत्स्पर्श्याद्यादातृ दातृ च ।
उदानाधारा धीर्नेत्राद्रूपभुक्सगमागमा ॥ ७ ॥
जिव्हया प्राणवच्चित्तं रसभुग्रतिमूत्रकृत् ।
सापानाहंकृतिर्घ्राणाद्गंधभुग्विड्विसर्गकृत् ॥ ८ ॥
कर्मज्ञानेंद्रियैः पुण्यपापयोः सुखदुःखयोः ।
भौतिके पंचके कर्तृभोक्तृत्वे द्वंद्वतापि च ॥ ९ ॥
तल्लिंगदेहतादात्म्यात्कर्तृत्वादि वृथार्जितं ।
हेतुदेहपरस्वात्मज्ञानान्मुक्तिर्ध्रुवाचिरात् ॥ १० ॥
स्वदिदृक्ष्वंतराज्ञानहेतुसाक्षी परो भवान् ।
निराकारस्वात्मबुद्धिमहाकारणसाक्ष्यपि ॥ ११ ॥

स्त्वचा स्पर्शोत्कृ हस्ताभ्यां आदातृ दातृ च उदानाधारा बुद्धिर्नेत्रेण रूप-भुक् पादाभ्यां च सगमागमा ॥ ७ ॥ प्राणयुक्तं चित्तं जिव्हया रसभुक् उपस्थेन चरति मूत्रकृत् अपानसहितोहंकारः घ्राणेन गंधभुग्गुदेन मलवि-सर्गकृच्च ॥ ८ ॥ एवमंतःकरणप्राणद्वारा कर्मेंद्रियैर्ज्ञानेंद्रियैश्च पुण्यपापयो-स्तत्फलभूतसुखदुःखयोः क्रमेण कर्तृत्वं भोक्तृत्वं च क्षुत्पिपासाशीतोष्णा-दिद्वंद्वधर्मतापि भौतिके पंचके सूक्ष्मपंचभूतजन्ये लिंगदेह एव न स्थूले मृतदेहे तथात्वादर्शनात् ॥ ९ ॥ यतो द्वंद्वधर्मा लिंगदेहगास्ततस्मात्कार-णात्त्वया लिंगदेहतादात्म्याभिमानाद्वृथा कर्तृत्वादि अर्जितं अध्यासेन संपा-दितं तर्हि तत्कथं नश्येदित्यत आह हेतुदेहात्कारणदेहात्परो यः स्वरूपभूत आत्मा तस्य ज्ञानादचिराच्छीघ्रं ज्ञानसमकाल एव ध्रुवा पुनरावृत्तिरहिता मुक्तिः अर्थात्कर्तृत्वादिविनाशश्च ॥ १० ॥ कोसौ हेतुदेहः उच्यते स्वरूपं दिदृक्षोरंतराऽऽरं कपाटरूपं यदज्ञानं देहद्वयबीजभूतं सर्वज्ञानोपसंहारपूर्वकं बुद्धेः कारणावस्थानरूपं स एव हेतुः कारणदेहः स आत्मेति चेन्न तमो-

स्थाणुरंतर्बहिर्भास्त्वानात्मारामो निराकृतिः ।
चतुर्देहपरः साक्षी प्रत्यगीशोसि वित्ध्यदः ॥ १२ ॥

अन्नासुहृद्ध्यहंकारमयतादात्म्यतो भ्रमः ।
स्थूलः पंचीकृतैर्भूतैः सूक्ष्मः कर्मेंद्रियासुभिः ॥ १३ ॥

धींद्रियैर्हेतुर्महांश्च तद्विदात्मन्यथोद्धृते ।
अन्वयव्यतिरेकाभ्यां परं ब्रह्मैव शिष्यते ॥ १४ ॥

भिभूतत्वात् तस्य साक्षी साक्षाद्द्रष्टरि संज्ञायां त्रिभ्यो देहेभ्यस्तदभिमानिभ्यश्च परः स त्वं स कथंभूतोहं निराकारः स्वात्माकारबुद्धिः स एव महाकारणदेहः ब्रह्मानंदवानस्मीति किंचिदुर्वरिताहंकारशेषत्वात् तर्ह्यभावरूपोहं न तस्यापि साक्षी स्वयंप्रकाशत्वात् ॥ ११ ॥ स्थाणुः कूटस्थः किं परिच्छिन्नोहं न अंतर्बहिर्भास्वान् अतः प्रत्यगभिन्नः परमात्मासि अदः मयोक्तं विद्धि येन निराकृतिर्निरभिमानश्चतुर्देहपर आत्मारामश्च भविष्यसि ॥१२॥ ननु यद्भवंतो वदन्ति वित्ध्यद इति तदनादिकालभ्रमोपहतधीरहं कथं जानीयामिति चेज्जपाकुसुमसांनिध्यात्स्फटिकस्य रंजनमिव पंचकोशतादात्म्यात्तत्तदाकारभ्रमो मिथ्याभूतः ‘ अंगुष्ठमात्रः पुरुषोंतरात्मा ’ इति श्रुत्युक्तप्रकारेण कोशानात्मनः पृथग्विवेचनान्मुंजादिषीकामिवात्मानं विद्धीत्युपदेष्टुं कोशान् व्युत्पादयति अन्नं अन्नमयः असुः प्राणमयः हृन्मनोमयः धीर्विज्ञानमयः अहंकार आनन्दमयः एषां तादात्म्यतोहं जन्मादिमान् क्षुत्पिपासावान्संकल्पवान् विज्ञानवान्कर्ता आनन्दवान् भोक्तेत्यादिभ्रमः के ते कोशा यैर्भ्रम इत्यत आह पंचीकृतैर्भूतैरुपलक्षितः स्थूलदेहोन्नमयकोशः १ राजसैः कर्मेंद्रियैः प्राणैश्चोपलक्षितसूक्ष्मदेहस्तदेकदेशः प्राणमयः कोशः २ ॥१३॥ सात्विकैर्धींद्रियैर्ज्ञानेंद्रियैश्चकारान्मनसा धिया च सहितैर्हेतुर्विज्ञानमयो महानानंदमयश्च मनोमयस्य विज्ञानेंतर्भावः स चाग्रे

भानं स्वप्नेस्योर्वभानेन्वयः प्राग्विस्मृतिः परः ।
लिंगाभानेन्वयः स्वापभानं प्राग्विस्मृतिः परः ॥१५॥

तद्विदोसुमनोध्याख्या गुणावस्थाभिदः पृथक् ।
सुप्त्यभानेन्वयो भानं समाधौ प्राग्वदन्यकः ॥ १६ ॥

कथ्यते । अथ तद्विदा तेषां कोशानां ज्ञानेन तेभ्योन्वयव्यतिरेकाभ्यामात्मन्युत्धृते बुद्ध्यासंगत्वेन निष्काशिते परं ब्रह्मैव शिष्यते ॥१४॥ कौ तावन्वयव्यतिरेकौ याभ्यामात्मा पृथक् क्रियते तत्राह अस्मिन्प्रकरणेन्वयव्यतिरेकाभ्यामनुवृत्तिव्यावृत्ती कथ्येते यतोन्वय्येत्रानुमानं न व्यतिरेकि स्वप्ने उर्वभाने स्थूलदेहस्याप्रतीतौ अस्यापरोक्षस्यात्मनः यत्स्वप्नसाक्षित्वेन भानं सोन्वयः अपरो व्यतिरेकस्तु प्राग्विस्मृतिः स्थूलदेहानवभासनं एवमन्यत्रापि तथाहि लिंगाभाने लिंगदेहस्याप्रतीतौ यत् स्वापभानं स्वप्नसाक्षित्वेनं स्फुरणं अस्यात्मन इत्यनुवर्तते सोन्वयः परो व्यतिरेकस्तु तदा प्राग्विस्मृतिः पूर्वदेहतदवस्थानवभासनं ॥ १५ ॥ ननु कोशोपक्रमे देहान्वयादि प्रकृतासंगतमिति चे कोशानां देहत्रयांतःपातित्वात स्थूलदेह एवान्नमयः सूक्ष्मे च प्राणमनोधीमयाः कारणे च प्रियमोदप्रमोदवृत्तिभिः सत्वमानंदमयः इष्टवस्तुदर्शनं प्रियं तल्लाभो मोदस्तदनुभवः प्रमोद इति विवेकः तर्ह्येकस्मिन् लिंगदेहे कथं त्रयाणां समावेशस्तत्राह गुणैरवस्थाभिश्च भिद्यंत इति गुणावस्थाभिदः असुमनोध्याख्याः तेषां विदो ज्ञानात्पृथक्कृता इति शेषः राजसैः कर्मेंद्रियप्राणैः प्राणमयः ज्ञानेंद्रियमनोधियां सत्वगुणत्वे बाह्यांतरावस्थावत्वाद्द्वौ कोशौ समाधौ सुषुप्त्यभानेप्यस्यात्मनो यद्भानं समाधिसाक्षित्वेन स्फुरणं स आत्मनोन्वयः अन्यकः व्यतिरेकः प्राग्विस्मृतिः पूर्वदेहतदवस्थानवभासनं ॥ १६ ॥

( श्लो० १९-२२ )

( मोक्षः ) ॥ स च स्थूलदेहादिप्रविलापनेन तत्प्रकारस्तु ॥

| देहः | अवस्था | अभिमानी | स्थानं | आनंदः | भोगः | गुणः | वाचा | देवः | लोकः | मात्रा |
|---|---|---|---|---|---|---|---|---|---|---|
| स्थूलः | जागृत् | विश्वः | नेत्रं | विषयानंदः | स्थूलभोगः | रजः | वैखरी | ब्रह्मा | भूः | अः |
| सूक्ष्मः | स्वप्नः | तैजसः | कंठः | स्वप्नानंदः | प्रविविक्तभोगः | सत्वं | मध्यमा | विष्णुः | भुवः | उः |
| कारणं | निद्रा | प्राज्ञः | हृदयं | निद्रानंदः | आनंदः | तमः | पश्यंती | रुद्रः | स्वः | मः |
| महाकारणं | तुर्या | प्रत्य. | मूर्धा | समाध्यानंदः | परानंदः | शु.सत्वं | परा | आत्मा | महः | अर्धमात्रा |

त्यक्तत्रिदेहसंगस्य निष्कलस्य सुषुप्तिवत् ।
स्थितिः परात्परं वस्तु सच्चिच्छर्म निराकृति ॥ १७ ॥

क्ष्माप्कालैर्बीजलीनद्रुर्यथेक्ष्यो जागृतेस्तथा ।
सुप्त्यवित्स्थजगद्देहौ तत्परस्त्वाविदः पुनः ॥ १८ ॥

देहांतेऽस्याहंतास्थविश्वाकारानुजन्मदः ।
अवस्था जागृतिः स्वप्नो निद्रा तुर्या च तुर्यये ॥ १९ ॥

विश्वतैजःप्राज्ञसत्यगाभिमानिन ईरिताः ।
दृक्कंठहृन्मूर्धसंस्थाः स्थूलसूक्ष्मसुदृन्मुदः ॥ २० ॥

भोगा रजस्सत्वतमःशुद्धसत्वगुणाः क्रमात् ।
वाचोत्र वैखरी मध्या पश्यंती च परास्त्रिषु ॥ २१ ॥

एवमन्वयव्यतिरेकाभ्यां पंचकोशविवेकतस्त्यक्तस्त्रिदेहसंगोभिमानो येन निर्गतः कलः कलना यस्य या सुप्तिवत् स्थितिः न तु सुप्तिः तदेव परात्परं निराकृत्याकाररहितं सच्चिच्छर्म सच्चिदानंदं वस्तु परं ब्रह्म 'अयमात्मा ब्रह्म' इति श्रुतेः ॥ १७ ॥ क्ष्मा भूमिः आप उदकं कालो ऋतुः 'ऋतुक्षेत्राम्बु-बीजानां सामर्थ्यादंकुरोद्भव' इति तैर्बीजलीनद्रुमो यथा ईक्षितुं योग्य-स्तथा सुप्तौ या अविदज्ञानं तत्स्थं देहो जगच्च तत्परोहमिति ज्ञानशून्यस्य पुनर्व्यवहारार्हौ भवतः ॥ १८ ॥ तर्हि मरणे तल्लय इति चेन्न देहांते तस्याहंकारस्थितविश्वाकारोनु पश्चाज्जन्मदः तस्माज्ज्ञानाभ्यासादेव मोक्षः स च स्थूलदेहादिप्रविलापनेन तत्प्रकारस्तु देहचतुष्टयक्रमेण यथोपन्यस्तं ज्ञात्वा ॥ १९ ॥ २० ॥ २१ ॥ ततः स्थूलः सूक्ष्मशरीरे तत्कारणशरीरे

त्रिमात्राॐकृतेस्त्वर्धा तुर्ये ज्ञात्वैवमादितः ।
स्थूलः सूक्ष्मे कारणे तत्तन्महाकारणे क्रमात् ।
प्रविलाप्यानन्दमयः स्वस्थो भवति नान्यथा ॥ २२ ॥
तस्माद्देहत्रये लीने धीलयः ससमाधिकः ।
तत्ते परात्परं रूपं निर्विकल्पमवेहि सत् ॥ २३ ॥
घटादिवद्द्योर्जीवस्याविद्योपाधिस्तु तत्क्षये ।
खस्थद्योवत्परात्मत्वं जीवत्वं लीयतेचिरात् ॥ २४ ॥
ज्ञाते क्षराक्षराहंतापरे तत्त्वे स तन्मयः ।
सृष्टेः प्राङ्निर्विकल्पैका चिद्ब्रह्मास्मीत्यभूत्त्विह ॥२५॥
स्फूर्तिः खे वायुवत्साद्या मायाद्यस्तज्ज्ञ ईश्वरः ।
तत्र विश्वोद्भमेहाभूत्सान्या मायाथ तत्र तु ॥ २६ ॥
जगत्स्यामिति संकल्पोभून्महत्तत्वनामकः ।
विद्याविद्ये उभे माये तज्ज्ञौ सर्वेशजीवकौ ॥ २७ ॥

तन्महाकारणे चानंदमयः स्वस्थो भवति नान्यथा कर्मादिना ॥ २२ ॥ तस्मात्प्रविलापाद्देहत्रये लीने पंचवृत्त्याकारबुद्धिलयः स समाधिः अवेहि जानीहि ॥ २३ ॥ द्योराकाशस्य तत्क्षये उपाधिक्षये ॥ २४ ॥ क्षरः भूतानि अक्षरः कूटस्थः अहंता संघाभिमान एभ्यः परे तत्त्वे ज्ञाते सति तज्ज्ञानात्स तन्मयः तदर्थमुपक्रमोपसंहारौ दर्शयति चिच्चैतन्यं सच्छब्द-वाच्यं इह चिति ब्रह्मास्मीति स्फूर्तिः आकाशे वायुरिवाभूत् सा सत्वोपाधिकाद्या माया तत्प्रतिबिंबितस्तज्ज्ञ ईश्वर उच्यते तत्र तयोर्मध्ये ईक्षण-लेशेन विश्वोत्पादनेच्छाभूत्सान्या मलिनसत्वा मायाऽविद्याख्या अथ तत्रे-श्वरे ॥ २५ ॥ २६ ॥ अहं जगत्स्यामिति यः संकल्पः स महत्तत्वनामकः तज्ज्ञौ तदुपाधिकौ ॥ २७ ॥ अविद्ययावरणशक्त्या वृतोतः स्वरूपान-

जीवोऽविद्याऽऽवृतः स्वाज्ञो महतोहंकृतिस्त्रिधा ।
क्रियाज्ञानद्रव्यशक्तिरजःसत्वतमोगुणैः ॥ २८ ॥

प्राणेंद्रियांतःकरणभूतान्यासन् क्रमात्ततः ।
ततो लोका विराट् तैश्चिदंशात्कार्यक्षमोभवत् ॥ २९ ॥

लोकांगस्य रदास्तारा माया हास्यं निशादिने ।
निमेषोन्मेषौ कटाक्षः सृष्टिः कुक्षिरपांपतिः ॥ ३० ॥

नाड्यो नद्यो द्रुमाः केशा वृष्टिरेतोऽस्थिपर्वताः ।
विराजः स्थूलदेहोयं चराचरजगन्मयः ॥ ३१ ॥

दिग्वाय्वर्कप्रचेतोश्विवन्हींद्रोपेंद्रमृत्युकाः ।
ज्ञानकर्मेंद्रियाण्यंतःकरणानि हरिः शशी ॥ ३२ ॥

भिन्नोभूत् महतो महत्तत्वात् रजआत्मकः क्रियाशक्तिकः सत्वात्मको ज्ञानशक्तिकः तमआत्मको द्रव्यशक्तिकः एवं त्रिधाहंकारः ॥ २८ ॥ राजसात्कर्मेंद्रियप्राणाः सात्विकाज्ज्ञानेंद्रियांतःकरणदेवाः तामसात्पंचभूतानि ततो भतेभ्यश्चतुर्दशलोकास्तैर्लोकैर्विराट् चिदंशप्रवेशात्कार्यक्षमोभवत् ॥ २९ ॥ लोका अंगानि यस्य विराजः नक्षत्राणि दंताः रात्रिर्दिवसश्च निमेषोन्मेषौ सृष्टिः कटाक्षः समुद्रः कुक्षिः ॥ ३० ॥ ३१ ॥ दिशः कर्णौ वायुस्त्वक् अर्कश्चक्षुः वरुणो जिह्वा नासाश्विनौ इति ज्ञानेंद्रियाणि अग्निर्वाक् इंद्रः पाणी उपेंद्रः पादौ मृत्युर्गुदं प्रजापतिर्लिंगं इति कर्मेंद्रियाणि हरिरंतःकरणं चंद्रो मनः ॥ ३२ ॥ ब्रह्मा बुद्धिः रुद्रोहंकारः नारायणश्चित्तं इत्यंतःकरणानि समष्टेः व्यष्टेस्तु देवताः अयं सूक्ष्मदेहः अविद्या कारणं माया महाकारणं ईश एव प्रत्यक् पूर्ववद्व्यतिरेकाद्देहनिरासतः त्वंपदमिव लुप्तोपमा

ब्रह्मनारायणेशाश्च सूक्ष्मदेहोथ कारणं ।
अविद्याद्या महत्प्रत्यगीशो देहनिरासतः ।
तत्पदं व्यतिरेकात्त्वंपदं तत्त्वमसि ह्यतः ॥ ३३ ॥
भूरप्स्वग्नौ ताः स वायौ स खे तत्प्रविलापयेत् ।
द्रव्ये तमसि तत्सत्वे रजः सत्वं तमस्यथ ॥ ३४ ॥
अहंकृतौ तन्महति साविद्यायां लयो द्वयोः ।
साद्यायां सा ब्रह्मणीत्थं त्वंपदं व्यतिरेकतः ॥ ३५ ॥
व्याख्यारूपैकसद्वस्तु सृष्टेः प्राक् चाधुनापि तत् ।
त्वं श्रोत्रात्मेंद्रियातीतमस्यैक्यमनुभूयतां ॥ ३६ ॥

तत्पदं अतस्तत्त्वमसि ॥ ३३ ॥ निरासप्रकारमाह भूमिरप्सु प्रविलाप्य ता आपोप्यग्नौ सोग्निर्वायौ स वायुः खे आकाशे तत्खं द्रव्यात्मके तमसि प्रविलापयेत् । तत्तमो रजश्च सत्वे तत्सत्वं तमसि ॥ ३४ ॥ तत्तमोऽहंकृतौ साहंकृतिः सा अविद्यायां प्रविलाप्य एवं विराजो देहद्वययोर्लयः साऽविद्या मायायां सा च माया ब्रह्मणि प्रविलाप्या एवं सर्वविलापावधिभूतं ब्रह्मावशिष्यते तदेव तत्पदलक्ष्यं इत्थममुना प्रकारेण देहेंद्रियप्राणमनोबुद्ध्यहंकारप्रविलापनेन प्रलयावधिभूतः प्रत्यागात्मावशिष्यते स एव त्वंपदलक्ष्यार्थः ॥ ३५ ॥ अनयोरैक्यार्थं महावाक्यमाह विगतनामरूपकं एकं सजातीयादिभेदशून्यं सृष्टेः पूर्वं यत्सद्वस्तु तदधुना स्थितिकालेपि चकारात्प्रलयेपि 'वाचारंभणं विकारो नामधेयं' ' अतोन्यदार्तं ' इति श्रुतेः तदेव तत्पदलक्ष्यं यच्च श्रोतुस्तवात्मा देहः इंद्रियाणि प्रसिद्धानि उपलक्षणमिदं संघातस्य तान्यतीतं प्रत्यक् साक्षिचैतन्यं त्वं त्वंपदलक्ष्यं असि अनयोः सामानाधिकरण्यादखंडैकरसत्वेन तत्त्वमेव त्वमेव तत् एवमैक्यं निदिध्यासनादिक्रमेण त्वयापरोक्षत्वेनानुभयतां ॥ ३६ ॥ पूर्वं सृष्टेस्त्वं सच्चिदानंदरूप

सृष्टेः प्राक्सच्चिदानंदरूपोद्याहंकृतेर्लयात् ।
प्राग्वदूर्ध्वमपीदृक्त्वं या सृष्ट्यस्तित्वकल्पना ॥ ३७ ॥

गवाधाराहंकृतेः प्राक्स्थानाभावान्न साद्य चेत् ।
तद्वत्क्वास्तित्वमेकोतोऽद्वितीयो ब्रह्म चिन्मयः ॥३८॥

ब्रह्मबुद्ध्या द्वयाभावादेह्यहंकृतिसंक्षयात् ।
शिष्यतेत्र निराकारः क्वाख्यारूपात्मकं जगत् ॥ ३९ ॥

स्रग्भोगिवद्दृष्टमपि ज्ञानदीपान्न ते भ्रमः ।
ज्ञानं त्यक्त्वा दृढाभ्यासी भ्रमेणापि न युज्यते ॥४०॥

आसीः अद्याहंकारलयाद्विगतोपाधिः प्राग्वत्सच्चिदानंदरूपोसि ऊर्ध्वं विदेहकैवल्येपीदृक् अतोस्यद्वितीयः ननु यतोन्या सृष्टिर्दृश्यतेतः कथमद्वितीयत्वं तत्राह अहंकारात् प्राग्या सृष्ट्यस्तित्वकल्पना सांतःकरणप्रेरितेंद्रियाधारा साद्य बोधे स्थानाभावात् न 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति श्रुतेः ॥ ३७ ॥ अस्ति तद्वत्पूर्ववत्क्वास्ति न क्वापि दीपादिना रज्जुदर्शनात्सर्प इव ॥ ३८ ॥ ब्रह्माकाराखंडबुद्धिवृत्त्या निराकार एव शिष्यते तत्र पुनः क्व नामरूपात्मकं जगत् ॥ ३९ ॥ भोगकाले कदाचिद्दृष्टमपि स्रग्भोगिवद्भातु नाम पुनस्तेन ते ज्ञानदीपाद्भ्रमो न भविष्यति तर्हि कतिकालं ज्ञानदीपो रक्षणीयो दृढाभ्यासपर्यंतमित्याह ज्ञानमिति ॥ ४० ॥ यथा स्रजि मालायां अहेरभावः भ्रमात्प्राक् ज्ञानादूर्ध्वं च ब्रह्मणि जगद्भ्रमाभावः तदभाव एव मोक्ष इति चेन्न द्वैतस्यैवाभावो न स्वानु-

स्रज्यहिभावः प्रागूर्ध्वं तद्वद्ब्रह्मणि चास्य तु ।
अभावाच्छून्यतां मैहि तज्ज्ञ सच्चित्सुखात्मक ॥ ४१ ॥

भास्वान्नित्यः प्रबोधोयं वेदा भ्रांतहितैषिणः ।
साधकान्यद्य कार्याणि साध्याभावान्न कुर्वतः ॥ ४२ ॥

भगवद्वाक्यतोसक्तः कुरु वा तैर्न लिप्यसे ।
मनो विनापि ज्ञातासि ध्यानादेः किं प्रयोजनं ॥ ४३ ॥

भवस्येत्याहाभावादिति मा एहि मा गच्छ तमभावं जानातीति तज्ज्ञः तत्सं-बुद्धौ ॥ ४१॥ योयं प्रबोधः सोऽद्यैव जात इति न किं तु नित्यो भास्वांश्च नित्यश्चेद्वेदः कुतो बोधयत्यत आह वेदा भ्रांतानां देहाद्यात्मदृष्टीनां हिते-च्छवः बोधकाः न तु मुक्तानां अस्तु नाम तथा मयाधुना निष्कामयोगो-भ्यसनीयोन्यद्वा साधकं साध्याभावान्नेत्याह साधकेति अतः परं न कुर्'नैव तस्य कृतेनार्थ ' इति स्मृतेः ॥ ४२ ॥ अथवा ' कुर्याद्विद्वांस्तथासक्तश्चि-कीर्षुर्लोकसंग्रहम्' इति भगवद्वाक्यं तर्हि तेन बंधः स्यात् बुद्धिलेपाभावा-दनहंकाराच्च तैरनुष्ठितैर्न लिप्यसे तर्हि निदिध्यासनादि विधेयं न देहेहं-भावरूपविपर्यासाभावान्मनो विनापि ज्ञातास्यतो ध्यानादेः किं प्रयोजनं न किमपि ' विपर्यस्तो निदिध्यासेन्न ध्यानमविपर्यय ' इत्युक्तेः ॥ ४३ ॥ 'तस्य तावदेव चिरम्' इति श्रुतेर्यावत्प्रारब्धं देहस्तिष्ठति तावत् वर्णाश्रमा-दयः अमुष्याहं पुत्रो भ्रातेत्यादिसंबंधाः शौक्ल्यकार्श्यादयो देहधर्माः क्षुत्पिपासादायः प्राणधर्माः शोकमोहादयः हृद्धर्माः ते न संति यस्य सोऽदेहप्राणहृद्धर्मः स त्वं प्रारब्धातिवाहकः सन्सुखमात्मस्वरूपे वस । अथार्धेन ग्रंथालंकारः बोध इत्याख्या यस्य तत् रहस्युपनिषद्भागे भवं रहस्यं अधिकारिलभ्यं तस्य ज्ञः ब्रह्ममयो भवेदिति फलं । ' यं ज्ञात्वा मुच्यते

अदेहप्राणहृद्धर्मः प्रारब्धाशीः सुखं वस ।
इदं रहस्यं बोधाख्यं तज्ज्ञो ब्रह्ममयो भवेत् ॥ ४४ ॥

इति बोधाख्यं द्वितीयं रहस्यं ।
समाप्तोयं ग्रंथः प्रीयतामनेन श्रीदत्तः ॥

जंतुरमृतत्वं च गच्छति' इति श्रुतेः ॥४४॥ इति द्वितीयं रहस्यं। संपूर्णोयं टीकाग्रंथः प्रीयतामनेन सर्वांतर्यामी भगवान्श्रीदत्तसद्गुरुः ॥

ज्ञानं त्रयोदशाध्यायैः कर्मयोगं च पंचभिः ॥
पंचभिर्भक्तियोगं च कारयामास योगिराट् ॥ १ ॥
पाश्चात्यपाथोधितटे नवानां टीका प्रभासेभ्युदिताखिलानां ॥
श्रीद्वारकायां चरितस्य तस्य श्रीसद्गुरोर्वेदनुतस्य तस्य ॥२॥
शालिवाहशके क्ष्मा (१८२१) श्विवसुभूमिमिते त्वियं ॥
टीका संपूर्णतां प्राप्ता चातुर्मास्ये ह्यवर्षके ॥ ३ ॥

॥ संवत् १९५६ ॥

---

श्रीगुरुः शरणम्

# द्विसाहस्रीचूर्णिका

श्रीगणेशाय नमः ॥ ॐ यदज्ञानाद्रज्जुसर्पवज्जगत् उदेति यज्जगत्तत्त्वं च पुनर्ज्ञानान्निमीलति तं सच्चिदानंदसद्गुरुं नौमि ॥ १ ॥ एकं सदपि यत् बुद्धिभेदेनानेकवद्भाति एकरूपेण ज्ञानेन च यस्यैक्यं भवति तद्दत्तसंज्ञितं ब्रह्म सत्यं ॥ २ ॥ यः स्वतत्त्वं बोधयितुं संभूय दत्ताख्योऽत्रिपुत्रः सन् स्वपदरसपरान्कार्तवीर्यार्जुनयदुप्रभृतीन्सर्वान्बालान्स्वाश्रितान्दिव्ययोगेनोद्दधार पुनः श्रीपादसंज्ञो भूत्वान्यान्भक्तानुद्दधार पुनरपि नरहरिसंज्ञो भूत्वा स्वभक्तान्सिद्धादीनुद्दधार कृष्णाभीमानदीतीरस्थः स्मर्तृगामी परमगुरुरेष दत्तो जयति ॥ ३ ॥ यो जन्माद्यतीतोऽक्रियो निरिच्छोऽद्वितीयोऽपि बहु स्यामिति संकल्प्य गुणमय्या स्वमायया इदं अभिन्ननिमित्तोपादानकं नामरूपात्मकं स्वानुप्रवेशसहितं जगत्ततान प्रभुर्भगवानीश्वरः ॥ ४॥ आब्रह्मस्तंबपर्यंतं देहबुद्धींद्रियात्मकं चराचरं जगत्ससर्ज तत्र नरोत्तम एव ज्ञानपात्रं ॥ ५ ॥ इंद्रियविषयस्थितौ रागद्वेषौ येन दैवीसंपत्तिमता जितौ स एव मोक्षं लभेत् तदर्थं स्वयमजोऽपि भगवानवतरति ॥ ६ ॥ अस्य ज्ञानिनो भगवानत्यंतं प्रियः भगवतोऽपि तथा ज्ञानी प्रियः यतोऽजोऽव्ययोऽपीश्वरो लीलाविग्रहेण तस्य रक्षणायावतरति ॥ ७ ॥ एवं युगेयुगेऽवतीर्य धर्मस्वभक्तपरित्राणकार्यांते स भगवान्लीलाविग्रहान् त्यजति एवं ब्राह्मे दिवसे वाराहकल्पेऽष्टाविंशतितमश्चतुर्युगपर्यायो गतः ॥ ८ ॥ अस्मिन्पर्याये दारुणे कलियुगे प्राप्ते स्वांशभूता देवा अपि निर्दया जाता इति ज्ञात्वा स्वयं भगवान्दत्तात्रेय आविरासीत् ॥ ९ ॥ कृष्णामरजातीरसंचारी स भगवान्भिक्षुरूपेण लोकपावनीः सलीलाः कृत्वा तत्रैवादृश्योऽस्ति ॥ १० ॥ अस्य भगव-

त्वमाह जातमात्रस्योंकारोच्चारणं हस्तस्पर्शमात्रेण लोहस्य स्वर्णत्वसंपादनं अभ्यासं विना शिष्येभ्यो वेदपाठनं ॥ ११ ॥ मातापित्रोस्तत्त्वोपदेशनं बाल्ये तीर्थपर्यटनं योगख्यापनं संन्यासमार्गस्थापनं च कथं भवेत् ॥१२॥ प्रतिकूलाचरणेनोदररोगोपशमनं छिन्नजिव्हाय विद्यादानं विप्रदारिद्र्यहरणं ॥ १३ ॥ क्षणात्त्रिस्थलीयात्राचरणं मृतपुत्रसंजीवनं वंध्यामहिषीदोहनं त्रिविक्रमाय विश्वरूपदर्शनं ॥ १४ ॥ विद्वद्ब्राह्मणगर्वापहरणं बुरडमुखाद्वेदवाचनं विधवायै सौभाग्यदानं क्रियामार्गप्रकाशनं ॥ १५ ॥ जीर्णशुष्ककाष्ठस्योदुंबरवृक्षत्वसंपादनं वंध्यायै कन्यापुत्रदानं दृष्टिमात्रेण कुष्ठहरणं ॥ १६ ॥ दीपावल्यामष्टरूपैरष्टग्रामगमनं छिन्नक्षेत्रविवर्धनं चेत्येवमादीन्यलौकिकानि कर्माणि कृतानि करोति कारिष्यति च ॥ १७ ॥ नक्षत्रभूरजोजलकणगणकाः कुत्रचित्संतु परंतु अगणेयोरुगुणगणगणने कोऽपि न शक्तः ॥ १८ ॥ भगवान्स्वयमरूपोऽपि लीलाप्रकटितगुणरूपेण कर्णद्वारा भक्तस्यांतः प्रविश्य पापं धुनोति ॥ १९ ॥ ततः शुद्धांतःकरणः स भक्तो जीवन्मुक्तो भवेत् सुखदुःखादिद्वंद्वरहितस्य प्रारब्धभोक्तुस्तस्य देहः पततु न पततु वाऽज्ञानसमुत्पन्नद्वंद्वलेशोऽपि नैव स च प्रारब्धांते निर्विशेषं परं ब्रह्म याति ॥ २० ॥ अयं ब्रह्मसायुज्यप्राप्तिसन्मार्गोऽपि सत्संगविवेकरहितानां आसुरीसंपत्तियुक्तानां मोहांधानां न दृष्टिगोचरः ॥ २१ ॥ कृतस्ववर्णाश्रमोचितकर्मा साधुगुरुदेवभक्तो विवेकी कर्मफलाभिमानत्यागेन संन्यासीश्वरप्रीत्यै नित्यनैमित्तिकानुष्ठानतो योगी च भूत्वानेनैव मार्गेण भुक्तिं मुक्तिं च लभेत ॥ २२ ॥ एवं श्रीगुरोरीश्वरस्य सुवृत्तं महिमानं श्रुत्वा सांसारिकतापतप्तोऽत एव विरक्तो नामधारकशर्मा कश्चिद्विप्रो गुरुं स्तुवन्भीमामरजासंगमे आश्रितकल्पवृक्षं शरण्यं भगवंतं प्राप ॥ २३ ॥ तत्र साक्षाद्दर्शनाकांक्षी स नामधारकविप्रः निर्विघ्नार्थं गणेशं शारदां च नत्वा नृदेहेन विश्रुतं दुःखहरं श्रीगुरुं तुष्टाव ॥२४ ॥ स्तुतिमाह भो सर्वज्ञ मां न जानीषे किं भो विश्वसाक्षिन् मां न वीक्षसे किं भो व्यापक मम विलापं

न शृणोषि किं अथवा श्रुत्वापि मामुपेक्षसे किं ॥ २५ ॥ त्वयाहं ज्ञात-श्चेत्कुतो वैक्लव्यमवशिष्टं त्वया वीक्षिते च कथं दैन्यमवशिष्टं विलापोऽपि श्रुतश्चेत्कुतः शोकोऽवशिष्टः उपेक्षयेति चेत् भो दयानिधे त्वयि भक्तोपेक्षा उचिता किं ॥ २६ ॥ देवतांतरं गच्छेति चेत्तत्राह त्वमेव सर्वदेवेश्वरोऽस्माकं कुलदैवतं च त्वां हित्वान्यं कतमं याचे यतस्त्वामीश्वरं वेद्मि त्वमपि सामान्यविशेषतो मां वेत्सि न राजवत् ॥ २७ ॥ यतः सर्वोऽपि जनो भूपं जानाति तथा स भूपः सर्वं विशेषतो न जानातीत्यल्पज्ञे राज्ञि तत् उचितं हे प्रभो 'यः सर्वज्ञः सर्ववित्' इति श्रुतेः सर्वज्ञे त्वयीदं कथं श्लाघ्यं ॥२८॥ किं च सेवया किंचिदादानेन वा दास्यसीति चेत्तन्नोचितं सेवेच्छुः प्रत्युपकारी वा दाता भवेत्किं अथवा कुत्सितो दाता किंदाता ॥२९॥ सेवादाननिरपेक्षाः सूर्यादय इह लोके प्रकाशं मेघो जलं च यथार्पयति त्वयापि पूर्वं निरपेक्षं ध्रुवाय बिभीषणाय च पदं दत्तं अतस्तथैव मह्यं ते प्रियदर्शनं देहि ॥ ३० ॥ यतो नव निधयस्तेऽनुचराः अष्टौ सिद्धयस्ते दास्यः श्रीश्च ते किंकरी ततस्तुभ्यं कि देयं हे परिपूर्ण ते किं वा कार्यं ॥ ३१ ॥ भूमौ नृपा अपि स्वसेवककुलं पालयंति हे विश्वपोषक त्वं मत्पूर्वार्चितोस्यतः कुतो दीनं मामुपेक्षसे ॥ ३२ ॥ हे देवेश ममापराधै-रंतर्विषादतां यास्यसि चेत् मानुषी अपि माता बालैः पद्भ्यां ताडितापि रुष्यति किं ३३ ॥ किं च यत्र मातापितरौ भिन्नौ तत्रान्यतरतः शिशो-र्जीवनं समुचितं 'पिताहमस्य जगतो माता' इति त्वयोक्तत्वात्त्वमेव मम मातापितरौ हे विश्वपोषक त्वयि निर्दये जाते मया किं कार्यं ॥ ३४ ॥ तव दोषनिमित्तं निर्दयत्वमिति चेत्सहजदोषस्यापरिहार्यत्वमाह यथा साहसं मा कुर्वित्युक्त्वा कश्चित्पक्षी स्वयं काष्ठं भिनत्ति तथा साहजिकै-र्दोषैः पापं निंदामि करोमि च ॥ ३५ ॥ प्रायश्चित्तं कुर्वित्यत आह पुण्यवतामल्पपापोत्पत्तौ विधिप्रोक्तं प्रायश्चित्तं मां वीक्ष्य शार्दूलं दृष्ट्वा गौरिव भीत्या दूरात्पलायते ॥३६॥ किं च मालिन्यदोषभीत्या माषराशेः

पृथक्किं कार्यं तथैव हे हरे जपादिरपि पापरूपान्मत्तः किं पृथक्कुर्यात् ।। ३७ ।। हे हरे मादृक्पापो नास्ति भवादृक् पापहा नास्ति अत औदासीन्यं त्यक्त्वा हे ईश अनन्याश्रयं दीनं मां पाहि ।। ३८ ।। शिला अपि मद्विलापं श्रुत्वा द्रवंति हे दयानिधे चेतनस्य ते कारुण्यं क्व गतं यतो म्रियमाणमपि मां न वेत्सि ।। ३९।। एवं मार्गे विलाप्य गुरुध्यानैकतानचित्तः स नामधारकः प्रायोपवेशेन तस्थौ तदा दैवयोगात्स्वप्नोऽभवत् ।। ४० ।। यथा वात्सल्याद्धेनुर्वत्समेति तथा भक्तवत्सलो भगवानवधूतवेषेण स्वप्ने प्राप्य तं नामधारकं पर्यतोषयत् ।। ४१ ।।

।। इति चूर्णिकायां प्रथमः ।।

---

# अथ द्वितीयोऽध्यायः

ततो नामधारकः स्वप्नादुत्थाय स्वप्नदृष्टं पुरुषमदृष्ट्वा तमेव ध्यात्वा इतस्ततो व्रजन्नग्रतः कृपालुं द्वंद्वातीतं योगिनं साक्षाद्ददर्श हर्षेण रोमांचेन च शोभमानः स नामधारकः प्रेम्णा गद्गदया वाचा च वक्तुमारेभे ।।२।। माता पिता भयहर्ता पोष्टा उपदेष्टा च मम भवानेव कुत आयातोऽसि क्व वा गच्छसि अद्य मे दृग्गोचरो भवानेतद्दिष्ट्या ।। ३ ।। पुरुषोनुकूलकाले स्वजनैर्युज्यते प्रतिकूले च तैर्वियुक्तोऽपि सद्भिर्युज्यते अद्य निःसंगस्य मम भवान्सर्व एव ।। ४ ।। तापत्रयतप्तो नामधारकशर्माहं विप्रो गुरुदर्शनकामनया व्रजन्हे प्रभो मुमूर्षुरभवं ।। ५ ।। ममेंद्रियशोषकशोकं हर्तुं कोऽपि न समर्थः यस्माद्भवद्दर्शनान्मे हृदयं हृष्टं तस्मात्त्वमेव मे शोकं हर्तुं शक्नोषीति जाने ।। ६ ।। सिद्ध उवाच यद्भक्ता भुक्तिं मुक्तिं च यांति यो भीमातटे विद्यते तस्य योगिध्येयस्य त्रिगुणात्मकस्य गुरोः शिष्योऽहं लोकानुग्रहाय भुवि चरामि ।। ७।। नामधारक उवाच सोऽपि

भगवान्सद्गुरुरस्माकं कुलदैवतं तं श्रद्धाभक्त्या भजामि तथापि स मां कष्टाब्धौ निमज्जयति ॥ ८ ॥ सिद्ध उवाच अन्येषु रुष्टेषु त्रिगुणात्मकः सद्गुरुः स्वभक्तरक्षणे समर्थः तस्मिन्रुष्टे न कोऽपि समर्थः लौकिकेऽपि गुरौ रुष्टे न कोऽपि समर्थः अत एव त्वं गुरोर्नष्टोऽसीति मे भाति ॥ ९ ॥ अश्रद्धानः संशयात्मा च क्वापि केनापि नांगीक्रियते पुनश्च त्रिगुणात्मना श्रीगुरुणोपेक्षितस्य संशयात्मनः कोऽनुग्राहकः न कोऽपि ॥ १० ॥ नामधारक उवाच लौकिकेऽपि गुरौ रुष्टे कोऽपि न समर्थ इति यदुक्तं तत्कापि वृत्तं चेद्वद किंच एष भगवान् कथं त्रिगुणात्मा एतं मे संशयं छिंधि ॥ ११ ॥ सिद्ध उवाच पूर्वं सर्वेच्छारहितस्य एकोऽहं बहु स्यामिति मतिरभूत् संजातयोगनिद्रस्य विष्णोः सैव माया ॥ १२ ॥ तया जगत् सृष्टं पूर्वं तन्नाभिकमलाद्ब्रह्माभूत् तस्मै वेदान्ददौ स ब्रह्मा वेदोक्तवज्जगदसृजत् ॥ १३ ॥ मनुष्यस्थित्यर्थं वर्णाश्रमविभागेन सधर्मान्कृतत्रेताद्वापारकलींश्चासृजन् ॥ १४ ॥ सत्यवैराग्यज्ञानयुग्यज्ञसूत्रधारि कृतं यज्ञसंभारयुक्ता त्रेता द्वापरस्तु शस्त्रधारी ॥१५॥ पुण्यपापोग्रतादयानैष्ठुर्ययुक् कलिस्तु लिंगाजिव्हाभृतिपशाचवन्मलिनः ॥ १६ ॥ कृतं १७२८००० त्रेता १२९६००० द्वापारः ८६४००० कलिः ४३२००० एवं नियतकालमेकैकं स्थित्यर्थं भुवि प्रेरयामास प्रयाणे ब्रह्मणा कलये प्रोक्तां गुरुकथां शृणु ॥१७॥ कलिरुवाच धर्मवरैः प्रशांतैः सेवितां भूमिं कथं यास्यामि तां श्रुत्वापि मे चित्तं खिद्यते देहश्च तप्यते ॥१८॥ अहं धर्मसेतुछेत्ता शोककलहद्वेषतापकर्ता च किंच परस्वपरस्त्रीहर्ता मे भ्राता कामक्रोधादियुक्तो मम प्राणवल्लभश्च ॥१९॥ क्षतव्रतो नास्तिकोऽधार्मिकश्चापि मे प्राणः ये भारते खंडे स्थिता धार्मिकास्ते मम शत्रवः ॥२०॥ गुर्वीशदेवसद्विप्रपितृधर्मपराणामवलोकनान्मे प्राणा बहिर्यास्यंति योगिज्ञानीक्षणादपि तथा ॥ २१ ॥ ब्रह्मोवाच आसुरीसंपत्तिमाश्रित्य भुवं गच्छ ततस्ते लोकास्त्वद्वशा भविष्यंति यस्मात्कलौ शतंवर्षाण्यायुः तन्मध्ये

कदाचित्कोऽपि धन्यो भूयात्तं न जहि ॥ २२ ॥ गुर्वादिभक्तस्त्वद्दोषैर्न लिप्यते सर्वेष्वपि विशेषतो गुरुभक्तो न लिप्यते ॥ २३ ॥ जलेन कमलमिव गुरुभक्तस्त्वद्दोषैर्न लिप्यते गुरुभक्तं जेतुं देवा अपि न शक्नुयुः ॥२४॥ कलिरुवाच । गुरुर्देवेभ्यः श्रेष्ठः कथं यस्माद्गुरुभक्तः केनापि न पराभूयते इदं क्वापि वृत्तं चेद्वद ॥ २५॥ ब्रह्मोवाच गुरुं विना ज्ञानं न देवा अपि गुरुभक्त्यैव सिद्धार्थाः अतो देवेभ्योऽप्यधिको गुरुः ॥ २६ ॥ पुरा गोदातटे बहुशिष्यप्रशिष्यो वेदधर्मा नाम मुनिः शिष्यनिष्ठां ज्ञातुं प्राह ॥ २७ ॥ भो शिष्यास्तपसा पापं बहु क्षालितं यत्प्रारब्धं तद्व्याधिरूपेण काश्यां भोग्यं तत्र मे रक्षकः को भविता ॥ २८ ॥ गलत्कुष्ठार्दितस्य मम दंशादिवारणैः क्षालनैरन्नदानैश्च प्रेमपूर्वकं मम को रक्षकः भविता ॥ २९ ॥ इत्येवं गुरोर्वचः श्रुत्वा ते शिष्यप्रशिष्या भीत्या तूष्णीं तस्थुः तत्रैको दीपको नाम शिष्यो गुरुं अभिवाद्य प्राह ॥ ३० ॥ भो गुरो मोक्षविघ्नकरं दोषं न शेषयेन् भवत्पापमहं भोक्ष्येऽनुज्ञां देहि ॥ ३१ ॥ गुरुरुवाच स्वयमेव पापं भोग्यं शिष्यादिद्वारा न तन्नाशः अतः काश्यां कष्टेन तद्भोक्ष्ये त्वं शक्तोसि चेन्मां रक्ष ॥ ३२ ॥ इति गुरूक्तमंगीकृत्य शिष्यो गुरुणा सह काशीं ययौ गुरुः कुष्ठी अंधश्च भूत्वा पापं बुभुजे शिष्यस्तं भेजे ॥३३॥ गलद्व्रणपीडितो गुरुः कार्याकार्यमजानन् प्रतिकूलाचरणेन पुनः पुनः शिष्यं व्यताडयत् ॥ ३४ ॥ सेवासमये भिक्षां भिक्षासमये सेवां च स गुरुर्ययाचे याचिताऽप्राप्तौ शिष्यमहन् तथापि शिष्यो नाखिद्यत ॥ ३५ ॥ दत्तां भिक्षां दोषदृष्ट्या भूमौ प्रक्षिप्य रोषेण स्वादु आनीहीत्यूचे ॥ ३६ ॥ भिक्षार्थं गच्छंतं शिष्यं परावर्त्य विष्ठामूत्रोत्सर्गयुक्तस्य मे क्षालनं न कृतं मक्षिकाश्चाश्नंति क्व यास्यासि ॥ ३७ ॥ ततः क्षालनार्थमुद्युक्तं तं निवार्य क्षुधा कंठगतप्राणं मां न वेत्सि किं हे पाप मे द्रुतमन्नं देहि इत्युवाच ॥ ३८ ॥ कदाचिद्भिक्षान्नं भुक्त्वा हे पुत्रक मदर्थं श्रांतोस्यतः स्वपेत्युवाच तस्मिन्सुप्ते उत्तिष्ठ क्षुधिताय मेऽ

न्नं देहीत्याह ॥ ३९ ॥ एवं पीडितोऽपि शिष्योऽनिशं गुरुमखेदं भेजे तेन तं सर्वदेवेश्वरं मत्वा स्वात्मयात्रापि विस्मृता ॥ ४० ॥ गुरुपादोदकं गंगा गुरुः साक्षाद्विश्वेश्वर इति सर्वानंदनिधिः इति च मत्वान्यन्मनसापि नैच्छत् ॥ ४१॥ एवं गुरुभक्त्या शुद्धं शिष्यं ज्ञात्वा आगत्य चेष्टं वरं वरयेति ते भद्रमास्त्विति च तं विश्वेश्वर उवाच ॥ ४२ ॥ दीपक आह वरेण मे किं कार्यं रोगशांत्यै गुरूणां वर इष्टश्चेत्तान्पृष्ट्वा वृणे ॥ ४३ ॥ इत्युक्त्वा गुरुमेत्य तच्छशंस तदा तमो गुरुस्तमाह भोगादेव पापं क्षयं नेष्ये मत्सेवायां विभेषि किं इति ॥ ४४ ॥ तदा शिष्यस्तथेत्युक्त्वा विश्वेश्वरमेत्य प्राह गुर्वसंमतं वरं न कांक्षे इति तच्छ्रुत्वा विश्वेश्वरो दुर्मना इवागात् ॥ ४५ ॥ निर्वाणमंडपं गत्वा विष्ण्वादीन्प्राह चंडो वेदधर्मा रुग्णो मुनिः कंबलाश्वतरसंनिधौ अस्ति गुरुभक्त उत्तमस्तच्छिष्यो दीपकनामकः ॥ ४६ ॥ तस्मै वरं दातुं प्रेम्णागां स गुरुतत्परो वरं न स्वीचकार ॥ ४७ ॥ इत्येवमीशवाक्यं श्रुत्वा तं द्रष्टुकामो हरिर्ययौ विष्णुराह हे दीपकाहं वरदोऽस्मि वरं वृणु ॥ ४८ ॥ तपसाष्टांगयोगैर्मननादिभिः सूपायैरुपवासैर्व्रतैर्योगैर्धर्माचरणैश्च नृणां न तथा गम्योऽस्मि ॥ ४९ ॥ गुरुसद्विप्रभक्तस्य मन्मयस्य निर्द्वंद्वस्य साध्व्याश्च यथा सदा दृश्योऽस्मि ॥ ५० ॥ हे सुभग त्वया कष्टेन सद्गुरुः सेवितस्तेनैव परितुष्टोऽस्मि हे मत्प्रिय वरं वरयेति ॥ ५१ ॥ दीपक उवाच श्रीगुरुर्देवानां देवः यतो ज्ञानं ज्ञानान्मोक्षश्च त्वादृशा अपि वशा भवंति अस्माकमतोऽधिकं किं ॥५२॥ यथा विश्वेश्वरो गतस्तथा गंतुं न रोचते चेद्गुरौ अचलां भक्तिं देहि अन्यमशाश्वतं न वृणे ॥५३॥ विष्णुरुवाच गुरौ तव श्रद्धाभक्तिः सदा विद्यते अतो भुक्तिर्मुक्तिः स्मर्तृतापहृत्कीर्तिश्चायाचितापि दत्ता ॥ ५४॥ यो वेदादिभिः सद्गुरुं स्तौति तेन गुरुदास्यैश्च मे संतोषः तस्य सदा मम सांनिध्यं ॥५५॥ तस्य कालादपि भयं नास्ति कुतः पुनरन्यस्मात् भयं सिद्धयस्तस्य दास्यः अतोऽधिकं किमित्युक्त्वा विष्णुरंतरधात्

॥ ५६ ॥ शिष्योऽपि गुरवे सर्वं शशंस गुरुस्तत्क्षणं प्रीतः सन्तन्मूर्ध्नि सुखाकरं स्वकरं दधौ ॥ ५७ ॥ तेन शिष्यः सद्यो वेदवेदांगपारगोऽभून् कुशलः स्मर्तृतापहरो जीवन्मुक्तो लोकप्रियश्च ॥ ५८ ॥ काशीप्रभावं ख्यापयितुं शिष्यभक्तिं परीक्षितुं वेदधर्मा कुष्ठी जातः मुनेः कुतः पापशंका ॥ ५९ ॥ हे कले इत्याद्या भूरिशो वक्तृश्रोतृमलहराः गुरुकथा भुवि जाताः त्वं भुवं व्रज गुरुभक्तं मा प्रेक्ष ॥ ६० ॥ इति ब्रह्मणादिष्टः कलिर्भुवमेत्य तथाचरन् लौकिकगुरोरयं महिमा किं पुनः सद्गुरोः ॥ ६१ ॥ ये सात्विकीं धृतिमास्थाय दृढभक्त्या सद्गुरुं भजंति ते तथा कृतकृत्या भवंति तथा न संशययुक्ताः ॥ ६२ ॥ तस्मान्नामधारक त्वं श्रेय इच्छसि चेन्निःसंशयं श्रद्धया नृदेहेन क्रीडंतं गुरुं भज भवाब्धेः पारमेष्यसि ॥ ६३ ॥ इति द्वितीयो ऽध्यायः ॥

# अथ तृतीयोऽध्यायः

नामधारक उवाच यं परं ब्रह्म ब्रवीषि स त्रिमूर्त्यात्मेश्वरोऽपि भूमौ कुतो नर इव जातः तत्कारणं शुश्रूषवे मे वद ॥१॥ सिद्ध उवाच त्वं धन्योऽनुगृहीतश्चासि यस्मात्तव भवबंधघ्नी भगवत्यधोक्षजे भक्तिर्जाताऽतो मेऽतीव हर्षो वर्धते ॥ २॥ भुवं पर्यटंतं मां कोऽपि गुरुकथां न पृच्छति अद्य भक्तचंद्रेण त्वया मे बोधाब्धिः प्रपूरितः ॥ ३ ॥ अनंतस्यानंतलीला अपि ताः प्रश्नं विना निजबुद्धिपरिणामावधि वक्तुः स्मृतिं न यांति। ॥ ४ ॥ कलौ नास्तिका मर्त्यास्तत्कथाश्रवणात्मकं प्लवं भवाब्धिं तरितुं न विदुरत एव ते भवाब्धावेव मज्जंति ॥ ५ ॥ यत्र भवाब्धौ अज्ञानं जलं तृष्णा ऊर्मिः कामाद्या मकरादयः सुखदुःखभोगजन्यगानरोदनादिध्वनिः ईदृशेऽनंतेऽपारेगाधेऽस्मिन्सागरे एषा भगवत्कथा नौः गुरुर्नाविकः

भगवत्कृपानुकूलत्वात: ॥ ६ ॥ एतानि साधनानि त्वयाऽयत्नत: प्राप्तान्यत आशु भवाब्धिं तरिष्यसि अतो भगवत्कथा वक्ष्ये सादरं शृणु ॥ ७ ॥ इत्युक्त्वामरजाभीमासंगमे गुर्वाश्रिताश्वत्थमूले उपविश्य सिद्धो नामधारकाय सत्कथा आह ॥ ८ ॥ मुमुक्षुभेषजं कामिनामिष्टदं मुक्तानां जीवनं गुरुचरितं वाङ्मनसयोरगम्यमपि तेऽल्पं वच्मि ॥९॥एकार्णवीभूते जगति शेषपर्यंकस्थोऽस्पृहो नारायण: स्वलीनं जगत्स्रष्टुं मायामुद्बोध्य ॥ १० ॥ ब्रह्माणमसृजत् ब्रह्मापि सृष्टिवृध्द्यै मानसान्सप्तर्षीनसृजत् तत्रैकस्तपस्विश्रेष्ठोऽत्रिः यस्य पुत्रो भगवानभूत् ॥ ११ ॥ तपोर्थस्यात्रे: पातिव्रत्यविभूषिताऽनसूयाख्या पत्नी आसीत् या त्रिभुवने पतिव्रतेति विख्याता ॥ १२ ॥ यद्भिया भूर्मृदुला सूर्याग्नी शीतौ वायुर्मंदश्च जातः देवा अपि स्वपदापायभ्रांत्या हरिं शरणं ययु: ॥ १३ ॥ एकदा नारदो ब्रह्मविष्णुशिवानेत्यानसूयाचारं प्रशस्याभ्यागतप्रियेदृशी साध्वी कापि नेत्याह ॥१४॥इति नारदवाक्यं श्रुत्वा उपस्थितास्तद्देव्यो विषीदंत्यस्तदसहमाना: सद्यो भृशं मूर्च्छिता बभूवु: ॥ १५ ॥ ततस्ते देवा पतिव्रतामानिनीस्ता आश्वास्य सतीं शप्तुमतिथिवेषेणात्र्याश्रमं प्रापु: ॥ १६ ॥ अनसूयापि स्वाश्रमागतान्तान्दृष्ट्वा संमुखं गत्वाऽऽनीयासनेपूपवेशयत् ॥ १७ ॥ सव्यजनेन वीजितान्कृतपच्छौचान्सुखोपविष्टान्तान्प्राह भवतां स्वागतं अद्य किं कार्यं मुनिस्तु तपसे बहिर्गत: ॥१८॥ देवा आहु: हे साध्वि तप:सक्तचित्तो मुनिः कदा आयास्यतीति न विद्म: अत आशु क्षुधितेभ्यो नोऽलमन्नं देहि ॥ १९ ॥ इति श्रुत्वा सा तथेत्युक्त्वांतर्गृहं गत्वा पात्राण्यासाद्यान्नं परिविष्टमिति तेभ्यो न्यवेदयत् ॥ २० ॥ ते प्राहु: भो साध्वि नग्ना भूत्वान्नं देहीति नोऽपेक्षितं इदं न रोचते चेत्क्षुधिता वयं इतोन्यत्र गच्छाम: ॥ २१ ॥ अनसूया इति श्रुत्वा प्रहस्य स्वगतमाह तपस्विन ऋषे: संगात्पवित्राया मे कामेन किं भवेत् अतिथ्युक्तवन्मया न कृतं चेत् ॥ २२ ॥ अमी महात्मान: शप्त्वा विमुखा गमिष्यंति एते तु मम

पुत्रा इति विचिंत्य तथेत्युक्त्वा नग्नाभूत्तदैव निर्विकारा अपीश्वरास्ते बाला आसन् अयं पातिव्रत्यप्रभावो यदुत्पत्तिस्थितिलयकर्तृणां बाल्यं ॥ २३ ॥ ॥ २४ ॥ तथाविधान्तान्दृष्ट्वा सापि विस्मिताऽभूत् तदा प्रसूताया इव तस्याः स्तनतो दुग्धं ववाह ॥ २५ ॥ सद्यो हृष्टा जातरोमांचा सा प्रत्येकं दुग्धमपाययत् तेऽपि मुदा पपुः ॥ २६ ॥ सृष्टिश्रांत इव ब्रह्मा सत्या दुग्धं पीत्वा परमां शांतिमाप ॥ २७ ॥ रक्षया त्रस्त इव विष्णुः साध्व्या दुग्धं पीत्वा विपुलां शांतिं गतः ॥ २८ ॥ संहारेण क्लिष्ट इव हरस्तस्याः पयःपानात्पुष्टिवर्धनत्वं प्राप ॥ २९ ॥ सा स्वधर्मबलात् सामर्थ्यं ज्ञात्वा पयः पाययित्वा तान्पाले विन्यस्य प्रेम्णा तत्कथां जगौ ॥ ३० ॥ अत्रि-रत्रांतरे वनादेत्य गीतं श्रुत्वा सतीमुखात्सर्वं ज्ञात्वा इमे ईश्वरा इति ध्यानेन ज्ञात्वा नत्वा चास्तौषीत् ॥ ३१ ॥ विश्वोत्पत्तिस्थितिलयकारणं तत्साक्षिणं विश्वमयं विश्वाद्यं विश्वाधारं विष्णुं त्वां वंदे ॥ ३२ ॥ यदर्थं तपस्तप्तं स ईशस्त्वमेवैकः लीलया त्रिधा भूत्वा स्वगुणैरात्मनात्मानं रम-यसि ॥३३॥ अध्यारोपापवादाभ्यामिदं जगत्त्वत्तो न भिन्नं तथापि तत् अहं ममेति मायिकभावनया पृथक्त्वं गतं अतोस्य नान्यत्वं ॥ ३४ ॥ इति तस्मिन्स्तुवति ते बालरूपतः पालकस्था अपि पूर्वरूपैर्मुनिसंनिधौ स्थित्वा तमूचुर्वरं वृणीष्वेति ॥ ३५ ॥ स साध्वीं प्राह हे सुभगे इमे मनोदूरा अपि त्वद्भक्त्या प्राप्ता अतोऽभीष्टं वृणु ॥ ३६ ॥ सात्रिं प्राह भो सुतपः अमुना सृष्ट्यर्थं भवान्सृष्टः अत एनमजं पुत्रत्वेन वृणोतु ॥ ३७ ॥ ऋषिरिदमेवेष्टं मत्वा वव्रे विष्णुराह सर्वात्मनाहं ते दत्त इति ॥ ३८ ॥ एवं पतिव्रताप्रभावादीश्वरा बाला भूत्वा स्थिता अपि स्वस्व-पूर्वरूपतः स्वं स्वं स्थानं ययुः ॥ ३९ ॥ अथर्षोत्रिस्तेभ्यो नामानि ददौ पूर्णत्वेन मयाहंते दत्त इत्युक्तत्वाद्विष्णुं दत्त इति आल्हादकत्वाद्ब्रह्मांशं चंद्र इति रुद्रांशं दुर्वासा इति च अत्र दत्तः साक्षात्स्वयं भगवान् श्रुति-मृग्यः सच्चिदानंद एव ॥ ४० ॥ ४१ ॥ ४२ ॥ यो हि योगज्ञानदो

भक्तेष्टदश्च क्षणे क्षणे स्मृतिगामी अत्र संचरति अत्यंतकोपी अपि दुर्वासाः परानुग्रहकृत् चंद्रस्तु लोकपोषकः ॥ ४३ ॥ अजोऽपि भगवान् दुर्वाससा दत्तं शापमंगीकृत्य भूमिदेवरक्षार्थमनेकानवतारान्धृत्वा तान्लीलाविग्रहान्कार्यांते जहाति ॥ ४४॥ भगवान्परानुग्रहार्थं दत्तरूपेणावतीर्णोपि परानुग्रहकार्यस्य नित्यत्वात् अमुं लीलाविग्रहं न जहौ ॥ ४५ ॥ नामधारक उवाच। कुतो हेतोर्दुवाससा भगवान् शप्तः अव्यक्ते तस्मिन्परावरे कथं शापो लग्नः अमुं मे संशयं छेत्तुं योग्योऽसि ॥ ४६ ॥ सिद्ध उवाच। भक्ताधीनत्वेन भक्तिभावनो भगवानव्यक्तोऽपि सुव्यक्तोऽभूत् अतस्तस्मिन्परिपूर्णा सहनशीलता ॥ ४७ ॥ पूर्वमेकादशीव्रततत्परोऽभ्यागतपूजकोंबरीषनामैको भागवतोत्तमो भक्तोऽभूत् ॥ ४८ ॥ एकदा तद्व्रतभंगाय पारणादिवसे चंडो दुर्वासास्तद्गृहमागत्य भोजनं मे देहीति ययाचे ॥ ४९ ॥ दास्यामीत्यंबरीषेणोक्तो स स्नातुं नदीं गत्वा छिद्रान्वेषी सन्पारणातिक्रमाय तत्रैव तस्थौ ॥५०॥ तदागमं प्रतीक्ष्याभुक्ते मुनौ न भोज्यं पारणातिक्रमे च व्रतभंगः स्यात् अतस्तीर्थपानादुभयसिद्धिरिति मत्वा तीर्थजलं पपौ ॥ ५१ ॥ तदैवागत्वा मुनिः प्राह यतः क्षुधितं मां हित्वा हे दुर्भग त्वया पानं कृतं अतो तेन दोषेण भवे भवे भ्रमिष्यसि ॥ ५२ ॥ इति शप्तः सोऽजं स्वकुलदैवतं स्वदासजीवनं विष्णुं दध्यौ विष्णुरपि तदैवागत्य मुनिं प्राह ॥ ५३ ॥ हे मुने ते वाक्यं मोघं न तमेव शापं मे देहि अयमंबरीषः सोढुं न प्रभुः भक्तवात्सल्यान्मम सहिष्णुता कथंचित् वर्तते ॥ ५४ ॥ तच्छ्रुत्वा मुनिः स्वमनस्याह अयं विष्णुर्भुवि नृणां दुर्लभः अंबरीषशापनिमित्ततः ॥ ५५ ॥ अत्र सुलभो भविष्यतीति तं शपामीति मत्वा शशाप अजो स शापनिमित्ततो लोकानुग्रहाय बहुधावतरति ॥ ५६ ॥ अस्य भगवतो मत्स्याद्यवताराः पुराणादौ विश्रुताः स एव दीनान् जनान् त्रातुं कलौ द्विवारं प्रादुरासीत्

॥ ५७ ॥ कलौ पामराणामगोचरावपि तौ अवतारौ अद्यापि कामदौ स्तः नियमितकाले कलौ संकल्पमात्रतः पुण्यं सिध्यति पापं चानुष्ठितं च सिध्यति न संकल्पमात्रेणात एव बहुगुणत्वात्कलिनिग्रहो न कृतः ॥ ५८ ॥ इति तृतीयोऽध्यायः ॥३॥

—

# अथ चतुर्थोऽध्यायः

गद्यं क्षेपकं ( अथ ह किल पर्यटन्ययातिपुत्रो यदुराजोऽकुतोभयं सर्वसंगविवर्जितं विजने वने धरोपस्थे शयानं दक्षमवधूतं दृष्ट्वाश्चर्येण तं परिपृच्छति ) आयुःश्रीकीर्त्यर्थं पुरुषो धर्मार्थकाममोक्षासक्तो दृश्यते भवांस्तु अन्यथैव दृश्यते तद्नैपुण्येनाशक्त्याऽज्ञानेन वा भवतोऽकर्तृत्वमिति वक्तुं न शक्यते यतो हि भवान्निपुणः शक्तः प्राज्ञश्च तथापि विजने गहने वने कुतः कारणान्निरिच्छः सन् कलत्रादिरहितोऽपि सानंदोऽवतिष्ठते ॥१॥इति यदुना पृष्टः स लोकमुक्तये बुध्द्युपाश्रितगुरुशिक्षितज्ञानमब्रवीत् ॥ २ ॥ दैववशवर्तिभिर्भूतैः पीडितोऽपि नरो भूमिवत्स्वमार्गान्न चलेत्किंतु धैर्यं वहेत् सदा परार्थ एवोद्भव ईहा चात्मन इति ज्ञात्वा नगात्पराधीनात्मतां शिक्षेत् ॥ ३ ॥ हृदयवाग्विक्षेपपरिहाराय प्राणवृत्तिवदाहारमात्रेण तुष्येन् नेंद्रियविषयैः विषयान्भुंजानोऽपि तद्गुणदोषवर्जितः शीतोष्णादिविविधधर्मवर्जितश्च गंधानासक्तो वायुरिव गुणाश्रयोऽपि गुणैर्न युज्येत् एतद्वा कथमित्यत आह स्वानुसंधानवान् भवेत् ॥ ४ ॥ कालसृष्टगुणत्रिवृत्करणविकारदेहविकारासंसृष्ट एव पुरुषः वायुप्रेरितमेघासंसृष्टाकाशवत् तेनात्मना सर्वान्वयव्याप्त्याऽऽकाशवदभेदोऽसंगश्च ज्ञातव्यः प्रत्यगात्मनो ब्रह्मत्वात् ॥ ५ ॥ ६ ॥ जलवद्द्रस्यः स्निग्धः प्रकृतितः स्वच्छः पुरुषः स्वदर्शनस्पर्शनादिना लोकान्पुनाति अग्निराच्छादितः स्पष्टो वा कामिभिः सेव्यो दातुः पूर्वोत्तरदोषान्परिहरन् यत्र कुत्रापि भुंक्ते तद्वज्ज्ञानी

तपस्तेजोदीप्तोऽतएवाक्षोभ्योऽपरिग्रहश्च सर्वभक्षोऽपि दोषासंसृष्ट एव यथा काष्ठसंयोगात्तद्रूप इवाग्निरिव सुरासुरनरतिर्यगादिदेहेषु तादात्म्येन तिष्ठन्तद्रूप इव प्रतीयते सा प्रतीतिर्न वास्तवी अन्यच्च कालवेगेनात्मसंबंधिभूतानामुत्पत्तिविनाशौ प्रतिक्षणं वर्तमानावपि अग्निज्वालावत्स्थूलदृष्ट्या न दृश्येते ॥ ७ ॥ ८ ॥ ९ ॥ देहस्तु कलावद्विकारी आत्मा तु ध्रुवः कूटस्थ आप्यमंडल इव आत्मा देहाद्युपाधौ स्थूलबुद्ध्या तद्गत इव भाति घटजलप्रतिबिंबितसूर्य इव स्वस्थो न बुध्यते ॥ १० ॥ सूर्यः स्वकिरणैर्यथाकालं जलान्यादत्ते विसृजति च यथा तथा ज्ञानी विषयानादत्ते काले पात्रे विसृजति च तत्र मया लब्धं दत्तं चेति अभिमानं न वहति सूर्यवत् ॥ ११ ॥ पुरुषोऽतिस्नेहप्रसंगात् कपोतवन्नश्येत् कश्चित् कपोतः कपोती च मिथुनीभूय क्रीडादौ प्रेम्णा चेरतुः ॥ १२ ॥ अशंकं मिथो बद्धदेहांतःकरणावास्तां स मैथुनादिना तर्पयंतीं तां श्रमेण पाति सा बालानजनयत्तौ मुदा तान्पुपोषतुः ॥१३॥ कदाचिल्लुब्धो नीडाद्बहिस्थान्तान् शिचा जग्राह ततः क्रोशंतीं दुःखात्पातितां कपोतीं अपस्मृतिं दुःखितं कपोतं च जग्राह ॥ १४ ॥ एवं द्वंद्वसुखारामः प्रियविषयाशांतो गुणबुद्ध्या गृहासक्तः पुमान्कपोतवत् क्रांतापावरणमुक्तिद्वारभूतनरजन्मतः प्रच्युत एव ॥ १५ ॥ स्वर्गे नरके वा सुखमस्ति तन्नेच्छेत् अजगरवृत्तिमाश्रित्याक्रियत्वेन यदृच्छया प्राप्तं स्वल्पं महांतं वा सरसं विरसं वा ग्रासं भक्षेत् ॥ १६ ॥ अप्राप्तश्चेदनशनोऽपि दैवमेव प्रापकमिति दृष्ट्याजगरवद्विनिद्रः स्वपन्निंद्रियवानपि निरुद्यमं बलिष्ठं देहं वहन्दर्शनादिव्यापारमपि निवारयेत् ॥ १७ ॥ समुद्रवज्ज्ञानी पूर्णोऽपि न सर्पति हीनोऽपि न शुष्यति निम्नोऽनंतपारो दुरत्ययोऽक्षोभ्यो दुर्विगाह्यः प्रसन्नश्च निश्चलाब्धिवत्तिष्ठेत् स्त्रीलीलारूपमोहितोऽवशः पुमान् अग्नौ पतंगवन्नश्येत् ॥ १८ ॥ सर्वतः सारं गृण्हीयात् अल्पाशीरप्येकत्र न रमेत् मधुकृद्वन्नाशबीजे संग्रहेऽपि न रमेत् ॥ १९ ॥ स्त्रीस्पर्शात्पुमान्हस्तीव बद्ध्येताथवा शूरैर्ह-

न्येत मक्षिकावत् कष्टेन संचितं न दत्तं न भुक्तं धनं अन्यो भुंक्ते ॥२०॥ ॥ २१॥ दुःखार्जितं गृहिणोऽन्नं पूर्वं मधुहेव भिक्षुः पूर्वं भुंक्ते पुमान्ग्राम्यगीतान्मृगवद्बध्येत नृत्याद्यवलोकनाच्च ऋष्यशृंगवद्बध्येत ॥ २२ ॥ पुमानतिप्रमाथिन्या जिव्हया रसमोहितश्चेद्बडिशैर्मत्स्य इव लयं यायात् स्नानासक्त्याल्परससेवनेन च शनैर्जय्या रसे जिते सर्वं जितं ॥ २३ ॥ बव्हर्थदकांताशया ध्वस्तनिद्रा पिंगला नामैका वेश्या चिंताहेतुं निर्वेदं गत्वा स्वात्मानं धिक्कुर्वती आह स्वात्मस्थं रतिद्रव्यदं ॥ २४ ॥ आत्मारामं हित्वा कुत्सितवृत्त्या भयशोकमोहदं नश्वरं नरं कांक्षेऽतो मां धिक् इतः परमात्मनात्मानं क्रीत्वात्मारामेण रमे इति ॥ २५ ॥ सा तथाऽरमत् यस्मादेवं तस्मादाशैव दुःखं नैराश्यं परमं सुखं परिग्रहो दुःखायेति ज्ञात्वा तद्रहितोऽतिसुखमश्नुते ॥ २६ ॥ यत आमिषयुक्तं कुररं शूरो हंतीति । मानावमानचिंतारहित आत्मक्रीड आत्मरतिर्बालवत्सुखी यतोज्ञो वा ज्ञो गुणातीतश्च परमानंदः ॥ २७॥ काचित् कुमारी रहःकृत्ये विघ्नभूतान्महाशब्दान् शंखानपसार्य द्वौ द्वौ धृतवती ततोऽपि शब्दं श्रुत्वैकैकं धृत्वा सुखमलभत् ॥ २८ ॥ अतो बहूनां वासे कलहो द्वयोर्वार्ता च तच्छंखवदेव एक एव तपश्चरेत् ॥ २९ ॥ अप्रमत्त एकचारी मौनी अगृहोऽपि गुहास्थो गत्याचारालक्ष्योऽहिवच्चरेत् अध्रुवात्मनो गृहारंभो निष्फलः सर्प इवान्यगेहे सुखी ॥ ३० ॥ आसनश्वासौ जित्वा वैराग्याभ्यासबद्धचित्तं पुरुषेणेश्वरे संयुक्तं वासनां त्यक्त्वा सत्ववृद्ध्या निरुपाधिकं सत् ॥ ३१ ॥ निर्वाणं याति तदा मुनिर्बहिरंतःस्थं न वेद यथेषुकार इषुदत्तचित्तोऽग्रतो यांतं सपरिवारं भूपं न वेद प्रेमादिना निश्चलहृदयेन विष्णोर्ध्यानात्पूर्वरूपमुत्सृजन् कीटः पेशस्कृत इव सारूप्यमेति ॥ ३२ ॥ यथोर्णनाभिः कारकसामग्रीमनपेक्ष्य नाभितो निर्गतां ऊर्णां मुखेन संतत्य विहारं कृत्वांते तामत्ति तथाभिन्ननिमित्तोपादान ईशः पूर्वं स्वमायासृष्टं जगदुपसंहृत्य प्रलये एक एवाद्वितीयोऽभवत् स्वशक्त्याखिलाश्रयः सर्वेशः

आत्मानुभावतः कालेन सत्वादिशक्तीः समतां नीत्वा निरुपाधिकः प्रधानपुरुषेश्वरो मोक्षसंज्ञकः परमानंद आस्ते ॥३३-३४-३५-३६॥ ततः स्वानुभावेन गुणात्मिकां स्वमायां क्षोभयन् तया सूत्रं सृजति सा त्रिगुणा शक्तिर्विश्वं ससर्ज ॥३७॥ येन पुमान्संसरते तद्विश्वमीश्वर ओतप्रोतमास्ते पारक्यात्सोत्पत्तिक्षयादेहाद्बोधवैराग्ये स्तः ॥ ३८ ॥ स्वप्रियाभिलाषी स्वेष्टपोषको देहांतरबीजं सृष्ट्वा वृक्षवन्नश्यति ॥ ३९ ॥ इंद्रियाणि स्वार्थाय तं सपत्नीवत्तं लुनंति ईदृङ् नरजन्म दुर्लभं मत्वा ज्ञानं संपाद्य मुक्तसंगोऽनहंकारश्च महीं चरे यदुस्तच्छ्रुत्वा संगं त्यक्त्वा द्रुतं समाचित्तोऽभूत्॥४०॥ प्रऱ्हादानुग्रहमाह कष्टरूपसंसारहेतुभूतप्राणार्थाभिलाषापनुत्तये भगवान्प्रऱ्हादाय मधुकराजगरशिक्षितवैराग्यसंतोषदं ॥ ४१ ॥ परमात्मतत्वं प्राह स्वरूपं सुखं तत्सर्वेहानिवृत्तौ भाति सोपाधिकान्सातिशयानशाश्वतान्भोगान्दृष्ट्वा संविशन्नपि स्वपे इतः परमहितं न ॥ ४२ ॥ विकल्पं भेदग्राहकमनोवृत्तौ हुनेत् तां मनसि हुनेत् मनो वैकारिकाहंकारे तं मायायां तां च स्वात्मनि हुत्वा विरमेत् ॥ ४३ ॥ इत्युक्त्वा श्रीदत्तो विरराम प्रऱ्हादोऽपि तथाभवत् ॥ ४४ ॥ एवं कार्तवीर्यार्जुनायाष्टांगयोगं निवृत्त्यर्थमाह सच्छब्दवाच्याविद्याशबलं ब्रह्म ततोव्यक्तं ततो महान् ॥ ४५ ॥ ततोऽहंकारस्ततः पंच तन्मात्राणि ततः पंच महाभूतानि तेभ्यो जगत् सकार्याणि पंचीकृतपंचमहाभूतानि विराडुच्यते एतदात्मनः स्थूलशरीरं ॥ ४६ ॥ इंद्रियैरर्थोपलब्धिर्जागरितं तदुभयाभिमानी विश्वः सकार्याण्यपंचीकृतभूतानि सप्तदशात्मकं लिंगशरीरं ॥ ४७ ॥ करणेषूपरतेषु सविषयो जागरितसंस्कारजः प्रत्ययः स्वप्नः अयं समष्ट्यभिमानी हिरण्यगर्भः सूक्ष्मदेहस्वप्नयोर्व्यष्ट्यभिमानी तैजसः ॥ ४८ ॥ देहद्वयकारणभूताज्ञानं साभासं अनिर्वचनीयमव्याकृतमुच्यते सर्वज्ञानोपसंहारो बुद्धेः कारणात्मनावस्थानं सुषुप्तिरनयोरभिमानी प्राज्ञः ॥ ४९ ॥ एभ्यः परं शुद्धादिलक्षणचिन्मात्रब्रह्म महावाक्येन लक्ष्यते

यमादियुक्त आसनज्ञो गुरूपदेशेन इडया वायुमापूर्य कुंभयित्वा पिंगलया रेचयेत् ॥ ५० ॥ पुनर्विपरीतमेवमभ्यासेनैवं प्राणे जिते मनसा विषयेभ्य इंद्रियाणि प्रत्याहृत्य ॥ ५१ ॥ आत्मन्यचलं मनो धारयेत् विक्षिप्तं चेत्पुनः पुनरात्मनि स्थिरीकुर्वन् श्रुत्यानुकूलयुक्त्या च वाक्यश्रुतं ब्रह्म ध्यायेत् ॥५२॥ विजातीयप्रत्ययनिरासेन सजातीयप्रत्ययप्रवाहीकरणं भजेत् गुरूक्तं षड्विधलिंगैस्तात्पर्येणावधारितं भागत्यागलक्षणया लक्षितं ॥ ५३ ॥ सोऽहमात्मेत्यभेदतो वाक्यार्थं ध्यायेत् नश्वरं सिद्धयादि नोपादेयं लये चित्तं संबोधयेत् ॥५४॥ विक्षिप्तं शमयेत्सकषायं जह्यात् समप्राप्तं न चालयेत् तत्र रसं नास्वादयेत् प्रज्ञया निःसंगो भवेत् ॥ ५५ ॥ यदा निवातदीपवच्चित्तो भवेत्तदा शून्यवृत्तिको ब्रह्मात्मा भवेत् तदा कृतकृत्यः क्षीणकर्मा भिन्नहृद्ग्रंथिसंशयः ॥ ५६ ॥ यावदारब्धमात्मज्ञो जीवन्मुक्तो भवेत् सत्यमेतत् ॥ इति श्रीदत्तोक्तं श्रुत्वा मत्वा ध्यात्वा कार्तवीर्योऽर्जुनो गुरूक्तवन्मुक्तोऽभवत् ॥ इति चतुर्थोऽध्यायः ॥४॥

---

# अथ पंचमोऽध्यायः

नामधारक उवाच । पुराणोक्ता ईश्वरावताराः श्रुताः यद्भवतावतारद्वयमुक्तं तत्कथाशुश्रूषवे मे वद ॥१॥ सिद्ध उवाच । रे वत्स त्वया साधु पृष्टं या अत्र वक्तृश्रोतॄन्पुनंति तास्तत्कथाः समाहिततया श्रृणुष्व ॥ २ ॥ धर्मं सतश्च त्रातुं दुष्टान्हंतुं भगवान्लीलाविग्रहेणावतरति नान्यत्प्रयोजनं ॥ ३ ॥ कलौ हीनान्दीनमतीन्दुर्बलान्नन्दृष्ट्वा तानुद्धर्तुं भक्तिविधित्सयाविरासीत् ॥४॥ पीठापुरे पूर्वदेशे राजा नाम द्विजोऽभूत्तद्भार्या च सुमतिस्तावुभौ दत्तार्चनतत्परौ अभूतां ॥ ५ ॥ एकादा तद्गृहे श्राद्धाहेऽतिथिवेषेणागत्य श्रीदत्तोऽन्नं ययाचे अकृतेऽपि श्राद्धे श्राद्धभोक्तायमीश्वर इति

बुद्ध्या सुमतिस्तस्मै अन्नं ददौ ॥ ६ ॥ सर्वात्मा भगवान् तदा तद्भावं ज्ञात्वा प्रीत्या स्वरूपं व्यदर्शयत् ॥ ७ ॥ मालाकमंडलुडमरुशूलशंखचक्रधरस्त्रिमुखो व्याघ्रचर्मांबरो भस्मभूषितो जटिलो दत्त आह ॥ ८ ॥ भो मातः श्राद्धाहे विप्रभोजनात्पूर्वं श्राद्धान्नं हव्यकव्यादोऽयमिति मत्या मे दत्तमतस्तुष्टोऽस्मि वरं वृणीष्व ॥ ९ ॥ ब्राह्मण्युवाच यद्योगिदूरोऽपि भवान्दृग्गोचरो भूत्वान्नं जग्राह अतोऽधिकं किं धन्याहं पितरोऽपि धन्याः ॥१०॥ भो जगत्कारण भक्तकामकल्पद्रुम लोकवंद्य मातरित्युक्तसंबोधनसिद्धिपूर्वं सुप्रजस्त्वं देहि ॥११॥ एवमत्रिवद्याञ्चां श्रुत्वा स प्राह मादृक्के पुत्रो भविष्यति तद्वचनतिरस्कारं मा कुरु ॥ १२ ॥ इत्युक्त्वा सोंऽतर्दधे हृष्टा सा गृहमागत्य पत्ये तच्छशंसोभावपि ननंदतुश्च ॥१३॥ ब्राह्मण्युवाच भो नाथाद्य मयापराद्धं यच्छ्राद्धात्पूर्वं दत्तात्रेयायान्नं दत्तं तत्क्षंतुमर्हसि॥१४॥ विप्र उवाच येरन्नैर्ब्राह्मणान्भोजयित्वा विष्णवे तत्कर्म समर्प्यते तान्यन्नानि स्वयं बुभुजे तस्मात्त्वया सुदुष्करं साधु कृतं ॥१५॥ मध्यान्हे रूपांतरेण भक्तोद्धाराय श्रीदत्तोऽर्थिवत्पर्यटतेऽत एव तद्रूपभावनया सदातिथिः पूज्यस्तस्मिन्पराङ्मुखे श्रीभगवान्न लभ्यते ॥ १६ ॥ हे भद्रे त्वया भद्रं कृतं हि धन्येऽस्माकं कुलं पावितं यतो लोकस्यापि हितमीदृशो दुर्लभो वरो त्वया लब्धः ॥ १७ ॥ इत्युक्त्वा ब्राह्मणः शेषान्नेन लौकिकश्राद्धमकरोत् ब्राह्मणी अपि गर्भिणी भूत्वा कालेऽजमप्यमुं प्रासूत ॥ १८ ॥ तदा दैवज्ञाः प्राहुः भो ब्रह्मन्सुदुर्लभं त्वत्पुण्यकल्पवृक्षफलमिदं ॥ १९ ॥ अयं हि लोकवंद्यो भगवान्दत्तात्रेयोऽवतीर्ण इवेति ग्रहवशाद्भाति इत्युक्त्वा ते ननंदुः ॥ २० ॥ ततः शोभनपदचिन्हत्वात्तस्य श्रीपाद इति नाम प्रतिष्ठितं स च शोभनांगैर्बालश्चंद्रवद्ववृधे ॥ २१ ॥ तत उपनीतेन तेन शिष्येभ्यस्त्रयी उपदिष्टा स्वोद्वाहोद्युक्तं तातं निवार्य श्रीपाद उवाच ॥ २२ ॥ प्रव्रजता मया योगश्रीरेवोद्वाह्या नापराऽपत्यं विनापि साधिकारिणो ममैव सुलभा यतोऽहं श्रीवल्लभः

यमादियुक्त आसनज्ञो गुरूपदेशेन इडया वायुमापूर्य कुंभयित्वा पिंगलया रेचयेत् ॥ ५० ॥ पुनर्विपरीतमेवमभ्यासेनैवं प्राणे जिते मनसा विषयेभ्य इंद्रियाणि प्रत्याहृत्य॥ ५१ ॥ आत्मन्यचलं मनो धारयेत् विक्षिप्तं चेत्पुनः पुनरात्मनि स्थिरीकुर्वन् श्रुत्यानुकूलयुक्त्या च वाक्यश्रुतं ब्रह्म ध्यायेत् ॥५२॥विजातीयप्रत्ययनिरासेन सजातीयप्रत्ययप्रवाहीकरणं भजेत् गुरूक्तं षड्विधलिंगैस्तात्पर्येणावधारितं भागत्यागलक्षणया लक्षितं ॥ ५३ ॥ सोऽहमात्मेत्यभेदतो वाक्यार्थं ध्यायेत् नश्वरं सिद्ध्यादि नोपादेयं लये चित्तं संबोधयेत् ॥५४॥ विक्षिप्तं शमयेत्सकषायं जह्यात् समप्राप्तं न चालयेत् तत्र रसं नास्वादयेत् प्रज्ञया निःसंगो भवेत् ॥ ५५ ॥ यदा निवातदीपवच्चित्तो भवेत्तदा शून्यवृत्तिको ब्रह्मात्मा भवेत् तदा कृतकृत्यः क्षीणकर्मा भिन्नहृद्ग्रंथिसंशयः ॥ ५६ ॥ यावदारब्धमात्मज्ञो जीवन्मुक्तो भवेत् सत्यमेतत् ॥ इति श्रीदत्तोक्तं श्रुत्वा मत्वा ध्यात्वा कार्तवीर्योर्जुनो गुरूक्तवन्मुक्तोऽभवत् ॥ इति चतुर्थोऽध्यायः ॥४॥

---

# अथ पंचमोऽध्यायः

नामधारक उवाच। पुराणोक्ता ईश्वरावताराः श्रुताः यद्भवतावतारद्वयमुक्तं तत्कथाशुश्रूषवे मे वद ॥१॥ सिद्ध उवाच। रे वत्स त्वया साधु पृष्टं याः अत्र वक्तृश्रोतॄन्पुनंति तास्तत्कथाः समाहिततया शृणुष्व ॥ २ ॥ धर्मं सतश्च त्रातुं दुष्टान्हंतुं भगवान्लीलाविग्रहेणावतरति नान्यत्प्रयोजनं ॥ ३ ॥ कलौ हीनान्दीनमतीन्दुर्बलान्नन्दृष्ट्वा तानुद्धर्तुं भक्तिविधित्सयाविरासीत् ॥४॥ पीठापुरे पूर्वदेशे राजा नाम द्विजोऽभूत्तद्भार्या च सुमतिस्तावुभौ दत्तार्चनतत्परौ अभूतां ॥ ५ ॥ एकदा तद्गृहे श्राद्धाहेऽतिथिवेषेणागत्य श्रीदत्तोऽन्नं ययाचे अकृतेऽपि श्राद्धे श्राद्धभोक्तायमीश्वर इति

बुद्धया सुमतिस्तस्मै अन्नं ददौ ।। ६ ।। सर्वात्मा भगवान् तदा तद्भावं ज्ञात्वा प्रीत्या स्वरूपं व्यदर्शयन् ।। ७ ।। मालाकमंडलुडमरुशूलशंखचक्रधरस्त्रिमुखो व्याघ्रचर्मांबरो भस्मभूषितो जटिलो दत्त आह ।। ८ ।। भो मातः श्राद्धाहे विप्रभोजनात्पूर्वं श्राद्धान्नं हव्यकव्यादोऽयमिति मत्वा मे दत्तमतस्तुष्टोऽस्मि वरं वृणीष्व ।। ९ ।। ब्राह्मण्युवाच यद्योगिदूरोऽपि भवान्दृग्गोचरो भूत्वान्नं जग्राह अतोऽधिकं किं धन्याहं पितरोऽपि धन्याः ।।१०।। भो जगत्कारण भक्तकामकल्पद्रुम लोकवंद्य मातरित्युक्तसंबोधनसिद्धिपूर्वं सुप्रजस्त्वं देहि ।।११। एवमत्रिवद्याऽर्चां श्रुत्वा स प्राह माहक्के पुत्रो भविष्यति तद्वचनतिरस्कारं मा कुरु ।। १२ ।। इत्युक्त्वा सोंऽतर्दधे हृष्टा सा गृहमागत्य पत्ये तच्छशंसोभावपि ननंदतुश्च ।।१३।। ब्राह्मण्युवाच भो नाथाद्य मयापराद्धं यच्छ्राद्धात्पूर्वं दत्तात्रेयायान्नं दत्तं तत्क्षंतुमर्हसि।।१४।। विप्र उवाच येरन्नैर्ब्राह्मणान्भोजयित्वा विष्णवे तत्कर्म समर्प्यते तान्यन्नानि स्वयं बुभुजे तस्मात्त्वया सुदुष्करं साधु कृतं ।।१५।। मध्यान्हे रूपांतरेण भक्तोद्धाराय श्रीदत्तोऽर्थिवत्पर्यटतेऽत एव तद्रूपभावनया सदातिथिः पूज्यस्तस्मिन्पराङ्मुखे श्रीभगवान्न लभ्यते ।। १६ ।। हे भद्रे त्वया भद्रं कृतं हि धन्येऽस्माकं कुलं पावितं यतो लोकस्यापि हितमीदृशो दुर्लभो वरो त्वया लब्धः ।। १७ ।। इत्युक्त्वा ब्राह्मणः शेषान्नेन लौकिकश्राद्धमकरोत् ब्राह्मणी अपि गर्भिणी भूत्वा कालेऽजमप्यमुं प्रासूत ।। १८ ।। तदा दैवज्ञाः प्राहुः भो ब्रह्मन्सुदुर्लभं त्वत्पुण्यकल्पवृक्षफलमिदं ।। १९ ।। अयं हि लोकवंद्यो भगवान्दत्तात्रेयोऽवतीर्ण इवेति ग्रहवशाद्भाति इत्युक्त्वा ते ननंदुः ।। २० ।। ततः शोभनपदचिन्हत्वात्तस्य श्रीपाद इति नाम प्रतिष्ठितं स च शोभनांगैर्बालश्चंद्रवद्ववृधे ।। २१ ।। तत उपनीतेन तेन शिष्येभ्यस्त्रयी उपदिष्टा स्वोद्वाहोद्युक्तं तातं निवार्य श्रीपाद उवाच ।। २२ ।। प्रव्रजता मया योगश्रीरेवोद्वाह्या नापराऽपत्यं विनापि साधिकारिणो ममैव सुलभा यतोऽहं श्रीवल्लभः

॥ २३ ॥ एवमुक्त्वा प्रव्रजंतं तं दृष्ट्वा साश्रुलोचनौ मातापितरौ ऊचतुः त्वयि याते जलेन विना मत्स्यानामिव आवयोर्मरणं॥ २४ ॥ त्वमतींद्रियः साक्षाद्भगवान्विष्णुरपि प्राक्पुण्येन पुत्रत्वेन विषयी भूत्वा कुत आवां दुःखाब्धौ पातयसि ॥ २५ ॥ हे हरे भवपाशविमोचनी अपि तव स्मृतिः पंग्वंधात्मजदर्शनाद्दूरतरा भवेत् ॥ २६ ॥ इति सकरुणं तद्वाक्यं श्रुत्वा सुखाकरं स्वकरं वात्सल्येन भ्रातृमस्तके दधौ ॥ २७ ॥ तदैव तौ पादाक्षियुक्तौ जातौ लीलाविहारिणि भगवतीदं न चित्रं ॥ २८ ॥ माताप्याश्चर्यवत्तद्रूपं दृष्ट्वा दत्तोक्तं स्मृत्वा गद्गदवाचा प्राह ॥ २९ ॥ दुरत्यया दैवी या तव माया तया भृशं मोहिताहं तव स्वरूपं न जानेऽत एव त्वं पुत्र इति मे कल्पना ॥३०॥ यत्कुक्षौ सावकाशा ब्रह्मांडलेखाः स त्वं मत्कुक्षिज इति जगति विडंबनं भो दत्त ते माया मां नावृणोतु ॥ ३१ ॥ श्रीपाद उवाच त्वया दृष्टमिदं रूपं हृदि नित्यं ध्यायस्व भो मातः द्रुतं मायासिंधुं तीर्त्वा मत्सायुज्यं गमिष्यसि ॥३२॥ इमौ शतायुषौ तव सुतौ पितृसेवारतौ विद्याश्रीपुत्रपौत्राढ्यौ लोकवंद्यौ च भविष्यतः ॥ ३३ ॥ तत आत्मान स्तुवंतौ भ्रातरौ प्राह अहं प्रव्रजामि युवाभ्यां सदा पितरौ सेवनीयौ यस्मात्तावेव गृहिसत्पुत्रदैवतं ॥ ३४ ॥ इत्युक्त्वा पितरौ त्रिः परिक्रम्य प्रणम्य च तदनुज्ञातः स काशीं बदरीवनं च जगाम ॥ ३५ ॥ ततः साधूद्धरणकामनया यत्र गणेशेन शिवलिंगं प्रतिष्ठितं सज्जनाश्रयं तद्गोकर्णं प्रति स ययौ ॥ ३६ ॥ इति पंचमोऽध्यायः ॥ ५ ॥

---

# अथ षष्ठोऽध्यायः

नामधारक उवाच गोकर्णे गणेशेन कुतः शैवं लिंगं प्रतिष्ठितं तद्वत्र सज्जनाश्रयं कथं हे मुने तन्मे श्रावय ॥ १ ॥ सिद्ध उवाच विष्णोराज्ञया रावणतो लिंगमादाय प्रतिष्ठितं तत्प्रभृति तत्र देवाः सावधश्च स्थितास्तच्छृणुष्व ॥ २ ॥ कैलासप्राप्तये मृन्मयं लिंगं भजंतीं मातरं निवार्य शंकरेण सह कैलासमानेतुं रावण आययौ ॥ ३ ॥ हठात्कैलासमुद्धर्तुमुद्युक्तं रावणं लोकोत्पातभिया गौर्या स्तुतः शिवस्तं पर्वतस्याधोऽवरोधयत् ॥ ४ ॥ स च मरणोन्मुखीभूतोऽपि शंकरं दध्यौ ततस्तुष्टेन शंभुनोद्धृतो रावणः शिवतुष्ट्यै साध्वगायत ॥ ५ ॥ सरागं सुस्वरं मधुरं चतुर्विधवाद्यैः सह कलं जगौ ॥६॥ प्राणिमात्रमनोहारि दिव्यं गानं श्रुत्वा प्रीतः शंकर आह रे रावण साधु गीतं इष्टं वरं वरय ॥७॥ रावण उवाच अन्यदुर्लभा हैमी लंका मम पुरी श्रीर्दासी ब्रह्मा ज्योतिषिकः मृत्युर्दासः देवाश्च किंकराः तस्मात्कापि मे न किंचिद्दुर्लभं ॥ ८ ॥ अद्य कैलासमानेतुं मात्राज्ञप्तोऽस्मि हे शंभो वरदोऽसि चेत्त्वया सह कैलासनयनरूपं वरणीयार्थं देहि ॥ ९ ॥ शिव उवाच ॥ कैलासेन किं साध्यं इदं कैलासादप्यधिकं प्राणलिंगं गृहाण अनेन लिंगेन त्वं मादृशः ते पुरी कैलासवच्च भवेत् ॥१०–११॥ इत्युक्त्वा भक्त्याकृष्टः शिवस्तस्मै लिंगं ददौ स संतुष्टः खलो रावणः लंकां ययौ ॥ १२ ॥ तज्ज्ञात्वा नारदो ब्रह्मणेऽकथयद्ब्रह्मा विष्णवे च ते त्रयोऽपि शिवमेत्य प्राहुः किमिदं कृतमिति ॥१३॥ येन देवा बद्धाः स प्राणिमात्रभक्षको लोककंटको राक्षसः कथं स्वसमः कृतः ॥१४॥ शिव उवाच गीतेनाकृष्टेन मया तोषाल्लिंगं दत्तं सोऽद्यापि पुरं न गतः ॥ १५ ॥ इति श्रुत्वा कपटेन खलो जय्य इत्युक्त्वा लिंगहरणार्थं नारदं गणेशं च प्रेरयत् ॥ १६ ॥ नारदो मनोगत्या तदग्रे गत्वा प्राह रे रावण कुत आयातोऽसि क वा गच्छसि ॥१७॥

रावण आह शिवं प्रसाद्य लिंगं लब्ध्वा पुरं यास्यामि इदमुत्तमं लिंगं पश्य ॥ १८ ॥ नारदस्तद्दृष्ट्वा आह वन्यमहिषभक्षक एको मृगो ब्रह्मविष्णुहरैर्मृगयायां हतः ॥ १९ ॥ तच्छृंगेभ्यस्तैस्त्रीणि लिंगानि लब्धानि तान्यात्मवन्मतानि इदं विभोः सायुज्यदं शिवलिंगं त्वया लब्धं ॥ २० ॥ रावण आहाद्य श्रवणानवकाशः सत्वरं गम्यते संध्यामतीत्य क यासीति नारदेनोक्त उपविवेश ॥ २१ ॥ अत्रान्तरे वर्णिलिंगी गणेशोऽपि प्राप रावणस्तं करे कृत्वा प्राह कस्य त्वं क गच्छसीति ॥ २२ ॥ बाल आह उमाशंकरौ मे पितरौ ताभ्यां किं ते देयं नो चेत्करं मोचय त्वत्तो बिभेमि ॥ २३ ॥ रावण आह किमपि नादेयं इदं लिंगं क्षणं वह गौरवेण ते हैमीं लंकां दर्शयामि तत्र सुखं वस ॥ २४ ॥ मया बालेन जडं लिंगं कथं धार्यं घोरा लंकापि न गम्यते इत्युक्तवंतमपि तमाश्वास्य लिंगं ददौ ॥ २५ ॥ स्वयं संध्योपासनाय समुद्रतीरं गतः बाल आह त्वां त्रिराहूय त्वयि नागते लिंगं भुवि स्थापयामीति ॥ २६ ॥ ततः किंचिद्विश्रम्य स्वर्गे देवेषु पश्यत्सु सत्सु तं रावणं त्रिराहूय हरिं ध्यात्वा बालो लिंगं भुवि स्थापयामास ॥ २७ ॥ रावण एत्य स्थापितं लिंगं दृष्ट्वा बालं संताडय लिंगं उद्धर्तुमैच्छत् तदा भूश्चकंपे तच्चाचलमभूत् ॥ २८ ॥ तत्प्रभृति तल्लिंगं महाबलेश्वर इति संज्ञितं गोकर्णाकारं च जातं तेन क्षेत्रस्यापि गोकर्णमिति नामाभवत् ॥ २९ ॥ अयं क्षितौ कैलास एव यत्र सपरिवारः शिवः सदा जागर्ति अतस्तत्र देवर्षिसज्जनाः स्थिताः ॥३०॥ यत्र देवर्षिदैत्यरक्षोनृतिर्यग्भिरपि शंकरादिष्टवरो लब्धः इतोन्यच्छीघ्रपावनं न ॥३१॥ अज्ञानतः कृतापराधो वसिष्ठशापांते पूर्ववद्भूत्वा मैथुने कृते मरिष्यसीति तं हतब्राह्मणस्त्री शशाप ॥ ३३ ॥ अथ राजा शापांते पूर्ववद्भूत्वा राष्ट्रमेत्य दुःखितः सन् ब्राह्मणीशापं महिष्यै स्मरातुरायै शशंस ॥३४॥ ततः उभौ खिन्नौ तीर्थासक्तौ जातौ यदृच्छयोपगतं गौतमं दृष्ट्वा तस्मै सर्वं शशंसतुः ॥ ३५ ॥ गौतम आह राजन्मा भीः पापहरे कामदे

गोकर्णे विद्यमाने ब्रह्महत्या किं करिष्यति ॥ ३६ ॥ यत्र सर्वतोयानि तीर्थानि शिलाश्च लिंगानि तत्र दिव्ये लिंगतीर्थमये नृणां किं दुर्लभं ॥ ३७ ॥ तत्रैका चंडाली मृता मया दृष्टा तां कैलासं नेतुं शिवदूता आगताः ॥ ३८ ॥ मया पृष्टास्ते प्रोचुः भो गोतम पूर्वजन्मनीयं विप्र-दुहिता बाल्ये विधवाभून् ॥ ३९ ॥ विधिवशात्कामार्ता तन्वी युवसौंदर्य-मोहिता सा सुंदरमेकं वैश्यं जारत्वेन वृत्वा रह औपपत्यं सिषेवे ॥ ४० ॥ तल्लोकप्रसिद्धं जातं यतः पापं नाच्छाद्यते संबंधिनस्तां त्यक्त्वा प्रायश्चित्तं चेरुः ॥ ४१ ॥ ततो निःशंकं मदोद्धता पानासक्ता सा कामिनी वैश्येन रेमे ॥ ४२ ॥ एकदा प्रमत्ता सा मेषभ्रांत्या गोवत्सं निहत्य तच्छिरः शिक्ये निधायावशिष्टं मांसं पक्त्वा चखाद ॥ ४३ ॥ परेद्युर्गोशिरो दृष्ट्वा जारभीत्या भुवि निखाय शिव शिव व्याघ्रेण वत्सो हृत इति मृषा शुशोच ॥ ४४ ॥ ईदृक्पापानि कृत्वा प्रेत्य पूर्वैः सह दा-रुणं नरकं भुक्त्वा पापशेषादीदृशी जाता ॥ ४५ ॥ जन्मतो गलत्कुष्ठां-ध्यापि पितृभ्यां पालिता दैवात्तावपि मृतौ ततोऽनाथा सा शुशोच ॥ ४६ ॥ ततो दैवाद्यात्रिकैः सहात्रागता दुःखिता क्षुधिता चेयं शिव-रात्र्यां लोकानन्नं ययाचे ॥ ४७ ॥ जनैरन्नाभावात्तस्याः प्रसारितकरे बिल्वं त्यक्तं तत्तयावघ्राय्याभक्ष्यं मत्वोत्सृष्टं ॥ ४८ ॥ तल्लिंगे पतितं सा पूजा जाताऽन्हि सर्वत्र शिवकीर्तनं श्रुतं अनशनादुपवासो दुःखा-न्निशि जागरश्च जातः ॥ ४९ ॥ एवं सांगं व्रतं चीर्णं तेन सुनिर्मला भूत्वाद्यात्र मृता एतां द्रुतमानेतुं शिवेनाज्ञप्ताः स्मः ॥ ५० ॥ इत्युक्त्वा तैरमृतं सिक्त्वा तां विमाने निधाय कैलासं जग्मुः अबुद्धिपूर्वककर्मणोऽ त्रेदृग्गतिः ॥ ५१ ॥ विदुषस्त्वाधिकं फलं अतस्त्वं गच्छ मुच्यसे तच्छ्रुत्वा सभार्यो राजा गोकर्णं गत्वाशु मुक्तो बभूव ॥ ५२ ॥ ईदृशे सत्तमे सज्जनाश्रये गोकर्णे साधुजीवनः श्रीपादस्तस्थौ ॥ ५३ ॥ त्रीन् वर्षान् तत्रोषित्वा लोकानुद्धृत्य कृष्णातीरे कुरुपुरं गत्वा श्रीपादोऽदृश्यो-भूत् ॥ ५४ ॥ इति षष्ठाध्यायः ॥ ६ ॥

# अथ सप्तमोऽध्यायः

नामधारक उवाच । साधूनुद्धर्तुकामोऽसौ लीलाविहारी भगवान् कुतोऽदृश्योऽभूत् इदं श्रोतुं सादरोऽस्मि ॥ १ ॥ सिद्ध उवाच । अतींद्रियोऽपि स लीलया दृश्यो भूत्वावतारांतरप्रसंगेनादृश्योभूत्तच्छृणुष्व ॥ २ ॥ तत्र कृष्णातीरे वैदिकविप्रपत्नी दैवात् स्तब्धं हीनमतिं जडं कुपुत्रं प्रासूत ॥ ३ ॥ अष्टमेऽब्दे कृतोपनयनं गायत्र्युच्चारणासमर्थं तं ताडयंतं स्वपतिं निवार्य ब्राह्मणी प्राह ॥ ४ ॥ भो नाथायं जन्मतः पाषाणवज्जडः अतः खेदहेतुना ताडनेनालं अतःपरं ताडने कृतेऽहं प्राणांस्त्यक्ष्ये इति ॥ ५ ॥ सोपि मेषीगलस्तनवत्तं मत्वा स्त्रीवाचोंगीकृत्य तूष्णीं तस्थौ स ततः कियता कालेन मृतः ॥ ६ ॥ तत्र पुत्रसहिता माता याञ्चया जीवनमकरोत् तद्दृष्ट्वा विप्रा निर्भर्त्सयंति स्म ॥ ७ ॥ हे पंडितपुत्र तवैषा वृत्तिर्न रोचते इतो व्रजासून् वा त्यजेति तैरुक्तः स मात्रा सह मर्तुं कृष्णां विवेश ॥ ८ ॥ तं तथाविधं निषिध्य तीरवासी दयार्द्रः श्रीपाद आह ॥ ९ ॥ ब्रह्मन्साहसं मा कुरु यस्माद्ब्रह्महत्या दुर्वहाऽतोऽत्रैव प्राप्तकष्टसहनं वरं ॥ १० ॥ ब्राह्मण्युवाच कुपुत्रत्वकारणेन लोका मां धिक्कुर्वंति नेक्षंति चातः परं मया किं कार्यं ॥ ११ ॥ श्रीपाद उवाच हत्यया भाविजन्मनि लिप्यसेऽतो दैवादागतं दुःखं निस्तीर्य शिवार्चनं कुरु भवांतरे त्वं सुपुत्रा भविष्यसि ॥ १२ ॥ ब्राह्मण्युवाच भवता साधूक्तं तथैवाहं कुर्वे शिवार्चनं कस्मै फलदं जातं तद्वद ॥ १३ ॥ श्रीपाद उवाच पूर्वमुज्जयिन्यां शैवश्चंद्रसेनराजसखो मणिभद्रश्चिंतामणिमभीष्टदं शिववराल्लेभे ॥ १४ ॥ तमर्घादिनाऽलभ्यं ज्ञात्वा युद्धार्थमागतान्नृपाञ्ज्ञात्वाप्यैकाग्रेण प्रदोषे शिवमपूजयत् ॥ १५ ॥ शनिप्रदोषे शिवार्चकं मणिभद्रं तथाविधं नृपं च दृष्ट्वा गोपसुतास्तद्वत्स्वांगणेऽर्चनं चक्रुः ॥ पत्राद्यैर्लिंगकल्पनयाऽश्मानं पूजयतस्तान्गोप्यो निवार्य भोजनार्थं

स्वगृहन्निन्युः तत्रैकबालस्तस्थौ ॥ १७ ॥ तन्मातागत्य पूजासामग्रीं त्यक्त्वा तमुद्धृतवती तदाक्षिणी उन्मील्य भग्नां पूजां दृष्ट्वा शंभुपूजाभंगभयेन निर्विण्णो भूमौ पतितो मर्तुमुद्यतोऽभूत् ॥ १८ ॥ विश्वसाक्षीश्वरस्तद्भावं ज्ञात्वा शोभनं स्वं रूपमाविष्कृत्य बालमाश्वास्य वरं वरयेत्याह ॥ १९ ॥ बालोऽपि दिव्यरूपं तं नत्वा प्राह हे भुवनेश्वर मालात्र ते पूजा उत्सृष्टा तन्मंतुं क्षंतुं योग्योऽसि ॥ २० ॥ शिव उवाच भक्त्या त्वं मत्सायुज्यभागसि माता त्वज्ञानात्कृतं तस्या अयं नापराधः सापि मदर्चनविलोकनाद्विष्णुमाता भविता ॥ २१ ॥ इत्युक्त्वा शिवोऽतर्दधे तल्लिंगं भास्वदभूत् य आगता भूपास्ते प्राहुः पुण्यश्लोकराजहितार्थमत्र रात्रावप्यर्कस्तिष्ठति ॥ २२ ॥ ईदृशेन धन्येन नास्माभिर्योद्धव्यं इति निश्चित्य ते प्रेम्णा सर्वे तौ द्रष्टुं प्रापुः ॥ २३ ॥ ततः पूजां समाप्य प्रकाशकारणं विविच्य राजान्यैर्नृपैः सह तत्र गत्वा दिव्यलिंगावलोकनान्ननंद ॥ २४ ॥ गोपमुखात्सर्वं श्रुत्वा तुष्टा नृपा गोपाधिपत्यं धनं च तस्मै दत्वा मुदा स्वं स्वं स्थानं ययुः ॥ २५ ॥ सा माता प्रेत्य यशोदाख्या गोपी भूत्वा हरिं सुतं लेभे तस्माच्छिवार्चनात्तव तथा भूयात् ॥ २६ ॥ ब्राह्मण्युवाच दैवात्कृच्छ्रेण शिवे तुष्टे फलं भावि अधुनामुना कष्टेन कथमायुःकालो नेतव्यः भो दयाब्धे मातृत्वेन मां परिपालय ॥ २७ ॥ इति निष्कपटं सकरुणं तद्वाक्यं श्रुत्वा प्रीतो दयाब्धिः स ॐ ३ मित्युक्त्वा मूर्खपुत्रस्य शिरसि स्वपाणिं दधौ ॥ २८ ॥ स सहसा बृहस्पतिसमो वक्ता ज्ञाता च बभूव तं विनीतं मातृसेवायां नियोज्य प्राह हे मातरनेन दुःखं विस्मृत्येश्वरार्चनेनायुःक्षयं कुरु भाविजन्मनि मादृक्पुत्रस्ते भविष्यतीति ॥ २९ ॥ ३० ॥ अतिहृष्टा सापि विद्वन्मान्यपुत्रेण सह ग्रामं गत्वेश्वरमानर्च ॥ ३१ ॥ ततो भगवान् मादृङ् नान्यः अस्याः पुत्रो न भवेयं चेन्मद्वचो मिथ्या तस्मादहमेवावतीर्योक्तं सत्यं करिष्य इतीश्वरोऽजोऽपि मन्यते स्म ॥ ३२ ॥ कृतावतारसंकल्पोऽ-

पि कार्यानंत्याल्लीलाविग्रहं नात्यजत् तत्ताहृश्योऽपि भजतां कामदोऽस्ति ॥ ३३ ॥ नामधारक उवाच अपूर्णे कार्ये कथं संकल्पवान् पर्वलीलाविग्रहं परित्यज्यापि देहांतरेण कथं भक्तकामदोऽभूत्तद्वद ॥ ३४ ॥ सिद्ध उवाच अव्यये विश्वबीजे भगवति कार्यानंत्यात्संकल्पानंत्यं स भक्तानां प्रत्यक्षफलदोऽपि तत्र कलिमलांधानामदृश्योऽस्ति ॥ ३५ ॥ कश्चित्कुटुंबवान्द्विजो धीमांद्याद्रणिग्वृत्त्यान्वितोऽपि श्रीपादभक्तोऽभूत् ॥३६॥ व्यापारेऽधिलाभो भूयाच्चेल्लाभानुसारेण श्रीपादप्रीत्यर्थं ब्राह्मणान्भोजयिष्ये ॥ ३७ ॥ इति संकल्प्य व्यापारार्थे ययौ स भूरि धनं लेभे तदादाय संकल्पसिद्धये कुरुपुरं ययौ ॥ ३८ ॥ सायं मार्गे एकाकिनं यांतं तं दृष्ट्वा चोराः सुहृत्त्वेन तदनुगा भूत्वा तं विजने हन्युः ॥३९॥ तदैव तत्र सहसा शूलकमंडलुधारी श्रीपाद एत्य शितधारेण शूलेन चोरान् जघान ॥ ४०॥ एकस्तं शरणमागत्य प्राहाहं दुष्टबुद्ध्या नागतोऽस्मि मनसीदं विचार्य प्रभो यथेष्टं कुरु ॥४१॥ श्रीपादः सकरुणं तद्वचः श्रुत्वा तं निष्कपटं ज्ञात्वा विप्ररक्षार्थं तं योजयामास ॥४२॥ भस्ममंत्रितं जलसिक्तं तच्छिरः कबंधे कृत्वा तं सजीवं विधाय स सद्योऽतर्दधे ॥ ४३ ॥ स ब्राह्मणः सुप्तोत्थितवद्बुध्वा चोरान्मृतान्दृष्ट्वा हतशेषमुखात्सर्वं श्रुत्वा खिन्नोऽभूत् ॥ ४४ ॥ मत्कृते कष्टं कृत्वा भगवान् चोरगोचरो जातः सर्वदाराधितोऽपि दैवान्नायं मे गोचरो हा कष्टमित्युक्त्वा ॥ ४५ ॥ धनमादाय कुरुपुरं गत्वा चतुःसहस्रब्राह्मणभोजनमकरोत् ॥ ४६ ॥ ततो भगवत्प्रसादादुभयीं सिद्धिं गतः तत्र तस्मिन्नदृष्टेप्येवं कथा वृत्ताः तस्मिन्नदृश्येप्येवमाद्यास्तत्कथा जाताः ॥ ४७ ॥ स तत्र सतां प्रत्यक्षः मलदूषितानां न गोचरः स स्वरूपेणान्यत्रावतीर्णोऽपि इह कामदः ॥ ४८ ॥ श्रीपादाधिष्ठितस्थानवासिनां वेदयज्ञतपोदानाधिफलं लभेत यत्र कुत्रापि ये केचिच्छ्रीपादांबुजं स्मरंति तेभ्योपीष्टान्कामानलं ददाति ॥ ४९ ॥ इति सप्तमोऽध्यायः ॥ ७ ॥

# अथाष्टमोऽध्यायः

नामधारक उवाच भो ब्रह्मन् भगवान्कुत्रावतीर्य किं चकार मायाश्रितस्याप्रमेयस्येष्टप्रदं चरितं शुश्रुषवे मे ब्रूहि ॥१॥ सिद्ध उवाच दीनोद्धारायावतीर्णस्येश्वरस्यास्याल्पचेष्टितं वक्ष्ये यतस्तद्योगिदुर्विभाव्यं ॥२॥ या श्रीपादाज्ञया प्रदोषे शिवमपूजयत् सा प्रेत्योत्तरदेशे विमले विप्रकुले स्त्री जाता ॥ २ ॥ सुबुद्धिरूपशीललक्षणा संस्कारगुणयुक्तांबाख्या बभूव ॥३॥ तत्रैवानुरूपाय माधवशर्मणे गृह्योक्तविधिना दत्ता ॥४॥ सा पातिव्रत्येन छायेव पतिं भेजे ॥ ६ ॥ पूर्वसंस्काराद्भर्त्राज्ञया प्रदोषे शिवं च भेजे ॥६॥ तयोश्चक्रवाकवत्परस्पराश्रयो भावबंधः स्नेहोऽभूत् एवं तयोर्हर्षितयोः सतोरंबा गर्भं दधौ ॥ ७ ॥ सुदोहदचिन्हा सा तत्त्वज्ञानमाह माधवेनापि यथाकाले पुंसवनादिसंस्काराः कृताः ॥ ८ ॥ अनस्तंगतग्रहसूचितससिद्धिप्रव्रज्यायोगे समोष्णशीते प्रणवपाठेन सतोऽनुगृण्हन्भगवानाविरासीत् ॥ ९ ॥ तदा सर्वं शुभशंसि बभूव लोका ॐकारं श्रुत्वा विस्मिताः शोभनग्रहयोगयुतभावान्दृष्ट्वा हृष्टा गणका आहुः भो माधवेदं तव पुण्यफलं श्रीसिद्धयोस्य दास्यो भविष्यंति पादः स्पर्शवन्निधयोऽनुचराः ॥ १०–११ ॥ पतितपावनो जनोद्धर्तायं गृही न भविता अस्यानुग्रहाल्लोके वंद्यत्वं ॥ १२ ॥ इत्युक्त्वा पजितास्ते गृहं ययुः अद्भुतं जन्म श्रुत्वा लोका दर्शनार्थमाययुः॥१३॥ माधवस्तद्दृग्दोषभियैकांते तं संस्थाप्य बालबुद्ध्या मोहेन रक्षाविधिना तं प्रभुं हरिं ररक्ष ॥ १४ ॥ अयं नरो नरतापाघदैन्यहर्तेति हेतोर्नरहरिनाम प्रतिष्ठितं ॥ १५ ॥ बालस्यास्य क्षुधा मत्तो न शाम्यत्यतः पयस्विन्यजा धात्री वा मृग्येति मातृवचः श्रुत्वा बालः स्वकरस्पर्शमात्रेण मातृस्तनतो दुग्धमप्यदुहत् ॥ १६ ॥ तद्बालचेष्टितं दृष्टिदोषाभिया माता प्रसिद्धिं नानयदेवमन्यदाश्चर्यास्पदमपि ॥ १७ ॥ मायया बाल्यादियुक्तस्य तस्य साक्षा-

ब्रह्मरूपता कैरपि न ज्ञाता ॥ १८ ॥ त्रैवार्षिकोऽपि स लीलया मूक इवाभूत् तदा खिन्नांबा नानोपायानकरोत्॥१९॥ रविवारेऽश्वत्थपत्रभोजनेन कुलदेव्यर्चनबालोक्तिपाठनादिसूपायैश्चापि स नावदत् ॥ २० ॥ वक्तुं श्रोतुं चायं नाज्ञः मूकश्चेदन्योक्तिं श्रुत्वा कथमोंकारं ब्रूत इति पितरौ मोहं प्रापतुः ॥ २१ ॥ अयं मूक आवयोः श्रमेणालं शनिप्रदोषशिवपूजायाः किमिदं फलं कथमयं संस्कार्य इति ॥ २२ ॥ पित्रोर्वचः श्रुत्वा मौञ्ज्यां बद्धायां वक्ष्यामीति संज्ञया प्रदर्श्य तन्मुदे लोहं स्वर्णतां निन्ये ॥ २३ ॥ तदा जातविश्वासः पिता विप्रानाहूय संभारान्संभृत्य सुलग्ने तमुपानयत् ॥ २४ ॥ व्रतस्वस्त्ययनसंस्कारोंबया सह भुक्त्वोपनीतः स गुरूपदिष्टां सावित्रीमाददे ॥ २५ ॥ स्वधर्मानंगीकृत्य मातरं भिक्षां याचित्वा त्रयीं जगौ भगवतीद न चित्रं शास्त्रयोनित्वात् ॥ २६ ॥ पितरौ प्रणम्य प्राह देहस्यानित्यत्वाद्विरक्तोऽहं प्रव्रजाम्यनुज्ञा देया ॥२७॥ धीमतो मम प्रत्यवायारंभनाशश्च न इयं धीः पूर्वसंस्कारजाक्षय्या वामात्मजा भविष्यंति ॥ २८ ॥ तदा विषीदंती तन्मायामोहिता माता प्राह एक एव त्वं सुतो मां विहाय कथं यास्यसि ॥ २९ ॥ ब्रह्मचर्यादिक्रमेण संन्यासो न्याय्यः यतस्तत्त्वज्ञानं मनोभंगो वासनाक्षयश्च ॥ ३० ॥ श्रीगुरुरुवाच जैव्ह्यौपस्थ्यसुखासक्तानामयं क्रमो न मादृशः पूर्वसंस्कारविरक्तस्य दुःखयोनिभिर्विषयैः किं ॥ ३१ ॥ अतः संन्यस्य श्रुतश्रोतव्यनिर्वेदं यास्ये ततः संसिद्धिः सुलभा हि धीमतोऽतःपरं कार्यं न ॥३२॥ कलौ शतायुरपि स्वापादर्धं हीयते शिष्टं पराधीनतया बाल्ययौवनवृद्धत्वैश्च हीयते ॥ ३३ ॥ संपत्तीष्टयुक्संसारः स्वप्नवन्मायाकल्पितः तारुण्यं पुष्पवत् आयुर्विद्युद्वातः कुतो धैर्यं ॥ ३४ ॥ कालो भ्रूणान् शिशून् यूनो वृद्धानार्तान्सुखस्थान्मूढान्प्राज्ञान्देवांश्चापि ग्रसति ॥ ३५ ॥ यदर्थे ममता तद्धि स्ववंचनार्थं त्वगावृतं मांसास्थिरक्तमयं वपुर्जलबुद्बुदवत् ॥ ३६ ॥ भस्मविष्ठाकीटरूपपरिणामं तंनानुगं किमुतानर्थहेतवो

भार्याद्याः ॥ ३७ ॥ देहो जडः परिच्छिन्नः जीवस्तु सर्वगश्चिदंशत्वादजो-ऽव्ययो ध्रुवः दुःखादिसंबंधोऽस्याज्ञानकल्पितः ॥ ३८ ॥ शाब्दपरब्रह्मज्ञ-सद्गुरोः प्रसादाज्ज्ञेयज्ञानास्त्रेणाज्ञानगहनं छित्वा पुमान्स्वस्थो भवेत् ॥३९॥ य उत्तमं ज्ञानपात्रं ब्रह्मजन्म लब्ध्वात्मनः श्रेयो नाचरति तेनात्मा वंचितः ॥४०॥ तस्माद्विघ्नं मा कुरु ते पुत्रो भविष्यति मद्ध्यानाद्भवाब्धिं तरिष्यसि भो मातस्ते नमः ॥ ४१ ॥ इत्युक्त्वा दिव्यस्वरूपं दर्शयामास माता ज्ञानदृष्ट्या तद्दृष्ट्वा पूर्वजन्मस्मरणेनाह ॥४२॥ हे देव पूर्वजन्मनि कुपुत्रया मर्तुकामया मया यो दृष्टः श्रीपादस्त्वं भो भगवन् ते नमः ॥४३॥ ब्रह्मापि ते गुणरूपाणि न वेद मोहिताहं मानुषी कथं जाने यदद्य ज्ञानं दत्तं तद्दिष्ट्या ॥ ४४ ॥ हे अज यत्कुक्षौ ब्रह्मांडाः स त्वं मम कुक्षिज इति लोके विडंबनं अस्माकमुभयं कुलं पावितं ॥ ४५ ॥ भो सत्य-संकल्प ते विघ्नो मास्तु मयीदं रूपं स्थिरीकुरु यावत्पुत्रो भविष्यति तावत्तिष्ठ ॥ ४५ ॥ भगवान् तथेत्युक्त्वा स्थितः मातापितृभ्यामीश-बुद्ध्यान्वहं पूजितः तत्र विदुषोऽपि शिष्यान् शिक्षितवान् नेदं चित्रं यतोऽसौ वेदवाक् ॥ ४७ ॥ अंबापि गर्भिणी भूत्वा पुत्रावसूत तत-स्त्रिमासांतेंबां प्राह ॥ ४८॥ भो मातः द्वौ जातौ द्वौ पुत्रौ पुत्री च भवि-ष्यंति मेऽनुज्ञां देहीति ततस्तदाज्ञप्तः प्रचक्रमे ॥ ४९ ॥ शिरस्त्राणछन्न-मूर्धा पादुकांचितपादः काषायवस्त्रावृतकोमलगात्रः कौपिनयुग्दंडधरः स सहासं प्रतस्थे ॥ ५० ॥ बालबुद्ध्या कृतापराधान्क्षमस्वेति भाषिणं मातरं ते त्रिंशदब्दैः पुनर्दर्शनमस्तु स्मृतिमात्रात्सान्निध्यं चेत्युक्त्वा सर्वान्परावर्त्य ययौ ॥ ५१ ॥ अयमीशो न मर्त्योऽस्मै नताः स्म एवं साधुस्तुतो योगिमुनीशोपि बदर्याश्रमं गच्छन्मुमुक्षुवेषेण काशीं प्राप ॥ ५२ ॥ तत्र वज्रासनस्थः केवलकुंभकेन खेचर्योन्मन्या तपोऽतपत् ॥ ५३ ॥ भागिरथ्यां स्नात्वा त्रिकालं साष्टांगयोगं युंजंतं सिद्धासनस्थं केवलकुंभकेन खेचरीमुद्रया नादानुसंधानेनान्वितं समाहितं तं प्रेक्ष्य

परमेश्वरोऽयमिति बुद्ध्या साष्टांगं प्रणम्य मुनयः प्राहुः ॥ ५४ ॥ भवान्परमेश्वरो न मर्त्यः सद्धर्मगोपनायावतीर्णोऽसि प्राक् शंकराचार्यैः स्थापितः संन्यासमार्गो लुप्तप्रायस्तं कलौ विस्तारयेति ॥ ५५ ॥ कष्टजन्यनश्वरविषयसुखासक्तैरज्ञातात्मसौख्यैः कलिहतचित्तैरयं मार्ग उच्छिन्नः ॥ ५६ ॥ भीरुभयंकरेऽपि सुलभक्षेमेऽस्मिन्कलौ संन्यासमार्गेण नोऽध्यात्मपरमानंदं दातुं योग्योऽसि ॥ ५७ ॥ इति तदुक्तमंगीकृत्य कृष्णसरस्वतीं गुरुत्वेन वृत्वा स नृसिंहसरस्वतीसंज्ञो यतिरभूत् ॥ ५८ ॥ सूत्रशिखासर्वैषणान्यासं कृत्वा निःसंकल्पो निर्ममोऽद्वंद्वः संन्यासी अभूत् ॥५९ ॥ स जगद्गुरुर्मुमुक्षुभ्यः संन्यासपद्धतिमाह प्रायश्चित्तमष्टश्राद्धानि विरजाहोमो गायत्रीप्रवेश एषणात्यागो भूरादिसंन्यासः ॥ ६० ॥ शिखासूत्रन्यासो गुरूपसत्तिः प्रज्ञानं ब्रह्माहं ब्रह्मास्मि तत्त्वमसि अयमात्मा ब्रह्मेत्यर्थतो महावाक्यग्रहणं ॥ ६१ ॥ पंचीकरणविचारो योगपट्टः पर्यंकाशौचं स्वधर्मविचार एवं संन्यासः श्रेयःप्रदः ॥ ६२ ॥ एवं दैवीसंपत्तियुग्वशी संन्याशी शुक्लकृष्णगतिज्ञो योगाभ्यासतः परात्मदर्शनाज्जीवन्मुच्येत ब्रह्मीभूतस्य गतप्राणदेहः सति संभवे जले क्षेप्योऽन्यथा भूमौ वा निखेयः उदकदानादि नैव कार्यं इत्युक्त्वा संन्यासाधिकारिविचारेण संन्यासं ग्राहयामास ॥ ६४ ॥ ततो मोक्षदः संन्यासः प्रवृत्तः काश्यां पुरुषार्थदान्वेदार्थान्प्रकाश्य ॥ ६५ ॥ मेरुं प्रदक्षिणीकृत्य स्वयं पवित्रोऽपि तीर्थानि स्नात्वा शिष्यैः सह गंगासागरं प्राप ॥ ६६ ॥ बाह्यविषयान्बहिःकारयित्वा भ्रुवोर्मध्ये दृशं नासांतरचारिणौ प्राणापानौ च समौ कारयित्वा योगमादिशत् ॥ ६७ ॥ ततः प्रयाग एत्य माधवविप्राय तत्त्वोपदेशं संन्यासं च दत्त्वा मातरं द्रष्टुं प्राप्तः ॥६८ ॥ नामधारक उवाच यत्प्रसादान्नरा अद्वैतामृतवर्षिणो मुक्ता जातास्तस्याचार्येण किं कृष्णसरस्वती वा कोऽयं ॥ ६९ ॥ सिद्ध उवाच रामकृष्णादिभिर्वसिष्ठसांदीपन्यादिगुरवो यथा

वृतास्तथानेन गुरुः कृतः ॥ ७० ॥ स्वीकृतमानुष्यवेषानुसरेण न वर्तेत चेत्तदनुवर्तितया लोके संकरो भवेत् ॥७१॥ यदीक्षणवशान्माया जगत्सूते तेन स न लिप्यते उदासीनवत् स्थितस्यासक्तस्य को लेपः ॥ ७२ ॥ प्रथमं शिवस्य विष्णुः शिष्यः विष्णोर्ब्रह्मा तस्य वसिष्ठः तस्य शक्तिस्तस्य पराशरः तस्य व्यासः तस्य शुकः॥ ७३ ॥ तस्य गौडपादः तस्य गोविंदस्तस्य श्रीशंकरः तस्य विश्वरूपः तस्य बोधज्ञानं तस्य सिंहगिरिः तस्येश्वरः ॥७४॥ तस्य नृसिंहः तस्य विद्यातीर्थं ततः शिवतीर्थं तस्य भागीरथीतीर्थं तस्य विद्यारण्यं ॥ ७५ ॥ तस्य मलयानंदः तस्य देवतीर्थं तस्य यादवेंद्रसरस्वती ॥ ७६ ॥ तस्यायं कृष्णानंदसरस्वती अयं पारंपर्योत्तमो ज्ञानी वृद्धश्चात एव गुरुत्वेन भगवता वृत इति ॥ ७७ ॥ इत्यष्टमोऽध्यायः ॥

---

# अथ नवमोऽध्यायः

नामधारक उवाच भगवान्संन्यासी भूत्वा कुतो जन्मभुवं प्राप्तः अस्य के शिष्याः ततः किमकरोत्तद्वद ॥ १ ॥ सिद्ध उवाच प्रतिज्ञातानुसारी भगवान्महीं प्रदक्षिणीकृत्य मातरं द्रष्टुं प्राप्तः यतो यतेरपि माता वंद्या ॥ २ ॥ बालः कृष्णः उपेंद्रः ज्ञानज्योतिः सदानंदो माधवोऽहं सिद्धश्च ॥ ३ ॥ एते सरस्वत्यंतसंज्ञा अन्येऽपि बहवस्तैः सह जन्मभूमिं प्राप्तः ॥ ४ ॥ पितरौ भ्रातॄन्भगिनीमितरांश्च प्रेक्ष्य विश्वरूपैः प्रतिग्रहं पूजां स्वीचकार ॥ ५॥ मातार्चितं तं दृष्ट्वा पूर्वस्मृत्या पतिं प्राह मर्तुमुद्युक्तां कुपुत्रां मां योऽरक्षत्सोऽयं श्रीपादः ॥ ६ ॥ मादृक् पुत्रो भवेदिति प्रतिज्ञा कृता तत्सिद्धये स्वतुल्यस्यान्यस्याभावात्स्वयमेव मे पुत्रोऽभूत् अद्वितीयत्वात्सत्यसंकल्पत्वाद्भक्तत्वात्सत्याच्च ॥ ७ ॥ भो

श्रीपाद त्वं न मे पुत्रः लोकानुसारी वर्तसे चेन्मातृसंबंधं स्मृत्वा नो भवार्णवादुद्धर ॥ ८ ॥ कालकर्मदैवस्वभावजीवभूतशरीरप्राणाहंकारषोडशविकारलिंगरूपोऽसौ प्रवाहस्तव माया तां निवारय ॥ ९ ॥ श्रीगुरुरुवाच यत्कुले संन्यासी जातस्तत्पित्रोः कुलैकविंशतिस्तरति तरिष्यति च पूर्वं दुर्गतिस्थाप्यमृतं गच्छेत् ॥ १० ॥ भो मातर्भवत्कुलेऽयं संन्यासी जातः अथ किं ब्रुवे संपत्प्रजान्वितानां वो मुक्तिः काश्यां भविष्यति ॥ ११ ॥ भगिन्युवाच इतःपरं का मे गतिः भवाब्धेर्बिभेमि यतस्त्वं सद्गुरुः ततः पापिष्ठां मामुद्धर ॥ १२ ॥ श्रीगुरुरुवाच स्त्रियः पतिरेव गतिः नान्या तस्मात्पातिव्रत्याद्भवाब्धेः पारं यास्यसि ॥ १३ ॥ जन्मांतरे दंपत्योर्वैरमुत्पादितं गौश्च लत्तया हतातस्ते पतिर्यतिर्भविष्यति त्वदंगे कुष्ठं चेति ॥ १४ ॥ ततः खिन्नां तां प्राह ते वार्धक्ये उभयमस्तु मद्दर्शनात्तदा कुष्ठं गमिष्यति ॥ १५ ॥ ततो या गौतमेन गोहत्यानिवृत्तये आनीता तां गौतमीं शिष्यैः सह गत्वा ॥१६॥ स्नात्वा माधवशर्मणे सद्वृत्तिं दत्वाग्रतोऽगमत् ॥ १७ ॥ तत्र गले शिलां बध्वा मर्तुमुद्युक्तं दृष्ट्वा कृपया ॥ १८ ॥ शूलरोगार्तं दीनं दयनीयं तं तीरमानीय प्राह ब्रह्मन्कुतोऽत्र साहसं करोषि ॥ १९ ॥ विप्र उवाच शूलेन मरिष्ये मां पृष्ट्वा किं करिष्यासि अयमन्नवैरी सदा दुःसहो रोगोऽस्त्यतः कथं स्थेयं ॥ २० ॥ उत्पत्तिः स्थितिर्लयः प्राणो जीवनमौषधं चान्नमेव तद्विरोधे मरणं वरं ॥ २१ ॥ जन्मांतरेऽत्र वान्नं न दत्तं अणुमात्रं पुण्यं न कृतं गोविप्रग्रासो हृतो गुरुः पितरौ वा निंदितौ ॥ ॥२२॥ देवो नार्चितः अतिथिविप्रा द्वाराद्द्रापिताः धिक्कृता वा पितरौ त्यक्त्वा स्त्रिया सह वा मिष्टान्नं भुक्तं ॥२३॥ एषामन्यतमस्येदं फलं मया परोपकारो न कृतः केवलं भूभारोऽस्मि व्यर्थं मम जन्म ॥ २४ ॥ श्रीगुरुरुवाच हे विप्र मा भीः अन्नपथ्यं दिव्यौषधं ते दास्ये इति गुरौ वदति सति कश्चिद्यवनाधीनो दीनो हि कांचीवासी कौंडिण्यगोत्रः सायं-

देवाख्यविप्र आगतः प्रणतं तं गुरुराह ॥ २५ ॥ २६ ॥ व्यथितोऽयं विप्रो मर्तुमिच्छत्यस्मै दिव्यौषधं दद्मि त्वमपि पथ्यं स्वाद्वन्नं देहि ॥२७॥ सायंदेव उवाच मासेन पक्षेण वा यदाल्पान्नं भुंक्ते तदात्यंतिकी व्यथामनुभवतीति तस्मादस्मा अन्नदानाद्धत्या भवेदिति भाति ॥ २८ ॥ श्रीगुरुरुवाच अहं भिषक्तमोस्म्यतः शंकां मा कार्षीः अपूपयुक्तं माषान्नं पायसं च पथ्यं तद्देहि चिकित्सां जाने ॥ २९ ॥ सायंदेव उवाच तथा कुर्वे सशिष्यो भवानपि मे गृहे भिक्षां स्वीकरोत्वहं ते शिष्यो भवामि प्रपन्नं मां शाधि ॥ ३० ॥ तत उदारां प्रार्थनां स्वीकृतवंतं सशिष्यं गुरुं निजगृहं निन्ये ॥ ३१ ॥ चित्रिते रंगवल्याद्यलंकृते गेहे शोभनासनेषु यथायथ तानुपवेश्य देवताबुद्धयापूजयन् ॥ ३२ ॥ पुंसूक्तरुद्रसूक्तैर्गुरुं संपूज्य नीराज्य श्रद्धया गीतादिभिस्तोषयामास ॥ ३३ ॥ मुक्तिदं पापहरं श्रीगुरुपादोदकं संपूज्य स्वजनैः सह पीत्वा शिष्यांश्चापूजयन् ॥ ३४ ॥ चतुर्विधं स्वाद्वन्नं भक्त्यादरेण च प्रकामं सर्वेभ्यो ददौ ॥३५॥ यद्भुक्ताः संसाररुजं घ्नंति तस्य गुरोः सन्निधौ भुक्त्वा रुग्णोऽपि द्विजोऽनामयं भेजे नेदं चित्रं ॥ ३६ ॥ स विप्रोऽसारसंसारान्निर्विण्णः क्षणाद्गुरुदर्शनादुदासीनो भूत्वाच्युतमभजत् ॥ ३७ ॥ सायंदेवो भुक्तान् तान् मुखवासादिभिस्तोषयित्वा पादसेवनपूर्वकं गुरुमाह ॥ ३८ ॥ भवच्चरणवंदनान्मे जन्म कर्म च सफलं जातं भवदनुग्रहात्पितरोऽपि मुक्ता अतः कृतार्थोऽस्मि ॥ ३९ ॥ गंगा पापं विधुस्तापं कल्पद्रुर्दैन्यं च हरतु वायुः कार्पासमिव ते दर्शनं तत्त्रयं हरति ॥ ४० ॥ भवान्परमात्माधोक्षजोऽमलः साक्षी सर्वांतरोऽपि साधूंस्त्रातुं नररूपेणावतीर्णोस्ति वस्तुतो भगवानजोऽव्ययश्च ॥४१॥ श्रद्धान्वितं तवामलं दास्यं मह्यं कुलाय च देहि कश्चिदाधिरस्ति तं निशामय ॥ ४२ ॥ यदधीनोऽहं स हिंस्रो यवनः प्रत्यब्दं विप्रं घातयति तदर्थमेवाद्य मामाव्हयतीति श्रुतं ॥ ४३ ॥ श्रीगुरुरुवाच मा भीः क्रूरमपि यवनं गच्छ तेनार्चितस्त्वं मुदा पुनरेष्यसि

तावत्तिष्ठामि मा शुचः ।। ४४ ।। इति श्रुत्वा स निःशंकं यवनं ययौ तदा विप्रः शस्त्रैश्छिनत्तीति भ्रांतः ।। ४५ ।। वस्त्रभूषार्थैस्तं तुष्ट्वा प्राह हे द्विज यथासुखं गच्छेति स ततो गताधिस्तुष्टः श्रीगुरुं प्राप ।।४६।। सर्पो गरुडबालं भक्षयेत्किं गजो वा सिंहपोतं भक्षयेत्किं गुरुभक्तं द्रष्टुमतः कोपि न क्षमः अल्पको यवनः किमुत ।। ४७ ।। आगतं सायंदेवं श्रीगुरुराह त्वं दासोऽसीष्टं प्राप्स्यसे षोडशवर्षैर्मे दर्शनं भवेदित्युक्त्वा तदनुज्ञातो भगवान्वैद्यनाथं गत्वांतर्दधे ।। ४८ एवं भक्तिवृद्ध्यर्थं ईदृश्यो लीलाः कृताः लोकाः कथमपि मां भजंत्विति भगवदाशयः ।। ४९ ।। लोके प्रत्युपकारं वीक्ष्य लौकिकानंदजनकं चमत्कारमकरोत् ।। ५० ।। तेन हेतुना लोका भगवंतं भजंति ततो मुमुक्षवो भवंति ।। ५१ ।। ततो वैराग्याभ्यासाभ्यां भगवंतमुपासते ततो भगवत्प्रसादात् ।। ५२ ।। महावाक्येन परात्मैक्यज्ञानं लब्ध्वा नष्टाविद्यास्ते तत्संस्थां ध्रुवां शांतिं यांति ।। ५३ ।। ततस्तेन प्रसन्नाः प्रशांता निर्बंधा निर्द्वंद्वाः स्वात्मारामा भूत्वा जडोन्मत्तपिशाचवच्चरंति ।। ५४ ।। सद्गुरोः स्पर्शनकीर्तनेक्षणानामयं महिमा यो यत्र स्नेहाद्द्वेषाद्भयाद्वाऽचलं मनो धत्ते ।। ५५ ।। स पेशस्कृद्ध्यानात्कीटवत्सारूप्यमेति एते भगवन्मार्गणोपायाः सुलभाः ।। ५६ ।। असौ पुरुषैर्बुद्ध्यादिगुणहेतुभिर्मृग्यो नानुमानैः अत्रात्मैवात्मगुरुः ।। ५७ ।। नामधारक उवाच तेजस्वी भक्तवत्सलो भगवान्कुतोऽतर्दधे तदा शिष्याः क्व गताः ।। ५८ ।। सिद्ध उवाच बहुशिष्योपाधिं ज्ञात्वा रहः स्थेयमिति मत्वा शिष्यानाह ।। ५९ ।। संस्कारैर्द्विजो भूत्वा ब्रह्मचारी त्रयीं पठन् द्वादशाब्दं सूत्रमेखलाजिनदंडधृक् ।। ६० ।। सायं प्रातः स्वकर्माग्निकार्यं च कुर्वन् भिक्षां चरन् भक्त्या गुरुं भजन् दिवाऽस्वपन् याचितां भिक्षां गुरवेर्पयन् ।। ६१ ।। तद्दत्तभुगेवं लब्धपरविद्यो गुरवे दक्षिणां दत्वा समावर्तनं कुर्यात् अनाश्रमी प्रत्यवायी भवत्यतः ।। ६२ ।। भार्यामुद्वाह्य गृही गृह्यं परिचरेत् वेदशास्त्रधर्मज्ञः

पोष्यभृद्यज्ञकृत् ॥६३॥ पुत्राय सर्वं दत्वा भार्यया वनं गत्वा त्यक्तग्राम्य-
विषयो वशी अकृष्टपच्याशी यावच्छुद्धि वसेन् ॥ ६४ ॥ भार्यांन्नयाऽऽ
त्मन्यग्नीन्समारोप्य यतिधर्मतो निर्ममः संन्यसेन् विरक्तस्य न क्रमः
॥ ६५ ॥ त्यक्तसूत्रशिखैषणः संन्यासी वशी जपभिक्षाटनध्यानशौचा-
र्चनरतः ॥ ६६ ॥ स्त्रीकथायानखट्वाऽस्पृक् त्यक्ताहःस्वाप आत्मदृक्
वेण्वलावुदारुमृन्मयपात्रः दंडी दिवा सकृद्भुक् ॥ ६७ ॥ वर्षा ऋते
तीर्थान्यटन् त्र्यहमेकत्र च वसन् स्थिरचित्तः क्वापि तिष्ठन् अशक्तो हरिं
ध्यायन्महाक्षेत्रे वसेत् ॥ ६८–६९ ॥ एवं स्वाश्रमोचितं कार्यमन्यथा
पातः इत्युक्त्वान्यान् गृहाय प्रेरयित्वा यतीन्प्राह ॥ ७० ॥ काशी प्रयागो
गया श्रीरंगः पुरुषोत्तमः श्रीशैलो नैमिषारण्यं कुरुक्षेत्रं वदर्याश्रमः ॥७१॥
गोकर्णः कांच्ययोध्या गोकुलं मथुरा द्वारिका मायावंतिका करवीरं॥७२॥
गंधर्वपुरं देवकन्यागुहाश्रमः सेतुबंध इत्यादिक्षेत्राणि गंगायमुनासरस्वती-
विपाट्मरुद्विधावितस्ताचंद्रभागासरस्वती ॥७३॥७४॥ रेवागोदामरजा-
सरयूभीमाकृष्णामलापहा ॥ ७५ ॥ कावेरीप्रवरातुंगाक्षिप्रातापिबोदिका-
चर्मण्वतीगंडकीत्याद्या नद्यः गुरुचारान्महानद्यो गंगास्नानफलदाः ॥७६॥
॥ ७७॥ अत्र सर्वत्र पुष्करादिषु च विधिवत्स्नानादि कार्यं वर्षासु यद्दिने
नवांबु तदा ता रजस्वलाः तीरस्थैर्विना दशाहं न सेव्याः ॥ ७८ ॥
मुख्यास्त्र्यहं वापीकूपाद्या अहोरात्रं च न सेव्याः एवं कृत्वा सर्वैः श्रीशैले
बहुधान्येऽब्दे आगंतव्यं अहमप्येष्यामीति ॥ ७९॥ तान्यात्रायै प्रेरयामास
तेपि जग्मुः अहमेक एव सेवार्थी पादाब्जभ्रमरोऽभवं॥८०॥ यद्वर्जुनाभ्यां
यज्ज्ञानं योगश्चोपदिष्टस्तावेव मह्यं कृपयोपादिशत् हे विनीत तौ ते
वक्ष्ये इत्युक्त्वोपादिशन् याभ्यां स्वानंदः पुमान्वैष्णवं पदं याति ॥ ८१॥
॥ ८२ ॥ इति चूर्णिकायां नवमोऽध्यायः ॥

---

# अथ दशमोऽध्यायः

नामधारक उवाच भगवान् शिष्यान्यात्रायै प्रेरयित्वा स्वयं कुह्रावसत्तच्छ्रोतुमिच्छामि ।। १ ।। सिद्ध उवाच संवत्सरं वैद्यनाथसमीपं उवास अहमपि सेवार्थी अभवं ।। २ ।। तत्रैको मंदो विप्र एत्य नत्वा गुरुं प्राह मया सिद्धये बहु कष्टं कृतं सिद्धिस्तादृशो गुरुश्च न लब्धोऽतएव त्वां प्रपद्ये मोक्षोपायं मे उपादिश ।। ३–४ ।। श्रीगुरुरुवाच केन ते सिद्ध्युपाय उपदिष्टः गुरुं विना कथं कष्टं कृतमिति ।। ५ ।। विप्र आह कश्चिद्गुरुर्मयाश्रितः स चंडः सेवार्थी मां पीडयामास ततो मया त्यक्तः ।। ६ ।। श्रीगुरुरुवाच हंत गच्छ त्वयाऽसाधु कृतं त्वां धिक् गुरुद्रोहिणो मुखावलोकनमपि न भद्राय ।। ७ ।। प्रणामसेवाप्रश्नपराङ्मुखे कुतो गुरुकृपालेशः तदन्यस्मिन्नेव प्रसादः ।। ८ ।। द्विज उवाच हे प्रभो गुरुः कथं ज्ञेयः कथं वा सेव्यो वदाज्ञानाद्गुरुद्रोहः कृतोऽतो मामुद्धर ।। ९ ।। श्रीगुरुरुवाच साक्षाद्ब्रह्मविष्णुशिवरूपो गुरुर्निरुपमः स त्वादृशैरंधैर्दुर्ज्ञेयस्तद्वत्तत्सेवापि ।।१०।। एतदर्थमितिहासं शृणु द्वापारे धौम्यो मुनिरासीत्तस्य बैदारुणोपमन्युसंज्ञास्तत्परा सेवाधर्मज्ञास्त्रयः शिष्याः तेषां भावं परीक्षितुं दयालुर्गुरुराह ।। ११–१२ ।। शालेये जलाभावात्सस्यं शुष्येत्तस्मात्कतमोऽपि गत्वा जलमानयतु ।। १३ ।। तच्छ्रुत्वारुणो द्रुतं गत्वा पल्वलाज्जलं क्षेत्रसमीपमानयत् ।। १४ ।। वारिवारणेन क्षेत्रगतोऽपि प्रवाहोऽन्यत्रागात् ।। १५ ।। तत्र न्यस्तोऽपि पाषाणचयः स्थातुं न शशाक सोमन्यत क्षेत्रे जलाभावे गुरुर्मां धिक्करिष्यति ।। १६ ।। अत्र गुर्वर्थं मर्तव्यमिति मत्वोभयत्र देहं निधायोपरिष्टाद्गतेन जलप्रवाहेण क्षेत्रमपूरयत् ।। १७ ।। धौम्य एत्य जलपूर्णं क्षेत्रं वीक्ष्य हे वत्सा ३ इत्याव्हयत् ।। १८ ।। श्रुत्वापि क्लिन्नः स प्रत्युत्तरं दातुमशक्योऽसौ किंचिद्ध्वनिं चक्रे तदा तत्रागत्य तं दृष्ट्वा ।। १९।। कृपयोत्थाप्य भक्ति

ज्ञात्वा प्रसन्नो गुरुस्तस्मै स्वसाम्यं ददौ ॥ २० ॥ विद्याविनयसंपन्नः स गुरुं तुष्ट्वानुज्ञातो गृहं गतो लोके पूज्योऽभवत् ॥ २१ ॥ गुरुस्ततो वैदमाह सर्वतः क्षेत्रं संरक्ष्य यत्नात्सर्वं धान्यं समानयेति ॥ २२ ॥ स तथेति गत्वा पशुपक्ष्यादिनिवारणपूर्वकं रक्षां कृत्वा धान्यराशिं कृत्वा गुरुमेत्य ॥ २३ ॥ प्राह धान्यमानेतुं सर्षभं शकटं भवान्ददात्विति ॥ २४ ॥ गुरुर्लुलायेन युक्तं शकटं ददौ तं नीत्वार्धमार्गं शालीनाहरत् ॥ २५ ॥ तत्र पंके शकटः संलग्नः स तदा स्वयं स्वकंठे युगमयोजयत् ॥ २६ ॥ तदा भारातिरेकतः समहिषः स पपात तत्र सहसा यदृच्छया धौम्यः प्राप ॥ २७ ॥ घोरं तत्कर्म प्रेक्ष्य तं मोचयित्वा प्रसन्नो वरं ददौ तेनेहामुत्र च शिष्यः कृतार्थोऽभूत् ॥२८॥ अथोपमन्युमाह गाश्चारयेति स स्वल्पभुगपि तथाकरोत् क्षुधितः स वने ॥ २९ ॥ विप्रगृहान्दृष्ट्वान्नयाञ्चयात्मानं पुपोष त्वं कथं पुष्ट इति गुरुणोक्तः तन्न्यवेदयत् ॥ ३० ॥ गुरुराह सा भिक्षा मे देयेति स तथेत्युक्त्वा प्रत्यहं याचितकं गुरवे दत्वा पुनर्याचितान्नं भुक्त्वा गा अरक्षत् तदपि ज्ञात्वा ॥ ३१ ॥ गुरुराह द्विर्याचितां भिक्षां मे देहीति शिष्योऽपि तथाकरोत् ॥ ३२ ॥ वत्सपीतावशेषकं गलितं दुग्धं पीत्वा गा अरक्षत् ॥ ३३ ॥ तदपि ज्ञात्वा धीभ्रंशभिया गुरुणा वारितः ततः सोर्कक्षीरमनुच्छिष्टं ज्ञात्वा पातुं दधौ तदक्ष्णोरपतत् ॥ ३४ ॥ सोंधवद्गर्तेऽपतत् गावो गृहं ययुः गुरुस्तमन्वेष्य तादृशं दृष्ट्वा तं प्राहाश्विनौ स्तुहीति ॥ ३५ ॥ सोऽश्विस्तवाद्दृष्टिं प्राप गुरुरपि कृपां चक्रे ततः स कृतकृत्योऽभवत् ॥ ३६ ॥ तच्छिष्या अपि तत्तुल्या अभवन् अस्योत्तंकाख्यशिष्यः सत्रेऽहीनदहत् ॥ ३७ ॥ जनमेजयादिष्टः स्वर्गादिंद्रमानयत् अयं गुरुप्रसादस्तत्तोषात्प्राप्यो नान्यथा ॥ ३८ ॥ अतः सर्वभावेन तमेव शरणं गच्छ तत्प्रसादाच्छांतिर्दुर्लभोपि मोक्षः सुलभः ॥ ३९ ॥ विप्र उवाच भिन्नधातुपात्रादिसंधिर्युज्यते तथा भिन्नं मौक्तिकं न संधीयते तथैव हृदयं मया

गुरोर्हृदयं भिन्नं अतो न यास्ये तवाग्रतो दोषापनुत्यै प्राणांस्त्यक्ष्ये ॥ ४०॥ इति तन्निश्चयं ज्ञात्वानुतापदग्धाशुभस्य तस्य मूर्ध्नि करं निधाय स्वगुरुं स्मरेति भगवानाह ॥ ४१ ॥ स च स्वगुरुं स्मृत्वा तत्स्वरूपमिव भगवंतं दृष्ट्वा गलत्प्रेमाश्रुर्मुदा तुष्टाव ॥ ४२ ॥ प्रणतं तं श्रीगुरुराह यथाक्रमं कर्मौघं निस्तीर्य शीघ्रं परां सिद्धिमेष्यसीति ॥ ४३ ॥ यत्त्वया मे रूपं दृष्टं तद्भक्त्या स्मर मदर्थेनासक्त्या विहितकर्म कुरु सिद्धिमेष्यसि ॥ ४४॥ इति स्वरूपदर्शनाद्दुर्लभस्वात्मसुखान्वितं कृत्वा कृष्णातीरमेत्य तत्रागतं छिन्नजिव्हं द्विजमुद्दधार ॥ ४५ ॥ इति दशमोऽध्यायः ॥

---

# अथ एकादशोऽध्यायः

नामधारक उवाच कश्छिन्नजिव्हो विप्र आगतो भगवता कथमुद्धृतो वद तत्कथामृतपानेऽतीव तृष्णा वर्धते ॥१॥ सिद्ध उवाच करवीरे कश्चिद्द्विजपुत्रो जातस्तमन्ये प्राहुः त्वं विपुच्छशृंगः पशुः यत्तृणं न भक्षितं तत्पशूनां भाग्यं ॥२॥ यतो विद्यानिधिर्हर्तुरलभ्यः शिष्यायार्पितश्चेद्वर्धते ऊनमपि श्रेष्ठेष्वर्च्यं करोति दरिद्रमपि क्वापि धनिनं करोति ॥३॥ सुखे-स्त्रीव रक्षणे मातेव कुत्रापि मित्रवत् हिते पितेव बोधे गुरुवद्विद्याऽतो विद्याहीनं त्वां धिक् ॥४॥इति निर्भर्त्सितस्त्रस्तः स भिल्लवाटीं ययौ त्यक्तान्नो देवीमानर्च ॥ ५॥ अलब्धप्रसादः स जिव्हां छित्वा शिरः श्वः छेद्यमिति निश्चयं कृतवान् रात्रौ स्वप्ने देवी प्राह कृष्णायाः परकूले यतिरस्ति तं भजेति ॥ ६ ॥ ततो गलदश्रुर्दुःखितोऽपि स धैर्येण गुरुमेत्य ननाम गुरुस्तन्मूर्ध्नि करं दधौ ॥ ७ ॥ स्पर्शस्पर्शादयो हेमेव मानसं गतः काको हंस इव गुरुकरस्पर्शनात्स सुजिव्हो विद्वांश्च बभूव ॥ ८ ॥ नेदं चित्रं वज्रादिचिन्हितं यत्पदं हृदये ध्यायंति तत्प्रसादाद्धीजाड्यादि नश्यति

तस्य भगवतः प्रसादात्किमुत ॥ ९ ॥ स गुरोराज्ञया गृहमेत्योभयीं सिद्धिं ययौ भगवानपि दाक्षिणां दिशं ययौ ॥ १० ॥ साष्टतीर्थं साधुकृष्णापंचगंगासंगमं दृष्ट्वा पश्चिमतीरे तस्थौ ॥ ११ ॥ सरस्वतीशिवाभद्राकुंभीभोगवत्यः कृष्णावेण्योः संगता उत्तमोत्तमोऽयं संगमः ॥१२॥ तत्र कुरुक्षेत्राधिपुण्यं कुरुपुरं संगमः प्रयागः युगालयं साक्षात्काशी च ॥ १३ ॥ संगमे उदुंबरः कल्पवृक्षः विश्वेश्वर इवामरेश्वरः अत्र चतुःषष्टियोगिन्य एषामर्चनान्नरोप्यमरो भवेत् ॥ १४ ॥ अत्र संगमे माघस्नायी स्वर्याति दक्षिणप्रवाहेऽत्र महापापहराणि कोटितीर्थानि ॥ १५ ॥ मुमुक्षोर्मोक्षदं कामिनां कामदं सतां रंजकं चाश्रमं दृष्ट्वोदुंबरे साक्षाद्भगवान् तस्थौ ॥ १६ ॥ प्राग्विद्वद्युक्तामरपुरे भगवान्वैदिकं विप्रं भिक्षां ययाचे ॥१७॥ भिक्षावृत्तेः सात्विकविप्रस्य भार्यातिथेयी अन्नाभावाच्छाकं ददौ ॥ १८ ॥ भक्त्या दत्तं शाकं भुक्त्वा तृप्तः प्रभुः शाकलतामुत्पाट्याश्रमं गतः ॥ १९ ॥ तदा दुःखिता ब्राह्मणी प्राह योगक्षेमकरी लता कुत उत्पाटिता हंत भिक्षाकापट्यमपि मया न कृतं ॥ २० ॥ तां भर्ता प्राह तूष्णीं तिष्ठ न कोऽपि सुखदुःखदः स्वकर्मसूत्रग्रथिता लोकास्तु वृथाहंकार वहंति ॥ २१ ॥ सर्वं जगदीश्वराधीनं सुखं दुःखं वा येन यत्प्राप्तव्यं तदन्यथा कर्तुं कोपि न समर्थः येनायुर्दत्तं सोन्नमपि ददाति ॥२२॥ विश्वोत्पत्तिस्थितिलयकर्तुः प्राज्ञेऽज्ञे राज्ञि रंके वैकदृष्टिरतो मा शुचोऽयमस्माकं तारकः ॥२३॥ इति वधूमाश्वास्य वल्लीमुत्खात्य श्रीगुरोः प्रसादाद्धनपूर्णं घटं लेभे ॥ २४ ॥ स सभार्यो गुरुं गत्वा तत्कथयामास भगवान् प्राह भो दंपतीदं गोप्यं अन्यथा लक्ष्मीर्नश्येत् ॥ २५ ॥ ऐश्वर्यपुत्रान्वितौ निरामयौ युवां मोक्षं गमिष्यथः गृहं गच्छेतामिति तथेति तौ जग्मतुः ॥२६॥ नामधारक उवाच प्रभोः कस्माद्भिक्षावृत्तिः पूज्येऽश्वत्थे विद्यमाने उदुंबरः कुतो भगवताश्रितः ॥ २७ ॥ सिद्ध उवाच भिक्षेयं शंभुवृत्तिः भगवान्लीलया स्वयं भिक्षुः सन् श्रुत्युक्तां पक्वान्नभिक्षां भेजे

॥२८॥ नृसिंहावतारे दैत्यदारणान्नखा विषार्तास्ते औदुंबरैः शांता अतः प्रीत्या उदुंबरः श्रितः ॥२९॥ यत्र क्वाप्ययं पापतापदैन्यहृद्भूयात्कामदोऽहमपि श्रिया सह वसामीति वरोपि दत्तः ॥ ३० ॥ यत्र विश्वात्मा तत्र वेदतीर्थदेवा अप्यतो भुव्ययं कल्पवृक्षः ॥ ३१ ॥ ततो विश्वभृद्भगवान् कामरूपाभिर्योगिनीभिरर्चितस्तत्रैव स्थितः ॥३२॥ अज्ञा विप्रास्तदज्ञात्वायं भिक्षामकृत्वा कथं जीवतीति मृग्यं ॥ ३३॥ इति विचार्य विलीय स्थितास्ते मध्यान्हे भगवन्मायया त्रस्ता ययुः भगवच्चेष्टितं ज्ञातुं कः शक्यो न कोऽपि ॥ ३४ ॥ एकदा भाविको गंगानुजाख्यो भक्तोऽमुं द्रष्टुमेत्याश्चर्यं ददर्श ॥ ३५ ॥ तदा जलपूर्णापि कृष्णा मार्गं ददौ तेन भगवानंतर्गतः भक्तोऽपि पश्चादागत्य मध्येद्वीपं दिव्यामिव पुरीं ददर्श ॥ ३६ ॥ ३७ ॥ सिंहासनस्थो योगिनीभिर्नीराजितः पूजितश्च देवस्तं दृष्ट्वा कस्त्वं कुत आगतोसीत्याह ॥ ३८ ॥ गंगानुज उवाच गंगानुजाख्योऽत्रत्योऽहं त्वां द्रष्टुमागतोऽस्मि भवान्परमात्मा सर्वेश्वरोऽपि दैवान्मे गोचरः ॥३९॥ त्वन्मायामोहितास्त्वां नरं विदुस्तेऽपारे संसारसागरे मज्जंति नान्ये ॥ ४० ॥ इति स्तुतो भगवान् तस्मै इष्टवरं दत्वा प्राह यदत्र दृष्टं तन्मय्यत्र विद्यमाने त्वया कस्यचिन्नाख्येयं ॥ ४१ ॥ स नित्यमेत्य गुरुमानर्च एकदा गुरुं प्राह त्रिस्थलीयात्रा वरेत्याहुस्तां न वेद्मि ॥ ४३ ॥ श्रीगुरुरुवाच प्रयागः काशी गया चेति त्रिस्थली तादृशी संगमो युगालयं करवीरं चेति त्रिस्थलीत्युभयीमपि ते शीघ्रं दर्शयामि ॥ ४४ ॥ इत्युक्त्वा स्वपादुके धारयित्वा इमामपरां च क्षणादर्शयामास ॥ ४५ ॥ आह च एषान्या च त्रिस्थली दर्शिता उभयोः साम्यं ज्ञात्वात्र स्वाचारान्मोक्ष्यसे ॥ ४६ ॥ इति गुरुवाक्यं श्रुत्वा तल्लीलां च ज्ञात्वा तद्ध्यानाद्बंधं छित्वा मुक्तोऽभवत् ॥ ४७ ॥ ततोत्र महिमा वृद्धः संतोऽसंतश्चायास्यंतीतोन्यत्र गंतव्यं साक्षान्नेह स्थेयमिति भगवानमंस्त ॥ ४८ ॥ तदास्मान्हित्वा क्व यास्यसीति लपंतीर्योगिनीराश्वास्य प्राह

भगवान् वस्तुगत्यात्रैव तिष्ठामि लोकदृष्ट्या गमिष्य एव॥४९॥ अमरेशो-न्नपूर्णा विघ्नेशो वयं च भक्तेष्टदाः अत्र वस्तुष्ट्ये स्थेयं ॥५०॥इतःप्रभृतीदं क्षेत्रं प्रसिद्धं सुखदं बहुलोकनिवासं च भविष्यति ॥ ५१ ॥ सन्निपाता-क्षिरोगकुष्टमेहश्लेष्मक्षयज्वरवातपैत्तिकगुल्मदोषादिजरोगानिदं क्षेत्रं निवारयेत् ॥ ५२ ॥ वंध्या पुत्रं भीतोऽभयं निःस्वो धनं रोगी आरोग्यं मुमुक्षुः सद्गतिं चेति यद्यद्यस्येष्टं स स तत्तल्लभेत् ॥५३॥पर्वक्रांतिग्रहस्नाने ऽत्र सहस्रगोदानफलं अत्राल्पजपहोमद्विजतर्पणफलमनंतं ॥ ५४ ॥ प्रदक्षिणा पदे पदेऽश्वमेधफलदा दुर्गता अपि पितरः श्राद्धतः परां गतिं यास्यंति ॥ ५५ ॥ इति योगिनीराश्वास्योदुंबरमूले पादुके संस्थाप्य भगवान्प्राहात्राष्टतीर्थस्नानपूर्वकं यो योगिन्यादियुतमत्पादुकेऽर्चेत्सोऽभीष्टं लभत्वित्युक्त्वा भीमातीरं जगामेति ॥५६॥ चूर्णिकायामेकादशोऽध्यायः॥

---

# अथ द्वादशोऽध्यायः

नामधारक उवाच कृष्णातटाद्भगवति गते सति तत्र भजतां कः फलदः ॥ १ ॥ सिद्ध उवाच गतिस्थित्यासनस्वप्राश्चिदात्मनो न नरानुकारिणस्तस्येयं लीला ॥ २ ॥ यया भावनया यथा भाव्यते तथा भगवान्प्रतीयते अत्रेदृक्फलदो देव इति तत्र तादृग्जागर्ति ॥ ३ ॥ योगि-नीवरदानादि गंगानुजात् यैः श्रुतं तेभजन् तेषां फलमपि लब्धं ॥४॥ एवं सति तत्रत्या काचिन्मृतप्रजा ब्राह्मणी ब्राह्मणं शरणं प्राप ॥ ५ ॥ दीनां प्रपन्नां तां दैवप्रेरितबुद्धिर्विप्रस्तद्वैवं प्राह ॥ ६ ॥ भो साध्वि पूर्वार्जि-तान् मृतापत्यत्वदोषान् श्रृणु ते च प्रायः प्रेतहेतवः ॥ ७ ॥ गोब्राह्मण-श्वासर्पबालहा परस्वापहर्ता जन्मांतरे मृतापत्यः ॥ ८ ॥ लोहाश्मदारु-चूर्णं प्रयत्नाज्जरयेत् ब्रह्मस्वं कः कथं जरयेत् ॥ ९ ॥ हृतस्वार्थाभिलषेण

ब्राह्मणो मृतश्चेत्प्रेतो भूत्वा हर्तृवंशहा भवेत् ॥ १० ॥ जन्मांतरे त्वया शौनकगोत्रविप्रस्य शतद्रव्यं हृतं स प्रेतो भूत्वा तेऽर्भान् हंति ॥ ११ ॥ आरब्धकर्मणो भोगादेव क्षयो नान्यथा त्वं स्वारब्धं भुंक्ष्व को निवारयेत् ॥ १२ ॥ इति कर्णशूलाभं वचः श्रुत्वा त्रस्ता सा प्राह भो ब्रह्मन्मामनुगृह्णीष्व मुक्त्युपायं कथय ॥ १३॥ विप्र उवाच प्रायश्चित्तपूर्वकं प्रेतौर्ध्वदेहिकं कर्म कृत्वा मासव्रतं चर ॥ १४ ॥ साष्टतीर्थसंगमस्नानपूर्वकमुदुंबरं पादुकां च पूजय ॥ १५ ॥ ततो ब्राह्मणान्भोजयित्वा शौनकगोत्राय शतद्रव्यं देहि तेन ते शुद्धिः ॥ १६ ॥ ब्राह्मण्युवाच शतद्रव्यं नास्ति भक्त्या मासमात्रं पादुकार्चनं कुर्यां स हरिर्भयात्पायात् ॥ १७ ॥ इति निश्चित्य सा पत्या सह यथोक्तमाचरत् त्रिदिनांते तत्स्वप्ने पिशाच एत्य ॥ १८ ॥ तां भीषयित्वा द्रव्यं ययाचे सा भीत उदुंबरमूले गुरुं ददर्श ॥ १९ ॥ गुरुस्तामाश्वास्य पिशाचमाह रेऽधम सतीं खेदयसेऽपि कस्त्वं ॥ २० ॥ पिशाच उवाच स्वामिन्नयं पक्षपातो भवतो नार्हः यस्मादनयापहृतं द्रव्यं याचितुमहमीदृशोऽभवम् ॥ २१ ॥ श्रीगुरुरुवाच अनेन पीडनेनामंगलयोनेस्ते कथं मोक्षः येन सद्गतिः स्यात्तच्छृणु ॥ २२ ॥ हृतद्रव्यं जन्मांतरेऽस्ति दरिद्रवंशेत्र फलभागिनीयं जातातः कुतो धनं लभ्यं ॥ २३॥ अतस्तया शक्त्या और्ध्वदेहिकं कारयित्वा त्वद्गोत्राय यथाशक्ति धनं दापयित्वा ॥२४॥ मोक्षं ते दद्मि इदं न रोचते चेद्यथेष्टं चरेमां रक्षामि ॥ २५ ॥ पिशाच उवाच भो देव त्वद्दर्शनान्मे निष्कृतिर्जाता यथेष्टं कुरु ॥ २६ ॥ इति तन्निश्चयं ज्ञात्वा गुरुर्ब्राह्मणीं प्राह त्वयेदं श्रुतं तथा निष्कपटमाचर ॥ २७ ॥ अयं सद्गतिं यायात्ते वंशवृद्धिश्च भविता इत्युक्त्वादृश्योऽभूत् सापि बुद्धा जाता॥२८॥ तत् पतये कथयित्वा तथैवाकरोत्तेन प्रेतो गतिं लेभे साप्यदोषाभूत् ॥२९॥ द्वितीयेन्हि तत्स्वप्ने द्वे फले दत्वा प्राह भगवान् विप्रान्भोजयित्वा फले भुंक्ष्वेति ॥ ३० ॥ सा प्रबुद्धा फलेऽपि दृष्ट्वा तथाकरोत् ततो

गर्भिणी जाता ।। ३१ ।। गुरुप्रसादात्सूर्याचंद्रमसाविव पुत्रावसूत विप्रो जातकर्माद्यकरोत् ।। ३२ ।। ततोऽष्टमेऽब्दे पित्रा ज्येष्ठपुत्रस्योपनयनाय संभाराः संभृताः तदाद्भुतं जातं ।।३३।। अकस्मात् संनिपातेन ज्येष्ठपुत्रो ममार मातोरःशिरस्ताडनपूर्वकं रुदती प्राह ।।३४।। रे पुत्र क्व गतोऽसि वृथा मे पयः स्रवते वत्स कति शेपेऽचिराद्बुध्यस्व पयः पिब ।। ३५ ।। अयं ते भोजनावसरः भुक्त्वांगणे रंतुं चर उत्तिष्ठ मा स्वप त्वां वयस्या आव्हयंति ।।३६।। त्वं नोत्तिष्ठसि चेत्प्राणांस्त्यक्ष्यामि ये पंचपुत्रा जातास्तेषां त्वं मम प्राण एव।।३७।। त्वयि मृते मरिष्ये गर्भप्रभृत्यद्य यावद्दुःखं न दत्तं ।। ३८ ।। येऽर्भा मृतास्तद्दुःखं त्वदीक्षणाद्विस्मृतं अद्य दुःखाब्धौ मां त्यक्त्वा क्व यास्यसि ।।३९।। अयं ते न धर्मः वार्धक्ये नौ कस्त्राता इति तद्रुदितं श्रुत्वा तत्रत्या एत्य तां प्राहुः ।। ४० ।। हे भीरु कुतः शोचसि मृत्युर्देवर्षिदानवान्न विस्मरति मानुषाणां तु का कथा ।। ४१ ।। त्वं विचारय कृष्णाद्यवतारा अपि कालवशं गताः अतो वृथा शोकं मा कुरु ।। ४२ ।। ब्राह्मण्युवाच हंत पिशाचभयं निवार्य भगवता दत्तं फलं कथं विफलं जात ।। ४३ ।। तत्तस्य वाक्यं वृथा चेत्तं को भजेत् विभीषणध्रुवाद्यैरपि कथं विश्वसनीयं ।। ४४ ।। एतां तत्कीर्तिं पुत्रेण सह लोकांतरं नेष्ये इति रुदित्वा संस्कर्तुं शवं न ददौ ।। ४५ ।। ग्रामे लोकास्त्रस्तास्तदा कश्चित्तापस एत्य तां प्राह ।। ४६ ।। शोकाविषयं सुतं कुतः शोचसि सुतस्तवैष जीवो वा देहो वा सत्यं वद ।।४७।। त्वग्रक्तमांसास्थिमयो देहस्ते पुरतोऽस्ति जीवस्त्वजो विभुरनंतश्चात्र कः शोकविषयः ।। ४८ ।। कालकर्मगुणोत्पन्नं जगदिदं मायामयमिंद्रजालोपमं कथं ध्रुवं मंतव्यं ।। ४९ ।। तादृशस्य कुतः पुत्रादिरूपा स्वत्वकल्पना सा मृषा नद्यां काष्ठसंगवच्चंचला ।। ५० ।। त्वया ध्रुवा निश्चिता चेज्जन्मांतरे कस्य त्वं जननी स्त्री वा तव संबंधिनश्च न केऽपि ।। ५१ ।। जन्ममृत्यू कालवशाद्दिनरात्रिवद्लंघ्यौ देहिनो देहे यथा बाल्यादि तथा

देहांतरमपि ॥ ५२ ॥ अयं भ्रमो गुरुप्रसादाल्लीयते तं विना जातो मृत्यवे मृतश्च जनुषे कल्प्यः ॥५३॥ अतोऽपरिहार्येऽर्थे मा शुचः मृतः शुचोपायांतरैर्वा नागच्छति ॥५४॥ ब्राह्मण्युवाच वेदांतो मे न रोचते येन मे सुफलं दत्तं तत्कुत्र गतं स भुवि कैर्विश्वस्तव्यः ॥ ५५ ॥ तापस उवाच यतः त्वया वरो लब्धस्तं गत्वेदं पृच्छाहं गच्छाम्यलं विस्तरेण॥५६॥ तच्छ्रुत्वा सा शवं गृहीत्वा सद्गुरोराश्रमं गत्वा कोपेन पादुकयोः शीर्षं ताडयामास ॥ ५७ ॥ एवमासाद्य शवं संस्कर्तुं न ददौ विप्रा गृहं जग्मुः दंपती तत्रैव तस्थतुः ॥ ५८ ॥ ततो निशीथे तत्स्वप्ने श्रीगुरुस्तां प्राह मया किं तेऽपकृतं ॥ ५९ ॥ प्राणो नामैष वायुः स बहिर्यातः स मया पुनरानीय पूर्ववन्न्यस्तोऽतो मा शोचीः ॥ ६० ॥ इति श्रुत्वा प्रबुद्धा सा जीवंतं सुतं दृष्ट्वा हर्षशोकाभ्यां भर्तारमाह्वयत् ॥ ६१॥ सोप्युत्थाय रुदंतं क्षुधितं सुतं दृष्ट्वा मंत्रवत्त्रिरवघ्राय गुरुमस्तौषीत् ॥ ६२॥ ततः प्रभाते दग्धुं प्राप्ताः विप्राः सर्वं श्रुत्वा भगवंतमस्तुवन् ॥ ६३ ॥ दंपती स्नात्वेशं संपूज्य नीराज्य ब्राह्मणान्भोजयित्वा स्वालयं जग्मतुः ॥६४॥ स पुत्रो विद्याविनयसंपन्नश्चिरजीवी भाग्यवांश्च बभूव एवमन्येऽप्यत्र पूर्णकामा अभूवन् ॥ ६५ ॥ तत्र कलावपि नित्यं नरसिंहसरस्वती जागर्ति न निद्राति ॥ ६६ ॥ ये विश्वासेन तं भजंति ते ब्राह्मणीवत्पूर्णकामा भवंति ॥ ६७ ॥ इति द्वादशोऽध्यायः ॥

---

# अथ त्रयोदशोऽध्यायः

नामधारक उवाच भगवान्भीमामेत्य किमकरोत् तन्मे श्रद्दधानाय शंस ॥ १ ॥ सिद्ध उवाच कृष्णापंचगंगायोगतुल्ये भीमामरजासंगमे गंधर्वपुरे भगवान् तस्थौ ॥ २ ॥ तत्र गुप्तभावेन स्थित्वा भक्तोद्धारार्थं भिक्षां ययाचे ॥ ३ ॥ तदा श्रीविद्याढ्याः दीनभाविकदत्तभिक्षाप्रियं श्रीशं

हरिं हसंति स्म ॥ ४ ॥ अभ्रछन्नेर्केऽपि यथा प्रभा प्रसरति संपुटस्थकस्तूर्या वा गंधः प्रसरति तद्वद्भगवतोऽपि गुणाः ॥ ५ ॥ एकदा दीनविप्रगेहं गत्वा दंतहीनां वशां महिषीं दृष्ट्वापि तत्क्षीरं देहीति ब्राह्मणीं ययाचे ॥ ६ ॥ सा प्राह इयं भारवाहिनी वशा गुणोता जन्मतोऽपि लुलायवत्पालिता इतोऽस्माकं योगक्षेमं ॥ ७ ॥ गुरुराह मृषा मा वद तां दुग्ध्वा क्षीरं देहीति तदा काष्ठपात्रमादाय ब्राह्मणी तां दुग्ध्वा पयो लेभे ॥ ८ ॥ विस्मिता सा पयो मंदोष्णं कृत्वा तस्मै ददौ गुरुस्तत्पीत्वा संगमं ययौ ॥ ९ ॥ ततो गृहेश एत्य सर्वं श्रुत्वा सस्त्रीको गत्वा गुरुं संपूज्य लब्धेष्टवरो गृहं ययौ ॥ १० ॥ अन्येद्युर्भारवाहार्थं वशां नेतुमागताः शूद्रा दोहं प्रेक्ष्य नृपायाकथयन् ॥ ११ ॥ नृपोऽपि ब्राह्मणात्सर्वं श्रुत्वा गुरुमानेतुं शिविकादि गृहीत्वा चतुरंगबलान्वितः संगमं ययौ ॥ १२ ॥ गुरुमेत्य दंडवत्प्रणिपत्य सात्विकाष्टभावैः प्राह दीनं किंकरं मां पाहीति ॥ १३ ॥ श्रीगुरुरुवाच दंडी वनचरो भिक्षुरहं राजन् संरंभात्ससैन्यस्त्वं कस्मादागतोऽसि किं ते कार्यं ॥ १४ ॥ राजोवाच परमेश्वर त्वं मायानरो न भिक्षुः अरण्यवासं त्यक्त्वा पुरं पावय ॥१५॥ इति सकारुण्यमुदारं वाक्यं श्रुत्वा तथेति पुरं ययौ ॥ १६ ॥ राजा विप्रवाहितशिविकोपविष्टं गुरुं छत्रचामरैर्वाद्यैश्च भेजे ॥१७॥ विप्रा वेदघोषं मागधाः स्तोत्रं अन्ये जयशब्दं च चक्रुरेवं पुरद्वारमागतः ॥१८॥ पुर्याः पश्चिममार्गमेत्याश्वत्थे घातुकं ब्रह्मराक्षसं ददर्श ॥ १९ ॥ गुरुदर्शनाद्ब्रह्मराक्षसः शांतो भूत्वावरुह्य गुरुं नत्वा कुयोनेर्मामुद्धरेत्याह ॥ २० ॥ गुरुणा तन्मूर्ध्नि करो दत्तः ततः स नृवज्जातः गुरुः प्राह संगमस्नानाच्छीघ्रं मुक्तो भविष्यसीति ॥ २१ ॥ तच्छ्रुत्वा नत्वा स संगमं गत्वा स्नात्वा भौतिकांगं त्यक्त्वा कर्मबंधनान्मुक्तः॥२२॥ राजा तद्दृष्ट्वा गुरुं तुष्ट्वा पुरं नीत्वा मठिकां निर्मायावासयत् ॥२३॥ राजा पूजार्तिक्यगानाद्यैस्तदनुगो भूत्वा घोरं सांसारिकं खेदं जहौ॥२४॥

आन्हिकं संगमे ग्रामे भिक्षां मठे वसतिं च कृत्वा भक्तवात्सल्याद्राजाधीनो भगवानभूत् ॥२५॥ अल्पधीस्त्रिविक्रमभारती आश्रमानर्हचेष्टां श्रुत्वा तं भ्रष्टोऽयं दांभिक इति मेने ॥२६॥ सर्वांतस्थः साक्षी भगवान् तज्ज्ञात्वा नृपं प्राहाद्य निंदकशिक्षार्थं गंतव्यं ॥ २७ ॥ कुमसीग्रामे मन्निंदको भिक्षुस्त्रिविक्रम इति इत्थं श्रुत्वा हृष्टो राजा गमनायोपचक्रमे ॥ २८ ॥ नृपचिन्हैः परिष्कृतं गुरुं शिबिकायामारोप्य राजा यत्र भारतिः स्थितस्तद्ग्रामं गुरुं निन्ये ॥ २९ ॥ स नृसिंहध्याननिष्ठोऽपि तदा चलचित्तो भूत्वाऽस्तौत् ॥ ३० ॥ हे दयाब्धे भक्तपते नृसिंहाद्य कुतस्ते सामीप्यं न घटते भो दयस्व त्वां वंदे ॥ ३१ ॥ एवं स्तुत्वा ध्यात्वा नदीतटगं ज्ञात्वा त्रस्तः स द्रष्टुं ययौ ॥ ३२ ॥ स शीघ्रमागत्य माययोच्चावचान्यतीन्दृष्ट्वा मुमोह ॥ ३३ ॥ स परितः प्रशांतानमितान् दंडिनो ददर्श ॥ ३४ ॥ ततो विस्मितं तं श्रीगुरुराह यं धिक्करोषि स दांभिकोऽहं भ्रष्टः मया मायामुद्भाव्य परीक्षितोऽसि ॥ ३५ ॥ त्वं नृसिंहभक्तः स्वधर्मज्ञः ख्यातः संन्यासी चेत्त्वया किं संन्यस्तं ब्रूहि ॥ ३६ ॥ शिखासूत्र इति चेत्तथाविधो दंडी रागद्वेषाकुलो वेषानुकारी धर्मज्ञोपि संन्यासी भवेत्किं ॥३७॥ दंभिलक्षणं ज्ञातुं प्राप्तोऽस्मि हे विद्वन्नृसिंहप्रसादेन तद्वद ॥३८॥ त्रिविक्रम उवाच हे भगवन्नीश ते मायया कुंठितोऽहं वक्तुमपि न शक्यः हे दयाब्धे हृषीकेश पाहि ॥ ३९ ॥ ध्यानपुण्यादुपगतस्त्वं नृसिंहस्त्वां प्रपन्नोऽस्मि मेऽपराधान्क्षमस्व ॥ ४० ॥ इति स्तुतो भगवान्स्वरूपेण प्रादुरास राजा मंत्री सैन्यं चापि प्रादुरास ॥४१ ॥ तत्र राज्ञा वीजितं विश्वरूपं तं द्रष्टुं त्रिविक्रमो नाशकत् ॥ ४२ ॥ भगवान् तमाह दिव्यदृष्ट्यापि दुर्दर्शं रूपं ध्यानहृष्टेन मया दर्शितं पश्येदं लौकिकमिति ॥ ४३ ॥ ततः शांतयतिरूपेणावस्थितं तं दृष्ट्वा स शांत आह ॥ ४४॥ हे विश्वात्मन् वाङ्मनःकायैरसत्कृतोस्यतः क्षामये ॥४५॥ अद्यानुगृहीतो धन्योऽहं कृतकृत्योऽस्मि यस्मादर्जुनवन्मे विश्वरूपं दर्शितं ॥ ४६ ॥ हे

हरेऽविद्याप्रवाहे मज्जंतं मां सकरुणं ज्ञाननावा स्वरूपतटं नय ।।४७।। ज्ञानेनाविद्यां तीर्त्वा परं पदमाशु यास्यस्यत्रैव तिष्ठेति तमुक्त्वा सपरिवारो भगवान्मठमेत्य कर्ममार्गं ततान ।। ४८ ।। इति त्रयोदशोऽध्यायः ।। ज्ञानयोगः समाप्तः ।।

---

# अथ चतुर्दशोऽध्यायः

नामधारक उवाच मोक्षसिद्ध्यै उत्तमं ज्ञानयोगमुक्त्वापि प्रभुः कर्मयोगं ततान ।। १ ।। अविद्यानाशायेति चेत्तज्जं कर्माविद्यानाशकं कथं तद्वद ।। २ ।। सिद्ध उवाच कर्कटी तज्जा यथा घ्नंति मृदा भांडलग्नमृत्क्षालनं च यथा तथा कर्मणा योगसंज्ञितेनाविद्यालयः ।। ३ ।। फलाभिमानरहितं कर्म साधनावधि कृत्वा ततः संन्यस्य शममास्थाय पुमान्नैष्कर्म्यसिद्धिभाग्भवेत् ।। ४ ।। कदापि कोऽपि प्रकृतिगुणैरक्रियो न तिष्ठेत् तत्राऽज्ञानी सक्तः ज्ञानी असक्तश्चेदं ज्ञानिनः स्वार्थाभावेऽपि लोकसंग्रहार्थमेव ।। ५ ।। अहं यथानुतिष्ठामि लोकोऽपि तथानुतिष्ठेन्नेदं साध्विति प्रभुः कर्मयोगमाह ।। ६ ।। कर्मयोगमयं गुरुचरितं शृणु यच्छ्रुत्वा भवबंधं छित्वा परपदं याति ।। ७ ।। कश्चित्खलो हिंस्रो ब्रह्मद्वेष्टा यवनराजोऽभूत्स संसदि विप्रानाहूय स्वाग्रे वेदानपाठयत् ।। ८ ।। स वेदपाठकेभ्यो धनं दत्त इति श्रुत्वा द्रव्यलुब्धास्तथा चेरुः ।। ९ ।। वेदार्थं श्रुत्वा ब्राह्मणान् श्रुतीश्च विनिंद्य स सर्वाचारमतथ्यं मेने ।। १० ।। एकदा दीनौ मत्तौ विद्वांसौ तमेत्यावां वेदशास्त्रज्ञौ ।। ११ ।। अस्मत्तुल्या त्वदधीनाश्चेत्तानानयेत्यूचतुः।।१२।। तदा राजा पराङ्मुखान् स्वाश्रितान् ज्ञात्वा तदाज्ञया तौ गजमारोह्य भूषितौ पूजयामास ।।१३।। अधःपातभीतिरहितानां विषयासक्त्या वेदज्ञानामपीयं स्थितिः ।।१४।।

विप्रा ऊचतुः राजन् वादं विनास्मद्विद्याभ्यासो न सफलोतो विद्वद्द्विजान् जेतुमादिश ॥ १५ ॥ इति श्रुत्वा स विप्रपराभवपरो राजा तथादिशत् तौ विप्रान् जित्वा जयपत्रं गृह्णंतौ चेरतुः ॥ १६ ॥ त्यक्तवादान्विप्रान्वा-वदूकतया वर्जयतोस्तयोर्जयोऽभूत् ॥ १७ ॥ त्रयीज्ञं त्रिविक्रमं ज्ञात्वागत्य वेदज्ञोऽसि चेद्वादं कुरु जयपत्रं वा देहीत्यूचतुः ॥ १८ ॥ त्रिविक्रम उवाच वेदज्ञा भवादृशाः पूज्या न तथाविधोहं जयाजयसमे यतौ जिते वा किं फलं ॥ १९ ॥ इति श्रुत्वा तौ आहतुः इमानि जयपत्राणि पश्य पत्रं देहि वादं वा कुर्विति । गुरोरग्रे दास्य इत्युक्त्वा तदा त्रिविक्रमः प्रतस्थे ॥ २० ॥ मत्तौ शिबिकारूढौ तौ तमनुजग्मतुः मठे श्रीगुरुमेत्य प्रणम्य त्रिविक्रमोऽब्रवीत् ॥ २१ ॥ ॐ काररूपाय निर्गुणाय गुणात्मने ते नमः भो भक्तवत्सल कृपालो जगद्गुरो ॥ २२ ॥ घूकोर्कमिवाज्ञानांधस्त्वां न वेत्ति स त्वमेतौ मत्तौ जहि ॥ २३ ॥ एवं विज्ञापितो भगवान् तौ प्राह किमनेन साध्यमिति ॥ २४ ॥ विप्रावूचतुः आवां विद्वत्तमौ द्विजान् जेतुं राज्ञाज्ञप्तौ अनेनात्रानीतौ युवां वेदपारगौ किं ॥ २५ ॥ श्रीगुरुरु-वाच गर्वेणैवासुरराक्षसा नष्टाः कोप्यनाद्यनंतान्वेदान्कृत्स्नशो न वेद ॥ २६ ॥ पूर्वं भारद्वाजो ब्रह्मचर्येण वेदान्पठितुं तपोलपत् प्रीतो विधि-स्तस्मै भास्वद्वेदराशीनदर्शयत् ॥ २७ ॥ स दृष्ट्वा शंकितोऽभूत् ततो विधिना दत्तान्त्रिमुष्टिमितान्वेदान्पठ्यमानः सोऽद्यापि न पारगः ॥२८॥ पैलो ऋचं वैशंपायनो यजुः जैमिनिः साम सुमंतुरथर्वाणं चाशिक्षंत एषां गुरुर्व्यासः साक्षाद्धरिः यतो वेदाः प्रसृताः ॥ २९ ॥ युगांतरे आयुष्मद्भिः केचिद्वेदाः पठिताः कलौ तु मंदा अल्पायुषः शाखया वेदज्ञमानिनः ।३०॥ प्रतिग्रहपरान्नस्त्रीसक्ता अतः सिद्धिविवर्जिताः ॥ ३१ ॥ सशाखांगो-पांगा वेदा व्यासेनोक्ताः ऋग्वेदस्यायुर्वेद उपवेदः स्वर्णाभोऽत्रिगोत्रो गायत्रछंदा ब्रह्मदैवत्यः द्व्यरत्निमितो दीर्घाक्षो व्यक्तकंठ ऋग्वेदः ॥ ३२-३३ ॥ शाकला बाष्कला सांख्यायन्याश्वलायनी मांडूकेयेति पंचशाखा

अष्टौ विकृतयः ॥ ३४ ॥ निरुक्तं व्याकरणं ज्योतिषं छंदः शिक्षा सूत्रं चेति षडंगानीमं कृत्स्नशः को वेत्ति ॥ ३५॥ पंचारत्निमितोऽर्कांभः कपाली कृशदीर्घकः धनुर्वेदोपवेदो यजुर्वेदः ॥३६॥ त्रिष्टुप्छंदा भारद्वाजगोत्रो विष्णुदैवतोऽष्टादशपरिशिष्टः षडशीतिभेदः॥३७॥ षडुपांग इति। सामवेदस्तु दांतः शुचिः स्रग्वी चर्मदंडभृत् ॥३८॥ षडरत्निमितो गानोपवेदो रुद्रदेवतो जगतीछंदाः काश्यपगोत्रः ॥ ३९ ॥ सप्तदशभेद एतं सांगोपांगं को वेत्ति ॥ ४० ॥ अथर्वा तु चंडो सितः कामरूपो शुभः स्वदारातुष्टो यंत्रोपांगः ॥ ४१ ॥ वैजानगोत्रोऽनुष्टुप्छंदा इंद्रदेवः नवभेदः पंचकल्पः ॥ ४२ ॥ भारतेत्र वर्षे भ्रष्टा द्विजा अंत्यजाग्रे पठंत्यतः सत्वहीनाः ॥ ४३ ॥ उत्सर्जनोपाकर्मादिना गुप्तो वेदमंत्रः कामधेनुवत्किं किं न दास्यति ॥ ४४ ॥ देवाधीनं जगन्मंत्राधीना देवा विप्राधीना मंत्रास्ते विप्रा विष्णोर्देवाः ॥ ४५ ॥ पुरा ते दत्तं सर्वस्वमपि न गृह्णंति ते महाशक्ताः ॥ ४६ ॥ वशे देवा अपि ते विनीताः भ्रष्टौ स्वल्पज्ञौ युवां तु प्राज्ञमानिनौ निजस्तुतिपरौ आत्मवंचकौ ब्रह्मद्विषौ ॥ ४७ ॥ ये भवादृशाः पूर्वे ते ब्रह्मराक्षसा जाताः ४८ ॥ विप्रावूचतुः नेदं श्राव्यं विवादं कुरु पत्रं वा देहीति ॥ ४९ ॥ तथेत्युक्त्वा गच्छंतमंत्यजमानयित्वा सप्तरेखा उत्क्रामयन्नपृच्छत्तं कोऽसीति ॥ ५० ॥ रेखास्पर्शनादतीतसप्तजन्मज्ञोऽभूत् आद्यां गत्वा मातंगाख्यो वुरडोऽस्मीत्याह ॥ ५१ ॥ द्वितीयां रावण्याख्यः किरातः ॥ ५२ ॥ तृतीयां गांगेयः चतुर्थीं कृषीवलः शूद्रः ॥ ५२ ॥ पंचमीं सोमदत्तगुप्तो वैश्यः ॥ ५३ ॥ षष्ठीं गोवर्धनवर्मा क्षत्रः सप्तमीं वेदशास्त्रज्ञो विप्र इति ॥५४॥ प्रभुस्तदंगे भस्म क्षिप्त्वा प्राह वेदज्ञोऽसि चेद्विप्रौ वादेन पराजहि ॥५५॥ इति वाक्यं श्रुत्वा भिया कुंठितधियौ तौ वेपितौ गुरुं शरणं गत्वोचतुः ॥५६॥ ब्रह्मद्विषौ दुष्टसंगतौ भ्रांतौ पापौ मूढौ दुर्गतिं यांतौ नौ हरे समुद्धर ॥ ५७ ॥ श्रीगुरुरुवाच म्लेछाग्रे वेदाः पठिताः यतिविप्रा धिक्कृता अत-

स्तन्निष्कृत्यै राक्षसौ भविष्यथः ॥ ५८ ॥ अनुतप्तत्वाच्छांत्या द्वादशाद्बानुषित्वा पठ्यमानानुवाकोपदेशाद्वां सद्गतिः ॥ ५९ ॥ इति गुरुणोक्तौ तौ भीमां गत्वा मृतौ राक्षसौ भूत्वा तत्रैव तस्थतुः ॥ ६० ॥ तत्र द्वादशाब्दांते कश्चिद्द्विजो मंत्रं विसस्मार तस्मै तं कथयित्वा तौ मुक्तौ बभूवतुः ॥ ६१ ॥ ये मत्ता धर्मत्यागिनो द्विजगुरुद्विषस्ते वने राक्षसा भविष्यंति पापोप्यनुतप्तश्चेद्द्विजवत्कनिष्ठशिक्षो भवेत् ॥ ६२ ॥ इति चतुर्दशोऽध्यायः ॥

# अथ पञ्चदशोऽध्यायः

नामधारक उवाच यो हीनोऽपि भगवदनुग्रहादहं विद्वान्ब्राम्हण इत्याह तस्य पतितस्य किं जातं ॥ १ ॥ सिद्ध उवाच गुरुप्रसादाज्ज्ञानी सन्नाह ब्राह्मणस्य मे कुतोऽधोगतिर्जातेति ॥ २ ॥ श्रीगुरुरुवाच यंत्रवत्पुण्यपापतो भ्रममाणस्योर्ध्वाऽधोगती ॥ ३ ॥ सोच्यते गुरुमातृस्त्रीबालकुलधर्मदेवत्यागी हिंस्रोऽनृतवक्ता ॥ ४ ॥ साधुविप्रदेवतीर्थवेदशास्त्रनिंदकः तडागकूपाराममार्गयज्ञध्वंसकः व्रताहभुक् ॥ ५ ॥ ६ ॥ पर्वश्राद्धाहजलेषु स्त्रीभुक् विश्वासघाती दत्तदानहरः स्वोक्तव्यस्ताचारः परकर्मकृत् ॥ ७ ॥ स्वपुण्यपरपापवक्ता दांभिकः खलहिंस्रस्तेयिसंगी घातको मारणादिकृत् ॥ ८ ॥ ज्ञानं विनौषधदः कर्मभ्रष्टस्तापकरश्चेत्येवमादयः प्रेत्य यातनां भुक्त्वा चंडालयोनिं यांति ॥ ९ ॥ क्रोधी शूद्रीरतस्त्यक्तनित्यनैमित्तिकक्रियः वृषारोही वृषलीसक्तः रसगोवेदविक्रयी ॥ १० ॥ ईशायादत्वा कपिलादुग्धपः निषिद्धभुक् दुष्टप्रतिग्राही परोपजीविकाहारी संध्याशयी ब्राह्मणोऽपि तद्वच्चंडालतां यायात् ॥ ११-१२ ॥ पापभुक्तये यमलोके ८४००००० नरकास्तेषु मुख्या एक-

विंशतिः पापभुक्तये यम एतान्क्षिपति ॥ १३ ॥ पापीह पुष्टदेहं त्यक्त्वा यमदूतैर्बद्धो यातनादेहेन दुर्गमे मार्गे क्षुट्तृट्प्रपीडितस्ताडनादिभिस्तर्जितो मूर्छितो वैतरिण्यां मज्जन्नवशो याम्यपुरं नीतस्ता नारकीर्यातना भुंक्ते ॥ १४ ॥ ततः पापांशतो योन्यंतरं याति प्रायो वासनाभूयस्त्वे भूतप्रेतपिशाचतां वा ॥ १५ ॥ गुरोर्हुंतुंकाराद्विप्रपराभवाच्च ब्रह्मराक्षसः हीनसेवी खरः अतिथिहापकः कुक्कुटः ॥ १६ ॥ द्रव्यहृदुष्ट्रः फलपत्रहृत्कपिः मधुहृद्दंशः मांसहृद्गृध्रोन्नहृन्मूषकः जलहृच्चातकः ॥ १७ ॥ गंधहृच्छुच्छुंदरी धान्यहृच्छलभः विषहृद्वृश्चिकः स्वर्णहृत्कृमिः कीटः पतंगश्च तृणहृत्पशुः ॥१८॥ निर्मंत्रभुक्काकः मित्रध्रुग्गृध्रः दांभिको बकः एवं पापं भुक्त्वा पापांशतो रुग्णा नरास्ते भवंति ॥१९॥परहृद्भेत्ता हृद्रोगी गुरुत्यागी गलत्कुष्ठी ब्रह्महा क्षयी स्वर्णहृत्कुष्टी पुस्तकापहोंधः ॥२०॥ विश्वासघाती वमी गणार्थहृद्दंडी अन्यार्थहृदपुत्रो वस्त्रहृत्कुष्टी अनृती कुवाक् ॥ २१ ॥ अन्नहृद्गुल्मी मांसभुक् कुरुक् तैलहृन्कास्यः फलहृत्पामी कांस्यकार्पासलोहहृत् श्वेतकुष्ठी ॥ २२ ॥ देवार्थहृत्पांडुरोगी सर्वत्र रोगाः पापत एव परस्त्र्यालिंगनाज्जन्मशतं श्वा तद्गुरोक्ष्कोंधः ॥ २३ ॥ बंध्वंगनाभोगी गदर्भोऽहिश्च दुर्बुद्धया परस्त्र्यालिंगनाद्धृद्रोगी अतोऽष्टविधमैथुनं वर्ज्यं ॥ २४ ॥ मातुलसखिस्त्रीभुक् श्वा औपपत्यात्कृमिः स्वैरिण्यः स्त्रियोऽपि श्वादियोनिं गत्वालं व्यथंति ॥ २५ ॥ इति श्रुत्वा त्रिविक्रम आह ज्ञानादज्ञानाद्वा जातस्य पापस्य कथं निष्कृतिः ॥२६॥ श्रीगुरुरुवाच पश्चात्तापेन प्रायश्चित्त्या च शुद्धिः सदसि ब्रह्मदंडं निधाय स्वपापमुच्चार्य ॥ २७ ॥ सभ्याज्ञया क्षौरपूर्वं पापानुसारेण कृच्छ्रादि चरेत् अशक्तो गोदानेन तन्मूल्यदानेन वा निष्कपटं चरेत् ॥ २८ ॥ दशस्नानाद्द्विशतप्राणायामतः स्वर्णदानाद्वाल्पपापनाशः सद्गुरुसेवया महापापनाशः ॥ २९ ॥ त्र्यहं दिवा त्र्यहं रात्रौ त्र्यहं अयाचितं त्र्यहमुपवासः अयं प्राजापत्यकृच्छ्रः तत्प्रत्याम्नायाः दशसहस्रगायत्रीजपः

॥ ३० ॥ गायत्र्या सहस्राज्यहोमः द्वादशब्राह्मणभोजनं गोदानं शक्त्या तन्मूल्यं गुंजामात्रस्वर्णदानं वा ॥ ३१ ॥ दिवा रात्रौ च द्वादश पंचदश ग्रासा भोज्याः मासं स्वल्पभोजनात्क्षीराज्यपानाद्वा शुद्धिः ॥ ३२ ॥ बिल्वाश्वत्थाब्जदर्भांबुपानात्तीर्थाटनाद्गंगास्नानाच्च पापक्षयः ॥ ३३ ॥ तीर्थेऽनुष्ठानाद्रामेश्वरसमीपमब्धिस्नानाच्च ब्रह्महत्यादिनाशः ॥ ३४ ॥ मद्यपस्य लक्षगायत्रीजपाच्छुद्धिः कोट्या ब्रह्मघ्नोऽष्टलक्षैर्गुरुतल्पगस्य च ॥ ३५॥ सप्तलक्षात्स्वर्णहर्तुश्च शुद्धिः सर्वेषां पावमानीभिश्च ६१० ॥३६॥ इंद्रमित्र २ कश्यनूनमिति शुनःशेपसूक्तानि शन्न इंद्राग्नीति शांतिसूक्तं त्रिसुपर्णं पौरुषं नाचिकेतमघमर्षणं विष्णुसूक्तं च मासं जपेन्महापापे च षण्मासं ॥ ३७ ॥ ३८ ॥ शुक्ले प्रत्यहमेकैकं वृद्ध्या ग्रासांश्चरेत्कृष्णे ह्रासयेदनेन चांद्रायणेन शुद्धिः ॥ ३९॥ सर्वपापशांतये सकुशोदकं पंचगव्यं वा विधिना पिबेत् ॥ ४० ॥ स्त्रीपुंसयोः परस्परं पापसंसर्गादुभाभ्यां प्रायश्चित्तं कार्यं महापापिसंसर्गी अपि तद्वत् ॥ ४१ ॥ चीर्णान्यपि प्रायश्चित्तानि नदीछन्नसुराघटमिव हरिपराङ्मुखं न पुनंति ॥ ४२ ॥ इति यतिं प्रोक्त्वा पतितमाह प्राङ्मातापितृसंत्यागादियं चंडालता प्राप्ता मासं नदीस्नानाच्छुद्धो भविष्यसीति स प्राह त्वद्दृक्पूतं मां द्विजैर्योजयेति ॥ ४३ ॥ ४४ ॥ श्रीगुरुरुवाच हीनाज्जातो वृद्धश्च ते देहोऽशुचिर्दूरात्त्याज्यः किमन्यत् ॥ ४५ ॥ पुरा क्षत्रो विश्वामित्रो ब्रह्मर्षित्वं ययाचे देवैरुक्तं वसिष्ठात्स्वीकुरुष्वेति ॥ ४६॥ वसिष्ठेन हीनत्वान्न दत्तं विश्वामित्रः शतं तत्सुतान्हत्वा तं हंतुमुद्युक्तोपि शंकितः ॥ ४७ ॥ वसिष्ठाज्ञया तपस्तप्तं तन्मेनकया हृतं स पुनस्तप्त्वा यत्नाद्ब्रह्मर्षिरभूत् ॥ ४८ ॥ रे पतित जन्मांतरे त्वं विप्रो भविष्यसि स प्राह अयसः स्वर्णत्वे पुनः कुतोऽयस्त्वं तद्वदहमपीति ॥ ४९ ॥ सिद्ध उवाच विप्रंमन्यमानं स्वस्त्रीपुत्रान्वारयंतं तं दृष्ट्वा शिष्यं प्राह गुरुरमुं स्नापयेति ॥ ५० ॥ ततः स्नापितः स सर्वं विस्मृत्य स्वजनैः सहागात् ॥ ५१ ॥

त्रिविक्रम उवाच कृपादृष्ट्या पावितोऽपि स पतितः कथं पूर्वज्ञातः ॥ ५२ ॥ श्रीगुरुरुवाच भस्म क्षिप्त्वा ज्ञानमर्पितं तत्क्षालनान्नष्टं एतावान्भस्ममहिमा ॥५३॥ पूर्वं निःसंगो वामदेवो मुनिर्वने चचार तं चात्तुं वने ब्रह्मराक्षसोऽगात् स स्पर्शमात्राच्छांतः पूर्वजन्मवित्त्च भूत्वोवाच ॥५४॥ पुराहं श्रिया मत्तः कामी राजाऽऽसं मया ब्राह्मणाद्यंत्यजातिजा अल्पाः श्रेष्ठा अपि स्त्रियो भुक्ताः हठाद्दानेन वा वहुश आनीताः तदा मद्राष्ट्रसंस्थिता नरा दोषकातराः सस्त्रीका राष्ट्रांतरं जग्मुः ॥ ५५ ॥ ५६ ॥ ततो रुग्णस्य मे राज्यं शत्रुभिराक्रांतं ततः प्रेत्य मया पितृभिः सह दुर्गतिर्भुक्ता ॥ ५७ ॥ प्रेतः व्याघ्रः अजगरः सालावृकः सूकरः शरठः श्वा क्रोष्टा मृगः वनकुक्कुटः कपिः चिल्लः ॥ ५८॥ नकुलः काकः ऋक्षः कुक्कुटो ग्राम्यः खरः मार्जारः भेकः कूर्मः मत्स्यः आखुः घूकः हस्ती विद्यमानब्रह्मराक्षसश्च ॥ ५९ ॥ एता योनयः कृच्छ्रान्मया भुक्ताः अद्य त्वामत्तुमागतस्य मम कथं शांतिरुपस्थिता ॥ ६० ॥ वामदेव उवाच ममांगस्य भस्मनोऽयं महिमा तत्स्पर्शाद्दादितस्तव ज्ञानं जातं यच्छंकरः स्वयं दधौ तस्य माहात्म्यं को वेद न को वेद ॥ ६१ ॥ पुरा औपपत्ये हतं बहिस्त्यक्तं भस्माक्तं श्वस्पर्शाद्भस्मभूषितं म्रियमाणं द्राविडं विप्रं नीतुकामानागतान्याम्यान्दूतान्निवार्य भस्मदग्धामलं तं शिवदूताः कैलासं निन्युः ॥ ६२ ॥ ६३ ॥ राक्षस उवाच ईदृग्भस्ममाहात्म्यं तद्धर्तुं समुत्सहे तन्निर्माणप्रकारं धारणप्रकारं च मे कथय ॥ ६४ ॥ पूर्वं ब्राह्मणेभ्यो जीविका दत्ताः निर्जलस्थले वाप्याद्या रचितास्तत्फलं त्विदमेव पापांते भवद्दर्शनं ॥ ६५ ॥ वामदेव उवाच त्र्यक्षं पंचवदनं सायुधदशहस्तं नागोपवीतं कपर्दिनं सस्मितं व्याघ्रांबरं चंद्रमौलिं गंगाधरं सांबं नत्वा सनत्कुमार आह ॥ ६६ ॥ भो जगन्निदानेश्वर हर मोक्षायाल्पसाधनमुपादिश यानि पूर्वं प्रोक्तानि साधनानि दुष्कराणि ॥ ६७ ॥ शिव उवाच भस्मैव दर्शनात्पापं हृत्वा धारणाज्जीवन्मुक्तिं ददाति ॥ ६८ ॥

यज्ञोत्थं करीषोत्थं वा भस्माग्निमित्यादि मंत्रैरभिमंत्र्य त्र्यायुषमित्येतैर्वितर्जन्यंगुलीभिर्ललाटादिषु धार्यं ॥६९॥ त्रिपुंड्रा भ्रूसमा रेख्याः ते च त्रिवर्णास्त्रिदेवास्त्रिगुणास्त्र्यात्मानस्त्रिशक्तयस्त्रिछंदसास्त्रिवेदास्त्रिलोकास्त्रिषवणाः स्युः ॥ ७० ॥ ७१ ॥ पापघ्नमिदं सर्वैर्विधिवद्धार्यं अज्ञेनापि भक्त्या धार्यं नातः परं तारकं ॥७२॥ परस्त्रीगोनिंदकः क्षेत्रहृत्पीडकः गृहदाही मृषावादी वेदरसक्रयी नीचाद्दुष्प्रतिग्राही वृषलीविधवादिगो ज्ञानाज्ञानकृताघोपि भस्मधारणान्मुच्यते ॥ ७३ ॥७४॥ पुरुषार्थदैर्भस्मरुद्राक्षैः स्वर्गेऽपि पूज्यः सहस्रजन्मदोषघ्नं व्याधिहरं तीर्थस्नानजपाधिफलं भस्म स्वरादिलोकं नीत्वांते कैलासे स्थापयति इदमेव सुलभं साधनमिति ॥ ७५ ॥ ७६ ॥ एवं सनत्कुमारेश्वरसंवादोऽयं मयोक्तः तस्मात्त्वं धत्स्वेति भस्म ददौ ॥ ७७ ॥ राक्षसोऽपि तद्धृत्वा राक्षसीं तनुं हित्वा क्षणान्मुक्तो बभूव ॥ ७८ ॥ ततः प्राप्तेन विमानेन स्वर्गतः हे त्रिविक्रमेदं ज्ञात्वाऽऽधेहि मुच्यसे ॥ ७९ ॥ इति गुरूक्तमंगीकृत्याभिवाद्यागात् अन्येपि श्रुत्वा तथैव चेरुः ॥ ८० ॥ एवं क्रियाविपाकः यमयातना च श्रोतुर्भीतिदाऽतः श्रेय आचरेत् ॥ ८१ ॥ इति पंचदशोऽध्यायः ॥

---

# अथ षोडशोऽध्यायः

नामधारक उवाच अद्भुतकर्मणो हरेश्चरितं ब्रूहि अमृतं पिबत इव तच्छृण्वतोऽपि मे न तृप्तिः ॥१॥ सिद्ध उवाच वत्स साधु पृष्टं धन्योऽसि त्वया भवाब्धिर्जितः यत्ते चित्तं तच्चरितेन रंजितं तेन तुष्टोऽस्मि ॥ २ ॥ तत्साकल्येन को ब्रूयात् कति चित्राणि ब्रुवे यदीक्षणान्मको ब्रूतेंऽधो वक्षिते मृतोऽपि जीवति ॥३॥ माहुरे गोपीनाथविप्रस्य पुत्रा बहवो बाल्य एव मृता एको दत्ताराधनेन जीवितः ॥ ४ ॥ चिरजीवितस्य तस्य

दत्त इति नाम प्रतिष्ठितं स कांतः सुलक्षणो धीमान्पित्रोर्दुःखहरोऽभूत् ॥ ५ ॥ तत उपनीतस्य तस्य दैवाद्धीगुणशीलशालिनी वधूः स्मरस्य रतिरिव लब्धा चक्रवाकवत्तयोः प्रेमाभूत् ॥ ६ ॥ सरूपौ वियोगासहनौ दक्षौ अन्योन्यभद्रेच्छू आसतुः पतिसेवायां साध्व्यास्तंद्रा निद्रा च नासीत् ॥ ७ ॥ पत्युर्वियोगे लेपवातचंद्रशय्यास्रग्भूषासुवागन्नमपि दुःखकरमभूत् ॥ ८ ॥ एवं सति पतिरपरिहार्यक्षयग्रस्तोऽतः क्षीणोऽरुचिः श्वासकफार्तस्त्यक्ताहारनिद्रो मंदवागभूत् ॥९॥ स यथा भुंक्ते शेते क्षीयते च तथा तत्पत्नी छायेवाभूत् ॥ १० ॥ कुगंधशंकया वैद्येन त्यक्तमपि तं साध्वी न जहौ पादांगसंवाहनभेषजादिना भेजे ॥ ११ ॥ शांतिहोमजपार्चनदानौषधैरशांतो रोगो राहुश्चंद्रज्योत्स्नामिव तन्मुखस्मितहरोऽभूत् ॥१२॥ तौ तथा दृष्ट्वा पितरौ दुःखितौ लोकैर्निवारितापि साध्वी भार्कमिव तं न जहौ ॥ १३ ॥ विप्र उवाच भो पितरौ प्राग्वैरत इदं कष्टं दत्तं प्रारब्धं मत्वा शोको न कार्यः हे प्रिये पूर्ववैरिणं मां हित्वा पितृगृहं गच्छ ॥ १४ ॥ सावित्र्युवाच अनन्यशरणेयं न त्याज्या अर्धदेहभागिन्यस्मि जीवनभूते भवति वियुक्ते कथं स्यात् ॥ १५ ॥ भवतो मम च मुखश्रीरमलातो नारिष्टं प्रभवति सर्वसुखदो दत्तो नौ त्राता ॥ १६ ॥ भो श्वशुरौ वां नमः गंधर्वस्थगुरुदर्शनाद्भर्तुरारोग्यं भविष्यतीति मे मतमिदं वां रोचते किं ॥ १७ ॥ तौ प्रोचतुस्तव श्रमेण यत्र शं स्यात्तत्र गच्छेति ततस्तौ नत्वा सा प्रतस्थे ॥ १८ ॥ आंदोलिकास्थं मंथरवाहितं हस्तिनीभमिव सांघ्रिचारिण्यनुगता ॥ १९ ॥ कतिचिद्दिनैर्भीमातटमेत्य स ममार सा मर्तुमुत्काप्यन्यैर्वारिता रुदती आह ॥२०॥ भो नाथ संध्याकालोऽयं कति शेषे संध्यामुपास्वोत्तिष्ठ कुतो न ब्रूषे ते वचः किं व्यलंघयं ॥ २१ ॥ त्वत्प्राणा मनश्च क गतं तानाश्वावर्तय नो चेत्पितृदारहत्यालिप्तो भविष्यसि ॥ २२ ॥ उद्वाहितां मां विहाय क गच्छसि पुत्राननुत्पाद्य कथमानृण्यं मया कथं स्थातव्यं किमपि न भाषितं

राक्षसीप्रायाहं गुरूणां गृहं कथं व्रजेयं ॥२३॥ त्वयि जीवति सर्वत्राहं पूताद्य कोऽपि मुखमपि न पश्येत् पृष्ठे कुतः शेषे ऋतुं विना न पृथक् सुप्तोसि ॥ २५ ॥ तृषितं नक्रः श्रांतं द्रुमः तृणगां गां हिंस्रश्च यथा घातयति तथा मे गुरुदर्शनं ॥ २६ ॥ रे ईश्वरेदं कथं कृतं रुक्शांतिशक्तिर्यदि ते न चेद्गच्छेति त्वयोक्ते त्वामर्दितुं कः क्षमः ॥२७॥ त्वया साधु कृतं ते यशो भर्त्रा सह लोकांतरं नेष्ये भो मातस्तेऽवैधव्यदानशक्तिः क गता भो व्रतेश्वरि विस्मरसि किं ॥२८॥ मांगल्यसूत्रं हारिद्रां कुंकुमं च हर्तुं चोरोऽत्र कुत आगतः मम सौभाग्यनौः कालमीनेन कथं लीढा ॥२९॥ एवमुरुत्रुटत्पटा तच्चेष्टितं संस्मृत्य संस्मृत्य प्रत्यंगमालंब्य मोहेन रुरोद तदा कश्चित्साधुराप ॥ ३० ॥ शूली भस्मरुद्राक्षजटाभृत्स तां प्राह बाले मृतः शुचा नैति मुधोच्चैः कुतो रोदिषि तूष्णीं तिष्ठ ॥ ३१ ॥ अपरिहार्यो मृत्युः कं न ग्रसति देवानपि जले काष्ठयोगो वृक्षे पक्षियोगश्च यथा तथात्र धवादियोगः ॥ ३२॥ अयं शाश्वतो मतश्चेत्पूर्वं कस्य का वासीः अद्वयत्वान्नायं संबंधः जीवस्तु चिदंशो विभुरजोऽव्ययश्च ॥३३॥ पंचात्मके संगते तस्मिन्भर्त्रादिधीरध्यस्ता सा न तात्विकी काष्ठाग्निवत्प्रकृतिगर्भालिंगमपि भर्त्रादित्वेन कल्पयंति ॥ ३४ ॥ अयं प्रकृतिगुणैर्देहतादात्म्यं प्राप्य द्वंद्वप्रतीतिं प्राप्तः सात्वमलेऽजे न तदभिमानिन एव भवः ॥ ३५ ॥ कर्मणो भवो भवात्कर्म चोभयमज्ञानात् येन धीरेणोभयं तत्त्वासिना कृत्तं तस्य न भ्रमः ॥३६ ॥ आकाशस्य घट इवास्याविद्योपाधिस्तदपाये परात्मत्वमेव रज्जुसर्पवत्कल्पितोयं भ्रमः सद्दर्शिततत्वदीपान्नश्येत् ॥ ३७ ॥ यावन्न बोधस्तावद्दिनरात्रिवज्जन्ममृत्यू नियतौ अतो बुद्ध्यस्व त्वग्रक्तमांसास्थिमयदेहशोकतः कुतः स्वार्थः ॥ ३८ ॥ तस्माच्छुचं मुंच येन तरिष्यसि तत्साधय अयं तत्समयः प्रमादतो नृयोनिर्गता चेत्पुनस्तत्कथापि न ॥ ३९ ॥ साध्व्युवाच आरोग्यहेतुना प्राप्ताया मम धवोऽत्र मृतः संबंधिनोप्यंतरितास्त्वमेव मे सर्वोस्यतो मां दुःख-

सागरादुद्धर ॥ ४० ॥ साधुरुवाच नृवत्साक्ष्या न नानोपायाः पातिव्र-
त्यमेकमेव तारकं तच्च देवोक्तं शृणु ॥ ४१ ॥ विंध्योत्कर्षभियागस्त्यमेत्य
देवैः सह गुरुः लोपामुद्रामाह रमासाविन्त्र्युमारुंधत्यादिषु त्वमेवोत्तमा
भर्तरि छायेव परिचरसि त्वदधीनमतो जगत् ॥ ४२ ॥ या छायेव भर्तृ-
परिचारिणी पतिरेव यस्या अखंडव्रतं सा पतिव्रता ॥ ४३ ॥ भर्तुः
पादांबु तीर्थं उच्छिष्टं प्रसादः तत्सेवा देवार्चनं संतोषोऽनुज्ञापालनं धर्मः
॥ ४४ ॥ वशानुवर्तनं देहयात्रा श्वश्र्वादिगौरवं लोकयात्रा भर्तेश्वरः
पोष्यपोषणं करणं ॥ ४५ ॥ नाज्ञां विना किंचित्कार्यं पत्यौ स्थिते स्थेयं
सुप्तोत्थितात्प्रागुत्थायाश्रांतं पतिर्मुदा सेव्यः ॥ ४६ ॥ गृहसंमार्जनादि
कृत्वा स्नात्वा भर्त्रे इष्टसंभाराः सुभोज्यं च देयं ॥ ४७ ॥ क्रुद्धश्चेत्क्षमा-
पनीयः परगृहे न गंतव्यं गुरुगृहेऽपि नाज्ञां विना नान्यैर्वक्तव्यं ॥४८ ॥
श्वश्र्वादिसंनिधौ मंदं पत्युश्च संधया वक्तव्यं परवक्त्रत इष्टं देहीति वाच-
येत् ॥ ४९ ॥ भर्त्रा यथा दत्तं वस्त्रभूषादि स्वीकार्यं दुर्भगो दीनो
दुःशीलोऽपि शिवोपमो न निंद्यः ॥ ५० ॥ स्वैरिणीसख्यं वर्ज्यं स्वीयै-
र्भेदो न कार्यः नित्यं सौभाग्योपचारा धार्याः प्रोषिते पत्यौ भूषा न
धार्याः ॥ ५१ ॥ ऋतौ मुखं न दर्शितव्यं वेदादि च न श्राव्यं चतुर्थेन्हि
स्नात्वा भर्ताऽसंभवे सूर्यः प्रेक्ष्यः ॥ ५२ ॥ प्रोषिते पत्यौ गुर्वाज्ञया
स्थेयं आगते च प्रत्युद्गंतव्यं स च व्रीडहावादिना संतोषणीयः ॥ ५३ ॥
तस्मिन्सुप्ते स्वपेत्तन्नाम नोच्चार्यं नान्यत्र भोक्तुं गंतव्यं क्वापि यांचा न
कार्या ॥ ५४ ॥ वैषम्येऽपि नोद्विजेत् पत्यौ दुःखिते न हृष्येत् धवाग्रे
हास्योच्चासनलीलास्त्याज्याः ॥ ५५ ॥ भर्तुः प्रतिवादाच्छुनी गुरुवं-
चनादुलूकी पतिं विना स्वादुभुक्त्या वराहोलूकयोनिगा ॥ ५६ ॥
रोषोक्त्या मूका कृतताडनजल्पनाद्व्याघ्री सपत्नीवैराद् दुर्भगा औपपत्या-
त्क्रिमिश्च भवेत् ॥ ५७ ॥ पत्यौ मृतेऽनुगंतव्यं विधवाधर्मे वा स्थेयं
शवाभावे गर्भिणीत्वे च वैधव्यपालनं मुख्यं ॥ ५८ ॥ शिरसो

वपनं भूशय्या दिवैव सकृद्भुजि: तांबूलगंधभोगमंगलस्नानादि वर्ज्यं ॥ ५९ ॥ सौभाग्योपचारा वर्ज्या गौरांशुकं धार्यं कार्तिकमाघवैशाखेषु स्नानादि कार्यं ॥ ६० ॥ शक्तौ चांद्रायणं कार्यमाज्यफलादि वा भोज्यं सति पत्यौ यत्प्रियं तद्विप्राय देयं ॥ ६१ ॥ कल्पोक्तमासव्रतं कार्यं यद्यद्वर्जितं तद्विप्राय देयं तैर्थिक: सत्कार्य: ॥ ६२ ॥ पुत्रे सति तदाज्ञया स्थेयं पतिवद्धरि: पूज्यो गुरुगोतिथिसद्विप्रा: पूज्या: कुभोजनं वर्ज्यं ॥ ६३ ॥ हरिलीला श्राव्याऽपुत्रा पितंस्तर्पयेन् स्वशीलं गोप्यं वैगुण्यात्पूर्वै: सहाधोगति: ॥६४॥ एवमाचाराद्दुर्गतिस्थमपि पतिमुत्धृत्य स्वर्विशेत् ॥६५॥ एवं लोपामुद्रानिकटे देवैर्धर्म उक्त: स ते कथित: अनुगमो रोचते चेद्भेवार्कं पतिमनुयाहि ॥ ६६ ॥ येन यमादपि पतिमुध्दृत्य स्वर्याति प्रतिपदमश्वमेधफलं सार्धत्रिकोटिरोमहोमत: प्रतिरोम भर्त्रा सह कोटिवर्षाणि स्ववास: ॥ ६७ ॥ ६८ ॥ गृहे गृहे रूपलावण्यसंपन्ना: स्त्रियस्ताभि: किं एकैव साध्वी त्रिकुलपावनी ॥ ६९ ॥ यतो भूवातार्काग्न्यादिर्बिभेति स्वपदच्युतिशंकया देवा: प्रणतास्तिष्ठंति ॥७०॥ अयं साध्व्या: प्रभावोऽसौ पितृतारका धन्या या स्वै: सह नरके याति तां दु:शीलां धिक् ॥ ७१ ॥ साध्व्युवाच वैधव्यपालनं कष्टं तारुण्याद्यत्र घातकं अतोनुगमने मे प्रीति: ॥ ७२ ॥ साधुरुवाच साधु साध्वीदं ते योग्यं दैवं दुर्जेयं भीष्मरावणाद्या अपि कालग्रस्ता: ॥ ७३ ॥ कालो देवैरप्यजय्य: सद्गुरुं विना दुर्धर: दूराद्गुरुदर्शनेच्छयागतास्यतो गुरुदर्शनं कुरु ॥ ७४ ॥ स्नात्वा सुवस्त्रं वसित्वा प्रायश्चित्तपूर्वं सौभाग्यदानानि सपत्नीकविप्रेभ्यो दत्वा ॥ ७५ ॥ कर्णयोर्गले चेमान् रुद्राक्षान् बध्वांगे भस्म लिप्त्वा पतिं गुरुपादाद्भि: प्रोक्ष्यानुयाहि ॥७६ ॥ इत्युक्त्वा भस्माक्षान् दत्वा सोऽगात् सापि द्विजानाहूय मुदा दानादि दत्वा ॥७७॥ गृहं प्रतियात उमेशौ मे पितरौ तत्राहं यास्येऽत्र सुखं स्थिताविति गुरुभ्य: कथ्यतामित्यनुगान्प्रोक्त्वा ॥ ७८ ॥ नीयमानस्य पत्युरग्रतोग्निकरा मंथरा

गच्छंतीश्वरीव रेजे ॥ ७९॥ षोडशाब्देयं भर्तृसौख्यानभिज्ञा सुंदरी कुलो-द्धर्त्री धन्येति जनैः स्तुताऽगात् ॥ ८०॥ श्मशानमेत्याग्निं संस्कृत्य सुवासिनीस्तोषयित्वा गुरुभाषितं सस्मार ॥ ८१ ॥ भस्मधारणादि कृत्वा विप्राज्ञया गुरुं द्रष्टुकामा तं स्तुवंती संगमं ययौ ॥ ८२ ॥ हे भगवन् त्वं दाता सर्वेशः सतां शरणं त्रिमूर्तिर्जगत्सृष्ट्यादिकारणं दयाब्धिरसि मत्तुल्यास्त्वत्कृपांशात्पुत्रादिफलभागिन्योऽहं तु पूर्णकामा भूत्वा ते कीर्तिमादाय स्वर्यास्ये ॥ ८३ ॥ अत्र मृतो जीवितः रुग्ण आरोग्यं गतः भीतः शं गतः दीनो धनितां यातः अज्ञः प्राज्ञतां गतः अहं च भर्त्रा सह ते सायुज्यं यास्ये ॥ ८४ ॥ एवं स्तुवंती गलदश्रुः सा पत्या सहात्मानमुद्धर्तुकामा जवेनैत्य गुरुं ननाम ॥ ८५ ॥ तादृशीं तां सौभाग्यवती पुनरष्टपुत्रा भवेति प्रीतो भगवानाह ॥ ८६ ॥ तच्छ्रुत्वा चकिता लोकाः सर्वमादितः शशंसुः प्रभुः प्राह मे वाक्यं मृषा नैवात्र शवमानय ॥८७॥ अत्रांतरे विप्रा एत्य रौद्र्या गुरुमानर्चुः तदानीतं शवं सुधादृष्ट्योद्वीक्ष्य ॥ ८८ ॥ स्वसंनिधौ स्थापयित्वा रौद्रमंत्रिताद्भिः स्नापयामास तदा सोऽकस्मात्सुप्तोत्थितवदुत्तस्थौ ॥ ८९ ॥ तदा हर्षाश्रुपूर्णाक्षी सा लज्जितं विस्मितं पतिं प्रेक्ष्य प्रेम्णा सर्वं कथयित्वोभौ प्रांजली भूत्वोचतुः ॥ ९० ॥ आवां दुर्धियौ पापौ भवत्पराङ्मुखौ भो सच्चिदानंद तथापि त्वं न हंसि ॥९१ ॥ जगद्गुरो विश्वमूर्ते परात्मन्विश्वरूप विश्वसाक्षिन्विश्वसंस्थ सर्वानंदनिधे हरे ॥ ९२ ॥ कर्ताकर्तान्यथाकर्ता पुमर्थदस्त्वमेव नौ अपराधः क्षंतव्यः ॥ ९३ ॥ इति स्तुत्वा प्रणतीश्चक्रतुः तद्दृष्ट्वा लोकोऽपि गुरुं तुष्टाव ॥ ९४ ॥ तत्रैको धूर्त आह भाले ब्रह्मलिपिरस्ति नास्ति वा सास्ति चेदस्यायं महामृत्युः कथं नष्ट इति ॥९५॥ श्रीगुरुरुवाच धात्रास्मिन्जन्मनि त्रिंशदायुर्लिखितमेष्यजन्मलभ्यशतायुरत्र गृहीत्वेदमग्रतः स्थापितमेवं विपरीतं कृतं ॥ ९६ ॥ तच्छ्रुत्वा

लोका उच्चैर्जयध्वनिं चक्रुः स ध्वनिर्दिवं गतः ॥ ९७ ॥ भगवान् दंपती प्राह पुत्रधनकीर्तियुजौ लोकवंद्यौ निरामयावायुष्मंतौ भवतम् ॥ ९८॥ इति गुरुवाक्यं श्रुत्वाऽऽनंदितौ तौ स्नात्वा गुरुमानर्चतुरर्कोस्तं गतः प्रभुरान्हिकं कृत्वा सर्वैः सह मठं प्राप ॥ ९९ ॥ इति षोडशोध्यायः ॥

---

# अथ सप्तदशोऽध्यायः

सिद्ध उवाच परेद्युः सावित्री गुरुं नत्वा प्राह गतदिने कश्चनैत्य तत्वज्ञानेन मामाश्वास्य भस्माक्षान्ददौ ॥१॥ गुरुं दृष्ट्वा तीर्थेन शवं प्रोक्ष्यानुगच्छेत्युक्त्वागात्स कः को वा तीर्थाक्षमहिमेति ॥ २ ॥ श्रीगुरुरुवाच मयैव रूपांतरेण ते भावः परीक्षितः सुभगे त्वं धन्यासि अयं तीर्थाक्षमहिमा ॥ ३ ॥ तन्माहात्म्यं कोपि न वेद ईशभूषेयं मोक्षदा एकादिमुखा अक्षा गंगास्नानफलदाः ॥४॥ ते धातुयुक्ता वराः सहस्रधृक् शिवः तैर्विना न पुण्यं न पापक्षयः ॥५॥ भस्माक्षरुद्रयुग्देवैरप्यजय्यः जपेक्षा भूरिमलदास्तैर्हीनः पशुरेव ॥ ६ ॥ कंठे ३२ मूर्ध्नि ४० कर्णयोः १२ बाव्होः १६ शिखायां १ दृष्ट्योः १ करयोः २४ उरसि १०८ धार्याः ॥ ७ ॥ काश्मीरे भद्रसेनराजस्य तन्मंत्रिणश्च पुत्रौ भूषाश्मवन्मत्वाऽक्षान्दधतुः ॥ ८ ॥ राज्ञा पृष्टस्तत्कारणं पराशर आह पुरा नंदिग्रामे चार्वी वारमुख्याभूत् ॥ ९ ॥ सगजाश्वधनाढ्या दासी तन्नाट्यमंडपेऽक्षभूषितौ मर्कटकुक्कुटौ ॥ १० ॥ तत्पातिव्रत्यपरीक्षायै कंकणं लिंगं च धृत्वा वैश्यरूपेणागतं शिवं दृष्ट्वा वेश्या सखीमाह ॥ ११ ॥ मूल्येन रत्या वेदं दास्यति चेत्त्यहं साध्वीधर्मेणामुं रमयामि पृच्छैनं ॥ १२ ॥ स पृष्ट आह स्वैरिण्याः केवलं व्यभिचारः क्व सत्यं ॥ १३ ॥ वेश्यो-

वाच लिंगोपरि शपे ऽयहं सर्वभावतः साध्वीत्वेन त्वां भजे ॥१४॥ सूर्य-चंद्रौ साक्षिणौ स्ववाक्यं पालयेत्युक्त्वा स करे कंकणं बध्वा लिंगमदान् सापि मंडपे लिंगं निधाय साध्वीत्वेन तं भेजे ॥१५॥१६॥ ततो रतिक्षणे सलिंगमर्कटकुक्कुटो मंडपो दग्धः तदा वैश्योऽग्निं विवेश ॥१७॥ कुला-चारविरुद्धं मा कुर्विति स्वैर्निषिद्धापि भर्तृनाशार्ता सानुगंतुमुद्युक्ता ॥१८॥ सर्वस्वं दत्त्वार्कं नत्वेशं ध्यात्वाग्निं विवेश तदा स्वरूपेण शिवः प्रादुर्भूयाह ॥ १९ ॥ मायामुद्भाव्य परीक्षितासि त्वं साध्वी किमिष्टं वरयेति ॥२० ॥ सा प्राह क्वापि जैह्व्यौपस्थ्यसुखं न कांक्षे स्वैः सह मे ते सायुज्यं देहीति शिवोपि तथा ददौ ॥ २१ ॥ तौ मर्कटकुक्कुटावेतौ पूर्वसंस्काराद्दक्ष-प्रियौ शैवौ जातौ ॥ २२ ॥ अनयोः किं भावीति राज्ञा पृष्टो मुनिराह सप्ताहे त्वत्सुतो मरिष्यतीति ॥ २३ ॥ पुनः खिन्नेन राज्ञा पृष्टो मुनि-राह राजन् मा भी रुद्रस्त्राता ॥२४॥ स्रष्ट्रा धर्माधर्मौ सृष्टौ तत्पतींद्रयमौ तौ धन्यपापिनौ स्वरधोनेतारौ ॥ २५ ॥ कामाद्या यमभृत्यास्तत्स-हायाद्यमः पापान्दुर्गतिं नयति ॥२६॥ धींद्रियमनःस्था एतेऽबलान्भीरून् घ्नंति यतात्मनो न ॥ २७ ॥ दक्षिणास्याद्ब्रह्मा यजुः ससर्ज तस्मान्मु-निभिः पापहा रुद्रो लब्धः ॥ २८ ॥ तत्पाठका यत्र कामाद्या न यांति यमपुरं शून्यमासीत् ॥ २९ ॥ यमस्तद्धात्रेऽकथयत्स आह स्वपन्तिष्ठ-न्व्रजन्मत्तोऽभक्तिर्जपेच्चेत्स पापी तं शाधि ॥ ३० ॥ तदन्यान्जापका-न्रुग्णान्मृतिगानपि मा प्रेक्ष ते श्रीविद्यायुरारोग्यादिभाज इति ॥ ३१ ॥ तस्मान्मृत्युंजयस्त्राता मा भीः सद्ब्राह्मणद्वारा रुद्रेऽतिरुद्राभिषेकादसाव-युतायुर्भवितेति ॥ ३२ ॥ ततस्तादृशान्विप्रानाहूय श्रद्धया विधिवद्राजा-नुष्ठानमारेभे ॥ ३३ ॥ ततः सप्तमेऽन्हि पाशदंडधरा अदृश्ययमचराः प्राप्तास्तदा पुत्रो मूर्छितः ॥ ३४ ॥ तदुपरि रौद्रांबु सिक्तं तदाकस्माद्रुद्र-चरा अदृश्यतयेत्य तं जिघ्युः सुतोप्युत्थितः ॥ ३५ ॥ प्रीतो राज विप्रान्संतोष्य सदस्युच्चासनस्थं पराशरं भेजे ॥ ३६ ॥ अत्रांतरे रण-

द्वीणो नारद एत्य सत्कृत आह ॥ ३७ ॥ महामृत्युस्त्वत्पुत्रं हर्तुमागतः शिवदूतैः पराभूतो यमं गत्वा तच्छशंस ॥ ३८ ॥ यमोऽपि तानेत्यायं को न्याय इत्यूचे ते तमाहुरिदं चित्रगुप्तं पृच्छेति ॥ ३९ ॥ ततश्चित्रगुप्तो पट्टे द्वादशेऽब्देऽल्पमृत्युं तीर्त्वायुतायुर्भवितेत्यदर्शयद्भ्रांतो यमस्तदा शैवान् क्षमाप्य गत इदं दृष्टं शाक्तेनायं त्रातः ॥ ४० ॥ ४१ ॥ इत्युक्त्वा दत्ताशीर्नारदोगात् पराशरोऽपि गत इति तीर्थाक्षमहिमेति ॥४२ ॥ सावित्र्युवाच भवद्दृशा धन्यास्मि भवत्स्मृत्यै मे मंत्रमुपादिश ॥ ४३ ॥ श्रीगुरुरुवाच स्त्रीणां पतिभक्तिस्तारिणी मंत्रोऽदेयः शुक्रवद्दातुरपि हानिः ॥ ४४ ॥ पुरा युद्धे देवहतान्दैत्यान् शुक्रो विद्ययाजीवयत् ॥ ४५ ॥ इंद्रार्थनयानीय शुक्रं शिवोभक्षयत्स मूत्रान्निःसृतः ॥ ४६ ॥ दैत्यानेत्य प्राग्वत्तानजीवयत् तदेंद्रो धीमन्नः पाहीति गुरुं शरणं गतः ॥ ४७ ॥ स आह व्याजात्तन्मंत्रे भ्रंशिते वो जयो दैत्योत्कर्षादिदं वरं ॥ ४८ ॥ इत्युक्त्वा स्वसुतं कचमाह विद्यार्थित्वेन शुक्रं गत्वा तन्मंत्रसारं तिरस्कुर्विति ॥ ४९ ॥ कचोपि तथा शुक्रं गत्वा प्राह प्रणतं मां शाधि मयि पक्षित्वं मा निधेहीति ॥ ५० ॥ तं दृष्ट्वा मोहिता शुक्रजा देवयानी तातमाहासुं शिष्यत्वेनांगीकुर्विति ॥५१॥ शुक्रेणापि तद्वात्सल्यादूरीकृतः कचोपि तं भक्त्यातोषयत् ॥ ५२ ॥ तच्छाठ्यं ज्ञात्वाऽसुरास्तं वने जघ्नुः देवयानी तमदृष्ट्वा शुक्रमाह क्व प्रिय इति ॥ ५३ ॥ शुक्रोऽपि तं ध्यानेन हतं ज्ञात्वा जीवयित्वानयत् कन्या जहर्ष ॥ ५४ ॥ पुनर्दैत्यास्तं हत्वा हिंस्रेभ्योर्पयन् तमदृष्ट्वा शोचंतीं कन्यामाश्वास्य ॥ ५५ ॥ शुक्रो हिंस्रोदरादपि निष्काश्यैक्यं कृत्वा संजीवन्या पूर्ववच्चक्रे ॥ ५६ ॥ पुनर्दैत्यास्तं हत्वा मद्यमिश्रं तद्भस्म शुक्रायापाययन् ॥ ५७ ॥ पुनः कुमारी शुशोच शुक्रोऽपि ध्यानात्स्वोदरगं ज्ञात्वा ब्रह्मघ्नान्दैत्याञ्छशाप ॥ ५८ ॥ कन्यामाह दैत्यैर्मत्कुक्षौ क्षिप्तस्य तस्योद्धारतोऽहं मरिष्ये यतोऽमुं मंत्रं कोपि न वेद ॥ ५९॥ कन्याह मे मंत्रं दत्वा तं जीवय मृत्युरेष्यति चेदहं त्वां

जीवयिष्यामि ॥ ६० ॥ नो चेन्मरिष्यामि इति निर्विण्णासीन् स तस्यै मंत्रं दत्वा कचं जीवयित्वा ममार ॥ ६१ ॥ कन्या शुक्रोदरान्निर्गतं कचं शुक्रं मृतं च दृष्ट्वाजीवयत्तदा मंत्रोऽतेजा अभूत् ॥ ६२ ॥ ततः कृतकृत्यः कचो गुरुं नत्वा प्रतस्थे ॥ ६३ ॥ देवयानी तमाह मया त्विर्जीवितोस्यतो मामुद्वाहयेति ॥ ६४ ॥ स आह गुरुपुत्री स्वसा प्राणदात्री मातात एवांबाऽस्वर्ग्यं विरुद्धाग्रहं त्यज ॥ ६५ ॥ तदा सा विद्यां विस्मरेति तं शशाप सोपि ते मौर्ख्यात्त्वां हीनो वरिष्यति ते गुरो-र्मंत्रो नष्ट इति च ॥ ६६ ॥ तदा मंत्रो हीनः शुक्रोपि दीनश्चाभूत् तस्मात्स्त्रियै मंत्रोऽदेयस्ततः गुर्वाज्ञया व्रतं कार्यं ॥ ६७ ॥ सावित्र्युवाच एवं चेत्ते स्मृतिदं तारकं व्रतं कथय ॥६८॥ श्रीगुरुरुवाच सुलभं तारकं सोमवारव्रतं सर्वेप्यस्याधिकारिणः ॥ ६९ ॥ यतः सीमंतिन्या नष्टोऽपि पतिर्लब्धः आर्यावर्ते ख्यातश्चित्रवर्मा राजाभूत् ॥ ७० ॥ स शिवप्र-सादात्सुलक्षणां कन्यां लेभेऽसौ भर्त्रायुताब्दं राज्यभोक्त्रीति गणका ऊचुरेकोस्या बाल्ये वैधव्यमिति च ॥ ७१॥ राजाखिद्यत द्वादशाब्दका सा भाविवैधव्यं श्रुत्वा दुःखिता ॥ ७२ ॥ मैत्रेयीं शरणं गता सा तामाह सोमवारव्रताच्छंकरस्त्राता ॥ ७३ ॥ सोमवार उपोष्य नक्तं भुक्त्वा वा भक्त्या वाङ्मनःकायैः सदाशिवोर्च्यः॥७४॥ प्राप्तमपि भयं नश्येत् त्यक्ते व्रते शंकरः कुप्येत ॥ ७५ ॥ अभिषेकात्पापक्षयः पीठार्चनात्साम्राज्यं गंधादेः सौभाग्यं धूपात्सौगंध्यं ॥ दीपात्कांतिर्भोज्याद्भुक्तिस्तांबूलाच्छ्री-र्नत्या पुरुषार्थाः जपादैश्वर्यं विप्रभोजनात्सर्वतृप्तिः ॥ ७६-७७ ॥ होमा-त्कोशवृद्धिः स्तवात्सर्वाप्तिरिति तदुक्तं व्रतं सीमन्तिन्यकरोत् ॥ ७८ ॥ भावि भूयादेषा देयेति निश्चित्य नलगोत्रजानुरूपचित्रांगदवरायादात् ॥७९॥ गजादि दत्वापि स्वराष्ट्रे स्थापयामास ॥८०॥ स एकदा कालिंद्यां मज्जति स्म तच्छ्रुत्वा पितरौ श्वशुरौ चैत्यान्वेष्यापि नापुः अनुगंतुमुद्युक्तां कन्यां शवाभावान्निवार्य राष्ट्रं जग्मुः ॥ ८१-८२ ॥ शोकार्तापि सा व्रतं

चक्रे पुत्रशोकाकुलं सस्त्रीकमिंद्रसेनं निगृह्यारी राष्ट्रं बुभुजे ।। ८३-८४ ।। मग्नं तं नागिन्यो वासुकये ददुः सोमृतेन तं जीवयित्वापृच्छत्कस्त्वं कस्य भक्त इति ।।८५-८६ ।। चित्रांगद उवाच नलवंशीयश्चित्रवर्मजामाता चित्रांगदराजोहं नद्यां पतितोपि पाताले दैवाद्धोऽद्राक्षमतोऽहं धन्योऽस्मि जगत्कारणभूतकैलासस्थशंकरभक्तोस्मीति ।। ८७-८८ ।। वासुकिरुवाच त्वं पूतोस्यतो दिव्यभोगान्भुंजन्निरुपद्रवेत्र लोके तिष्ठेति ।। ९० ।। चित्रांगद उवाच मां मृतं मत्वा पितरावधुनोद्वाहिता भार्या च मरिष्यंति ।। ९१।। 'तर्हि याहीत्युक्त्वा वासुकिर्नागाश्वौ भूषामृतादि च दत्वा प्रस्थापयामास ।। ९२ ।। स मनोजवो गच्छन्कालिंद्यां विरूपां स्वस्त्रियं दृष्ट्वापृच्छत्कासीति ।। ९३ ।। तदाज्ञया सख्युवाच ।। ९४ ।। चित्रवर्मजेयं सीमंतिनी अत्रास्याः पतिर्मग्नस्तच्छोकार्तेयं सोमवारव्रतं चरति ।।९५।। अस्याः श्वशुरो निगृह्यारी राज्यं भुंक्ते ।। ९६ ।। सीमंतिन्यपि कोयं धूर्तो यक्षो वाथवा मे भ्रमः स्वप्न इति मत्वा शुशोच ।। ९७।। तदा तामाश्वास्य त्वत्पुण्यात्ते भर्ता श्व एष्यतीत्युक्त्वा चित्रांगदोऽगात् ।। ९८ ।। सापि तूष्णीं पित्रालयं गता राजपुत्रोऽरिं स्वागमं श्रावयामास स भीतो नृपममोचयत् ।। ९९।। द्विषा क्षमापितश्चंद्रसेन आगतं पुत्रं श्रुत्वा प्रेमाश्रुक्लिन्नोऽभूत् ।। १०० ।। अलंकृतं पुरं प्रविश्य पितरावालिंग्य सर्वं शशंस ।। १।। नागं सत्कृत्य प्रस्थापयित्वा श्वशुरराष्ट्रमेत्य भार्याशोकं जहार ।। २ ।। आनीतानर्घवस्तूनि तस्यै दत्वा तया सहैत्य राज्येऽभिषिक्तश्चित्रांगद इंद्रवदिहैश्वर्यं भेजे ।। ३।। ईदृग्व्रतप्रभावोतः कुर्विति गुरुणोक्ता सावित्री भर्त्रा सह सोमवारव्रतं चकार।।४।।गुर्वाज्ञया पतिगृहं गत्वा प्रत्यब्दं गुरुदर्शनं कृत्वा श्रीपुत्रपौत्राढ्यौ भूत्वोभयीं सिद्धिं गतौ ।। ५।। एवं जगन्मंगलमंगलात्मा मनुष्यभावात्परिगृह्य भक्तान् । संचारपूतां जगतीं विधाय ततान लीलाममलामघघ्नीं ।। ६ ।। इति चूर्णिकायां सप्तदशोऽध्यायः ।।

# अथाष्टादशोऽध्यायः

नामधारक उवाच मोहरात्र्यामहंकारघूर्णितं बोधार्कोदयप्रबुद्धं मे मनो भगवत्कथामृतं पातुमिच्छत् ॥१॥ सिद्ध उवाच वत्स प्रबुद्धोऽसि यच्छृण्वतोपि ते न तृप्तिस्तस्मात्त्वयि भगवत्प्रसादोऽस्तीति मन्ये ॥२॥ तत्र त्यक्तपरान्नप्रतिग्रहो दैवलब्धभुक् शांतः कर्मपरो विप्रोऽभूत् ॥३॥ तत्स्त्री परगृहे स्वन्नवस्त्रार्थांल्लभंत इति दृष्ट्वा पतिमगर्हयत् ॥ ४ ॥ एकदा सैकेन धनिना भर्त्रा सह भोक्तुमाहूताप्यकामेन पत्या निषिद्धा गुरुमेत्योचे ॥ ५॥ दीनां कुचैलां क्षुधितां मां भर्त्रा सह भोक्तुं दाताव्हयति पतिर्न यास्यत्यतो गच्छेति तमुपादिश ॥ ६ ॥ तदा प्रभुर्द्विजमाहूयाद्य नियमं हित्वा पत्न्या सह भोक्तुं गच्छेत्युपादिशत्स तथेत्युक्त्वा तया सहागात् ॥ ७॥ तत्र भुंजाना सा श्वशूकरोच्छिष्टपाकतोन्नं ददत इति दृष्ट्वा भर्त्रे शशंस ॥ ८ ॥ तत उभावुत्थाय खिन्नौ गुरुमेत्य तदूचतुः ब्राह्मणीं गुरुराह परान्नसुखं लब्धं किमिति ॥ ९ ॥ सा प्राह मेऽपराधः क्षंतव्यः तां गुरुराह पत्युराज्ञानुगा भवेति ॥ १०॥ विप्र उवाच दुष्टया मे निष्ठान्यथा कृता आजन्मेदं न कृतं ॥ ११ ॥ मा भीर्नैष दोषः पत्न्या मनःशांतिर्जाताऽतः सापीदृङ्नैच्छेत्त्वमपि परान्नं त्यज ॥ १२ ॥ कदाचिद्ब्राह्मणाभावे कस्यचित् कर्माभाव उपस्थिते भोक्तुं गंतव्यं ॥ १३ ॥ विप्र उवाच कस्यान्नं पवित्रं कुत्र न भोक्तव्यं कस्मादानमादेयं किं निषिद्धं चेति वद ॥ १४ ॥ श्रीगुरुरुवाच सद्विप्रवैदिकगुरुस्वजनशिष्यमातामहगेहे भोक्तव्यं आचारहीनपरकर्मकृत्क्रोधिकदर्यापांक्ताशुद्धस्वजनपीडकगृहे नाद्यात् ॥ १५ ॥ नित्यं परान्नं भुक्त्वा स्वपुण्यं दातरि तत्पापं च भोक्तरि संक्रमेत् दर्शे परान्नं मासपुण्यहृत् शूद्राव्हानतोऽमंत्रतो वाशनात्पापं ॥ १६ ॥ प्रजोत्पत्त्यूर्ध्वं कन्यालये भोज्यं नित्यं परगृहवासे लक्ष्मीर्नश्येत् सज्जनादानं ग्राह्यं तदपि ग्रहणे तीर्थे क्षेत्रादौ

निंद्यं च दानं वर्ज्यं ।। १७ ।। दीक्षितब्रह्मनिष्ठान्नं यज्ञशेषं चोत्तमं स्वार्थं पक्वं नाद्यात् ।। १८ ।। आपदि गायत्रीजपान्न दोष आपदादिविचारपूर्वकं ये धर्मं चरंति तेषां नाधिदैन्यर्णरोगाः ।।१९।। स्वधर्महीना परधर्मसक्ताः परत्रात्र च दुःखभाजः तस्मात्त्वमनासक्त्या धर्मं चर ।।२०।। विप्र उवाच भो देव सद्गुरो दयया सर्वमाचारं कथय ।।२१।। श्रीगुरुरुवाच आचारो मुनीनामपि दुर्ग्रहः ततः पराशरादिमतं सद्गतिदं सारभूतं शृणु ।। २२ ।। आचारोत्थो धर्मः स उभयसुखदः श्रुत्याद्युक्तचरणं विष्णुध्यानं शक्त्या दानं दयाक्षमानसूयानायासानीहाकार्पण्यं शौचं मंगलं एतद्युक्तो धर्मः ।। २३-२४ ।। धर्माच्छ्रैष्ठ्यं कर्म ततो ज्ञानं ततो मोक्षः ।।२५।। श्रुतिस्मृतिपूराणमूलो धर्मः त्रयाणां विरोधे श्रुतिर्वरा श्रुत्योर्द्वैधे द्वौ धर्मौ स्मृत्योर्वैरे लौकिकी वरा ।। २६ ।। वर्णाश्रमदेशकालार्हो लौकिकश्च धर्मो ग्राह्यः ।। २७ ।। न्यूनोऽपि स्वधर्मः परधर्माच्छ्रेष्ठः स्वगृह्याविरुद्धः स्मार्तोपि ग्राह्यः ।। २८ ।। काम्यमैच्छिकं ज्ञं विना नित्यनैमित्तिकत्यागी न क्वापि सुखी ।। २९ ।। प्रमादात्कर्मलोपे प्रायश्चित्त्या शुद्धिः बुद्धया दुःसंगत्या वा लोपे प्रयत्नाच्छुद्धिः ।। ३० ।। तस्माद्भक्त्या धर्मं भजेद्ब्राह्मणस्तु विशेषतः ।।३१ ।। दानप्रतिग्रहौ यजनयाजनेऽध्यापने च स्नानसंध्याजपहोमपाठयज्ञकृच्चरेत् ।। ३२ ।। तंत्रमिश्रां वैदिकीं वा क्रियां चरेत् कृतशौचः सुमुखः स्नात आचांतोथ पंचकच्छी सद्धौतः शुष्कद्विवस्त्रः यतकरणो बद्धशिखः मृद्भस्मान्यतरलिप्तः सपवित्रः ।। ३३–३४ ।। आसनस्थोंतर्जानुकरो नैशं विनोपोषितो गुरूक्तवत्कर्म कुर्यात् ।। ३५ ।। गव्यौषधांबुफलाशने न दोषः संकल्प्य कर्म कार्यं ईशार्पणात्तत्सांगता सूर्योदयास्ततः प्राक् प्रत्यक्च ।। ३६ ।। दिवा प्राङ्मुखो निश्युदङ्मुखः होमादौ अग्न्यादिसंमुखः अनुक्ते पूर्वोत्तरैशान्यो दक्षांगं उपवीतं आसीनत्वं मध्यपाठो देवतीर्थं च कंठलंब्यार्षं निवीतं दक्षांसगं ।। ३७–३८ ।। पित्र्यं प्राचीनावीतं वामांसगमुपवीतं भ्रष्टं त्रुटितं

वा त्यक्त्वान्यद्धार्यं ॥ ३९ ॥ षण्णवतिकरसूत्रं गायत्र्या त्रिगुणीकृत्य पुनस्त्रिरावृत्य ततस्त्रिदोरकं सग्रंथिकमब्लिंगैः प्रोक्ष्य १० गायत्र्याभिमन्त्र्य समंत्रं धार्यं ॥ ४०–४१ ॥ अग्निमंत्रदद्विजाः पुनर्योज्याः पिंडादिगा दर्भाः प्रेतश्राद्धभुग् विप्रश्चिताग्निनाशे मंत्रगो तुलस्याश्च वर्ज्याः ॥ ४२ ॥ सदा सोंकारा मंत्राः होमे स्वाहांताश्च वामहस्तहृत्तान् जपेत् ॥ ४३ ॥ ऋषिछंदोदेवताज्ञश्च जपेत् शूद्राहृतं द्विजक्रीतं समिज्जलपुष्पाद्यसन् ॥ ४४ ॥ हस्तनखास्पृष्टाफेनानुच्छिष्टांबु सन् कुशकाशयवोशीरगोधूमव्रीहिकुंदकमौंजदूर्वातृणानि दश दर्भा श्रावणामायां स्वीकृताः शुभाः तन्मूलाग्रेषु ब्रह्मविष्णवीशा अभितः सर्वे देवाः ॥ ४५-४६ ॥ उत्तरांतं प्राक्संस्थं व्यस्तं कर्म पित्र्यं अग्निगमाग्नेयांतं तद्वन्मुखं चांगे वामतः क्रमः ॥ ४७ ॥ दक्षहस्तस्य तर्जन्यधः पितृतीर्थं कनिष्ठाध ऋषितीर्थं अग्रे देवतीर्थं मूले ब्राह्मं मध्ये आग्नेयं ॥ ४८॥ क्रमात्तैः पित्रर्षिदेवाचमनादानकार्याणि सर्वत्र वामान्वारब्धान्यहस्तः आद्यंतयोरंबुदानं च ॥ ४९ ॥ त्वक्फलकृमिरोमवस्त्राणि श्वेतरक्तपीतकृष्णानि द्विजादेः परकीयमधौतस्फाटितं च वर्ज्यं ॥ ५० ॥ ब्राह्मे मुहूर्ते उत्थाय गणेशादीन् ग्रहान्गुरूं गांश्च नत्वा पुण्यश्लोकान्स्मरेत् ॥५१॥ ग्रामाद्बहिर्नैर्ऋत्यां देवसद्वृक्षाध्वहीने दूरेंबुसंस्थाप्येंद्रियाणि नियम्य ॥ ५२ ॥ दिवोदङ्मुखो रात्रौ दक्षिणामुखस्तृण आसीनः कर्णे सूत्रं कृत्वा मूत्रविशौ त्यजेत् ॥५३॥ तत एकवारं लिंगं द्विर्गुदं दशवारं वामकरं हस्तौ पादौ च प्रत्येकं सप्तवारं धात्रीमात्रमृदांबुना च क्षालयेत् ॥५४॥ मूत्रे तदर्धं रेतसि द्विगुणं ब्रह्मचारिवनस्थभिक्षूणा द्वित्रिचतुर्गुणं ॥ ५५ ॥ मार्गेर्धं संकटे तदर्धं स्त्रीबालानां गंधलेपांतं शौचे द्विजैर्द्वादश गंडूषा वामतस्त्याज्याः ॥ ५६ ॥ अन्यैरल्पाः तर्जन्यास्यं न शोध्यं द्वादशांगुलेन निंबापामार्गादिकाष्ठेन ॥ ५७ ॥ अन्यैरल्पेन समंत्रं देताः शोध्याः १६ गंडूषाश्च कार्याः जले गोमयेन प्रातर्मध्यंदिने मृदा च ॥ ५८ ॥ भिक्षुर्व्रती त्रिकालं स्नायात् चिरंटी न

शिरसा शीतांब्वभावे शीतसंपुटितोष्णांबुनाब्लिंगमंत्रितेन स्नानं ।।५९।। गृहे आचमसंकल्पाघमर्षणतर्पणं न दीपावल्युत्सवमांगल्यवर्षारंभेषु नित्योभ्यंगः ।। ६० ।। अनिंद्याहे ऐच्छिकः न विधवायत्योः मांगल्ये न शीतांबुस्नानं पुत्रोत्पत्तिपर्वक्रांतिश्राद्धाहादौ नोष्णोदकस्नानं ।। ६१ ।। वांत्यशुचिस्पर्शदुःस्वप्नरतिदुर्गमे स्नानं नद्यां प्रवाहाभिमुखो वरुणं प्रार्थ्य स्नात्वा ।। ६२ ।। जलमालोड्योन्मार्ज्याघमर्पणं कृत्वा स्नात्वा देवर्षि-पितॄंस्तर्पयित्वा ।। ६३।। उदग्दशं वस्त्रं संपीड्य शोधितांगो व्रजेत् सरंध्रो देहः स्रवत्यतः प्रातः स्नायात् ।। ६४ ।। त्रिसप्तद्वादशाहं संध्यास्नानाग्नि-हीनो द्विजोऽपि शूद्रो भवेत् अशक्तश्चेद्ध्यानाख्यं मानसं मृदा भौमं भस्म-नाग्नेयं गोरजोरूपमानिल सातपवर्षाख्यं दिव्यं वा चरेत् ।। ६५-६६ ।। मेधालोलुपारोग्यरूपतेजोयशोबलशौर्यदुःस्वप्ननाशायुष्मत्त्वं स्नातस्यास्ना-तस्य तदन्यच्च लभेत् ।। ६७ ।। स्नात्वा मृत् हुत्वा भस्माभ्यर्च्य चंदनं च ।। ६८।। शुक्ले केशवाद्यैः कृष्णे संकर्षणाद्यैश्च ललटादिपु धार्यं ।।६९।। भस्म तु षडक्षरेण धार्यं मृताशौचे न गंधो मांगल्ये न च भस्म धार्यं ।।७०।। गयाश्राद्धाधानोत्तरीयप्रेतकृत्यपादुकारौप्यमुद्रादि जीवत्पित्रा वर्ज्यं ।। ७१ ।। रौप्यहैमीखड्गमुद्रावत्तर्जन्यनामिकाकनिष्ठः साग्रागर्भदर्भ-पवित्रो वा ।। ७२ ।। मुक्तांगुष्ठकनिष्ठगोकर्णाकारहस्तेन केशवाद्यैस्त्रिः पीत्वा गोविंदविष्णुभ्यां करौ प्रक्षाल्य मधुसूदनत्रिविक्रमाभ्यामंगुष्ठमूले-नोष्ठौ संमृज्य वामनश्रीधराभ्यां तथैव मुखमुन्मार्ज्य हृषीकेशेति वामकरं प्रोक्ष्य पद्मनाभेति पादौ प्रोक्ष्य दामोदरेति मूर्ध्नि प्रोक्ष्य संकर्षणेति संहतां-गुलित्रयेणास्यं स्पृष्ट्वा वासुदेवप्रद्युम्नाभ्यामंगुष्ठतर्जनीभ्यां नासापुटे स्पृष्ट्वानिरुद्धपुरुषोत्तमाभ्यामंगुष्ठानामिकाभ्यां नेत्रे स्पृष्ट्वाधोक्षज नार-सिंहाभ्यां तथैव कर्णौ स्पृष्ट्वा जनार्दनेति पाणितलेन हृदयं स्पृष्ट्वोपेंद्रेति सर्वाभिः शिरः स्पृष्ट्वा हरिकृष्णाभ्यां तथा बाहू स्पृशेत् असंभवे त्रिभिः पीत्वा द्वाभ्यां हस्तौ प्रोक्ष्य कर्णं स्पृशेत् ।। ७३-७६ ।। पानेमावमज्जन-

मात्रांबुमूत्राद्युत्सर्गशुद्ध्यूर्ध्वं स्नाने दानेऽर्चने कर्मण आद्यंतयोः सुप्ते वस्त्रपरिधाने क्षुते कासश्वासाद्येऽध्ययनेऽशुद्धभाषणे ॥ ७७-७८ ॥ स्नानपादशौचश्मशानगतौ च द्विराचामेत् हीनसंभाषणे स्त्रीशूद्रोच्छिष्टभाषणे ॥ ७९ ॥ उच्छिष्टस्पर्शेऽपाने याते चाचामेत्कर्णं वा स्पृशेत् विप्रदक्षकर्णे वरुणार्केंदुवाय्वंच्व्यग्निदेवाः ॥ ८० ॥ संध्याऽज्ञानाच्छूद्रः संध्याहीनोऽशुचिः संध्यावंदनं विना नान्यकर्माधिकारः ॥ ८१ ॥ सम्यग्ब्रह्मात्र ध्यायंत्यतः संध्या भाढया भहीनार्कयुक्ता प्रातःसंध्या क्रमादुत्तमा मध्यमाधमा सार्कार्कोना भान्विता सायंसंध्यापि तथा त्रिघटिपर्यंतं न कृता चेच्चतुर्थार्घ्यं दद्यात् ॥८२-८३॥ सार्धप्रहरादासायं मध्यान्हसंध्या यतिब्रह्मचारिभिरनामिकाकनिष्ठांगुष्ठैः अन्यैः पंचभिर्नासा धार्या ॥ ८४ ॥ सव्यनाडयापूर्य सव्याहृतिकां गायत्रीं सशिरस्कां त्रिर्जपेत् ॥८५॥ कुंभितवायुं दक्षनाडया रेचयेत् पुनर्विपरीतं अत्र मूलबंध आवश्यकः जालंधरोड्डियाणौ पूररेचकहितौ प्राणायामोऽघघ्नोऽयं सर्वकर्मसु कार्यः ॥८६-८७॥ ग्रामाद्बहिर्द्विगुणं नद्यां शतगुणं तीर्थे सहस्रं च संध्याफलं ॥८८॥ गृहाद्बहिः कृता चेत्सुरापानादिदोषहारिणी संध्यामुपासिष्य इति संकल्प्यांबु पात्रे करे वादाय वरांतैर्मूर्ध्नि नांतैः पादयोः सथांतैर्हृदि च मार्जयेत् ॥ ८९-९० ॥ आपोहीति पञ्चः प्रातः सूर्यश्चेति मध्यान्हे आपः पुनंतु सायमग्निश्चेति प्राश्य ॥ ९१ ॥ सव्याहृतिगायत्र्याप्सूक्तेन प्रतिमंत्रं मूर्ध्नि मार्जयित्वा ऋतं चेति तृचा॥९२॥ पापपुरुषं स्मृत्वा पिंगलया बहिर्हस्तजले निःसरणं भावयित्वा नावलोक्य वामभागे ॥९३॥क्षितौ क्षिप्त्वाचम्य व्यंगुष्ठतर्जन्यंजलिना गायत्र्यार्कसंमुखं तिष्ठन् त्रिरर्घ्यं दद्यात् असावादित्येति प्रदक्षिणमासिच्याचामेत् ॥ ९४-९५ ॥ मध्याह्ने हंसर्चा नतोर्घ्यं दद्यात् जपे गृहाद्बहिर्द्विगुणं नदीगोष्ठवनाग्निहोत्रहरिहराग्रतो यथोत्तरं फलं ॥ ९६ ॥ काष्ठासनेपकीर्त्यूर्णं पल्लवे दौरात्म्यं वस्त्रे दैन्यं पाषाणे रोगः भस्मन्यारोग्यं कंबले सुखं ॥ ९७-९८ ॥ कृष्णा-

जिने ज्ञानं व्याघ्रचर्मणि मोक्षः कुशे प्रज्ञायुश्च ॥९९॥ व्याहृत्या पद्माद्यासनेनोपविश्य भूमिं प्रार्थ्य ॥ १०० ॥ भूतान्युत्सार्यैकाग्रेण देव्या यथांगमात्मानं भावयेत् ऋषिछंदोदेवतास्मृतिपूर्वकं ॥ १ ॥ न्यासान्कृत्वा मुद्राः प्रदर्श्य बालामिति यथाकालं ध्यात्वा ॥ २ ॥ आगच्छ वरद इति समाहितस्तिष्ठन्प्राङ्मुखो मंत्रार्थमनुसंदधानोंतरिक्षदृष्ट्या गायत्रीं शनैर्जपेत् मत्रकाराख्यमनस्त्राणान्मंत्रः ॥ ३-४ ॥ जन्मविच्छेदपापहृत्त्वाज्जपः सर्वयज्ञेषूत्तमः ॥ ५ ॥ वाचिकोल्पफलः मानसिकोतिफलोऽन्यो मध्यमः अंगुलिरेखाशंखमणिप्रवालस्फटिकमुक्तापद्माक्षीस्वर्णाक्षैर्यथोत्तरगुणं जपफलं संस्कृता माला ग्राह्या जपे मेरुलंघने मालापाते वा ॥६-७॥ तंद्रादौ वा पुनर्जपाच्छुद्धिः यतिः षडोंकारसहस्रमन्यः सप्रणवव्याहृतिमष्टोत्तरमष्टाविंशतिं दशवारं वा नासाग्रदृष्ट्या जपेत् ॥ ८ ॥ द्रव्यलोभेन न जपेत् क्रमान्मैत्रैः सौरैर्वारुणैः सदा जातवेदसे तच्छंयोस्त्रिर्नमो ब्रह्मण इत्युपस्थाय दिक्पं देवविप्रान्नत्वा संध्यां विसृज्य ॥९-१०॥ प्राङ्मुखोपविष्टं गुरुं स्वकर्णस्पर्शपूर्वकं दक्षिणवामपादौ दक्षिणवामकराभ्यां स्पृष्ट्वा पादयोर्मस्तकं न्यसेत् अभिवादनमेतत् अष्टांगैर्देवान्नमेत् ॥ ११-१२ ॥ श्रेष्ठानल्पानपि ज्ञान्सद्विप्रान्पाणिभ्यां नमेन्नाशुचीन् कर्मस्थाग्न्यादिहस्तान्स्वयं च तथाभूतो न नमेत् हीनांस्तु करेण ॥ १३ ॥ विवाहोर्ध्वं सायं प्रातरौपासनं स्वयं पत्नीशिष्यादिद्वारा वाचरेत् धमन्याग्निं प्रबोध्य ॥ १४ ॥ प्रादुष्कृताग्निं ध्यात्वालंकृत्य हौम्यं संस्कृत्य ज्वालायां समिधं हुत्वा ॥ १५ ॥ प्रातः सूर्याय सायमग्नये द्वितीयां तूष्णीं चोभयत्र हुत्वा क्रमात्सूर्याग्निमंत्रैरुपतिष्ठेत् ॥ १६ ॥ उभयत्रापि कायाभ्यां च षष्ठिधान्याहुतिः पयोदध्याज्यनीवारयवव्रीह्यादि हौम्यं ॥ १७ ॥ गृह्यं श्रौतं वा परिचरेत् नित्यमासिकवार्षिकयज्ञान्नातीयात् ॥ १८ ॥ दानं विनाहो नातीयात्किमपि शक्त्या दद्यात्सदाऽसकृद्विष्णुं स्मरेत् ॥ १९ ॥ संस्कृते सद्वारे छन्ने गृहे वसेदुपलिप्ता भूः पुनर्लेपेन

शुध्येत् ॥२०॥ अलिप्ते प्रेतादि वसति अत्र कांस्यपात्रवस्त्रे गर्ते गोमयेन नैर्ऋतित उपलिप्य ॥ २१ ॥ रंगवल्ल्यादिनान्वहमलंकार्यं गव्यं तिलांश्च- मे मणिश्रीखंडे धेनुः स्थाप्याः ॥ २२ ॥ त्रिसंध्ये देवः पूज्यः प्रातर्विस्त- रान्मध्यान्हे पंचोपचारैः सायं नीराजनेनार्च्यस्त्रिकालं तुलस्या च ॥२३॥ गुर्वर्काग्न्यंबुगोविप्रामूर्तन्यतममर्चेत् कलौ विष्णुसान्निध्याच्छालग्रामं वा ॥ २४ ॥ गुर्वाज्ञया भक्तिमान्यं पूजयेत्स प्रसीदति देवो भक्ततपसार्चना- द्विंबाभिरूप्याच्च सान्निध्यमेति ॥ २५ ॥ संशयात्माऽश्रद्दधानो नास्तिक- श्चार्चने नाधिकारी येभ्यो मातेति पुंगंधं निवार्य ॥ २६ ॥ सर्वसंभारा- नादाय देवाग्रे उपविश्य दक्षभागे कलशं निधाय वामे शंखं च संपूज्य प्रोक्ष्य ॥ २७ ॥ भूभूतशुद्धिं कृत्वा प्राणान्प्रतिष्ठाप्यांतर्बहिर्मातृकाभिर्देहे देवे च पुंसूक्तैश्च न्यसेत् ॥ २८ ॥ एवं देवो भूत्वार्घ्यादिपात्राण्यासाद्या- द्भिरापूर्य ॥ २९॥ हृत्स्थामीशकलामापादतलमस्तकं ध्यात्वांजलिस्थपुष्पं मूर्तौ न्यसेद्वा साक्षात्प्रतिमागतां देवतां विभाव्य ॥ ३० ॥ मंत्रतंत्र- विधानतः पीठद्वारदिक्पूजापूर्वकमर्चेत् पुंसूक्तेन वावाहनासनपाद्यार्घ्या- चमनस्नानवस्त्रसूत्रगंधपुष्पधूपदीपनैवेद्यनतिप्रदक्षिणापुष्पांजलीन्भक्त्या दद्यात् स्त्री शूद्रश्च द्विजोक्तपौराणमंत्रैः पूजयेत् ॥ ३१-३२ ॥ सति संभवे पंचामृतं गंधोर्ध्वं भूषा नैवेद्ये चतुर्धान्नं च ॥ ३४ ॥ राजो- पचारताम्बूलदक्षिणारार्तिकस्तोत्रगीतवाद्यविप्रभोजनैर्देवं तोषयेत् ॥३५॥ आदौ स्नाने धूपप्रदीपयोश्च घंटानादं चरेत् नैवेद्ये वस्त्रसूत्रयोराचमनं प्रत्युपचारं जलं च दद्यात् ॥३६॥ शिवं विना स्नाने शंखांबु देयं स्वारा- मारण्यक्रयाप्तं श्वेतरक्तकृष्णं पुष्पमुत्तमं मध्यमाधमं च पर्युषितं सच्छिद्रं सतुशीर्णं स्वयंच्युतं ॥ ३७-३८ ॥ समलं वामहस्तांघ्रिस्पृष्टं जले क्षालितं च न देयं बकुलाब्जाशोकजातीदूर्वाबिल्वशमीकुशतुलसीकरवीर- मल्लिकाः श्रेष्ठाः कोविदारार्कधत्तूरशाल्मलीकुटजैर्हरिर्नार्च्यः ॥३९-४०- ४१ ॥ तुलस्या गणेशो दूर्वयेश्वरी कृष्णरक्तकेतकनिंबैश्च शिवो नार्च्यः

बिल्वं श्वेतं चास्य प्रियं ॥ ४२ ॥ गणेशस्य दूर्वा विष्णोस्तुलसी चेति ज्ञात्वा पुष्पाणि श्रद्धया देयानि ॥ ४३ ॥ पुंसूक्तेन प्रत्यृचं हुत्वा पुष्पाणि दत्वा प्रार्थ्य तद्रतहृन्मंत्रं जपेत् ॥ ४४ ॥ द्विजदेवांघ्य्यब्जतीर्थं पेयं मूर्ध्नि धार्यं च चतुर्धाध्ययनं स्ववृत्त्या पोष्यपोषणं कुर्यात् ५४॥स्ववृत्त्या जीवनाभावादापद्यनिंद्यया वृत्त्या जीवेत् कुटुंब्यपि न हीनवृत्त्या॥४६॥ कृतसंध्य उपस्थं कृत्वा जानुस्थसकुशांजलिर्मध्यदृक् सोंकार व्याहृतिं पच्छोर्धर्चशः सर्वां गायत्रीं जप्त्वा तिष्ठन्नासीनो व्रजन्वानध्याये-ऽप्येवं सांगान्वेदान् शक्त्या पठित्वा ॥ ४७-४८ ॥ त्रिर्नमो ब्राह्मण इति च साक्षतांजलिर्देवानृषींस्तिलैः पितॄन्गृह्योक्तवत्तर्पयेत् ॥ ४९ ॥ आशौचे यज्ञादिवर्ज्यं कर्म मानसिकं चरेत् कृत्तिकाभरणीमघार्कशुक्रजन्माहे॥५०॥ विवाहव्रतचौलतोब्दतदर्धार्धं निमित्तं विना तिलैर्न तर्पयेद्गृहे तु नैव ॥ ५१ ॥ माघकृष्णाष्टम्यां भीष्मं दीपावल्यां यमं च तर्पयेत् नित्यनैमित्तिकश्राद्धैः पुत्रस्य पुत्रत्वं ॥ ५२ ॥ पंचसूनाहत्यै वैश्वदेवः कार्यः कुंडे ध्यात्वा दीप्तेऽन्नाहुतीर्हुनेत् ॥ ५३ ॥ प्रातःसायं बलीन्पितृभ्यो बहिर्भूतेभ्यश्च दत्वागतायातिथयेऽन्नं दद्याद्भिक्षवे चाद्यांतजलदानपूर्वं दत्तं चेदद्रिसिंधुवत् ॥ ५४-५५ ॥ बलावनुद्धृते नाद्यात्स्वयं नोद्धरेच्च नित्यश्राद्धं कृत्वान्नं वा दत्वा पोष्ययुग्भुंजीत ॥५६ ॥ आर्द्रपादहस्तास्योऽविदिङ्मुखः परिषिच्य दक्षभागे बलिं दत्वाहं वैश्वानर इति ॥ ५७ ॥ स्मृत्वापो मंत्रवत्प्राश्य धृतपात्रः प्राणाहुत्यूर्ध्वं शीघ्रं भुंजीत ॥ ५८ ॥ प्राणाहुत्यूर्ध्वं पात्रधारणमौने विकल्पिते तैजसे राजसे हैमे ताम्रे जंब्वाम्रचंपकरंभामधूककुटजपनसोदुंबरपत्रे मंडलस्थेऽद्यात् न तैजसे विधवाव्रतिभिक्षुभिः ॥ ५९-६० ॥ सर्ववल्लीपलाशार्कवटादिषु नाद्याच्च नासनारूढपादः प्रसृतप्रोष्ठपादश्च न बालैर्विवाहं विना वध्वा चाद्यात् न दुष्टैकपंक्तौ संशये द्वारभस्माग्निस्तंभैः पांक्तिं भिंद्यात् ॥ ६१-६२ ॥ गुरुं विना पांक्तिस्थ उत्थिते नाद्यात् उलूखलादेर्यावद्ध्वनि नाद्यात् नष्टे

दीपे मूत्राद्युत्सृतौ न च भोज्यं ॥ ६३ ॥ लेह्यादि हस्तदत्तमसन् नोच्छिष्टं पात्रे न्यसेत् पाकाग्निदेवासद्गृहे महारात्रौ च नाद्यात् ॥ ६४ ॥ पीतशेषं ग्रासशेषं तैलगव्यपकं विना पर्युषितं शूद्रान्नं रजस्वलादृष्टं ॥ ६५ ॥ केशकीटयुक्पकं पक्ष्याद्युच्छिष्टं कुसुंभालावुवार्ताककोविदारादि ॥ ६६ ॥ कुस्थानोत्थादिपलांडुलशुनावत्सैकस्तनीगोमाहिषीदुग्धादि खरादिदुग्धादि च वर्ज्यं ॥ ६७ ॥ कांस्ये नारिकेलेक्षुरसः ताम्रे गव्यं सद्ध्यार्द्रको गुडः केवलं लवणं चासत् ॥ ६८ ॥ श्वरजस्वलापतितशब्द-श्रवणे तद्विलोकने भुक्तौ परस्परस्पर्शे नाद्यात् ॥ ६९ ॥ व्रताहार्कपर्व-रात्रिभूतदिने नाद्यात् तलप्रसृतशाखाभिः फूत्कारतोपि भुक्तं न सत् ॥७०॥ आस्याविकारेणाष्टौ यतिः षोडश वनी द्वात्रिंशद् गृही वर्णीष्टमद्यात् प्राङ्मधुरं द्रवं मध्येम्लादि कठिनं तिक्तादि द्रवमंते चाद्यात् पायसाज्यलवणं विना सशेषमद्यात् ॥ ७१-७२॥ उच्छिष्टं त्यक्त्वा पीतापोशनः शेषं भुवि क्षिप्त्वा शुद्धकरास्यपादः ॥ ७३ ॥ हस्तोद्घृष्टांबु शर्यातिमित्य-क्ष्णोः क्षिप्त्वातापिं चेति जपित्वा सांगं तांबूलं ॥ ७४ ॥ विप्राय दत्वा-द्यान्नाथवा यतिः अंह्यग्रशिरोनं पर्णं सन् अहःशेषं ॥ ७५ ॥ श्रव-णादिना नीत्वा नक्तं कृतक्रियो यामोर्ध्वं द्वियामं स्वपेन् कृतं विष्णवे निवेदयेत् ॥ ७६ ॥ सुखशायी सर्पनिशा नत्वा सुमुहूर्तकृते तल्पे शयीत भूत्यां धान्येन्हि देवगोगृहे ॥ ८० ॥ श्मशानाध्ववल्मीकघोरदेशे न उदक्शिरा देवगुरूर्ध्वं नग्नश्च न, प्रवासे प्राक्पदः स्वपेन् ॥ ८१ ॥ दिवाकर्म संकटे रात्रौ प्रहरपर्यंतं नैशं च निशीथपर्यंतं कार्यं ततः प्राय-श्चित्तं ॥ ८२ ॥ कर्मवैगुण्ये लोपे च प्रायश्चित्तं विना न शुद्धिः ॥८३॥ सुदिने रह ऋतौ स्वजायां गच्छेत् प्राक् चतुर्निशाश्राद्धतत्प्राग्दिनाहो-व्रतपर्वसु ॥८४॥ जन्माहाष्टमीचतुर्दशीमूलमघारेवतीषु न ऋतुगः सदा ब्रह्मचारी ॥ ८५ ॥ सुपुत्रां विना ऋतौ विदेशं व्रजेद् द्वेषादिना न गच्छे-त्स भ्रूणहा ॥ ८६ ॥ षोडशाहमृतुर्विषमे हि कन्या समे सुतः रतौ

यादृक्कल्पना तादृक्सुतः ॥ ८७ ॥ अतः सत्पुत्रार्थं सत्वं धार्यं प्रायोऽपुत्रोऽधः पतति ॥ ८८ ॥ सत्पुत्रः एकोऽपि ध्रुववत्तारकः धार्तराष्ट्रशतोपमैः किं पराशरादिमतोऽयमाचारः विचाराचारकृत्सुखी ॥ ८९ ॥ आचारादुभयसिद्धिस्तदूना दंड्या ब्राह्मणस्तु विशेषतः ॥९०॥ इति गुरुमुखलब्धं धर्मं चरन् द्विजो मुक्तस्ततो लुप्तोप्याचार उदितः भगवतान्यो भक्तियोगोप्युक्तः ॥ इति अष्टादशोऽध्यायः ॥

---

# अथ एकोनविंशोऽध्यायः

नामधारक उवाच ज्ञानयोगार्थं कर्मयोगमुक्त्वापि कुतो भक्तियोगं जगौ ॥ १ ॥ सिद्ध उवाच भक्तिरेवोत्तमा सर्वसाधिकाऽभक्तस्य कर्मापि मोघमिति भक्तिं जगौ ॥ २ ॥ त्रिभिः परस्परसहायैर्योगैर्ब्रह्म गम्यते नैकयोगतः ॥ ३ ॥ श्रद्धालुः सात्विको भक्तो भगवत्प्रियः अभक्तं कर्मठमपि भवप्रवाहे क्षिपति ॥ ४ ॥ कर्मण्यकर्माकर्मणि च कर्म यः पश्येत्स भक्तः कर्मबंधान्मुच्यते ॥ ५ ॥ यच्छ्रुत्वा दृढभक्तिः स्यात्तद्भक्तिगम्यस्य भक्तियोगमयं चरितं शृणु ॥ ६ ॥ तत्र सशिष्यगुरवे प्रत्यहं भिक्षां ददुः एकदा दीनो भास्करशर्मा भक्तः ॥ ७ ॥ त्रिपुंपर्याप्तं तंडुलाद्यानीय गुरवे भिक्षां दातुमागतः ॥८॥ तदा गुरुणा सहान्येनाहूतो भोक्तुं गतः॥९॥ सायं द्रव्यमादाय सुष्वापैवं त्रिमासं तस्थौ ॥ १० ॥ प्राज्यशिष्याय गुरवे ल्पान्नेन भिक्षां दातुमेत्यात्मानं पुष्णातीतीतर उपहसंति स्म ॥ ११ ॥ तज्ज्ञात्वा भक्तिवृद्ध्ये प्रभुस्तमाह सशिष्यभक्ताय मे भिक्षां देहीति॥१२॥ स श्रुत्वा हृष्टः शाकाद्यानीय पाकमकरोत् ॥ १३ ॥ तदान्यं भिक्षां दातुमागतं निवार्य प्रभुः सर्वान्भोक्तुमाव्हयेति प्राह ॥ १४ ॥ तथाव्हयत्तं तमूचुः पक्वान्नकणाधिकानाहूय किं करिष्यसीति ॥ १५ ॥ स

तद्गुरवे शशंस गुरुस्तानानयित्वान्न सर्वैर्भोक्तव्यमित्यूचे ॥ १६ ॥
शंकिता अपि ते तूष्णीं स्थित्वा भुक्तिपात्राणि निर्माय स्नात्वाऽऽजग्मुः
॥ १७ ॥ गुरोराज्ञया मंत्रितं सिद्धान्नं शाटयाच्छाद्य नीत्वा नीत्वा॥१८॥
सशिष्यभक्ताय गुरवेदात्तान् स्त्र्यपत्येष्ट जो द्विजान्यथेष्टं भोक्तुं प्रार्थयामास
॥ १९ ॥ स्वल्पपाकतः परमान्नपोल्यादि नीत्वानीत्वा दत्तं तथापि तत्र
पूर्ववत् भगवत इयं चेष्टा ॥ २०-२१ ॥ सशेषमाकंठं भुक्तं तृप्ताःस्म
इत्युक्त्वा ते उत्थिताः गुर्वाज्ञया शूद्रादीन्हीनांश्चाहूयादात् पशुपक्ष्यादि-
भ्यश्च ॥ २२–२३ ॥ तत्र न केप्यवशिष्टा इति श्रुत्वा भास्करो गुर्वाज्ञया
भुक्त्वान्नं जलचरेभ्योऽदात्तदा निःशेषमभूत् ॥ २४ ॥ सुरसान्नस्य किं
माधुर्यं स्वप्नेऽपि न श्रुतमिदं देवानामपि दुर्लभं तृप्तिरप्यलौकिकी ॥२५॥
प्राक्पार्थसंकटे कृष्णो ऋषिभ्योन्नं ददाविति श्रुतमिदं तु दृष्टं ॥ २६ ॥
स्वल्पपाकतश्चतुःसहस्रं जीवाश्चामिता भुक्ता मायातर्क्येयं ॥ २७ ॥
येन त्रिमासं भक्त्या भगवान्सेवितः स भास्करः प्रियो भक्तोऽन्यथा कथं
प्रसाद इत्युक्त्वान्ये प्रभुं तुष्टुवुः ॥ २८-२९ ॥ भास्करायेष्टं दत्वा प्रभुर्ग-
मयामास तत्प्रसादादुभयीं सिद्धिं गतः ॥ ३० ॥ अन्यच्छृणु वृद्धा गंगा-
ख्या वंध्या प्रभुं प्रत्यहमानचैकदा तामाह किमिच्छसीति ॥ ३१ ॥
गंगोवाच नापुत्रस्य लोकः स्वःस्थाः पितरोप्यधः पतंतीति श्रुत्वा बिभेमि
॥ ३२॥ भवांतरे सुपुत्राप्त्या गतिर्भूयादितीहया तेर्चनं कृतं मां पाहीति
॥ ३३ ॥ श्रीगुरुरुवाच कर्मावर्तेन मायाब्धौ क भ्रमिष्यसि केयं स्मृति-
रतोत्रैव पुत्रौ भविष्यतः ॥ ३४ ॥ इति श्रुत्वा सा निष्कला जातिवंध्या-
पि ते प्रसादात्सुपुत्रा भवेयमित्युक्त्वांचले ग्रंथिं बध्वाह ॥ ३५ ॥ व्रता-
दौ मे वयो यातं मौर्ख्यात्पुत्रकामयाश्वत्थः सेवितः स किं दास्यतीति
॥ ३६ ॥ श्रीगुरुरुवाच यद्ब्रवीषि तदसत् ब्रह्मनारदसंवादं शृणु
ब्रह्माह हे नारदाश्वत्थमूलेहं मध्ये विष्णुरग्रे शिवः सर्वे
देवास्तीर्थाब्धयो गोयज्ञर्षिवेदाद्या अंकुरादिष्वीदृशोश्वत्थः शोभने

काले संस्कृत्यार्च्यः ॥ ३७–३८ ॥ रात्रिसंध्याकुयोगादिषु न स्पृशेत् ब्रह्मचर्यमौनादियुक् तं भजेत् ॥ ३९ ॥ गोमयलिप्ते तन्मूले स्वस्ति वाचयेत् तं संस्नाप्य स्वाधिकारतः पूजयेत् ॥ ४० ॥ अष्टबाहुं विष्णुं ध्यात्वा वस्त्रेण सूत्रेण वाच्छाद्य नाममंत्रैर्मदं प्रदक्षिणाः कार्याः ॥ ४१ ॥ प्रदक्षिणाद्यंतसमाप्तिषु नमेत् प्रदक्षिणा पदे पदेऽश्वमेधफलदा दैन्यर्णार्त्य-घतापहर्त्री च ॥ ४२ ॥ तत्र शनिनामोच्चारणं ग्रहार्तिघ्नं रुद्रजपात्काल-मृत्युनाशः ॥ ४३ ॥ विप्रभोजनस्नानजपयागाः अनंतफलाः अक्षय्य-पुण्यदात्पुत्रादिकामसिद्ध्यै न विलंबः ॥ ४४ ॥ येनाश्वत्थः स्थापितस्तेन स्वर्गे कुलं स्थापितं येन छिन्नस्तेन वंशोपि छिन्नः ॥ ४५ ॥ प्रदक्षिणा-दशांशेन हवनं तद्दशांशतो विप्रभोजनं कृत्वा हैमाश्वत्थार्थगोतिलान् दद्यात् ॥ ४६ ॥ तेनेष्टं लभेदिति विधिर्नारदमूचे तस्मात्त्वं विधिना भज स शीघ्रफलदः ॥ ४७ ॥ संगमे षट्कूले स्नात्वा तत्रत्यमश्वत्थं भज ते पुत्रौ भविष्यतः ॥ ४८ ॥ षष्ट्यब्दापि तथा कुर्वे इत्युक्त्वा सा सेश्वरम-श्वत्थमानर्च ॥ ४९ ॥ चतुर्थेह्नि तत्स्वप्ने प्रभुराहाश्वत्थमभ्यर्च्य गुरुदत्तं फलं भुंक्ष्व ते पुत्रो भवेदिति ॥५०॥ ततः सोत्थाय स्नात्वाश्वत्थमानर्च तस्यै द्वे फले दत्वा ॥५१ ॥ गुरुराह व्रतं समाप्य दानं दत्वाभीष्टदे फले भुंक्ष्वेति ॥ ५२ ॥ पूर्वयुगेऽनेके पुत्राः कलौ औरसो दत्तकश्चानयोरौरसो दर्शनादपि पितृमुक्तिदः ॥ ५३ ॥ तस्मादौरसौ पुत्रौ ते भविष्यत इदं मदर्चनफलं ॥ ५४ ॥ तथेत्युक्त्वा सा गेहं गत्वा तथा चक्रे निष्कलापि सा ऋतुमत्यासीत् ॥ ५५ ॥ शुद्ध्यूर्ध्वं पत्या सहेशमेत्य नत्वा गृहं गत्वा तन्निशीशप्रसादाद्गर्भं दधौ ॥ ५६ ॥ स्वतंत्रस्य भगवतो लीलां को वेत्ति यत्स्तुतौ शेषः कुंठितः श्रुतिश्च चकिता ॥ ५७ ॥ वलीपलित-वेपैर्वृद्धो यद्देहो जराकृशः सा गर्भं दधौ चित्रमिति लोकाः प्रशशंसुः ॥ ५८ ॥ तद्भर्ता पुंसवनाद्यकरोत्ततः काले सा पुत्रीमसूत ॥ ५९ ॥ कन्येयं साध्वी शीलगुणशालिनी पुत्राढ्या कुलोद्धर्त्री भविष्यतीति गणका

ऊचतुः ॥६०॥ सोमनाथस्तेभ्यो धनाद्यदान् द्वादशाहेह्नि कन्यामादाय दंपती गुरुमेत्य ॥ ६१ ॥ तदग्रे कन्यां निधाय नत्वा वंध्यो द्रुमस्ते दृशा फलितः ॥ ६२ ॥ सुफलश्चेत्पांथैः सेव्यते मोघफलतो वंध्यो वरामिति भाति हे ईश वेत्सि तदित्यूचतुः ॥ ६३ ॥ गुरुः कन्यामादाय तौ प्राह सुशीलगुणधीपुत्राढ्या मान्येयं साध्वी कुलोद्धर्त्री ॥६४॥ कन्या वां लब्धा पुत्रेच्छा चेच्छतायुर्मूर्खोल्पायुर्वा पंडितो वामभिमत इति॥६५॥ अल्पायुरपि सार्थो विद्वान्प्रिय इत्युक्तो भगवान्तथेत्युक्त्वा तौ गमयामास ॥ ६६ ॥ साल्पकालाद्गर्भं धृत्वा पुत्रं सुषुवे एवं श्रद्धया निष्फलापि फलं लेभे ॥ ६७ ॥ स पुत्रो विद्याविनयवान्भूत्वा पंच पुत्रान्लब्ध्वा सद्गतिं यातः ॥ ६८ ॥ कन्यापि गुरूक्तवद्ब्रह्मवादिनी भूत्वा सापि सपतिः सद्गतिं गता ॥ ६९ ॥ अयं योगः श्रद्धावत्सु दृश्यते जन्मांधैरर्क इव नाश्रद्धानैर्लभ्यः ॥ ७० ॥ दंडकमंडलुधरकाषायवस्त्रं गुरुं भजंतौ दंपती मुक्तौ ॥ ७१ ॥ एवं गुरुवाक्यविश्वासादुभयी सिद्धिः अन्यच्छृणु ॥ ७२ ॥ तत्र कुष्ठी नरहरिशर्मा गुरुं शरणमेत्य गद्गदं प्राह ॥ ७३ ॥ हरे परानंदमूर्ते भक्तवत्सलाच्युत ते कीर्तिं श्रुत्वागतोस्मि ॥ ७४॥ यजुर्विदोपि मे कुष्ठिनो मुखं नेक्षंति तीर्थार्चनजपादिनापि तत्कुष्ठं नापैति ॥ ७५ ॥ कृपया तदपाकुरु प्रतीकारो नास्ति चेत्तेऽग्रतोऽसूंस्त्यक्ष्ये ॥ ७६ ॥ गुरुराह आकर्मतोत्थं कुष्ठं नश्येत् मद्वाक्ये विश्वासश्चेच्छुष्कौदुंबरकाष्ठं संगम आरोप्याभिषिंच तस्मिन्पल्लविते शुद्धो भविष्यसि ॥ ७७-७८ ॥ द्विजस्तथा कृत्वाधारबंधं दत्वांबुनिषेचनैः सिषेवे तदा लोका ऊचुः गुरोः कृपा सद्यः तव शुद्ध्यभावादिदं निर्दिष्टं कुतोत्रांकुरशंकेति निषिद्धोऽपि स काष्ठमभजत् ॥ ८० ॥ तदा ते गुरुमेत्योचुर्भवदादिष्टो द्विज उपोषणान्मरिष्यति तं बोधयेति ॥ ८१ ॥ श्रीगुरुरुवाच स साधु करोति दृढभक्त्या तरिष्यति अत्र हि भक्तिस्तारका ॥ ८२ ॥ मंत्रे तीर्थे द्विजे देवे दैवज्ञे भिषजे गुरौ यस्य यादृग्भावना तादृक्सिद्धिः ॥८३॥ तदर्थं सूतर्षि-

संवादं शृणु सूत आह सिंहकेतुनृपपुत्रो धनंजयः ॥ ८४ ॥ एकदा वनं गतः स श्रांतो जीर्णशिवालयं दृष्ट्वा ॥ ८५ ॥ तत्र शबरेण किंकरेण सह तस्थौ तदेकं लिंगं गृहीत्वा शबरो नृपमाह ॥ ८६ ॥ लिंगं पूजयितुमाकांक्षे मामनुशाधि यदाज्ञापयसे तत्करिष्यामीति ॥ ८७ ॥ राजपुत्र उवाच सत्स्थले लिंगं संस्थाप्य क्रियान्वितो भक्त्या पूजय॥८८॥ चिताभस्मान्वहं देयं प्रसाद आदेयश्चेत्युक्त्वा पूजाविधिमुपादिशन् ॥ ८९॥ शबरस्तुष्टो लिंगं गृहीत्वा गृहं गत्वा यथोपदेशमपूजयन् ॥९०॥ एकदिने क्वापि स भस्म न लब्ध्वा दुर्मना अभूत् तद्भार्या प्राह मां दग्ध्वा शंभवे भस्मार्पय ॥ ९१ ॥ कृमिविड्भस्मरूपक्षणभंगुरशरीरसाफल्यं कुरु ॥ ९२ ॥ शबर उवाच सूर्यादिसाक्षितो भार्यात्वेन वृतास्यतोऽन्यथा कथं कुर्यां हे सुभगेऽलब्धैहिकसौख्यासि ॥ ९३ ॥ सा प्राहायं व्यर्थो मोहोऽध्रुवेण ध्रुवं साध्यते तत्साधयेदं तवार्धांगं न परकीयं ॥९४॥ स तथेत्युक्त्वा गृहे तामवरुध्य गृहेण सह दग्ध्वा तद्भस्म नित्यवच्छिवायार्पयत् प्रसादक्षणे च तामाव्हयत् ॥ ९५॥ दग्धापि सा प्राप तां सद्म चालोक्याह दग्धापि कथमागतासि सुप्तोत्थितास्मीति सा प्राह ॥ ९६ ॥ तर्हि शंभुप्रभाव इत्युक्ते शिव आविर्भूय तद्दोपं हृत्वोभयसिद्धिं ददौ ॥ ९६ ॥ भक्तेः प्रभावोयमित्युक्त्वा कदाचित्स्नातुं स गच्छन्काष्ठसेविनं विप्रं दृष्ट्वा ॥ ९८ ॥ कमंडलुजलं सिषेच तदासेचनाद्दिव्यदृष्ट्या चांकुरा आविरासन् ॥ ९९ ॥ दिव्यदेहमंकुरितं काष्ठं च दृष्ट्वा प्रेमभरान्नतांगो द्विजो गुरुं तुष्टाव ॥ १०० ॥ कोटिसूर्याभं कोटिचंद्रशांतं विश्वाश्रयं देवार्च्यं भक्तेष्टदत्तं त्वां वंदे नृसिंहेश्वर मां पाहि ॥ १ ॥ मायातमोर्कं विगुणं गुणाढ्यं भक्तसेव्यं वरदं त्वां वंदे ॥ ॥ २ ॥ कामादिरिपुं परानंदं सद्धर्मगुप्त्यै धृतावतारं त्वां वंदे ॥ ३ ॥ चंद्रसूर्याक्षं कामदं जगत्कारणं त्वां वंदे ॥ ४ ॥ कमलपत्राक्षं दंडकमंडलुधरं कृपालुं त्वां वंदे ॥ ५ ॥ वेदांतवेद्यं नादबिंदुकलारूपं ताप-

हरं त्वां वंदे ।। ६ ।। दैन्याधिभयकष्टहरं योगदं कृष्णापंचनदीतटस्थं त्वां वंदे ।।७ ।। अनादिमध्यांतमतर्क्यशक्तिं परात्मानं वाङ्मनसातीतं त्वां वंदे ।।८।। तव स्तोत्रे ममाशक्तिश्चतुर्मुखोऽत्र विमुखो जातः शेषश्चकितो वेदा कुंठिताश्च ।। ९ ।। एवं स्तुत्वा नमंतं तं प्रभुराह मत्प्रसादान्महत्त्व-श्रीकीर्तिसत्पुत्रवान्भव ।। १० ।। हे शिष्योत्तम त्वं योगज्ञो भविष्यसि कुलमपि ते तथा वधूमानीयात्र तिष्ठ ।। ११ ।। तथेत्युक्त्वा भार्यामानीय तत्र स्थित्वा सत्तमान्पुत्रान्पुत्रीश्च लेभे ।। १२ ।। विद्यासरस्वतीमंत्रं गुरुदत्तं जपन्ननासक्त्या जीवन्मुक्तोऽभवन् ।। १३ ।। तत्कुलमपि तथा जातं अयं भक्तेर्महिमा त्वत्पूर्वजोपि तथाविधोऽतस्ते मतिरीदृशी ।। १४ ।। श्रीगुरुप्रसादोऽयं ते कुले वर्धमानो भविष्यतीति मे ध्रुवा मतिः ।।१५।। इत्येकोनविंशोऽध्यायः ।।

---

# अथ विंशोऽध्यायः

नामधारक उवाच को मत्पूर्वः कथं तेन भगवान्सेवितः यत्प्रसादान्ममेदृग्धीस्तःकथां श्रोतुं सादरोस्मि ।। १ ।। सिद्ध उवाच यो गुरुणा त्रातः सायंदेवः स ते पूर्वो गंधर्वस्थं गुरुमश्रौषीन् ।। २ ।। प्रणतस्तमेत्य परं दृष्ट्वा दंडवन्नत्वा गद्गदाक्षरोऽस्तौत् ।। ३ ।। परमात्मन्परंज्योतिः श्रीनृसिंहसरस्वति तीर्थाश्रयं ते पदं चिंत्यं ।। ४ ।। त्वं त्रयमूर्तिर्न मर्त्यो जीवनक्षमांबुपूर्णकमंडलुर्ब्रह्मा त्वं ।। ५ ।। दुष्टनिग्रहसद्रक्षाक्षमो दंडी विष्णुस्त्वं पापतापनाशक्षमोऽग्रदृष्टिः शिवोऽपि त्वं।। ६।। येन मृतो जीवितः वशा महिषी दुग्धा शुष्ककाष्ठं तरुत्वं नीतं हीनोप्युद्धृतः त्वां को वेद ।। ७ ।। श्रीगुरुरुवाच स्तुत्यानया तुष्टोऽस्मि तव वंशस्यापि मयि भक्तिर्भूयात् ।। ८ ।।तव स्त्र्यादेः क्षेमं किं क्व तिष्ठसि बहुकालेन संगतोऽसि।।९।।

सायंदेव उवाच भगवत्प्रसादात्सर्वेषां क्षेमं कांच्यां तिष्ठामि ॥ १० ॥
त्वत्कृपया पुत्राद्याः योगक्षेमकरा अहं तु भवत्पादसेवां कांक्षे ॥ ११ ॥
श्रीगुरुरुवाच मम सेवनं कष्टं कोऽपि न शक्नोति यतो ग्रामे नद्यां दुर्गमे
वनेऽपि वसामि ॥ १२ ॥ सायंदेव आह यत्र क्वापि सेव इति भगवांस्त-
थेत्युक्त्वैकदा तेन सह संगमं ययौ ॥ १३ ॥ तं परीक्षितुमकालेप्यब्दं
वृष्ट्या आदिदेश ॥ १४ ॥ स झंझावातो गर्जिताब्दो ववर्ष विद्युच्चाभात्
॥१५॥ आसारातिरणद्दंतः कंपितोपि सर्वसहः स वस्त्रैः प्रभुं भेजे ॥१६॥
यामाभ्यां खंडितां वृष्टिं दृष्ट्वा गुरुराह शीतं बाधतेऽत इतस्ततोऽपश्यन्
ग्रामं गत्वाग्निमानयेति शीकरक्लेदितांगः करकार्दितोपि ॥१७-१८॥
विद्युत्तेजसा मार्गं पश्यन्द्वारपालदत्तमार्गः स भाजनेऽग्निमादाय न्यवर्तत
गुरूक्तिं ज्ञातुमितस्ततोऽपश्यत् ॥ १९ ॥ २० ॥ पार्श्वयोः सर्पौ दृष्ट्वा
भीतो गुरुं स्मृत्वाधावत् ॥ २१ ॥ तदा दूरात्संगमे वेदध्वनिं श्रुत्वा
प्रकाशं प्रेक्ष्य स शंकितस्त्वरयागात् ॥ २२ ॥ तत्र केवलं गुरुं दृष्ट्वा
विस्मितं प्रभुः प्राह मा भीस्त्वद्रक्षायै सर्पौ प्रेषितौ ॥ २३ ॥ सर्पौ
गुरुं नत्वा यातौ प्रभुः सायंदेवं प्राह देवानामपि दुर्लभेदृशी गुरोः सेवा
॥ २४ ॥सायंदेव उवाच भगवन् परं तारकं गुरुसेवातत्त्वं कथय ॥२५॥
श्रीगुरुरुवाच छाया पुरुषमिव गुरुं भजेत्सधनं देहं गुरवेऽर्पयेत् ॥२६ ॥
ईशं मत्वा तत्प्रसादभुक्तद्ध्यानजीवनस्तत्पादतीर्थपस्तत्कथारतिः
॥ २७ ॥ दुःसाध्येपि कार्ये आदिष्टश्चेदारभेत्स आरब्धं सिद्धिं
नयेत्कालोऽस्माद्भीतोप्यपैति ॥ २८ ॥ गौरीशसंवादं शृणु त्वष्टा
विद्यार्थी गुरुमभजत् गुरुस्तद्दार्ढ्यायेदमाह ॥ २९ ॥ प्रत्यब्दमुटजे
वर्षास्वापः पतंति एकं सुंदरं रम्यं गृहं रचय ॥ ३० ॥ गुरुस्त्रीराह चित्र-
मकृत्रिमं चारु मेंगमितं कंचुकं देहि ॥ ३१ ॥ पुत्र आह गर्ते जलेपि
सुखदेंघ्रियोग्ये चिंतितस्थलनायके पादुके देहीति ॥३२॥ कन्याह कुंडले
दंतिदंतनिर्मितलसदेकस्तंभगृहं सचेतनाः पुत्रिका अनंजनस्पृग्भां-

डानि च देहीति एवं श्रुत्वा स वने ययौ ॥ ३३-३४ ॥ गुर्वर्थं मर्तव्य-
मिति निर्विण्णं तं कश्चिद्दयालुः साधुराप ॥ ३५ ॥ स गतभीर्हृष्टो गुरु-
भावनया तं नत्वा सर्वं न्यवेदयत् ॥ ३६ ॥ साधुराहाभीष्टदे काशीक्षेत्रे
विश्वेश्वरे जाग्रति सति किं दुर्लभं ॥ ३७ ॥ तत्रत्योद्वीक्षणादपि पापं
नश्यति आनंदवने सुखं किं वाच्यं ॥३८॥ पुमर्थदो विश्वेशो मृतं प्राणि-
मात्रमपि तारकोपदेशेन मुक्तिं नयति ॥ ३९ ॥ शिष्य उवाच कास्ते
काशी क्व वा विश्वेशः स्वर्भुवि वा न जानेऽतोऽज्ञाय दर्शयेति प्रार्थये
॥ ४० ॥ स आह यदीक्षणाज्जन्मसाफल्यं त्वद्योगात्तद्दर्शनं भविष्यत्य-
तस्त्वां नेष्ये ॥ ४१ ॥ ततस्तमादाय योगगत्याशु स काशीं गत्वा यथा-
वत्क्षेत्रयात्रामुक्त्वा ॥ ४२ ॥ विश्वेशदर्शनं अंतर्गृहयात्रां दक्षिणोदङ्-
मानसयात्रां पंचक्रोशीं च ॥ ४३ ॥ भवानीशहरिधुंडिदंडपाणिभैरव-
गुहकाशीगंगादिनदीदर्शनं पूजनं च स्नानदानश्राद्धयुग्यात्रां पाक्षि-
कीं च ॥ ४४-४५ ॥ कथयित्वा लिंगं स्थापयोक्तवत्कुर्वीश्वरः प्रसीदेदि-
त्युक्त्वांतर्दधे ॥ ४६ ॥ मत्परीक्षार्थं रूपांतरेण गुरुराप्तोऽयमिति मत्वो-
क्तवच्छिष्यश्चक्रे लिंगं स्थापयामास साक्षाद्विश्वेशः प्रादुर्भूत्वाह॥४७-४८॥
वत्स गुरुभक्त्या पूतो धन्योऽस्यतोऽभीष्टं वृणु ॥ ४९ ॥ शिष्योऽपि
गुरुतत्पत्न्यादियाचितं शशंस विश्वेश आह कलाविद्याज्ञानविज्ञानवान्भूत्वा
॥ ५० ॥ चातुर्यं प्रसार्य त्रैलोक्ये ख्यातो भविष्यसीत्युक्त्वांतर्दधे
॥ ५१ ॥ स गुरुमेत्य विश्वेशप्रसादाद्याचिताखिलवस्तूनि ददौ तुष्टो
गुरुराह ॥ ५२ ॥ यावच्चंद्रसूर्यौ चिरंजीवी भूत्वा चातुर्यं प्रसार्यापरस्र-
ष्टा भविष्यसि ॥ ५३ ॥ तव सविधे निधयो वशा चिंताव्यथादि न
स्पृशत्ययं मम प्रसादः ॥ ५४ ॥ इति स प्रस्थापितो गृहमेत्य गुरूक्तव-
द्भूत्वा श्रीमांस्त्वष्टाखिलश्रुत आस्ते ॥ ५५ ॥ इति शिवेन गौर्यै कथितं
तस्माद्गुरुभजनं तदुक्ताचरणं कार्यं ॥ ५६ ॥ इत्युक्त्वा विरतं स आह
भवता यद्यत्समाख्यातं तत्सर्वं मया खलु दृष्टं ॥ ५७ ॥ काहं क्व काशी

क्क भवान् तथाप्यदृष्टपूर्वमदर्शि त्वं न नरो न सुरो नेतरः किंतु परात्माऽज एव॥५८॥ एवं त्वमक्रियं ब्रह्मापि बहु स्यामिति धिया ब्रह्माणं सृष्ट्वा ततो जगत्सर्जितं अगुणोपि त्वमवतीर्य स्वगुणैः स्वं रमयन्दुष्टान् हंसि हे नृसिंहसरस्वति वरे ते पादकमले वंदे ॥ ५९ ॥ कलौ देवानां मुदे धर्मस्थापनाय च महामोहांधकारं ग्रसन्सूर्य इवोदितोऽसि धर्मं च रक्षसि ॥ ६० ॥ भो सर्वानंदत्वायामलं सत्वं सुखं पावनं रूपं प्रकटीकृत्य तुर्याश्रमी सन्संसाराब्धिमग्नमुद्धरसि ॥ ६१ ॥ मूकाय वाचं अंधायाक्षि वंध्यायै पुत्रं मृताय जीवितं विधवायै सौभाग्यं च ददासीतीदृक् ते महिमा ॥ ६२ ॥ भो मुक्तावास मुक्तिदः कामपूरको दैन्यपापतापहरः शास्त्रनादातीत इति श्रुतिगीतोसि ॥ ६३॥ भो योगीश्वर तीर्थाश्रयसज्जनजीवनं कामिदैवं श्रीलीलास्थलमलं विद्वद्वादास्पदं सुकृत्क्षेत्रं पावनं ते पदं भजे ॥६४॥ भो वेदागोचर ते चरितं वक्तुं कः समर्थस्त्वमष्टमूर्तिभिर्विभाव्यावस्थितोसि हे ॐकाररूपेश्वर ते नमः॥६५॥ भगवन्कृष्णाभीमातटस्थं दंडकमंडलुकरं शांतध्येयं शरण्यं ते यतिरूपं मयि स्थिरीकुरु ॥६६॥ एवं स्तुतं तं प्रभुराह तुष्टेन मयाहैतुकी भक्तिर्दत्ता ते वंशजा अपि मे भक्ता भविष्यंति ॥ ६७ ॥ इतःपरं म्लेच्छसेवां त्यक्त्वा स्वैः सहात्र तिष्ठेति द्विजोऽपि स्त्रीपुत्रानानीय गुरुं तुष्टाव ॥ ६८ ॥ हे त्रिगुणेश्वर वाच्यवाचकत्वेन जगन्मयोप्याद्यंतवर्जितो सि पूर्वपुण्यात्तव रूपं दृष्टं ॥ ६९ ॥ त्वच्चरणस्पर्शात्पापोपि पूतोस्मि तप्तोपि मुखेंदुदर्शनाच्छांतोस्मि स्पर्शाश्रयात्स्वर्णीभूतं लोहमिव ते प्रसादतो दीनोपि धन्योस्मि ॥ ७० ॥ इति स्तुत्वा कारनाटकभाषया तत्कथां जगौ ॥ ७१ ॥ तदा तुष्टः प्रभुराह अयं ते ज्येष्ठपुत्रो मेतीव वल्लभः ॥ ७२ ॥ इत्युक्त्वा नागनाथस्य मूर्ध्नि करं दधौ स सहसा वक्ता ज्ञाता च बभूव ॥ ७३ ॥ प्रभुः सायंदेवं प्राह तवेयं साध्वी भार्या चतुरः पुत्राञ्जनयिष्यति त्वं च भाग्यशाली ॥ ७४ ॥ इतःपरं यवनलब्धवृत्तिं त्यक्त्वात्रैव तिष्ठ श्रेयोऽवा-

प्स्यसि ॥ ७५ ॥ अघतारकमनंतव्रतमस्ति तत्त्वमाचर धर्मः कृष्णाज्ञया यत्कृत्वा दिव्यं सौख्यं भुक्त्वा सतनु दिवं ययौ ॥ ७६-७७ ॥ सायंदेव उवाच भवान्नोनंतो भवत्सेवा व्रतं तथा कोनंतः कीदृग्व्रतं उपाख्याहि ॥ ७८ ॥ श्रीगुरुरुवाच पांडवस्य धर्मस्य सदसि मानी दुर्योधनो जले स्थले भ्रमात्पतितो जनहासतो व्रीडितो भूत्वा द्यूतेन सस्त्रीकं धर्मं जित्वा सानुजं तं वनायाप्रेरयत् ॥ ७९ ॥ ८० ॥ सस्त्रीकः सानुजो दुःखितो धर्मस्तत्रागतं कृष्णं नत्वाह भक्तत्रातेति विरुदं वहसि दुःखं न वेत्सि किमित्याह ॥ ८१ ॥ कृष्ण उवाच दैवं बलवदपि मद्भजकान्नेक्षते त्वं मद्भक्तोपि मद्व्रतं कुरु ॥ ८२॥ अहमेवानंतो ममेदमनंताख्यं व्रतं तच्छृणु ॥ ८३ ॥ चराचरजगत्कालभूतादिरूपोऽहं विभुः कर्मप्रयोजनगुणैः पृथग्भूतोऽस्मि ॥ ८४ ॥ भाद्रशुक्लचतुर्दश्यामनंतफलदमिदं कार्यं ॥८५॥ पूर्वं वासिष्ठः सुमंतुर्ऋषिः तत्स्त्री भार्गवी एकां कन्यां प्रसूय मृता ऋषिणा पुनरन्योद्वाहिता ॥ ८६ ॥ सा दुःशीला चंडी कन्यां पतिं च पीडयामास ऋषिः च विवाहार्हां कन्यां ॥ ८७ ॥ चित्रक्रियाकुशलां सच्छीलगुणलक्षणां तां कौंडिण्याय विधिवद्ददौ ॥ ८८ ॥ श्वशुरवात्सल्यात्तत्र द्विमासं स्थितोऽपि श्वश्रूत्रस्तः सभार्यः कौंडिण्यः प्रतस्थे ॥ ८९ ॥ तदा चंडया द्वारं पिधाय पाथेयं नार्पितं सुमंतुर्बहिस्थगोधूमपुलाकं ददौ ॥ ९० ॥ बध्वा सह गच्छन्मध्याह्ने नद्यां तस्थौ तत्रैकदेशे सुवासिनीर्दृष्ट्वा कन्या ता आह कस्येदं पूजनमिति ॥ ९१ ॥ स्त्रिय ऊचुः अद्य भाद्रशुद्धचतुर्दश्यामनंतव्रतं तद्विधिस्तु स्नात्वा रक्तांबरं धृत्वा रक्तसूत्रे चतुर्दशग्रंथीन्बध्वा ॥ ९२ ॥ कुंभोपरि दर्भमयशेषे निधाय तं विष्णुं मत्वा संपूज्य ॥ ९३ ॥ चतुर्दशापूपान्ब्राह्मणाय दत्वा नवं दोरकं हस्ते बध्वा जीर्णं विसृज्य विप्राय दत्वा दंपती भोजयित्वैवं प्रत्यब्दं कृत्वा ॥ ९४ ॥ चतुर्दशेऽब्दे उद्यापनं कुर्यादिदमुत्तमं व्रतं कुर्विति तस्यै दोरकं ददुः सापि तथा व्रतं कृत्वा पुलाकार्धं दत्वा सदोरका पतिं प्राप ॥ ९५ ॥ स तया सह गच्छ-

न्ग्रामांतरे धनिभिः सत्कृत्य स्थापितस्तत्रानंतप्रसादाच्छ्रीमानाढ्योऽभूत् ।। ९६ ।। ऋषिरेकदा दोरकं दृष्ट्वा वशीकरणं मत्वा तया श्रीदानंतं न त्यजेति निवारितोप्यग्नौ तत्याज ।। ९७ ।। ततोऽग्न्यरिचोरतः श्रीर्नष्टा तदानंतकोप इति मत्वा क्वानंत इति स गोवृक्षादीन्पृष्ट्वा मूर्छितः ।।९८।। तदा वृद्धविप्ररूपेण तमाश्वास्य कल्पितं नगरं नीत्वा स्वरूपं दर्शयामास स च तं तुष्टाव ।। ९९।। जय सर्वेश्वरानंत विश्वव्यापिन् जनार्दन त्वन्माया-मोहितधिया कृतान्मंतून्क्षमस्व भोः ।। १००।। अनंत उवाच मत्प्रसादा-द्दुःखदैन्यादि त्यक्त्वा श्रियं भुक्त्वा नक्षत्रेषु पुनर्वसुर्भविष्यसि ।।१।। ऋषिरुवाच फलिताम्रस्य केपि फलं नाश्नंति गोपशोश्च मुखे तृणं न याति जीवास्पृष्टे पूर्णे सरसी दीनः खरो हस्ती च वृद्धविप्रश्चेमे मया दृष्टा एषां कुत ईदृक्स्थितिः ।।२।३।। अनंत उवाच विद्वांश्छिष्यान्नापाठयद्-त ईदृगाम्रः मोघभूदानात्तादृशी गौरदाता धनी वृषः ।। ४ ।। अन्योन्य-दानग्रहणात्तथा सरस्यौ क्रोधी खरः मदी हस्ती वृद्धो विप्रोऽहमेव य एते दृष्टास्तेऽपि मया मोचिताः ।। ५ ।। इति लब्धवरः स तथाभवत् हे धर्मातो व्रतं चर हितं भवेत् ।। ६ ।। इति कृष्णेनोक्तो धर्मो व्रतं कृत्वा-रीन्हत्वा राज्यं भुक्त्वा सदेहः स्वर्गं गतः ।। ७ ।। हे विप्र त्वमपीदमा-चरेति प्रभुणोक्तः सोऽनंतव्रतं चक्रे ।।८।। स्वैः सह तत्र स्थित्वा सायुज्यं गतः तद्वंशजा अपि गुरोः प्रसादात्तादृशाअभवन् ।। ९ ।। हे नाम-धारक त्वमपि तादृगतो मृगतृष्णोपमं भवं तरिष्यसि ।। १० ।। इति विंशोऽध्यायः ।।

---

# अथ एकविंशोऽध्यायः

नामधारक उवाच साधूक्तमिदं दिनं धन्यं तत्कथां विनाद्य क्षणमात्रोऽपि कालो न यातः ॥ १ ॥ सिद्ध उवाच तंतुको नामैको भक्तस्त्रियामं गृहकृत्यं कृत्वा याममात्रं गुरुं भेजे ॥ २ ॥ एकदा बांधवाः श्रीशैलं गंतुं तमाह्वयन् स तानाह मठो मे शैलः श्रीगुरुर्मल्लिकार्जुन इति ॥ ३ ॥ मूर्खोऽयमिति मत्वा ते गताः कुतो न गतोऽसीति गुरुणोक्तोऽपि तंतुकस्तथाब्रवीत् ॥ ४ ॥ ततः शिवरात्रिदिने मध्याह्ने तंतुकं श्रीगुरुराहाद्य शैलोत्सव इति ॥ ५॥ तंतुक उवाच त्वत्पादोत्सवात् क्वापि नाधिकोत्सवस्तदज्ञात्वा मुग्धा भ्रमंति ॥ ६ ॥ भगवानाह मैवं ईश्वरः सर्वगो यद्यपि तथा क्षेत्रे विशेषतः ॥ ७ ॥ महातपस्विपवित्रकृते क्षेत्रे परमात्मा जागर्ति ॥ ८॥ अतस्तत्रैव द्रुता सिद्धिः महांतः स्वयं मुक्ता अपीतरान्स्वतपसा मोचयंति ॥ ९ ॥ लोकोद्धारायैव सत्तपस्विविभूतयः प्रजायंते ॥ १० ॥ तत्संचारस्थलरजःस्पर्शोऽपि मुक्तिदः अतस्तत्र लोका यांति ॥ ११ ॥ अद्य गच्छ क्षेत्रमहिमानं दर्शयामि इत्युक्त्वा पादुके धारयित्वाक्षीणि निमील्य ॥ १२ ॥ तेन सह योगगत्या श्रीशैलं गत्वोचेक्षीणि उन्मीलय श्रीशैल एतं पश्येति ॥ १३ ॥ सोऽपि श्रीगिरिं दृष्ट्वा गुर्वाज्ञया क्षौरस्नानादि कृत्वा मल्लिकार्जुनं द्रष्टुं ययौ ॥ १४ ॥ तत्र तं दृष्ट्वा बांधवा आहुः कुतोऽनुयातोऽपि युतिं न करोषीति तदा तेन सत्यमुक्तमपि ते मिथ्या अमंसत ॥ १५ ॥ तंतुको गुरुं ध्यायन्लोकत्र्याप्तप्रासादे मल्लिकार्जुनं द्रष्टुं गतः ॥ १६ ॥ तत्र गुरुमेव दृष्ट्वा संपूज्य बहिर्गुरुमेत्य प्राह ॥ १७ ॥ अत्रापि त्वमतोऽज्ञा कुतो निकटस्थं हित्वा भ्रमंति त्वमेव सर्वं व्याप्य स्थितोऽसि ॥ १८ ॥ श्रीगुरुरुवाच सर्वत्रैक-आत्मा तथापि स्थानप्रभावो भिन्न इदं स्थानं मुक्तिप्रदमपूर्ववृत्तं शृणु ॥ १९ ॥ किराते विमर्षणाख्यकृती राजा दयालुर्देवद्विजभक्तोऽभूत्

॥ २० ॥ स शैवोत्तमोऽपि पूर्वप्रकृतिवशान्निषिद्धभुक् स्त्रीलंपटश्चास तं महिषी प्राह दुश्चेष्टितस्यापि शिवे कथं भक्तिरिति ॥ २१ ॥ राजोवाच पूर्वजन्मनि पंपापुरे श्वाभवमेकदा शिवरात्र्यां शिवसंनिधिं गतं मां जना हन्युः ॥ २२ ॥ शिवं प्रदक्षिणं परीत्यार्चितं शिवं दृष्ट्वा शैवे दिने मृतिं गतस्तेन शैवो नृपोऽभवं ये दुर्गुणास्ते श्वस्वभावजाः जीवो हि पूर्वसंस्कारानुग इति ॥ २३ ॥ ममापि जन्म कथयेति तयोक्त आह पूर्वं धृतमांसं कपोतीं त्वां श्रीशैले चिल्लीहनत्तेन मे महिषी जातासीति ॥ २४ ॥ जन्मांतरे नौ क्व गतिरिति तयोक्त आह सिंधुदेशेहं राजा त्वं सृंजयोत्था मत्स्त्री ॥ २५ ॥ ततः सौराष्ट्रराजोऽहं कलिंगजा मत्स्त्री त्वं ततो गांधारजोऽहं मत्स्त्री मागधी त्वं अवंतिजोऽहं दशार्णजा त्वं ॥२६॥ ततोनंतो नृपोऽहं ययातिजा मत्स्त्री त्वं ततःस्मरोपमः पांड्योऽहं सगुणां विदर्भदेशजां त्वां वृत्वा यज्ञैरिष्ट्वा साम्राज्ये भोगान्भुक्त्वा सप्तमे जन्मन्यगस्त्यप्रसादान्मुक्तौ भविष्याव इति ॥२७-२८॥ एवं तिरश्चोपि गतिरिति बुध्वा लोका आयांति देवता हि स्थानानुमानाज्जागरूका॥२९॥ इत्युक्त्वा तं पुनः संगममानयत् स च गुर्वादिष्टो ग्रामं ययौ ॥ ३० ॥ तत्पूर्वं तत्रत्याः संगमे गुरुमदृष्ट्वा ग्रामं गतास्तेनुयांतं तंतुकं दृष्ट्वोचुः कस्मात्क्षौरं कृतमिति ॥३१ ॥ तेन यथोक्तं कथितं श्रुत्वाप्यूचुः मध्याह्नेऽत्रैव दृष्टोऽयं मृषा ब्रूत इत्युक्त्वा ते संगममेत्य निश्युपोषिताः सर्वे शैवनामोच्चारणपूर्वकं ॥ ३२ ॥ ३३ ॥ जागरं चक्रुः ततः पक्षेण शैलाज्जना आगतास्तैरप्युक्तं ॥ ३४ ॥ श्रीशैलेऽयं तंतुकः सकृद्दृष्टः तदा सप्रत्ययाः सर्वे विस्मिता भृशं ननंदुः ॥ ३५ ॥ गुरुसेवया कर्मबंधं छित्वा तंतुको निर्द्वंद्वं परानंदं गतः ॥ ३६ ॥ एवमेकैकभक्त्या कति मुक्तास्तान्को वेद तथा द्वौ कवी गुरुकीर्तनान्मुक्तौ ॥ ३७ ॥ ताभ्यां गुरुलीलामयाः प्रभूताः कविता ग्रथिताः तल्लीलाः कात्स्न्यात् को वेद यत्र वेदोपि शंकितः ॥ ३८ ॥ नामधारक उवाच कौ शिष्यौ कवी जातौ तन्मे कथय वक्ता-

पि श्रोतृपृच्छामभिनंदति ॥ ३९ ॥ सिद्ध उवाच नंदिशर्मा कुष्ठार्तः कश्चिद्द्विजः तुलजापुरि त्रिवर्षं तपस्तेपे तदा देव्योक्तं चंदलेश्वरीं गच्छेति ॥ ४० ॥ स चंदलेश्वरीमेत्य सप्तमासं तपोऽतपन् तयोक्तं गंधर्वे यतिं गच्छेति ॥ ४१ ॥ स आह मर्त्यं गच्छेति वक्तुं न लज्जसे किं त्वदैश्वर्यं परीक्षितं कुत इयत्कष्टं दत्तं ॥ ४२ ॥ इत्युक्त्वा तपस्तेपे देव्या ज्ञापितः स तदा देव्याज्ञयैकवारं यतितव्यं ॥ ४३ ॥ इति निश्चित्य पारणां कृत्वा गंधर्वे यतिं ययौ ॥ ४४ ॥ तत्र क भगवानिति पृच्छंतं तं कुष्ठिनं लोको नोत्तरं ददौ ॥ ४५ ॥ तं कश्चिदाह शिवरात्रिव्रतपारणायै देव आश्वायास्यतीति ॥ ४६ ॥ अत्रांतरे प्रभुमायांतं विप्रा आहुः कुष्ठी विप्र आगत इति ॥ ४७ ॥ विश्वसाक्षी तमाहूयाह देवान्हित्वा मर्त्यं कुत आयातोऽसि दोषमिमं हर्तुं नरोर्हः किमिति ॥ ४८ ॥ तच्छ्रुत्वानेन मदंतरं ज्ञातं नैष मानुषः किंत्वात्मेति मत्वा क्षमाप्याह ॥ ४९ ॥ मूढः कुधीः पापोऽहं दयाब्धि भक्तवत्सलं त्वां प्रपद्ये ॥ ५० ॥ विवाहोर्ध्वं मयि कुष्ठमुदितं पितृदारैरपि त्यक्तं मां कोऽपि नेक्षते ॥५१॥ देवा अपि नांगीकुर्वंत्यतो मरणं वरं परात्मन्नुपेक्षसे चेत्प्राणांस्त्यक्ष्य इति॥५२॥श्रीगुरुरुवाच मा भीः पापोत्थरोगेण पापं भुक्तं अतो मय्यचला भक्तिर्जाता॥५३॥ अत्राघहे तीर्थराजे संगमे स्नाहीत्युक्त्वा प्रभुः सोमनाथमाह ॥ ५४ ॥ षट्कूले स्नानं कारयित्वाश्वत्थमर्चयित्वाश्वानयेति ॥ ५५ ॥ सोऽपि तथा कारयित्वा गुरुपादयोः पातयामास तमुत्थाप्येश आहोत्तिष्ठ वपुः पश्येति ॥५६॥ स शुद्धः किंचित्कुष्ठांकिताष्ठीवदंगं दृष्ट्वाह॥ ५७ ॥ भगवन्कुतोल्पमिदमवशिष्टमिति प्रभुराह त्वत्संशयफलमिदमिति ॥ ५८ ॥ विप्रो नत्वा प्राह जलबुध्या पीता सुधा मृत्युं नयति किं ॥ ५९॥ अज्ञानादग्निर्न दहति किं हरे स्वभावोऽनेन पूर्णतामेति किं ॥६०॥ श्रीगुरुरुवाच यादृग्भावः स नान्यथा स्यात्स्वदोषतोंऽधस्यार्के शून्यतेवान्यथा भाति ॥ ६१ ॥ मर्त्येन मम किमिति त्वयि शंकोदिता तत्फलं त्विदं अत्र प्रतीकारं शृणु

॥ ६२ ॥ श्रुतिर्बृंहितां मर्त्यत्वप्रतिषेधपरां स्तुतिं कुरु तया शुद्धः कृतार्थश्च भविष्यसि ॥ ६३ ॥ द्विजो दीनो लोलन्नाह स्वामिन्स्वर्शांतःस्थोऽसि तवाग्रे किं वाच्यं ॥ ६४ ॥ लिपिमपि ज्ञातुमक्षमोऽहं कथं स्तौमि अन्यत्किमपि कर्तुं यथार्हं नियोजय ॥ ६५ ॥ प्रभुः प्राह हस्तिदंतवद्वक्त्रात्सकृन्निर्गतं वाक्यं न पुनरंतः प्रविशति॥६६॥ उक्तमेव कार्यमित्युक्त्वा मंत्रितं भस्म तन्मुखे क्षिप्त्वा प्राह मां स्तुहीति ॥६७॥ सोऽपि गीष्पतिवद्भूत्वा प्रेमगौरवनम्रांगो गद्गदवाचा तुष्टाव ॥ ६८ ॥ हे ईश तत्त्वमसि कर्ता भर्ताव्ययः साक्षी आत्मा त्वं सर्वं खल्विदं ब्रह्मासि ॥६९॥ त्वया प्रकृतिमहात्रिगुणेभ्यो भूतान्युद्भाव्य मायामयमवशं चराचरं विश्वं सृष्टं तत्र पुमान्ज्ञानपात्रं ॥ ७० ॥ सोऽपि त्वन्मायया भ्रांतः संकल्पवान्भूत्वा ॥७१॥ पापेन नरके भ्रमते कल्पेपि न मुच्यते ऊर्ध्वं गतोऽपि पुण्यक्षयेऽधश्चंद्रमंडले पतति ॥ ७२ ॥ ततोप्योषधिगो भूत्वा ततोतद्द्वारा पुंसि रेतो भूत्वा ॥ ७३ ॥ ऋतौ स्त्रीपुंसयोगाच्छुक्ररक्तमयो गर्भत्वमेति एकाहात्कलिलं पंचरात्राद्बुद्बुदः पक्षाद्घनो मासात्क्रूरः द्वितीये शिरः तृतीये ग्रीवा चतुर्थे त्वग्रोमनखाः पंचमे च ॥ ७४ ॥ ७५ ॥ षष्ठे छिद्राणि सप्तमे चलनं अष्टमे धीर्नवमे पूर्णो देही भूत्वाह ॥ ७६ ॥ शश्वज्जातो मृतोऽहं वियोनीर्भुक्त्वाद्यावाङ्मुखो जरायुवीतोऽत्र त्रस्तोऽभवं हे देव मामुद्धरातः परं त्वां भजे ॥ ७७ ॥ एवं स्तुत्वा सूतिवायुना वहिस्त्यक्तो विस्मृतधीर्मायामोहितो रोरूयति ॥ ७८ ॥ पराधीनो व्यथां वक्तुमक्षम उत्थानादौ अनभिप्रेतमापन्नः ॥ ७९ ॥ बाल्ये क्रीडासक्तस्तारुण्ये स्त्रीभावैरजितेंद्रियो भोगोत्सुकोऽज्ञातकार्याकार्यो दुर्मार्गगः ॥ ८०-८१ ॥ वार्धक्ये त्रस्तोऽस्वस्थः श्वासकासार्तोऽजितेंद्रिय एवं ॥ ८२ ॥ शतायुरपि रात्र्यार्धं शिष्टं बाल्यादिभिः पराधीनतया च हृतं अतः श्रेष्ठपुंजन्मना किं ॥ ८३ ॥ हे भगवन् त्वद्भक्त्या सत्संगत्या तत्साफल्यमतस्तद्द्वयं याचे॥८४॥ भो जनाबावतीर्णोऽयं परात्मा नैष नरः॥८५॥ योगेन

श्रवणादिना वा श्रेयसेऽयं सेव्यतां भक्तिभावनोऽयं भजतोऽनुभजति ॥ ८६ ॥ भगवन् ते गुणवर्णने श्रुतिरपि चकिताऽतो वाङ्मनसाविषयास्ते गुणाः कति वाच्याः ॥ ८७ ॥ इति स्तुत्वा ननाम तदा भगवत्प्रसादाच्छिष्टं कुष्ठं नष्टं ॥ ८८ ॥ ततः स लब्धवरो गुर्वाज्ञया स्त्रियमानीय तत्र स्थित्वा विविधाः कथा व्यरचयत् ॥ ८९ ॥ ग्रामांतरस्थः कश्चिन्नृकेसरी कविः तां कवितां श्रुत्वेयमुदारापि नृस्तुतिर्गर्ह्येत्यमंस्त ॥ ९० ॥ कदाचिद्ग्रामं गतो भगवान् तन्मानसपूजायां कल्लेशलिंगस्थं स्वं रूपं दर्शयामास ॥ ९१॥ नित्यवत्पंचनूत्नश्लोकैः स्तुवंतं तं प्रभुः प्राह क कल्लेश्वर इति ॥ ९२ ॥ स तदा ध्यानं विसृज्य नृरूपेण भगवानवतीर्ण इति मत्वा तमागात् ॥ ९३ ॥ पंचाभिः श्लोकैः स्तुवंतं तं प्राहेशं हित्वा किं नरं स्तौषीति ॥ ९४ ॥ नृकेसर्युवाच मयाज्ञानेन भगवान्मानुषो मतः कृपयाद्य मेऽज्ञानमपास्य सत्त्वं ज्ञानं प्रदर्शितं ॥ ९५ ॥ तेन मे मोहो नष्टः पूर्वपुण्यं च फलितं मां शिष्यपंक्त्यां योजय ॥ तदा प्रीतो भगवान्वस्त्रं दत्त्वा प्राह कल्लेश्वरं भज तत्रापि मत्स्थितिः ॥ ९७ ॥ स प्राह ते प्रत्यक्षं रूपं हित्वा गंतुं नोत्सहेऽतः स्वपादाब्जे स्थिरीकुरु ॥ ९८ ॥ कामधेनुस्त्वमनायासाल्लब्धोऽसि भगवन्दयनीयतमस्य ममोपेक्षां मा कुरु ॥ ९९ ॥ इत्युक्त्वाग्रे पपात दयाब्धिस्तमाश्वास्य शिष्यत्वेनांगीकृत्य स्वात्मसुखं ददौ ॥ १०० ॥ एवं कविः भूत्वा भक्त्या भगवद्गुणकीर्तनान्मुक्तोऽपि बभूव ॥ १०१ ॥ इत्येकविंशोऽध्यायः ॥ २१ ॥

---

# अथ द्वाविंशोऽध्यायः

नामधारक उवाच गुरो भगवत्कथां श्रुत्वापि न मे तृप्तिः श्रवणपानतोऽतीव तृष्णा वर्धते ॥ १ ॥ कृपाकरोऽनलसो भवानुदारतम एव पूर्वपुण्यत

एव संगतोस्ति ॥ २ ॥ सिद्ध उवाच सच्चित्सुखस्य परात्मनो गुणानुवादक्षीराब्धेर्लीलामृतं कति पास्यसि ॥ ३ ॥ अनंतस्य गुणान्कार्त्स्न्येन वक्तुं कोपि न क्षमः अहं तूच्चावचखगोड्डानन्यायतो यथामति वक्ष्ये ॥ ४ ॥ कृष्णामरजाविहारी भक्तवत्सलः भक्ताधीनत्वमंगीकृत्य तन्मतानुगोऽभवत् ॥ ५ ॥ निराकारो निरीहोऽपि शुद्धसत्वस्वरूपी भगवानजो बुद्धया संगत्य लीलया विश्वात्मकोऽभूत् ॥ ६ ॥ सर्वत्रगोऽपि स मुनयो मां पश्येयुरिति मत्वा ब्रह्मविष्ण्वीशरूपैः सत्यादिषु स्थितः ॥७॥ ततोऽपि भुवि मन्मया भूयांसो भक्तास्तेषां गोचरोभवमिति मत्वा भक्तिप्रियः स युगे युगेऽवतीर्य भजतोऽनुगृह्णाति ॥ ८॥९॥ भगवतो भक्तवात्सल्यं किं वाच्यं यतः पूर्णस्तृप्तोऽपि तद्गृहे भोक्तुं भ्रमति ॥ १० ॥ अन्या अपि बहुशस्तल्लीलाः केवलं भक्तानुग्रहलक्षणा एव ॥११॥ युगांतरे तपसा दुर्लभोऽपीशोऽद्य स्मृत्यैव सुलभोऽतः कलौ नो भाग्यमुदितं॥१२॥ स एष भगवान् तत्रान्वहं निमंत्रितो भक्ताधीनतया भोक्तुमटति ॥१३॥ एकदा दीपावल्युत्सवे सप्तग्रामस्थाः प्रिया भक्ता गुरुं नेतुकामा एत्योचुः ॥ १४ ॥ पंचवासरं भवंतं नीतुकामोद्यागतोऽस्मि प्रसादः क्रियतामिति ॥ १५ ॥ श्रीगुरुरुवाच यूयं सप्ताहमेक एककालिकोत्सवे सप्तग्रामेषु गंतव्यं ॥ १६॥ एकत्रैकैकदिन एकैकगेहे वा गंतुमुचितं तथा मतं चेन्मे वरं ॥ १७ ॥ भक्ताधीनं मां यो यो नयेत्तं तमनुयास्यामीति श्रुत्वाहमेव नेष्यामीत्यन्योन्यं कलहं चक्रुः ॥ १८ ॥ अयं दरिद्रोऽयं धनीति दृष्टिं मा कुर्वित्यग्रतः पतितान्भो सम मद्गेहमेहीति वदतस्तानाहंगच्छध्वं सर्वगृहानेष्यामीति गुरुणोक्ता अपि भ्रांतास्ते कैर्विश्वस्तव्यमित्यूचुः ॥ १९ ॥ २० ॥ तद्भाववित्प्रभू रहस्येकैकमाहूयाहं त्वद्गृहमेष्ये कापि न वाच्यमिति ततस्तेऽन्योन्यमाशंसंतो गृहान्ययुः॥२१॥ भवान्नो हित्वा क यास्यतीति तत्रत्यैरुक्तः प्रभुराहात्रैव तिष्ठामीति ततोऽष्टरूपैरष्टग्रामगोऽभूत् ॥ २२ ॥ जगन्मयो भगवान् पंचाहं सप्तसु ग्रामेषु स्थितो

मठे वसन्नपि ।। २३ ।। चतुर्विधान्नवस्त्रदानादिना तोषितो भगवान् लौकिकैकस्वरूपो संगमेऽस्थान् ।। २४ ।। पुनः कार्तिक्यां ग्रामास्तेऽन्योन्यमूचुः दीपावल्यां मद्गृहे भगवान् स्थित इति ।। २५ ।। तत्रत्या आहुः क्वापि न गतोऽत्रैवास्माभिर्दीपावल्युत्सवः कृत इति ।। २६ ।। मृषा मृषेत्यन्योन्यं वदतस्तान्निवार्याह भगवान् तूष्णीं स्थेयं सर्वत्राहं गतः खलु ।। २७ ।। तदा ते चाकितास्तुष्टुवुः भगवन् ते महिम्नः परं पारमजानतान्नः ।। २८ ।। लौकिकवाचस्तोत्रयात्रां कथं भविष्यति श्रुतेरप्यगोचरत्वाद्गुहाशयस्थ विश्वव्यापक यत्ते दिव्यं जन्म कर्म च भक्तानुग्रहार्थमेव ।। २९ ।। ३० ।। यद्दृश्यते श्रूयते चेयं दुरत्यया त्वन्माया सा नो नावृणोत्विति वरं देहि ।। ३१ ।। इत्युक्त्वा प्रणतान् तान् तथेत्युक्त्वा संतोष्य प्रस्थापयामास तेऽपि ययुः ।। ३२ ।। एवं सच्चित्सुखात्मको भगवान् दुर्विभाव्या लीला इहाकरोत् ।। ३३ ।। भक्तिप्रियोऽसौ जात्याचारवयोरूपविद्यार्थगुणपौरुषं नापेक्षते ।। ३४ ।। कश्चिच्छूद्रो दास्येनैवैहिकान्भोगान्भुक्त्वांते मुक्तः ।।३५।। कृषीवलः स स्वकर्म कुर्वन् प्रत्यहं संगमं यांतं गुरुं ननाम ।। ३६ ।। तद्गमागमसौख्यार्थं संगममार्गं कंटकाश्माद्यपसरणेन सुगमं चक्रे ।। ३७ ।। पुनरागतं नत्वा-नासक्त्या स्वकर्माकरोत् भगवानेकदा तं पृच्छति स्म ।। ३८ ।। सदाग्रतः कुतः पतस्येतेन किं साध्यं किं तेऽभीष्टं वद ।। ३९ ।। शूद्र उवाच सुखकामस्त्वां भजामि त्वत्कृपया क्षेत्रं मनोज्ञं भाति तत्प्रेक्ष पादजोऽप्यहं नोपेक्ष्यो दासत्वात् ।। ४० ।। तदा सस्मितो भगवान् सर्वक्षेत्रे किंचित्प्रादुर्भूतधान्यं दृष्ट्वा तं प्राह मद्वाक्ये विश्वासश्चेद्यावन्मदागमस्तावत्सर्वं छिंधीत्युक्त्वा संगमं ययौ ।। ४१–४२।। शूद्रोऽपि क्षेत्राधिपमेत्याह ते करं निश्चित्य क्षेत्रं देहीति स प्राहाद्य नेदं साध्विति ।। ४३ ।। शश्वत् प्रार्थ्य वार्षिककराद्द्विगुणं दातुं निश्चित्य प्रमाणपत्रं जग्राह सोऽपि तथा ।।४४।। ततो लोकानाहूय छेत्तुमारेभे तदा सापत्या भार्यागत्य वारयामास

॥४५॥तां भीषयित्वा चिच्छेद भागवतानां निष्ठैवेयं भरतेन माता प्रह्लादेन पिता बिभीषणेन भ्राता च त्यक्तो भार्यादेः का कथा ॥४६-४७॥ साधिपं गत्वाह मुंडिवाक्यानुवर्ती तेऽपक्वक्षेत्रं छिनत्ति तं वारयेति ॥४८॥ सोऽपि दूतं प्रेरयत् स दूत एत्य गभीरवाचा निवारयामास ॥ ४९ ॥ तं शूद्र आहाहं न बिभेमि इदं पत्रमस्तीति ॥ ५०॥ दूतोऽपि परावर्त्य तं न्यवेदयदधिप आह हे शूद्रि कथं वाक्यमन्यथा कार्यं सोप्यर्थधान्यवानास्ते ॥ ५१ ॥ तदा सापत्या सा क्षेत्रसीमां प्राप्य रुदती शूद्रोऽखिलं छित्वा गुर्वागममाचकांक्ष ॥ ५२ ॥ गुरुरप्यागच्छन् छिन्नं क्षेत्रं दृष्ट्वा प्रणतं तमाह किमिदं कृतमिति ॥ ५३ ॥ यदन्येन मनसापि कर्तुमशक्यं मया तु विनोदेनोक्तं कुतस्ते वृत्तिः किंवाढ्याय दारयसीदमपक्वं वृथागतं ॥ ५४-५५ ॥ शूद्र आह कथमप्युक्तं गुरुवाक्यं मेऽतिफलदं शास्त्रवत् येन जन्म दत्तं स वृत्तिद इति ॥५६॥भक्तिश्चेत्तथा भवत्वित्युक्त्वा गुरुर्ययौ सोऽपि तध्द्यायन् गृहमाप ॥५७॥ ततोऽर्के मूलनक्षत्रगे मेघो ववर्ष तच्छिन्नमपि यावनालाद्यवर्धत ॥५८॥ प्रादुर्भूतानसंभाव्यांकुरान्दृष्ट्वा सर्वे ननंदुः शूद्र्यपि हर्षिता ॥ ५९ ॥ पत्युः पादौ धृत्वा सगद्गदं प्राह दयालो गुरुभक्तोऽसि ममापराधान्क्षमस्वेति ॥ ६० ॥ शूद्रस्तथेत्युक्त्वा तया सह क्षेत्रं संपूज्य यांतं गुरुं नत्वा क्षेत्रं दर्शयित्वा आह ॥६१॥ तव पादौ चिंतामणिः वाक्यं सुधास्पर्धि रूपं ज्योतिर्मयं चेदं घूकोऽर्कमिवाज्ञो न वेद ॥ ६२ ॥ मयापीदं दिव्यं धाम पूर्वपुण्येन दृष्टं कृतार्थोऽस्मि मां मा विस्मर ॥ ६३ ॥ श्रीगुरुरुवाच दुराचारोप्यनन्यधीर्मां सेवते चेत्साधुस्त्वं तु स्वाचारो मद्भक्तश्च ॥ ६४ ॥ अतस्ते कुलेऽचला कमला मद्दास्यं च तिष्ठतु नात्र संशयः ॥६५॥ इत्युक्त्वा गुरुर्गतः सोप्यऽधिपमेत्याहाधिभागं प्रदास्ये ते यतो धान्यर्धिरद्भुता ॥ ६६ ॥ स प्राह मे नान्यथोक्तिरन्यायं न स्पृशामीयमृद्धिर्गुरुप्रसादलब्धा त उक्तमेव देहीति ॥ ६७ ॥ ततः स कामं धान्यं नीत्वाऽवशिष्टं लोकेभ्योऽदात् बहवः

प्रकामं धान्यं लेभिरे सोपि सद्गुरुकृपया श्रीमान्भूत्वातिनीचवत् सद्गुरुं सिषेवे ॥ ६८-६९ ॥ यत्रेदृश्यः प्रभोर्लीलाः वृत्ताः अतस्तत्पुरं धन्यतमं मन्ये ॥७०॥ नामधारक उवाच काश्यादिक्षेत्रं विहाय कुतोऽत्रैवोवास भगवान् तन्मे कथय ॥ ७१ ॥ सिद्ध उवाच अधोक्षजो भगवान् तत्र तीर्थानि सर्वशो देवांश्चोद्वीक्ष्य जगन्निवासोऽवसन् ॥ ७२ ॥ एकदा तत्रत्यान्काशीजिगमिषून्लोकान्प्रति कलौ गुप्तानि तीर्थानि ख्यापयन्नाहात्रैव तीर्थानि दर्शयामीत्युक्त्वा तेभ्यो दर्शयन्नाह ॥ ७३-७४ ॥ संगमोऽयं प्रयागोऽत्र षट्कूले तीर्थानि अयं त्रिवेणीसंगमोऽसौ अमरजा पापघ्नीष्टदा ॥ ७५ ॥ युद्धे जालंधरेण हतान्देवान्जीवयितुमिंद्राय शिवेन दत्तममृतं किंचिच्च्युतं ॥ ७६ ॥ ततोपि महाप्रवाहो जातः सेयं कालमृत्युभयाघघ्नी अमरजा जाता ॥ ७७ ॥ कल्पद्रुमाश्वत्थसंनिधौ मनोरथाख्यं तीर्थं तदग्रे संतोषतीर्थं तत्र रुद्रः स्वयं विश्वेश्वरः ॥ ७८ ॥ शिवं विधिवत्प्रदक्षिणीकृत्य वामहस्तेन नंदिनोंडं धृत्वांगुष्ठतर्जन्यौ शृंगयोर्निधाय मध्यत ईशं यः पश्येत्स देववद्भवेत् इयं भक्ततुष्टये ईशेन काशी निर्मिता ॥ ७०-८० ॥ अत्र जीवन्मुक्तः शैवो लोके जड इति मतः येनाहिनेव संगस्त्यक्तः भोगा विषमिव स्त्रीश्च शववत्त्यक्ता ॥ ८१ ॥ कदाचिद्रुशो स बंधूनाहात्रेयं काशी त ऊचुर्नो दर्शयेति ॥ ८२ ॥ तदेशं दध्यौ ईशोऽप्यागत्य तदिच्छया स्वात्मना सह तत्र काशीं प्रादुश्चकार ॥८३॥ जलमध्य उत्तमे कुंडे विश्वेश्वरलिंगं तथान्यान्यपि चिह्नानि दर्शयित्वा तानाहेयं काशीह विधिवद्यात्रा कर्तव्येति ॥ ८४।८५ ॥ प्रत्यब्दं नः कुलदैवतं विठ्ठलं त्वत्र काशीयात्रा कार्या सर्वाघघ्नीष्टदा च ॥ ८६ ॥ तत इयं काशीति गुरौ ब्रुवति पूर्वाश्रमस्वसा रत्नागत्य प्रभुं ननाम ॥ ८७ ॥ स तामाहोक्तस्मृतिरस्ति किंभिति तदा सापि स्मृत्वा शरीरे कुष्ठं च दृष्ट्वा खिन्नाभूत्तां प्रभुराह भवांतरे पापं भोक्ष्यसि चेत्कुष्ठं नश्येदिति ॥ ८८ । ८९ ॥ सा प्राह पुनर्गर्भवासो यथा न भवेत्तथा कुरु हे परात्परान्यन्न जाने ॥९०॥

गुरुः प्राह पापनाशतीर्थे त्र्यहस्नानात्सप्तजन्माघो नश्यति कुष्ठस्य तु का कथा ॥९१॥ सापि तत्र त्र्यहस्नानाच्छुद्धा जाता तत्र मठं निर्माय स्थित्वा मुक्ताभूत् ॥ ९२ ॥ ततो गुरुर्जंबुद्वीपस्थाखिलतीर्थवत्पापघ्नं कोटितीर्थं दर्शयित्वाह ॥ ९३ ॥ अत्र क्रांतिपर्वग्रहेषु स्नानदानजपादयो भाविकानां अक्षय्यानंतफलदाः ॥ ९४ ॥ गयावद्रुद्रपादाख्यमग्रतो दर्शयित्वाह गयोक्तवदत्रानुष्ठेयं तथात्र कृष्णाग्रे द्वारवतीसमं चक्रतीर्थं ॥९५॥ द्वारकातश्चतुर्गुणफलदं पतितोऽप्यत्र स्नानात्कृती भवत्यस्थि चक्रवच्च ॥ ९६ ॥ ग्रामप्राग्भागो गोकर्णवत्कल्लेश्वरोऽत्र महाबलेशवन्मन्मथाख्यं सिद्धिदं सागरवत्तीर्थं ॥ ९७ ॥ श्रावणे शिवेऽखंडाभिषेकात्कार्तिके दीपोत्सवाच्च सिद्धिपूर्वकं श्रेय एव ॥ ९८ ॥ इति श्रुत्वा ते तथा चेरुरीदृक् क्षेत्रं विज्ञाय भगवान् तस्थौ भक्तकामदोऽसौ म्लेच्छमुद्धृत्य तत्र साक्षात्स्थितोऽपि जन्मांधैः सूर्य इवाज्ञैर्न दृश्यते ॥ ९९।१०० ॥ इति द्वाविंशोऽध्यायः ॥ २२ ॥

---

# अथ त्रयोविंशोऽध्यायः

नामधारक उवाच: साधु साधु पावनं क्षेत्रमाहात्म्यमुक्तं यत्र जगन्निवासः॥ १ ॥ तत्र देवाद्यास्तीर्थानि च वसंति यत्र साक्षाद्भगवान्सोऽयं संगमः कृष्णापंचगंगासंगम इव ॥ २–३ ॥ अत्र पश्वादयोऽपि स्नानपानादिना धन्याः नृणां धन्यत्वं तु किं वक्तव्यं ॥ ४ ॥ यन्माहात्म्यश्रवणात्पापक्षयस्तन्निवासिनां फलं को वदेत् ॥ ५ ॥ ये भक्तियुक्तास्तत्करे मुक्तिरास्ते मुक्तिं परिभाव्य भक्तिमेव सेवंते ॥ ६ ॥ पुरा मे मुक्त्यपेक्षा जातापि वृद्धाहैतुकभक्तियोगेन व्यपेता ॥ ७ ॥ अतो भगवतः कीर्तनादि रोचते विशेषतः श्राव्यतद्गुणश्रवणं ॥ ८ ॥ तवा-

स्मापि देवेऽयं भगवच्चरितापूर्णोऽतो मे पावनं मंगलं भगवच्चरितं ब्रूहि ॥ ९ ॥ को म्लेच्छः हीनोऽपि स कथं भगवत्कृपापात्रभूर्जातः ॥ १० ॥ सिद्ध उवाच भगवत्प्रसादात्तवेदृशी मतिरतो धन्योऽस्यतो वक्तुमानंदोऽतीव वर्धते ॥ ११ ॥ यदा श्रीपादः कुरुपुरे प्रत्यक्षं स्थितः तदा कश्चिद्रजकः प्रत्यहं नत्यादिना भेजे ॥ १२ ॥ कदाचित्तुष्टः श्रीपादस्तमाह रे भाविक साम्राज्यं कुर्विति ॥ १३ ॥ स तुष्टः कदाचिद्युवतीयुतं क्रीडंतं सबलं नृपं दृष्ट्वामन्यत ॥ १४ ॥ कोऽस्य गुरुः कुत इदं भाग्यं धन्यमस्य जीवितं कुतस्तरां मय्यस्य वार्तेति ॥१५॥ तज्ज्ञात्वा श्रीपाद आहाधुना वृद्धस्त्वं राज्यं भोक्तुं नार्हस्यत आगामिजन्मनि भुंक्ष्वेति ॥ १६ ॥ भवदुक्तं मे मतं यूनो राज्यरसज्ञता राज्येऽपि ते स्मृतिरस्त्विति स ययाचे ॥ १७ ॥ श्रीपादोऽपि तथेत्यूचे स प्रेत्य वैडूर्यनगरे म्लेच्छजातीयः सार्वभौमोऽभूत् ॥ १८ ॥ स प्राक्संस्कारात्स्वधर्मारुचिर्देवविप्रभक्तो धर्मज्ञः शुद्धात्मा सर्वभूतसमोभवत् ॥ १९ ॥ तत्पुरोहितास्तमाहुः स्वधर्मं सेवय वर्णधर्मोऽयं मनसाप्यग्राह्यः ॥ २० ॥ मुखाद्यंगैर्देहसाम्ये कथं वर्णाश्रमः अचेतनाश्मादौ अन्यत्राश्वत्थादौ वा कथं देवतेति ॥ २१ ॥ राजा प्राहेदं बुद्धिमांद्यं ईश्वरेण गुणकर्मभिदा चातुर्वर्ण्यं सृष्टं देवस्तु सर्वगः ॥ २२ ॥ यथा शिशोः स्थूलाक्षराल्लिपिज्ञानं तथा गुरूक्तेश्वरार्चाकल्पनया हृत्स्थैर्याद्बोधो भवेत् ॥ २३॥ यथा मलिनेऽब्दादौ प्रतिबिंबं न दृश्यते शुद्धे तु सम्यग्दृश्यते तथा समलेंतःकरणे नेश्वरप्रतीतिर्ध्यानादिना तस्मिन्नेव शुद्धे सम्यक्प्रतीतिः ॥ २४ ॥ तस्मात्स्वतःप्रमाणभूतवेदोक्तधर्मपरान्विप्रान्भक्त्या नमस्कुरुत ते देवानामपि देवाः ॥ २५ ॥ वेदानुसारिस्मृत्युक्तधर्मानुसारिलोका अपि पूज्याः अतो द्वेषशंकां त्यजतेति ॥ २६ ॥ ततः कियता कालेन राज्ञोऽके स्फोटको जातस्तेनात्यंतं व्यथितः प्रतिक्रिययापि न शशाम ॥ २७ ॥ यातनया त्यक्तभोजननिद्रो राजा विप्रमामंत्र्य विनयेन स्फोटशमोपायं पप्रच्छ

॥ २८ ॥ विप्र आह त्वं म्लेच्छोऽहं विप्रोऽतो जनश्रुतिभिया रहसि वक्तव्यं ॥ २९ ॥ तथेत्युक्त्वा विप्रेण सह राजा पापनाशतीर्थमागतः विप्र आह पूर्वार्जितदुष्कर्मयोगाद्रोगो भवति ॥ ३० ॥ स च दान-भेपजदेवसेवनाद्विशेषतः सर्वाघहरणक्षमसाधुदृष्ट्या च नश्यति ॥ ३१ ॥ पूर्वमुज्जयिन्यां त्यक्तकर्मा कश्चिद्विप्रः पिंगलाख्यवेश्यासक्तोऽभूत् ॥ ३२ ॥ तत्पूर्वपुण्यप्रभावात्तत्र ऋषभयोगी प्राप्तस्तं तौ प्रेम्णा सेवयामासतुः ॥ ३३ ॥ तं संपूज्य स्तुत्वा तत्पादतीर्थं पीत्वा भोजयित्वा पर्यंके शाययित्वा तौ प्रांजली स्थितौ ॥ ३४ ॥ मुनिः प्रातरुत्थायागात् तेन पुण्येन तौ प्रेत्यामले राजकुले जातौ दशार्णेशस्य वज्रबाहोर्महिष्या उदरे स विप्रो जातः तत्सपत्नी तद्द्वेषाद्गर्भिण्यै गरलं ददौ तेन विद्धापि न मृता दैवात्सा सुपुवे सुतं बालोऽपि विषविद्ध उभौ व्रणार्तौ जातौ ॥ ३५-३६ ॥ ३७ ॥ नानोपायैस्तदार्तिर्न शशाम उभौ निराहारौ क्रंदमानौ निराहारौ क्षीणौ बभूवतुः ॥३८॥ एकदा पूतिगंधित्रस्तो राजा सूतमाज्ञाप्य तौ कानने प्रस्थापयामास ॥ ३९ ॥ सूतो घोरेऽरण्ये तौ त्यक्त्वाकथयत् तदा हृष्टो राजा हृष्टयान्यभोगिन्या रेमे ॥ ४० ॥ घोरसत्वे वने व्रणकर्षिता राज्ञी कंटकोपलादिना त्रस्ताभूत् ॥४१॥ सबाला सा प्राह हे देवालं कष्टेन बालेन सह हिंस्रैर्मां खादय दुःखाच्च मोचय ॥ ४२ ॥ एवं विलपंती साग्रे गाः प्रेक्ष्य गत्वा गोपान्प्राह मम प्राणास्तृषोत्क्रामंतीति ॥ ४३ ॥ ते तामाहुः समीपमिदं जलं मंदं व्रजेति तथेति सा सरो गत्वापः पीत्वा तत्स्थस्त्रियः प्राह कोऽत्र राजात्र प्रजा हृष्टा भांतीति ता आहुः पद्माकरः साधुवैश्योऽत्र कृती राजेति ॥४४–४५॥ अत्रांतरे दास्य आगतास्ताभिः सह पुरं गता सा सर्वं राज्ञे शशंस स दयालुस्तां दीनां ररक्ष ततः सुतोऽल्पकालेन व्रणत्रस्तो ममार ॥ ४६ ॥ ॥४७॥ राज्ञी प्रेतमाह शोकार्णवे दीनां मां त्यक्त्वा क यास्यसि त्वत्कृते मया भुक्तं कष्टं न स्मरासि किं त्वदर्थे भर्तृमाताद्योऽतरिताः तथापि

मया त्वां दृष्ट्वा दुःखं विस्मृतं त्वं मे जीवस्त्वयि यातेऽहं मरिष्ये ॥४८॥
॥४९-५०॥इति तद्रुदितं श्रुत्वा गच्छन्नृपभो मुनिर्विशं प्राप्य सर्वं ज्ञात्वा
तां प्राप्य कृपयाह ॥ ५१ ॥ हे राज्ञि कुतो रोदिषि इदं जगन्मायामयं
असत्यं भौतिके नश्वरे देहे कुतः पुत्रादिकल्पना ॥ ५२ ॥ यथा कीटः
कंटककुटीरेण यावदायुश्चेष्टते तथाऽवशो जीवः पूर्वार्जितदेहेन यावदा-
रब्धं चेष्टते ॥ ५३ ॥ कालकर्मगुणोत्पन्नोऽयं जीवस्तु चिदंशः सर्वगो न
संबंधलिंगभाक् अनादित्वादेहस्त्वाद्यंतवाञ्जनुः ॥ ५४ ॥ अनयोर्मध्ये
न कोपि शोकविषयोऽतः सात्विकीं धृतिं धृत्वा प्रारब्धमश्नती यावदायुः
परेश्वरं भजेति ॥ ५५ ॥ इत्युक्त्वा स विरराम साज्ञानविकृत्वा प्रणम्याह
॥ ५६ ॥ कारुण्याद् भवतोक्तं तत्त्वमज्ञानोपहतायां मयि कथं तिष्ठेत्
॥ ५७ ॥ येन मे मनः सुप्रसन्नं भवेत्तद्विधीयतां दुःखदशायामपि नहं
भवानीश्वरेण प्रहितः ॥ ५८ ॥ कारुणिको मुनिस्तच्छ्रुत्वा बालं स्वसेवकं
ज्ञात्वा प्रससाद साधवो हि नत्या फलंति ॥ ५९ ॥ तपस्वी साक्षाच्छंभु-
रिव स शिशवे भस्म चिक्षेप तदा स सुप्तोत्थितवदुत्तस्थौ ॥६० ॥ तस्मै
खड्गं शिवकवचं द्वादशसहस्रनागबलं च दत्वाऽयं भद्रायू राजशास्ताऽ
जेयो भवेदिति मुनिस्तमाह तदा माता सुतश्च दिव्यांगौ बभूवतुः हे
राजन्नेतावान्साधुमहिमातः साधुमेव शरणं व्रज ॥ ६१-६२-६३ ॥
राजोवाच सन्माहात्म्यं साधूक्तं ईदृक्साधुः क्वास्ते तन्मे कथय कथं
म्लेच्छाय कथनीयमिति न मंतव्यं यस्माच्छुद्धधीरहं विप्रदासः ॥ ६४-
६५ ॥ विप्र उवाच भीमामरजासंगमे साक्षादीश्वर इव कश्चित्साधुरास्त
इति श्रुतं तं शरणं व्रजेति ॥ ६६ ॥ तच्छ्रुत्वा राजा सत्वरं राष्ट्रमेत्य
शिबिकारूढः ससैन्यः साधुसंदर्शनाय ययौ ॥६७॥ स गंधर्वपुरमेत्य पौरा-
न्पप्रच्छात्र साधुः क्वास्ते तं मे दर्शयंतु भवंत इति ॥६८॥ म्लेच्छान्दृष्ट्वा
भीतास्ते नोचुः पुनराह राजा तद्दर्शनायागतोऽस्मि स क्वास्ते कथ्यता-

मिति ॥ ६९ ॥ तदा ते आहुः संगमेऽस्तीति तच्छ्रुत्वा स पादचारी संगमं गत्वा ॥ ७० ॥ गुरुं ददर्श गुरुरपि तं दृष्ट्वा प्राह रे रजकानुग क्व तिष्ठसीह कुतो नागत इति तदा लब्धस्मृतिः स आह ॥७१॥ त्वद्दत्त-राज्यसक्तेन मया तव पादौ विस्मृतौ योऽहं पूर्वरजकः स इदानीं राजेयं भवत्कृपा हे सत्यसंकल्प मेऽपराधान्क्षमस्व हे कृष्णाविहारे श्रीपाद तेऽनुगं प्रणतं रजकं मां पाहि स्फोटकार्तिनिमित्तेन ते दर्शनं जातं विस्मृतापि संविदद्यैव लब्धा ॥ ७२–७५ ॥ क्व स्फोटको दर्शयेति गुरुणोक्तोंऽके संतमपि स्फोटकमदृष्ट्वा चकित आह ॥ ७६ ॥ स्वामिन् तेऽनुगोऽयं स्फोटकोऽन्यायवर्तिनं दंडयं मामानीयान्यत्र गत इति मन्ये ॥ ७७ ॥ तव जाग्रत्सु वाक्येषु दुःखदोषपरिप्लुतेऽसारे संसारे मग्नं मामुद्धर ॥ ७८ ॥ श्रीगुरुरुवाच भोगैस्तृप्तोऽसि किं राज्यं भुक्तं पुत्रादयो लब्धाः का वापेक्षावशिष्टा हे म्लेच्छ सत्यं वदेति ॥ ७९ ॥ स प्राह भवत्कृपया सर्वं परिपूर्णं भवद्दत्ताखिला श्रीर्भगवते दर्शनीयेत्यपेक्षितं॥८०॥ श्रीगुरुरुवाच गोघ्ने राज्ये यतेर्मम गमनं कथं मां वर्णास्त्वां च म्लेच्छा हसिष्यंति ॥ ८१ ॥ राजोवाच अहं रजको भवांश्छ्रीपादश्च इतःपरं पुरे न हिंसेत्युक्त्वा गुरुं नीतुकामो नमन्नस्तुवन् ॥ ८२ ॥ गुरुः प्राह भक्तवात्सल्यान्मद्भक्ता नोपेक्ष्या अतस्तुष्ट आयास्ये॥८३॥ स तच्छ्रुत्वा प्रतीतो गुरुं शिबिकायामुपवेश्य शिष्येभ्यश्च वाहान्दत्वा तत्पादुके गृहीत्वा पादचारेणान्वगात् ॥ ८४-८५ ॥ तं प्रभुराहेतो दूरं गंतव्यमतो राज्ञस्तेऽदो न श्लाघ्यं ॥८६॥ स प्राह को राजाऽहं तु तेऽनुगो रजकस्त्वन्न्यस्तभूभारस्त्वदाज्ञावशवर्ती ॥ ८७ ॥ श्रीगुरुरुवाच दिक्पालांशैस्ते राट्त्वं दत्तं तेन त्वं सत्कार्योऽसि हे राजन् ममाज्ञयाऽश्वमारुह्य व्रजेति ॥ ८८ ॥ ततः सोऽश्वमारूढः भगवान् तमाह गत्यानया कर्मलोपो भवेदतोऽग्रे व्रजामि ॥ ८९ ॥ त्वं मंदं पापनाशतीर्थमेहि इत्युक्त्वा क्षणार्धेन चतुश्चत्वारिंश-

त्क्रोशमपि तत्प्राप ॥ ९० ॥ सशिष्यं तीर्थे सांध्यं कर्म कुर्वाणं तं दृष्ट्वा चकोरश्चंद्र इव हृष्टो नागनाथः सायंदेवसुतस्तं सादरं प्राथ्र्य गृहं नीत्वा भोजयामास ॥ ९१-९२ ॥ सशिष्यः स भुक्त्वा तमाहात्र म्लेच्छो राजा आगमिष्यत्यतोऽस्माभिस्तीर्थे स्थेयं ॥ ९३ ॥ इत्युक्त्वा तीर्थं गतो राजापि तदागत्य पादचारी गुरुं स्वपुरं निन्ये ॥ ९४ ॥ अलंकृतं रत्नतोरणपताकादिभूषितं गीतवाद्यजयशब्दसंकुलं पुरं शिबिकास्थो भगवान्रत्नदीपैर्नीराजितो विवेश ॥ ९५-९६ ॥ पट्टकूलाच्छादितमार्गेणांतःपुरं गुरुं नीत्वा तस्मै महिषीपुत्रादिभ्यो दर्शयामास ॥ ९७ ॥ गुरुं भद्रासने शिष्यांस्तदनुगुणपीठे चोपवेश्य नृत्याद्यकारयत् छत्रचामरमालिने गुरवे च प्रकृतीर्दर्शयामास ॥ ९८-९९ ॥ म्लेच्छास्तं विकुचक्रुर्द्विजाः पुण्यश्लोकोऽयमिति प्रशशंसुः ॥ १०० ॥ गुरुराह रे दास ते प्रकृतीर्दृष्ट्वा हृष्टोऽस्मि ते बुद्धिरलं जाता वा न वा वद ॥ १ ॥ स आहाभिर्न तुष्टोऽतः परमं भवत्पदसेवनं कांक्षे तद्दुरापमपि मे देहि ॥ २ ॥ अद्य भवते सर्वस्वात्मनिवेदनं कुर्वे इत्युक्त्वा तथा चकार ॥ ३॥ श्रीगुरुरुवाच त्वया साधु कृतं अनेन तुष्टस्ते शुद्धभावाय कांक्षितं दास्ये ॥ ४ ॥ इत्युक्त्वा यूने तज्ज्येष्ठपुत्राय विनीताय भूधुरं दापयित्वा गुरुस्तमाह॥५॥ सर्वं परित्यज्य श्रीपर्वतं गच्छाहमपि शिष्यादीनाश्वास्यागमिष्यामि तत्र मद्दर्शनात्त्वं कृतार्थो भविष्यसि॥ ६ ॥ इत्युक्त्वा शिष्यैः सह गौतमीं गत्वा स्नात्वा भीमामरजासंगमं प्राप्तः ॥ ७ ॥ तं दृष्ट्वा हृष्टाः सर्वे नीराज्य ब्राह्मणभोजनं चक्रुः ॥ ८ ॥ भक्तिः प्रसृता म्लेच्छा अपि भजंत्यतोत्र घोरे कलौ साक्षान्न स्थेयमिति गुरुरमंस्त ॥९॥ ततः श्रीशैलं गत्वा सर्वस्वात्मार्पणेन तुष्टः भगवान् म्लेच्छायापि सद्गतिं दत्वा मठमेत्य ॥ १० ॥ भक्तकामधेनुस्तत्र तस्थौ स तत्र सतां गोचरो नानार्याणां जन्मांधानां भास्कर इव ॥ ११ ॥ कृष्णापंचनद्यां प्रातः स्नात्वात्र संगमे मध्यान्हिकं कृत्वा मठे भिक्षां भुक्त्वा तिष्ठति ॥ १२ ॥

तत्र विविधा लीला दर्शिता दर्शयति दर्शयिष्यति च तस्य दुर्ग्रहं प्रभावं को वेत्ति ।। १३ ।। यो यो यस्य कामः स तद्भजनात्सिद्धिमेति यतोऽसौ भक्तिभावनो भजतोऽनुभजति ।। १४ ।। कलौ भगवत्कला प्रायो न जागरूका यस्मात्साक्षात्फलदं तं भगवंतं भजेति ।। १५ ।। एवं सिद्धोक्तं श्रुत्वा श्रद्धयासंशयं गुरुमभ्यर्च्य नामधारको गुणानुवादश्रवणान्मोक्षं प्राप ।।१६।। तत्संवादमयं धर्म्यं ग्रंथं गुरुचरित्राख्यं गंगाधरात्मजो व्यरचयत् ।।१७।। यत्र क्वापि स्थापितः प्रेतभूतरक्षोमुख्यासद्ग्रहार्तिघ्न एषः । सप्ताहं तत्पाठिने शृण्वतेऽपि दत्तात्रेयोऽभीष्टकामान्ददाति ।। १८ ।। स एवात्रेयगोत्रोत्थगणेशब्रह्मपुत्रगां । पुनानोर्व्यां जयत्यत्र ग्रंथात्मा तारकोऽव्ययः ।। १९ ।। ॐ नमो भगवन् विश्वहेतो ब्रह्मोदिताज ते मालीनो विश्वभृल्लीलाविहार्यस्याभावनः ।। २० ।। इति त्रयोविंशोऽध्यायः ।। २३ ।। इति चूर्णिका समाप्ता ।। श्रीगुरुदेवदत्त ।।

# श्रीगुरुचरिते शुद्धिपत्रम्

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १२ | स्वस्व विषय | स्वस्वविषय |
| ,, | २४ | सन | सन् |
| ४ | १८ | अमल्या उरवः | अनूल्या उरवः |
| ११ | २४ | तथाप्यथेषा | तथाप्येषा |
| १३ | १७ | विवाक्षित्वात् | विवक्षितत्वात् |
| १७ | १६ | पूर्वमुत्क्वा | पूर्वमुक्त्वा |
| १८ | १ | श्रीगुरुस्तुतिः | श्रीगुरुचरिते |
| १९ | १ | मानसपूजा | श्रीगुरुस्तुतिः |
| ,, | २४ | समा समानस्वभावँ | समौ समानस्वभावौ |
| २० | १ | श्रीगुरुस्तुतिः | श्रीगुरुचरिते |
| ,, | ३ | सत्वं परात्मा | स त्वं परात्मा |
| २१ | १ | मानसपूजा | श्रीगुरुस्तुतिः |
| २३ | २३ | इत्यारभ्याष्टाभि | इत्यारभ्याष्टभि. |
| २६ | ८ | एत् ' इकं सन्द्रं | एकं सत् ' इन्द्रं |
| ,, | २ | कार्तवीर्य | कार्तवीर्य |
| २९ | ५ | द्रष्टृश्रोत् | द्रष्टृ श्रोतृ |
| ३० | १३ | इत्यादि श्रुतीभि | इत्यादि श्रुतिभि |
| ३१ | ११ | त्यागपरा शिष्याः | त्यागपराः शिष्याः |
| ३४ | २२ | सतो वल्लभा | संतो वल्लभा |
| ३६ | १६ | योग्याः किं | योग्या किं |
| ३७ | ११ | ह्रानानु | दानानन्तु |
| ४० | १० | तद्रपं | तद्रूपं |
| ४२ | १५ | भिथ्या वा | मिथ्या वा |
| ४६ | १३ | एनमब्रव | एनमब्रुव |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४८ | ११ | मप्रातौ सत्यां | मप्रासौ सत्यां |
| ४९ | २१ | मरणेन हत्य | मरणेन हत्या |
| ५० | १० | तथेस्तुक्त्वा | तथेत्युक्त्वा |
| ५४ | ९ | ष्कारणात् | त्कारणात् |
| ६४ | ६ | भृत्वा | भूत्वा |
| ७२ | २२ | भमयभावाः | भूमयभावाः |
| ७३ | १२ | नासंगो भेदश्च | नासंगोऽभेदश्च |
| ७५ | २२ | भक्षतीत्यूह्य | भक्षतीत्यूह्यम् |
| ८३ | १४ | विश्वमसृजत् | विश्वमसृजत् |
| ८५ | १८ | ठञापवादेपि | ठञोपवादेपि |
| १०४ | २२ | धातोरुरपे | धातोरुपे |
| १०८ | १६ | तत्कृतद्धयान | तत्कृतध्यान |
| १११ | १२ | सकाशात्रीणि | सकाशात् त्रीणि |
| ११२ | १४ | उरु जडे | उरु जडं |
| ११७ | १० | पजान्हि | पूजान्हि |
| १३१ | २२ | तथाभुतं | तथाभूतं |
| ,, | २३ | अभु | अभूत् |
| १३३ | २१ | मकश्चे | मूकश्चे |
| ,, | २२ | कथं ब्रते | कथं ब्रूते |
| ,, | २३ | ब्रतेऽतः | ब्रूतेऽतः |
| १३४ | १३ | मुढानंदेन | मुदानंदेन |
| १३६ | १२ | संबांधं | संबंधि |
| १३७ | १२ | सर्वान्ढेवानपि | सर्वान्देवानपि |
| ,, | २२ | दहत्यग्नि | दहत्यग्निः |
| १३९ | ५ | वंक्तुमिति | वक्तुमिति |
| १४६ | २२ | अपक्रियादि | अप्क्रियादि |
| १६५ | १५ | प्रोष्य | पोष्य |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १६९ | ५ | स्वानंदा | स्वानंदो |
| १६९ | ८ | धमाधम । | धमाधमः |
| १६९ | १४ | प्रतिष्ठां बिभेंति | प्रतिष्ठां विन्दते |
| १७४ | २० | सतुषं धान्यः | सतुषं धान्य- |
| १८० | ७ | विपुच्छशंगो | विपुच्छशृंगो |
| १८४ | १८ | भतार्थे लट् | भूतार्थे लट् |
| ,, | २० | ङीप तद्दिने | ङीप् तद्दिने |
| १९५ | १६ | क्किप एवं | क्किप् एवं |
| २०५ | २० | गर्भम्य | गर्भस्य |
| २०७ | १० | पित्रादीशब्दप्रयोग | पित्रादिशब्दप्रयोग |
| २२२ | ११ | तथाऽविद्य | तथाविद्या |
| ,, | ,, | कर्मः | कर्म |
| २२७ | २३ | मेवैतद्द्यद् | मेवैतद्यद् |
| २४२ | १६ | पिपीलीका | पिपीलिका |
| २५० | १४ | साधनभृत | साधनभूत |
| ,, | ,, | पर्यायनायकं | पर्यायनामकं |
| ,, | १६ | च्चित्तशुद्धयेश्वरो | च्चित्तशुद्धये ईश्वरो |
| २५१ | १८ | वधः सहधर्मिणी | वधूः सहधर्मिणी |
| २५४ | २१ | त्वत्पत्तिः | त्वत्पतिः |
| २६२ | ९ | भता करणं | भर्ता करणं |
| २८४ | ५ | निवेद्मि | न वेद्मि |
| २८५ | १० | च्छुगाता | च्छुगार्ता |
| २९१ | १० | यज्ञाशिष्टान्नं | यज्ञशिष्टान्नं |
| ,, | २१ | पर्ववत् | पूर्ववत् |
| ३०१ | ११ | वैश्योष्टांलिगुन | वैश्योष्ठांगुलेन |
| ३११ | २० | रक्षान्तेस्तन्माला | रक्षान्तैस्तन्माला |
| ३१३ | २१ | यत्र तूष्णां | यत्र तूष्णीं |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३१४ | १४ | नाभावंधं | नाभावेंधं |
| ३१६ | २३ | यजेत्पजयेत् | यजेत्पूजयेत् |
| ३१८ | १५ | हरिर्न पज्यः | हरिर्न पूज्यः |
| ३२९ | १३ | पायभत | पायभूल |
| ३३१ | १८ | याद्या शेपा | याद्याशेपा |
| ३३२ | १९।२० | शुक्रंशेणित | शुक्रशोणित |
| ३४६ | १ | नाधोत्थ | नाधोत्थं |
| ३६१ | १२ | मकीभूत | मूकीभूते |
| ३८६ | २२ | भजनां | भजनं |
| ३९० | १४ | तनुर्भत्वा | तनुर्भूत्वा |
| ४०३ | १८ | संतोषतीर्थे | संतोपतीर्थं |
| ४११ | १० | श्रीपद स्तदो | श्रीपदस्तदा |
| ४२१ | १३ | म्लेच्छा | म्लेच्छा |
| ४२८ | २० | इत्यकप्रत्ययः | इत्यूकप्रत्ययः |
| ४३४ | २ | श्रष्ठ | श्रेष्ठ |
| ४४५ | १४ | चे कोशानां | चेत् कोशानां |
| ४४७ | ९ | र:जसत्व | रजःसत्व |
| ४४९ | १४ | भतेभ्य | भूतेभ्य |
| ४५० | १६ | प्रत्यागात्म | प्रत्यगात्म |
| ४५२ | २ | महि | मेंहि |
| ,, | १९ | क्षुत्पिपासादायः | क्षुत्पिपासादयः |
| ४५५ | ४ | पुनर्ज्ञानान्निमीलति | पुनर्ज्ञानां निमीलति |
| ४५६ | १६ | सन्मार्गापि | सन्मार्गोपि |
| ४६६ | १३ | चलोत्तर्कितु | चलेत्किंतु |
| ४७० | १९ | दुर्बलान्नन्द | दुर्बलान्नृन्द |
| ४७१ | १२ | येरन्नै | यैरन्नै |
| ४७६ | १४ | द्रयार्द्रः | दयार्द्रः |

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४७८ | २ | पर्वलीला | पूर्वलीला |
| ४७९ | १७ | पाजितास्ते | पूजितास्ते |
| ,, | २० | हर्तेति | ह्र्तेति |
| ४८६ | १७ | हेतुभिमृग्यो | हेतुभिर्मृग्यो |
| ४८९ | २३ | त्प्राप्ये | त्प्राप्यो |
| ५०६ | ४ | सर्वविधि | सर्वैर्विधि |
| ,, | २० | क्षणान्मको | क्षणान्मूको |
| ५१० | ७ | पितंस्तर्प | पितॄंस्तर्प |
| ,, | २२ | लित्प्वा | लिप्त्वा |
| ५१३ | १४ | प्रीतो राज | प्रीतो राजा |
| ५१८ | १९ | श्रुत्योद्वंधे | श्रुत्योर्द्वैधे |
| ५१६ | ४ | ताग्निनाशे | ताग्निश्चासन् |
| ५१९ | २४ | समंत्रं हेताः | समंत्रं दंताः |
| ५१९ | ३ | मंत्रदं | मंत्रदर्भासन |
| ५१९ | ४ | मंत्रगो तुलस्याश्व | नीचगमंत्रगोतुलस्यश्व |
| ५२१ | १६ | करे वादाय | करे वादाय |
| ५२३ | ५ | विप्रामूर्तन्य | विप्राष्टधामूर्त्यन्य |
| ५२३ | २२ | सतुशीर्णे | सच्छिद्रं शीर्णे |
| ५२४ | ८ | त्रिर्नमो ब्राह्मण | त्रिर्नमो ब्रह्मण |
| ५२७ | ४ | स्त्र्यपत्येष्ट जो | स्त्र्यपत्येष्टयुजो |
| ५३२ | ७ | आसाराति | आसारार्ति |
| ५३४ | २ | पर्व त्व | पूर्व त्व |
| ५३७ | ११ | दुत सिद्धिः | द्रुता सिद्धिः |
| ५३७ | २१ | त्वमतोऽशा | त्वमतोऽशाः |
| ५३८ | ७ | धृतमांसं | धृतमांसां |
| ५३८ | ९ | सौराष्ट | सौराष्ट्र |
| ५५२ | ६ | चरित्राख्य | चरित्राख्यं |
| ५५२ | ११ | स्याभावनः | स्वार्थभावनः |